THE

# HOWKHAMBÂ SANSKRIT SERIES;

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NOS. 270, 283, 289, 290, & 294·

षड्दर्शनकृद्वाचस्पतिमिश्रविरचिता—

# सांख्यतत्त्वकौमुदी ।

पण्डितराड्—वंशीधरमिश्रविरचित-

सांख्यतत्त्वविभाकर—

नामकटीकासमुद्भासिता ।

काशीस्थराजकीयसंस्कृतप्रधानपाठशालाध्यापकेन

भाण्डार्युपनामक-न्यायाचार्य श्रीरामशास्त्रिणा संशोधिता ।

---

## SANKHYA TATTVA KAUMUDI

BY SRI VACHASPATI MISRA

1th a commentary called 'SANKHY Tattva Vibhakara'

by Pandit Banshi Dhara Misra.

Edited by Nyayacharya Ŝri Rama Ŝastri Bhandari

Professor of the Govt Sanskrit College,

BENARES.

FASCICULUS 1tov.

*UBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBÂ SANSKRIT SERIES OFFICE, BENARES.

AGENTS: PANDITA JYESHTHÂRAMA MUKUNDAJI, BOMBAY;

OTTO HARRASSOWITZ, LEIPZIG: GERMANY.

PROBSTHAIN & CO., BOOKSELLERS, LONDON.

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press, Benares.*

1921.

तत्त्वविभाकराख्यव्याख्यासहितसांख्यतत्त्वकौमुद्याः

# भूमिका ।

इह खलु संसारे निखिल एव जन्तुरहर्निशं सुखावाप्तये दुःखनिवृत्तये वा भृशं प्रयतमानः समुपलभ्यते । पर तैस्तैरुपायै-र्न सुखावाप्तिर्दुःखपरिहारो वा सुदूर एव प्रत्युत अधिकतरदुःखभागेव स सञ्जायतीति । तदुक्तं श्रीमद्भागवते–"सुखाय कर्माणि करोति लोको न तैः सुखं वाऽन्यदुपारमं वा । विन्देत भूयस्तत एव दुःखं यदत्र युक्तं भगवन् वदेन्नः" । इति । लौकिकेभ्य एव पदार्थेभ्यो ऽधिगतदुःखत्रयस्यास्याविवेकिनो जनस्य तन्निवृत्तये स्वभावतो दुःखरूपाणां तेषामेव लौकिकपदार्थानामनुसरणं पुनः यो यद्विषमूर्छितस्तस्य तेनैव विषेण मूर्छापनयनमनुकरोति । अत एव च वैदिककर्मकलापानां हिंसादिसंकीर्णत्वेन दुःखसाधनत्वात् क्षयिस्वर्गादिफलकत्वाच्च न तैरप्यैकान्तिकात्यन्तिकदुःखनिवृत्तेराशालवो ऽपि ।

तस्मादात्मनो ऽत्रिगुणस्य स्वभावतो निर्दुःखस्य दुःखादिशीलया प्रकृत्या सममविवेकग्रह एव आत्मनो दुःखित्वाद्यभिमाननिदानमिति अविवेकग्रहनिवृत्त्यैव दुःखत्रयनिवृत्तिः सम्भाविनीत्यालोच्यात्रभवान् परमकारुणिको जगदुद्दिधीर्षुर्मुनिः कपिल आसुरये दुःखत्रयविषण्णाय पञ्चविंशतितत्त्वान्युपदिदेश । भगवानासुरिरपि पंचशिखायोपदिष्टवान्, पञ्चशिखेन तु षष्टितन्त्रं निरमायि, यदर्थस्य संक्षेपतः प्रतिपादिका इमाः सप्ततिकारिकाः भगवतेश्वरकृष्णेन निर्मिता मुमुक्षुजनहितेच्छया । एतत्कारिकावलम्बभूतस्य षष्टितंत्रस्य अन्यस्य वा ग्रन्थस्य आभ्यः प्राचीनतरस्य सांख्यमतावलम्बिनो ऽनुपलब्ध्या इमा एव कारिकाः मूलप्रमाणभूतसूत्रस्थानीयत्वेन सर्वैरविवादेनाभ्युपगम्यन्ते । अत एव च भगवत्पूज्यपादश्रीशंकराचार्यैरपि ब्रह्मसूत्रभाष्ये सांख्यमतखण्डनावसरे कारिका एव समुद्धृताः । अत एव च कापिलत्वेन प्रसिद्धानां सूत्राणां कापिलत्वे सन्देह एव ।

एतासां च कारिकाणां अद्यावधि प्रसिद्धानि व्याख्यानानि चत्वार्येव—सांख्यतत्त्वकौमुदी—सांख्यचन्द्रिका—माठरवृत्तिः—गौडपादाचार्यकृतं भाष्यं चेति । तत्र च माठरवृत्तिगौडपादभाष्ययोः प्रायशो व्याख्याने साम्यात् उभयत्र कारिकास्थस्य समानस्यैव पाठस्य समुद्धृतत्वाच्चैकतरमन्यतरावलम्बेनैव व्यरचीत्यवगम्यते । आंग्लभाषाकोविदैर्माठरवृत्तेरेव प्राचीनतरत्वमवधार्यते, यतः सा वृत्तिरीशवीये षष्ठे शतके चीनभाषायां परमार्थपण्डितेनानूदिता समुपलभ्यतेऽतस्तामालम्ब्यैव केनचिद्गौडपादनाम्ना (प्रायशः श्रीमच्छङ्कराचार्याणां परमगुरुभ्योऽन्येन) भाष्यं व्यरचीति कल्प्यते । सांख्यतत्त्वकौमुदी पुनः षड्दर्शनटीकाकृद्वाचस्पतिमिश्रविरचिता नान्यकृतेर्माठरवृत्त्यादेरनुकृतिरूपा इति तु माठरवृत्तिगौडपादभाष्यव्याख्यानशैलीतो विभिन्नशैलीकतया बह्वीषु कारिकासु विभिन्नप्रतीकधारणाच्च सुनिश्चेयमेव । नारायणतीर्थकृता सांख्यचंद्रिका तु सांख्यतत्त्वकौमुदीमूलिकैवेति व्याख्यानसाम्यादवधार्यते । अत एव च दृश्यते कारिकापाठे ऽप्यविप्रतिपत्तिः ।

अत्र च 'सप्तत्यां किल येऽर्थाः' [ का० ७२ ] इति कारिकया विषयप्रतिपादकसप्ततिसंख्याककारिकाणामवगमात् तादृशीनां च एकोनसप्ततिसंख्याकानामेव दर्शनात् काचिदार्या प्रभ्रष्टेति आंग्लभाषाकोविदाः कल्पयन्ति । तत्र च माठरवृत्तौ गौडपादीये च 'प्रकृतेः सुकुमारतरं न किञ्चिदस्ति' ( का० ६१ ) इति कारिकाव्याख्यानावसरे 'प्रकृतेः सुकुमारतरं वर्णयति' इत्येतदारभ्य 'सुकुमारतरमित्येतद्वाक्यशेषः कृतः' इत्येतत्पर्यन्तग्रन्थगतानां केषांचिद्वाक्यानां प्रभ्रष्टकारिकायाः पदप्रतीकत्वं प्रकल्प्य—

"कारणमीश्वरमेके ब्रुवते कालं परे स्वभावं वा ।
प्रजाः कथं निर्गुणतो व्यक्तः कालः स्वभावश्च" ॥

इति कारिकां कल्पयन्ति । परं तन्न सम्यगिवाभाति—यतः प्रकृतेः सुकुमारतरत्वकथनेन अन्येषां जगदुपादानत्वेनाभिमतेश्वराद्यपेक्षया प्रकृतेर्विशिष्टतरत्वं प्रतीयते, तदेव च विशिष्टतरत्वं ईश्वरका-

लस्वभावादीनां जगदुपादानत्वपरिहारपूर्वकं साधितम् । प्रासंगिकैतद्विचारादूर्ध्वं च 'तस्मादुच्यते 'प्रकृतेः सुकुमारतरं न किंचिदस्ति' इत्यादिरुपसंहारोऽस्या एव कारिकाया दृश्यते । तस्मात् 'प्रकृतेः सुकुमारतरम्' इत्यादिकारिकार्थस्यैवोपक्रमात्तस्यैवोपसंहाराच्च मध्ये एवायं कारिकान्तरव्याख्यानरूपः सन्दर्भ इति न सम्भवति किन्तु प्रासङ्गिक एव स्वतंत्रो विचार इत्याभाति । अत एव श्रीमदाद्यशंकराचार्यकृतत्वेन प्रसिद्धायां[?] जयमंगलाख्यायां वृत्तावपि अचिरादेव समुपलभ्यायां "इत्येष प्रकृतिकृतः" [ का० ५६ ] इति कारिकाया अवतरणे एव ईश्वरकालस्वभावोपादानकत्वं जगत आक्षिप्य 'इत्येष प्रकृतिकृतः इत्यनेन निरस्तम् । तत्रापि च माठरवृत्त्यादिसमान एव आक्षेपः परिहारश्च दृश्यते ।

सप्ततिग्रहणस्य चोपपत्तिरित्थमपि सम्भवति—एकोनसप्ततिकारिकाभिः षष्टितंत्रस्था विषयाः साक्षात्प्रदर्शिताः । सप्ततितमकारिकायां तु षष्टितंत्रकर्त्तुः पंचशिखाचार्यस्य [१]तत्स्थविषयाणां च परमर्षिपूर्वकत्वस्य च प्रतिपादनात् सप्ततितमकारिकाऽपि विषयप्रतिपादिकैव । एकसप्ततितमकारिकायां तु ग्रन्थकर्त्रा स्वनाम्न एव ख्यापनाच्च तदन्तर्गत्वम् । अपि च षष्टितंत्रस्थानां कृत्स्नानां षष्टिसंख्याकानां पदार्थानां निरूपणात्मिकाः कारिकाः सप्ततिसंख्यां नात्यक्रामन्नित्येवं ग्रन्थलघुत्वप्रशंसायामेव 'सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितंत्रस्य' इति व्याक्यस्थकृत्स्नपदषष्टिपदादिभिर्ग्रन्थकर्त्तुस्तात्पर्यावगमात् कारिकाणां सप्ततिसंख्यापूरणापूरणविचारो ग्रन्थकर्त्तुस्तात्पर्यानवधारणमूल एवेति विभावनीयं सूरिभिरित्यलमनेन प्रासंगिकविचारेण ।

पूर्वोक्तेषु व्याख्यानेषु मध्ये सांख्यतत्त्वकौमुद्येव मौलीभूता सैव च सांख्यशास्त्रे पाठ्यत्वेन विशेषतः प्रचलिता दृश्यते । अद्यावधि न काऽपि सांख्यतत्त्वकौमुद्याः सम्पूर्णा व्याख्या समुपल-

[ १ ] "तेन च बहुधा कृतं तन्त्रम्" [ का० ७० ] इत्यत्र 'जयमंगलाख्यां वृत्तौ षष्टितंत्रस्यैव तंत्रपदेन विवरणात् ।

ख्या। परमिदानीं पण्डितवंशीधरकृता तद्व्याख्या विभाकर इव सांख्यतत्त्वमवभासयन्ती अत एव सांख्यतत्त्वविभाकरेत्यन्वर्थकाख्या सांख्यतत्त्वकौमुद्या यथार्थावबोधे ऽध्यापकाध्येतृवर्गमतीवोपकरिष्यतीत्यत्र नास्ति सन्देहः।

अत्र च सांख्यशास्त्रेऽभिमतपदार्थानां प्रसंगात् स्वातंत्र्येणापि विस्तरेण नव्यन्यायरीत्या सपरिष्कारं निरूपणात् महानुपयोगो भविष्यतीत्यस्ति सुदृढो विश्वासः। अस्या व्याख्यायाः कर्त्ता पण्डितवरो वंशीधरश्च सार्धवर्षशतादर्वाचीन एवेति अवगम्यते। यतः प्रसंगादत्र पण्डितमहादेवपुणतामकराणामप्युल्लेखो दृश्यते तत्समयश्च सप्तदशस्येशवीयस्य शतकस्य चरमो भाग एवेति तद्धस्तलिखितेभ्यः काशीस्थराजकीयसरस्वतीभवनगतपुस्तकेभ्यो निर्धारितम्।

अस्याश्च व्याख्याया एकमेव पुस्तकमशुद्धप्रायं समुपलब्धमिति क्वचिदसम्बद्धोऽपि पाठो यथावस्थित एव स्थापितः। एकस्याऽप्यतिदुर्लभस्यास्य पुस्तकस्य प्रदानेन श्रीयुत भाऊशास्त्री वझे इत्येतैर्नितरां वयमनुगृहीताः। एवमेव संस्कृतविद्याव्यसनिनां बाबू गोविंददासमहाशयानपि कारिकाणां संख्यादिविषये विप्रतिपत्त्यादि समाधायकविचारोल्लेखाद्यावश्यकतासूचनेन कृतज्ञतया भावयामः।

अस्याश्च व्याख्यायाः संशोधनकार्ये श्रेष्ठिवरजयकृष्णदासगुप्तेन प्रेरितोऽहमेतत्संशोधनमकरवम्।

सपरिश्रमं यथामति संशोधितेऽप्यस्मिन् ग्रन्थेऽशुद्धिप्रचुरैकमात्रादर्शपुस्तकलाभादनवधानाच्च तदवस्था अशुद्धीः स्वयमेव परिशोधयन्तु विद्वांस इति प्रार्थयते—

श्रीवामाचरणभट्टाचार्याणामन्तेवसन्
भाण्डार्युपाह्वः श्रीरामशास्त्री
काशीस्थराजकीयसंस्कृत-
प्रधानपाठशालायां न्यायशास्त्रा-
ध्यापकः।

# अशुद्धिशुद्धिबोधकं पत्रम्।

| पृ० | पं | अशुद्धम् | शुद्धम्। |
|---|---|---|---|
| ८ | २ | ता | तां |
| ८ | १० | मजां | अजां |
| १८ | ९ | व्ययीकरणेन | व्यग्रीकरणेन |
| १९ | २ | पुत्रीयत्ता | पुत्रीयता |
| ३२ | १५ | सत्वादित्वात् | सत्वात् |
| ३७ | १९ | मर्द्वर्थी | मध्वर्थी |
| ४१ | १० | आर्थ | अर्थ |
| ४३ | १० | होनोपाय | हानोपाय |
| ४७ | ५ | आनुश्रावकः | आनुश्रविकः |
| ४८ | ४ | यज्ञैः | यैर्ज्ञैः |
| ४८ | १५ | वेदमपो | वेदमयी |
| ४८ | २३ | आधत्ते | आधत्ते |
| ५१ | १३ | आनुश्रावकः | आनुश्रविकः |
| ५१ | १६ | मिश्रणा | मिश्रण |
| ५५ | ८ | अग्रिमतेन | अग्रिमेण |
| ५५ | १६ | ननु | न तु |
| ५९ | १५ | द्रवणम् | द्रविणम् |
| ६३ | १४ | अभूत | आभूत |
| ६७ | १३ | आर्यां | आर्यायाम् |
| ७४ | ११ | प्रतिबन्ध्य | प्रतिबध्य |
| ७८ | २३ | व्याघातावधिः | व्याघातावधिः |
| ८० | १८ | गिरोऽग्निमत्त्वं | गिरेरग्निमत्त्वं |
| ९५ | १७ | व्यवहारस्य | व्यवहारस्या |

| पृ० | पं० | अशुद्धम् | शुद्धम् । |
|---|---|---|---|
| ९६ | २४ | उपानीत | उपनीत |
| ९७ | ८ | दडद्ययम् | दण्डद्वयम् |
| १०२ | ७ | दिगावलम्बनत्वे | दिगवलम्बनत्वे |
| १०२ | २० | तन्मनुसारेण | तन्मतानुसारेण |
| १०४ | २० | जासच्छेदेन | जासवच्छेदेन |
| ११८ | १८ | गवतारयति | मवतारयति |
| ११८ | २३ | प्रेयाजनाय | प्रयोजनाय |
| ११९ | ८ | प्रमाणस्वरूपं | प्रमास्वरूपं |
| १२५ | ४ | अन्नयत्वात् | अनयवत्वात् |
| १३३ | १२ | चैतैन्यवत् | चैतन्यवत् |
| १४० | ४ | विवक्षितत्रात् | विवक्षितत्वात् |
| १४७ | १२ | व्यप्यत्व | व्याप्यत्व |
| २४७ | १९ | व्यार्त्तक | व्यावर्त्तक |
| १५१ | १२ | सहातिव्याप्तेः | साहितातिव्याप्तेः |
| १५३ | ११ | रूपत् | रुपवत् |
| १५६ | १८ | साध्यभावे | साध्याभावे |
| १५९ | ६ | घादिपदानां | घटादिपदानां |
| १६० | २२ | विषयकात्व | विषयकत्व |
| १६९ | १० | ऽर्भावयन्तं | ऽन्तर्भावयन्तं |
| १६९ | १९ | प्रनेयः | प्रमेयः |
| १७३ | ३ | विशिष्टोस्थापक | विशिष्टोपस्थापक |
| १७३ | १८ | अगवम | अवगम |
| १७४ | १९ | वस्त्वन्तर्वर्त्ती | वस्त्वन्तरवर्त्ती |
| १८२ | २ | होतुर्द्धौः | होतुर्बुद्धाः |
| १८२ | ५ | त्रिविम्प्रमाणं | त्रिविधं प्रमाणं |
| १८४ | १० | असम्भावात् | असम्भवात् |

| पृ० | पं० | अशुद्धम् | शुद्धम् । |
|---|---|---|---|
| १८४ | १६ | अवतरति | अवतारयति |
| १९० | १७ | तदनन्ततरं | तदनन्तरं |
| १९२ | १८ | उदानं | उपादानं |
| १९० | १४ | तम एव | आत्मा एव |
| १९६ | २३ | उपनिबद्ध | उपनिबबन्ध |
| १९९ | १२ | सन्बन्धयधीनत्वेन | सम्बन्धयधीनत्वेन |
| २०० | १४ | अभिव्यक्त्यावस्था | अभिव्यक्त्यवस्था |
| २०१ | ११ | ववियाति | वेविषति |
| २०२ | ९ | आर्येण | कार्येण |
| २०२ | ९ | जात | अजात |
| २१६ | १८ | अनधिष्ठित्व | अनधिष्ठितत्व |
| २१० | २४ | एकस्मान् | एकस्मात् |
| २२१ | २४ | सन्दोपसुन्दवत् | सुन्दोपसुन्दवत् |
| २२८ | २२ | विजृम्भितं | विजृम्भितं |
| २३० | १४ | उसद्यते | उत्पद्यते |
| २३२ | २५ | कुट | कट |
| २३८ | २४ | निष्ठ | निष्ठ |
| २४३ | २ | अचिष्ठातृ | अधिष्ठातृ |
| २४६ | १९ | व्यापकस्यैश्वरे | व्यापकस्येश्वरे |
| २४९ | ८ | ज्ञानाभावन | ज्ञानाभावेन |
| २४९ | ११ | क्रियाति | क्रियेति |
| २५१ | १८ | समष्टकार्यं | समष्टिकार्यं |
| २५३ | १८ | तात्तिष्ठन्ति | तु तिष्ठन्ति |
| २५६ | १४ | यज्ञसदशी | यज्ञसदृशी |
| २६० | १८ | इत्पत्र | इत्यत्र |
| २६४ | ११ | तादितिरिक्तस्य | तदातिरिक्तस्य |

| पृ० | पं० | अशुद्धम् | शुद्धम् । |
|---|---|---|---|
| २६८ | २ | अप्रमाणिक | अप्रामाणिक |
| २६८ | १० | आशङ्कात् | आशङ्का तु |
| २६८ | १४ | गौलक | गोलक |
| २६९ | १९ | वाक्यस्थार्थः | वाक्यस्यार्थः |
| २६९ | २४ | वृहिधातुः | बृंहिधातुः |
| २७० | ५ | उपचयस्यव | उपचयस्यैव |
| २७३ | १४ | पुरस्तान् | पुरस्तात् |
| २७४ | ५ | सुक्ष्मपर्यन्तं | सूक्ष्मपर्यन्तं |
| २७५ | १२ | स्वस्कधं | स्वस्कन्धं |
| २७८ | १ | प्रार्थयेत | प्रार्थयते |
| २८१ | २१ | तस्मिन्न अनेजत् | तस्मिन्ननेजत् |
| २८१ | २१ | इत्यात्युक्ते | इत्याद्युक्ते |
| २८४ | १६ | भूतयोनि | भूतयोनि |
| २८५ | ३ | जानथा | जानथ |
| २८५ | १५ | अपसंहारः | उपसंहारः |
| २८९ | ८ | तात्पर्य | तात्पर्य |
| २९४ | २२ | विशदृश | विसदृश |
| २९६ | ५ | उपलमाहे | उपलभामहे |
| २९७ | ४ | आप | अपि |
| ३०३ | ५ | प्रथोजेक | प्रयोजक |
| ३०५ | १७ | यस्मि | यस्मिन् |
| ३०७ | २४ | कपिसंयोगाभिन्नः | कपिसंयोग्यभिन्नः |
| ३०९ | ३ | याग | योग |
| ३१० | १० | कपाल | कपालं |
| ३१० | १६ | अपूर्वयजि | अपूर्वे यजि |
| ३११ | ९ | उदेश्यकत्वं | उद्देश्यकत्वं |

| पृ० | पं० | अशुद्धम् | शुद्धम् । |
|---|---|---|---|
| ३१४ | ११ | द्रव्यव्यापत्तौ | द्रव्यत्वापत्तौ |
| ३२६ | १० | प्रणिधाना | प्रणिधानानि |
| ३३६ | १४ | अर्थाव्यभिचारत्व | अर्थाव्यभिचारित्व |
| ३४२ | ८ | यद्येपि | यद्यपि |
| ३४४ | ९ | इत्तादिश्रुतिः | इत्यादिश्रुतिः |
| ३५० | १२ | ब्रह्मात्म्यानन्दो | ब्रह्मास्म्यानन्दो |
| ३५४ | १ | मनोऽधिष्ठातानां | मनोऽधिष्ठितानां |
| ३५७ | २५ | द्योतकरादयः | उद्योतकरादयः |
| ३६७ | ७ | कथ | कथं |
| ३६८ | २० | यत्सत्त्वे न | यत्सत्त्वेन |
| ३७६ | २४ | भोगासिद्धेः | भागासिद्धेः |
| ३८९ | २२ | अविद्यावृत्तत्वात | अविद्यावृतत्वात् |
| ३९१ | १८ | परोक्षः | ऽपरोक्षः |
| ३९२ | १० | न । | न |
| ४०४ | २९ | इन्द्रियावर्जमिति | इन्द्रियवर्जमिति |
| ४०७ | २५ | कारकविशष | कारकविशेष |
| ४०८ | ८ | इतः | अतः |
| ४१६ | ६ | नगनिकुञ्जः | नगनिकुञ्जे |
| ४२५ | ६ | षाट्काशिकाः | षाट्कौशिकाः |
| ४३५ | २१ | उपद्धात | उपोद्धात |
| ४३७ | ५ | अभिनिवशा | अभिनिवेशा |
| ४४२ | १५ | आध्यात्मिकेनशारीरक | आध्यात्मिकशारीरक |
| ४४२ | २५ | दुःखानुभूत | दुःखाभिभूत |
| ४४३ | २ | ऽास्त | ऽस्ति |
| ४५६ | ४ | शुक्तिविशेषत्व | शुक्तिविशेष्यत्व |
| ४८७ | १३ | कारणात्व | कारणत्व |

इति अशुद्धिशुद्धिपत्रं समाप्तम् ।

॥ श्रीः ॥

# साङ्ख्यकारिका ।

दुःखत्रयाभिघाताज्जिज्ञासा तदप(१)घातके हेतौ ।
दृष्टे साऽपार्था चेन्नैकान्तात्यन्ततोऽभावात् ॥ १ ॥
दृष्टवदानुश्रविकः स ह्यविशुद्धि(२)क्षयातिशययुक्तः ।
तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात् ॥ २ ॥
मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ ३ ॥
दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात् ।
त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि ॥ ४ ॥
प्रतिविषयाध्यवसायो दृष्टं त्रिविधमनुमानमाख्यातम् ।
तल्लिङ्गलिङ्गिपूर्वकमाप्तश्रुतिराप्तवचनं तु ॥ ५ ॥
सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रतीतिरनुमानात् ।
तस्मादपि चाऽसिद्धं परोक्षमाप्तागमात्सिद्धम(३) ॥ ६ ॥
अतिदूरात्सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् ।
सौक्ष्माद्व्यवधानादभिभवात्समानाभिहाराच्च ॥ ७ ॥
सौक्ष्म्यात्तदनुपलब्धिर्नाऽभावात् कार्यतस्तदुपलब्धेः(४) ।
महदादि तच्च कार्यं प्रकृतिसरूपं विरूपं (५)च ॥ ८ ॥
असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात् ।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम् ॥ ९ ॥
हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥ १० ॥
त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि ।
व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥ ११ ॥

---

(१)तदभिघातके-इति माठरवृत्तिकृतां संमतःपाठः।
(२)अविशुद्धः-इति माठ० वृ० पाठः।
(३)साध्यम्-इति माठ० वृ० पाठः।
(४)तदुपलब्धिः-इति माठ० पाठः।
(५)प्रकृतिविरूपं सरूपं च-इति माठ० पा०।

प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः।
अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥ १२ ॥
सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः।
गुरु वरणकमेव तमः प्रदीपवच्चाऽर्थतो वृत्तिः ॥ १३ ॥
अविवेक्यादेः सिद्धि(१)स्त्रैगुण्यात्तद्विपर्ययाभावात्।
कारणगुणात्मकत्वात् कार्यस्याऽव्यक्तमपि सिद्धम् ॥१४॥
भेदानां परिमाणात् समन्वयात् शक्तितः प्रवृत्तेश्च।
कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥ १५ ॥
कारणमस्त्यव्यक्तं प्रवर्तते त्रिगुणतः समुदयाच्च।
परिणामतः सलिलवत् प्रतिप्रतिगुणाश्रयविशेषात् ॥ १६ ॥
सङ्घातपरार्थत्वात्त्रिगुणादिविपर्ययादधिष्ठानात्।
पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थप्रवृत्तेश्च ॥ १७ ॥
जनन(२)मरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥ १८ ॥
तस्माच्च विपर्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य।
कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च ॥ १९ ॥
तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम्।
गुणकर्तृत्वेऽपि तथा कर्तेव भवत्युदासीनः ॥ २० ॥
पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥ २१ ॥
प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः।
तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि ॥ २२ ॥
अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम्।
सात्त्विकमेतद्रूपं तामसमस्माद्विपर्यस्तम् ॥ २३ ॥
अभिमानोऽहङ्कारस्तस्मात् द्विविधः प्रवर्तते सर्गः।
ऐन्द्रिय एकादशकस्तन्मात्रपञ्चकश्चैव ॥ २४ ॥
सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात्।
भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम् ॥ २५ ॥
बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनत्वगा(३)ख्यानि।
वाक्पाणिपादपायूपस्थानि(४) कर्मेन्द्रियाण्याहुः ॥ २६ ॥

(१)अविवेक्यादिः सिद्धः-इति मा० वृ० पाठः।
(२)जन्म-इति माठ० वृ० पाठः।
(३)श्रोत्रत्वक्चक्षूरसननासिकाख्यानि-इति माठ० पाठः।
(४)उपस्थान्-इति मा० वृ० पाठः।

उभयात्मकमत्र मनः सङ्कल्पकमिन्द्रियं च साधर्म्यात् ।
गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च(१) ॥ २७ ॥
शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः ।
वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम् ॥ २८ ॥
स्वालक्षण्यं[२] वृत्तिस्त्रयस्य सैषा भवत्यसामान्या ।
सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥ २९ ॥
युगपच्चतुष्टयस्य तु[३] वृत्तिः क्रमशश्च तस्य निर्दिष्टा ।
दृष्टे तथाऽप्यदृष्टे त्रयस्य तत्पूर्विका वृत्तिः ॥ ३० ॥
स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहेतुकां वृत्तिम् ।
पुरुषार्थ एव हेतुर्न केनचित्कार्यते करणम् ॥ ३१ ॥
करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम् ।
कार्यं च तस्य दशधाऽऽहार्यं धार्यं प्रकाश्यं च ॥ ३२ ॥
अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम् ।
साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम् ॥ ३३ ॥
बुद्धीन्द्रियाणि तेषां पञ्च विशेषाविशेषविषयाणि ।
वाग्भवति शब्दविषया शेषाणि तु[४] पञ्चविषयाणि॥३४॥
सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात् ।
तस्मात्त्रिविधं करणं द्वारि द्वाराणि शेषाणि ॥ ३५ ॥
एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः ।
कृत्स्नं पुरुषस्याऽर्थं प्रकाश्य बुद्धौ प्रयच्छन्ति ॥ ३६ ॥
सर्वं प्रत्युपभोगं यस्मात्पुरुषस्य साधयति बुद्धिः ।
सैव च विशिनष्टि पुनः प्रधानपुरुषान्तरं सूक्ष्मम् ॥ ३७ ॥
तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः ॥
एते स्मृता विशेषाः शान्ता घोराश्च मूढाश्च ॥ ३८ ॥
सूक्ष्मा मातापितृजाः सह प्रभूतैस्त्रिधा विशेषाः स्युः ।
सूक्ष्मास्तेषां नियता मातापितृजा निवर्तन्ते ॥ ३९ ॥
पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम् ।
संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् ॥ ४० ॥
चित्रं यथाऽऽश्रयमृते स्थाण्वादिभ्यो विना यथा च्छाया ।

---

(१)ग्राह्यभेदाच्च-इति मा० वृ० पाठः ।

(२)स्वालक्षण्या-इति मा० पाठः ।

(३)हि-इति मा० पाठः ।

(४)शेषाण्यपि-इति मा० पाठः ।

तद्वद्विना विशेषैर्नतिष्ठति[१]निराश्रयं लिङ्गम् ॥ ४१ ॥
पुरुषार्थहेतुकमिदं निमित्तनैमित्तिकप्रसङ्गेन ।
प्रकृतेर्विभुत्वयोगान्नटवद्व्यवतिष्ठते लिङ्गम् ॥ ४२ ॥
सांसिद्धिकाश्च भावाः प्राकृतिका वैकृताश्च धर्माद्याः ।
दृष्टाः करणाश्रयिणः कार्याश्रयिणश्च कललाद्याः ॥ ४३ ॥
धर्मेण गमनमूर्ध्वं गमनमधस्ताद्भवत्यधर्मेण ।
ज्ञानेन चाऽपवर्गो विपर्ययादिष्यते बन्धः ॥ ४४ ॥
वैराग्यात्प्रकृतिलयः संसारो राजसाद्भवति रागात् ।
ऐश्वर्यादविघातो विपर्ययात्तद्विपर्यासः ॥ ४५ ॥
एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः ।
गुणवैषम्यविमर्दात्तस्य च (२)भेदास्तु पञ्चाशत् ॥ ४६ ॥
पञ्च विपर्ययभेदा भवन्त्यशक्तिश्च करणवैकल्यात् ।
अष्टाविंशतिभेदा तुष्टिर्नवधाऽष्टधा सिद्धिः ॥ ४७ ॥
भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः ।
तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः ॥ ४८ ॥
एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा ।
सप्तदश वधा बुद्धेर्विपर्ययात्तुष्टिसिद्धीनाम् ॥ ४९ ॥
आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः ।
बाह्या विषयोपरमात् पञ्च च नव (३)तुष्टयोऽभिमताः ॥ ५० ॥
ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः(४) सुहृत्प्राप्तिः ।
दानं च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः ॥ ५१ ॥
न विना भावैर्लिङ्गं न विना लिङ्गेन भावनिर्वृत्तिः ।
लिङ्गाख्यो भावाख्यस्तस्मात् द्विविधः प्रवर्तते सर्गः ॥ ५२ ॥
अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति ।
मानुषक(५)श्चैकविधः समासतो भौतिकः सर्गः ॥ ५३ ॥
ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः ।
मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्यन्तः ॥ ५४ ॥
तत्र(६) जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः ।

(१)तिष्ठति न–इति मा०पाठः ।
(२)विमर्देन तस्य भेदाः—इति मा० वृ० पाठः ।
(३)नव च—इति मा० पाठः ।
(४)दुःखविघातत्रयम्—इति मा० पाठः ।
(५)मानुष्यः—इति मा० पाठः ।
(६)अत्र—इति मा० पाठः ।

लिङ्गस्याऽऽविनिवृत्तेस्तस्मात् दुःखं स्वभावेन(१)॥ ५५ ॥
इत्येष प्रकृतिकृतो महदादिविशेषभूतपर्यन्तः ।
प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः ॥ ५६ ॥
वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥ ५७ ॥
औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः ।
पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदव्यक्तम् ॥ ५८ ॥
रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात् ।
पुरुषस्य तथाऽऽत्मानं प्रकाश्य विनिवर्तते प्रकृतिः ॥ ५९ ॥
नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः ।
गुणवत्यगुणस्य सतस्तस्याऽर्थमपार्थकं चरति ॥ ६० ॥
प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति ।
या दृष्टाऽस्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥ ६१ ॥
तस्मान्न बध्यतेऽद्धा न(२) मुच्यते नाऽपि संसरति कश्चित् ।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥ ६२ ॥
रूपैः सप्तभिरेव तु(३) बध्नात्यात्मानमात्मना प्रकृतिः ।
सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण ॥ ६३ ॥
एवं तत्त्वाभ्यासान्नाऽस्मि न मे नाऽहमित्यपरिशेषम् ।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥ ६४ ॥
तेन निवृत्तप्रसवामर्थवशात्सप्तरूपविनिवृत्ताम् ।
प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वस्थः ॥ ६५ ॥
दृष्टा मयेत्युपेक्षक एको दृष्टाऽहमित्युपरमत्यन्या ।
सति संयोगेऽपि तयोः प्रयोजनं नाऽस्ति सर्गस्य ॥ ६६ ॥
सम्यग्ज्ञानाधिगमाद्धर्मादीनामकारणप्राप्तौ ।
तिष्ठति संस्कारवशाच्चक्रभ्रमवत् धृतशरीरः ॥ ६७ ॥
प्राप्ते शरीरभेदे चरितार्थत्वात्प्रधानविनिवृत्तौ ।
ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति ॥ ६८ ॥
पुरुषार्थज्ञानमिदं गुह्यं परमर्षिणा समाख्यातम् ।
स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानाम् ॥ ६९ ॥
एतत्पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ ।

(१)समासेन—इति मा० पाठः ।
(२)बध्यते नापि मुच्यते-इति माठ० पा० ।
(३)एवं बध्नाति-इति मा० पा० ।

आसुरिरपि पञ्चशिखाय तेन च बहुधा कृतं (१)तन्त्रम् ॥ ७० ॥
शिष्यपरम्परयाऽऽगतमीश्वरकृष्णेन चैतदार्याभिः ।
सङ्क्षिप्तमार्यमतिना सम्यग्विज्ञाय सिद्धान्तम् ॥ ७१ ॥
सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य ।
आख्यायिकाविरहिताः परवादविवर्जिताश्चाऽपि(२) ॥ ७२ ॥

॥ इतीश्वरकृष्णविरचितसाङ्ख्यकारिकाः समाप्ताः ॥



(१)बहुलीकृतम्-इति मा० पा० ।
(२)तस्मात्समासदृष्टं शास्त्रमिदं नार्थतश्च परिहीनम् ।
तन्त्रस्य [च] बृहन्मूर्तेर्दर्पणसङ्क्रान्तमिव बिम्बम् ॥ ७३ ॥
अत्र चकारसत्त्वे छन्दोभङ्गाच्चकारः प्रामादिक इति प्रतिभाति ।
इत्येषा माठरवृत्तिकृत्सम्मताऽधिका कारिका ।

साङ्ख्यकारिकाया अकारादिक्रमेण-

# सूची ।

—:०:—

सांख्यतत्त्वकौमुदीस्थविषयाणां

# सूचीपत्रम् ।

इति सांख्यतत्त्वकौमुदीस्थविषयसूची समाप्ता ।



सांख्यतत्त्वकौमुदीटीकाया विषयक्रम-

# सूची ।

इति सांख्यकौमुदीटीकाया विषयसूची समाप्ता



श्रीगणेशाय नमः ॥

# साङ्ख्यतत्त्वकौमुदी

तत्त्वविभाकरसहिता

आराध्य यं भुवि कणादविधा बुधास्ते
शून्यादिवादतिमिरार्यमणो बभूवुः ॥
सृष्टिस्थितिप्रलयहेतुमनन्तमाद्यम्
तं सर्वकर्मविनियोजकमीशमीडे ॥ १ ॥
त्रिगुणगुणवितानप्रोतजीवौघनाना–
मणिगणकृतहारा वारनारीव वेशान् ॥
रचयति पतितुष्ट्यै कोमला याऽस्य नैषद्
दृशमपि सहतेऽजां तां स्तुमो विश्वधात्रीम् ॥ २ ॥
नत्वा श्रीगणनायकं भगवतीं वाग्देवतां बुद्धिदाम्
धृत्वा श्रीगुरुपादपद्ममलं मौलौ समस्तार्थदम् ॥
ज्ञात्वा साङ्ख्यमतं विलोक्य च कृतिं वाचस्पतेस्तत्कृतेः
व्याख्यां युक्तियुतां करोमि बुधहृत्पद्मप्रबोधप्रदाम् ॥ ३ ॥
कौमुद्या हृतसर्वसंशयतमःस्तोमान्नृलोकाद्धि ये
त्रस्ता वादिहृदन्धकारगृहसंविष्टाः कुतर्कग्रहाः ॥
तानुन्मूलयितुं कृती विबुधराड् वंशीधरः सन्मतिः
कुर्वे तत्त्वविभाकरं गुणिहितं वाद्यास्यमुद्राप्रदम् ॥ ४ ॥
कौमुद्याऽपि न संजातो येषां तत्त्वविनिश्चयः ॥
कृतस्तज्ज्ञानसिद्ध्यर्थं सांख्यतत्त्वविभाकरः ॥ ५ ॥
क्वाहं मन्दमतिः क्वेयं व्याख्या वाचस्पतेः कृतेः ॥
तथापि ब्रह्म दधतः किमसाध्यं भवेन्मम ॥ ६ ॥

अजामेकां लोहितशुक्लकृष्णाम्

कपिलाय नमस्तस्मै येनाविद्योदधौ जगन्निमग्ने ॥
कारुण्यात्सांख्यमयी नौरिह विहिता प्रतरणाय ॥ ७ ॥

सांख्यसिद्धान्तं सूचयन्निष्प्रत्यूहसमाप्तये कृतं मङ्गलम् "अजामेकाम्"इत्यादिवेदमेव कियद्वर्णान्यथाकारेण प्रधानस्याशाब्दत्वनिरासाय शिष्यशिक्षायै व्याख्यातृश्रोतॄणामनुषङ्गतो मङ्गलाय च ग्रन्थादौ निबध्नाति *अजामिति ॥ अजामित्यस्य नमाम इत्यनेनान्वयः । नमाम इत्यादौ बहुवचनं गुरुशिष्यसंप्रदायापेक्षया । क्वचित्कादम्बर्यादौ मङ्गलसत्त्वे समाप्त्यभावोऽङ्गवैकल्यात् । क्वचिन्नास्तिकादिग्रन्थे मङ्गलं विनाऽपि समाप्तिस्तु जन्मान्तरीयमङ्गलादिति न व्यभिचारः ।

मङ्गलस्य निष्प्रत्यूहसमाप्तिसाधनत्वे प्रमाणं तु अविगीतशिष्टाचारानुमितश्रुतिरेव ।

केचित्तु-सर्वदा श्रुतिर्नानुमेया, किन्तु प्रत्यक्षाऽप्यासीद्, इदानीं नोपलभ्यते म्लेच्छाधिपत्यदौर्भिक्ष्यप्रमादालस्यादिनाऽध्ययनाभावादित्याहुः ।

यत्तु-मङ्गलस्य समाप्तिहेतुत्वेऽविगीतशिष्टाचारानुमितश्रुतिर्न प्रमाणम्, आनुपूर्वीविशेषनिर्णयाभावेनाबोधकत्वात् । किंतूक्तव्यभिचारसंशयस्य ग्राह्यसंशयतयाऽनुमितावप्रतिबन्धकत्वेन व्यभिचारनिर्णयस्य चाभावादनुमानमेव तत्र प्रमाणम् ।

तथा हि-मङ्गलं समाप्तिफलकं तदितराफलकत्वे सति सफलत्वात्संमतवदिति । तन्न । मङ्गलं सफलं धर्मबुद्ध्या शिष्टैरनुष्ठीयमानत्वादिति विशेष्यासिद्ध्युद्धारेऽपि विशेषणासिद्ध्यनुद्धारात् ।

न च मङ्गलं समाप्तीतराफलकं तत्कामनां विनाऽपि शिष्टैः क्रियमाणत्वात्, समाप्तिकामनया क्रियमाणत्वाद्वेति वाच्यम् । स्वर्ग-

पशुपुत्राद्यफलकत्ववदेवामुष्मिकसमाप्तिकामनां विनाऽपि शिष्टेन क्रियमाणतया मङ्गलमामुष्मिकसमाप्त्यफलकं स्यात्। तथा च व्यभिचारानिश्चयेनानुमित्यनुत्पत्त्यैहिकसमाप्त्यफलकत्वापत्तेः। तृप्तिकामनया शिष्टेन क्रियमाणेऽपि पाके तृप्त्यफलकत्ववत्समाप्तिकामनया क्रियमाणेऽपि मङ्गले समाप्त्यफलकत्वसम्भवेनाप्रयोजकत्वाच्च।

यदुक्तम् अपरिचितानुपूर्वीकत्वेनाप्रमापकत्वम्, तत्रोच्यते—तदर्थज्ञापकत्वज्ञानस्यैव प्रमापकत्वे प्रयोजकत्वम्। आनुपूर्वीपरिचयस्य तत्रैवोपयोगात्। न चानुपूर्वीं विना तदर्थज्ञापकत्वज्ञानस्यैवासंभव इति वाच्यम्। तदर्थज्ञापकत्वेनैवानुमितागमस्य सिद्धौ, धर्मिग्राहकमानेनैव तदर्थज्ञापकत्वसिद्धावानुपूर्वीपरिचयस्यानुपयोगात्। अधिकं त्वन्यतोऽवधेयम्।

न च महतां वाचस्पतिमिश्राणां श्रुतिपारङ्गतानां ख्यात्यादितुच्छफलकोपजीव्यमङ्गलकरणमनुचितमिति शङ्क्यम्। मोक्षज्ञानोपयोगिमननादिमुख्यप्रयोजनस्य सम्भवात्। ख्यातेर्नान्तरीयकत्वादित्यर्थः।

न जायते इत्यजा नित्येति यावत्। नित्यत्वकथनं तु—सर्वकारणत्वोपपत्तयेऽनवस्थाभावाय च। परमाणूनां निराकरणाय तां विशिनष्टि *एकामिति। सजातीयद्वितीयरहितामित्यर्थः॥

नन्वेकस्य समवाय्यसमवायिनिमित्तकारणत्वासंभवेन कथं सर्वकारणत्वोपपत्तिरित्याशङ्क्याह *लोहितेति। सत्त्वरजस्तमोगुणात्मिकामित्यर्थः। तथा च गुणानां भेदान्न दोष इत्यर्थः। लोहितशब्दवाच्यरजोगुणस्य प्रवर्त्तकत्वेन प्राधान्यात्प्रथमनिर्देशः॥

न च लोहितशुक्लकृष्णशब्दानां रक्तादिगुणपरत्वात्कथं तै रजोगुणादिलाभ इति वाच्यम्। रञ्जनप्रकाशावरणात्मकत्वगुणयोगेन गौण्या तल्लाभसंभवात्।

ननु गौणी वृत्तिरेव न सम्भवति—तथाहि—न तावल्लक्ष्यमा-

णगुणयोगनिमित्तत्वं गौणीत्वं लोके प्रकृते वा सम्भवति । सिंहादिनिष्ठगुणानां देवदत्तादौ बाधितत्वेन योगासंभवात् । सिंहादिशब्दस्य स्वशक्यनिष्ठगुणवत्तासंबन्धेन लक्षणयैव, सिंहादिशब्देन गुणास्तैश्च देवदत्तलक्षणेत्येवं लक्षितलक्षणयैव वा तद्बोधकत्वोपपत्त्याऽतिरिक्तगौणीवृत्तिस्वीकारवैयर्थ्याच्च ।

एतेन-'प्रसिद्धार्थत्यागेनाप्रसिद्धगुणवाचित्वं गौणीत्वम्,' सिंहशब्दस्य प्रसिद्धसिंहत्वरूपमर्थं त्यक्त्वा देवदत्तपदसामानाधिकरण्याद्देवदत्तनिष्ठप्रसह्यकारित्वादिगुणेष्वतिरिक्ता शक्तिः कल्प्यते । ततश्च 'क्रूरो देवदत्तः' इतिवन्मत्वर्थलक्षणया सामानाधिकरण्योपपत्तिः । गौणीपदाभिधेयत्वञ्चास्याः 'तत्र भवः'इति व्युत्पत्त्या गुणेष्वाधुनिकशक्तिकल्पनाद् द्रष्टव्यम् । अत एव शुक्लादिपदेष्वनादिशक्तिमत्सु न गौणत्वव्यवहारः । अत एव न गुणिवाचिशुक्लादिपदेष्वपि । तदर्थमाधुनिकत्ववाच्यप्रसिद्धपदग्रहणम् । गुणे संकेतितेषु डित्थादिपदेष्वतिप्रसङ्गवारणाय प्रसिद्धार्थत्यागेनेति विशेषितम् ।

अथवा 'स्वोत्प्रेक्षाप्रभवारोपविषयीभूतार्थवृत्तित्वं गौणीत्वम्' एतत्कल्पे न शब्दः स्वाभिधेयं विनाऽन्यत्र गुणादियोगमात्रेण प्रवर्त्तते । अतश्च वक्त्रा प्रयुज्यमानो देवदत्ते सिंहशब्दः श्रोत्रा वक्तुः प्रयोगान्यथाऽनुपपत्त्या 'नूनमभिधेयं सिंहत्वमारोप्यानेन प्रयुक्तः'इति कल्प्यते ॥

न च विविक्तयोरारोपानुपपत्तिः । शुक्तिकादौ रजतत्वारोपवत्, योषायां वा रेतोरूपहविःप्रक्षेपरूपहोमाधिकरणत्वसादृश्येनाग्नित्वारोपवत्क्रूरत्वादिसादृश्येनारोपोपपत्तेः ।

नचैवं शुक्तिकादौ रजतत्वारोपेण रजतत्वादिशब्दप्रवृत्तेर्गौणत्वापत्तिः । तदारोपस्य करणदोषजन्यत्वेन स्वोत्प्रेक्षाप्रभवत्वाभावाद्-इति परास्तम् ॥

आद्ये यत्रान्यत्र प्रसिद्धार्थकस्यैव पदस्य गुणे सांकेतिकश-

क्तिकल्पनं तादृशस्थले गौणत्वव्यवहाराभावादतिव्याप्तेश्च ।

द्वितीये रूपकादिकाव्ये वक्तुरारोपविवक्षया प्रयोगेणारोपितार्थवृत्तित्वलक्षणगौणत्वसद्भावेऽपि 'सिंहो देवदत्तः' इत्यादौ वक्त्रा यत्र शक्यार्थगतगुणसादृश्यमात्रविवक्षया प्रयुज्यते श्रोता च तथैव प्रतिपद्यते तत्र सर्वानुगतेन गौणत्वेनैव प्रयोगोपपत्तेरारोपकल्पने प्रमाणाभावाच्च इति चेत् ।

न । उक्तलक्षणादिना क्वचिद् बोधानुपपत्तौ तत्कल्पनात् ।

तथाहि—स्वशक्यसम्बन्धवत्त्वं लक्षणा, यथा 'गङ्गायां घोषः' इत्यत्र गङ्गापदशक्यप्रवाहसम्बन्धोऽस्ति तीरे, अतो गङ्गापदात्तीरबोधे लक्षणा वृत्तिः । तज्ज्ञानं च गङ्गापदशक्यैव प्रवाहबोधे जाते 'एकसम्बन्धिदर्शनेनापरसम्बन्धिस्मरणम्'इत्यनेन न्यायेन तत्सम्बन्धवत्ताबोध इत्येवंप्रकारेणैव । तत्कार्यतावच्छेदकं च तीरविशेष्यकगङ्गासम्बन्धितीरत्वप्रकारकशाब्दत्वम् ।

सर्वत्र हि 'गङ्गायां घोषः' 'सिंहो देवदत्तः' इत्यादौ उभयत्राप्युभयविधो बोधोऽनुभवसिद्धः । कदाचिच्छक्यसम्बन्धः सम्बन्धत्वेन रूपेण भासमान एव प्रकारताघटकः । यथा 'गङ्गासम्बन्धितीरे घोषः' 'सिंहसम्बन्धी देवदत्तः' इति । कदाचिच्च स एव सम्बन्धः शक्यसम्बन्धत्वेन रूपेण नैव भासते, अपि तु तन्निष्ठसंयोगादिना 'गङ्गानिष्ठसंयोगवति तीरे घोषः''सिंहनिष्ठगुणसमानजातीयगुणवान्देवदत्तः'इति । तदेवं तत्तत्प्रकारताभेदेन बोधवैलक्षण्यात्कार्यवैलक्षण्येन कारणेऽपि वैलक्षण्यमावश्यकम् ।

यद्यत्र सम्बन्धिता साक्षात्परम्परासाधारण्येन प्रकारे प्रविष्टा 'गङ्गासंबन्धिनि घोषः, गङ्गासंबन्धितीरे वा घोषः, 'सिंहसंबन्धी देवदत्तः' इति तदा तादृशशाब्दत्वावच्छिन्नं प्रति लक्षणापदाभिधेयः स्वशक्यसंबन्धः संबन्धत्वेन ज्ञातः कारणम् ।

अत एव यत्र 'सिंहो देवदत्तः'इत्यादौ 'सिंहसम्बन्धिसम्बन्धी

देवदत्तः'इत्येवं यदा बोधस्तदा लक्षितलक्षणेत्यपि द्रष्टव्यम् ।

यत्र तु स एव संबन्धो न संबन्धत्वेन रूपेण भासते अपितु तन्निष्ठगुणवत्त्वादिना भासमान एव देवदत्तादिविशेष्यकबोधे प्रकारीभवति तत्र तादृशशाब्दत्वावच्छिन्नं प्रति गौणीपदाभिधेया स्वशक्यनिष्ठगुणवत्ता तत्त्वेन ज्ञाता कारणम् ।

नचैवं यत्र गङ्गापदात् तीरत्वमात्रप्रकारको बोधस्तादृशस्थले वृत्तिद्वयस्यापि कार्यतावच्छेदकाभावाच्चतुर्थवृत्तिस्वीकारापत्तिः। तीरत्वमात्रप्रकारकबोधस्यानुभवपथमनारूढतयाऽलीकत्वात्। अन्यथा समुद्रतीरे नद्यन्तरतीरे वेत्येवं संशयापत्तेः ।

स्वशक्यगुणवत्ता गौणीयत्र गुणवत्ता च क्वचित् तत्समानजातीयगुणवत्त्वसम्बन्धेन क्वचिदारोपेण साक्षादेव ।

तत्राद्या यथा सिंहपदस्य वाच्ये सिंहे विद्यमानैः प्रसह्यकारित्वादिगुणैः समानजातीया गुणा देवदत्ते सन्तीति तत्र गौणी । ततश्च सिंहवृत्तिगुणसमानजातीयप्रकारकदेवदत्तविशेष्यकशाब्दबोधत्वावच्छिन्नं प्रति सिंहपदशक्यवृत्तिगुणवत्ताज्ञानं कारणम् । तत्र सिंहपदोच्चारणे सति शक्त्यैव प्रतीयमानेन सिंहेन स्ववृत्तिगुणानाम् 'एकसम्बन्धिस्मरणेनेतरसम्बन्धिस्मरणम्'इति न्यायेनोपस्थापनात्तैश्च तेनैव न्यायेन तत्समानजातीयगुणवत्ताज्ञापनात् । एवंविधगुणवत्ताज्ञाने सति सिंहपदादुक्तविधशाब्दबोधोत्पत्तौ न किञ्चिद्बाधकम् । अत एव गुणादीनामुक्तविधकार्यतावच्छेदककोटिप्रविष्टत्वादेव नाशाब्दत्वम् ।

द्वितीया तु यत्र रूपकादौ सत्यपि भेददर्शने सादृश्यमात्रेण सिंहनिष्ठसिंहत्वक्रूरत्वादि देवदत्ते वक्त्रा आरोप्य सिंहशब्दे प्रयुक्ते श्रोता तथैव प्रतिपद्यते, तत्रानुभवसिद्धारोपापह्नवे प्रमाणाभावात् । साक्षात्सम्बन्धेनैव स्वशक्यनिष्ठगुणवत्ता गौणी वृत्तिः ।

अत्र च गुणपदं समवेतमात्रपरम् । सिंहत्वादेरप्यारोपाङ्गी-

कारात् । तथाचारोपसाधारण्येन शक्यसमवेतवत्ता गौणीति । तज्ज्ञानकार्यतावच्छेदकं च स्वशक्यसमवेतप्रकारकदेवदत्तादिविशेष्यकशाब्दत्वमित्यर्थः ॥

नचैवं यत्र शक्यार्थस्यैवाप्रसिद्धिर्यथा खपुष्पादौ तत्र तन्निष्ठगुणयोगाभावात् 'खपुष्पं भवत्सिद्धान्तः' इत्यादौ तल्लक्षणस्याऽव्याप्त्यापत्तिरिति वाच्यम् । लतादौ प्रसिद्धे पुष्पे खाधिकरणकतामारोप्यारोपिताधिकरणताकपुष्पमेव मुख्यं समासार्थमङ्गीकृत्य तन्निष्ठगुणानामलीकानां सिद्धान्तादौ सत्त्वेन गौणत्वोपपत्तेः । एवं बौद्धादिप्रयुक्तस्य 'खपुष्पमात्मा' इत्यादिवाक्यस्यापि । तन्मते अहंप्रत्ययग्राह्यस्य शरीरादेर्वस्तुतः शरीराद्यभेदेऽपि शरीरादिभिन्नत्वेन परारोपितस्यात्मशब्दार्थत्वात्तन्निष्ठगुणानामलीकानामात्मादौ सत्त्वेन गौणत्वोपपत्तिः ।

एवम् 'आत्मा नास्ति' इति बौद्धप्रयोगेऽपि प्रतियोगिप्रसिद्धिः संपादनीया ।

मधुसूदनस्वामिनस्तु–शक्यवृत्तिलक्ष्यमाणगुणसंबन्धो गौणी । यथा 'सिंहो माणवकः' इत्यत्र सिंहपदस्य सिंहवृत्तिशौर्यादिगुणलक्षणया तद्वति माणवके वृत्तिरिति । अत एव लक्षणा गौणीतो बलवती गौण्या वृत्तिद्वयात्मकत्वात् । तदुक्तम्–

अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ॥
लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता ॥ इति ।

अत्रोपचाराख्याऽपरा जघन्या वृत्तिरित्येके । अनियतसंबन्धेनान्यत्र वृत्तिरुपचारः । यथा 'मञ्चाः क्रोशन्ति' इत्यादौ पुरुषैः समं मञ्चसम्बन्धोऽनियतः । गङ्गातीरयोस्तु नियत एव संबन्ध इति ।

तन्न । एवमवान्तरभेदेऽपि लक्षणायामेवावान्तरशक्यसंबन्धस्योभयत्रापि तुल्यत्वात् । गौण्यास्तु वृत्तिद्वयात्मकत्वाद् न लक्षणायामन्तर्भावः । न च सादृश्यसम्बन्धेन सिंहपदस्य माणवके वृत्ति-

बह्वीः प्रजाः सृजमानां नमामः ॥
अजा ये ता जुषमाणां भजन्ते
जहत्येनां भुक्तभोगां नुमस्तान् ॥ १ ॥

लक्षणैवेति सांप्रतम् । सादृश्यस्य शाब्दबोधे भानाभावप्रसङ्गात् । शक्यसम्बन्धस्य स्वोपस्थापकत्वाभावात् सम्बन्धिभानार्थमेव तस्य वृत्तित्वाभ्युपगमात् । तस्माल्लक्षणवैलक्षण्याद् तिरिक्तैव वृत्तिर्गौणीति चतुरस्रमित्याहुः ।

तन्न । तस्या वृत्तिद्वयात्मकत्वेऽपि साक्षात्परम्परासाधारण्येन शक्यसम्बन्धवत्त्वरूपलक्षणात्त्वोपपत्तावतिरिक्तकल्पनासम्भवात् ।

तस्या एव कार्यमात्रकारणत्वलाभाय प्रजां विशिनष्टि *बह्वीरिति । प्रजायन्ते इति प्रजा महत्तत्त्वादयस्ताः सृजमानां कुर्वाणाम् । परिणामशीलितालाभाय सृजन्तीमिति विहाय तथाभिधानम्, तल्लाभश्च "ताच्छील्यवयोवचनशक्तिषु चानश्"इति सूत्रेण चानश्विधानात् । अजो ह्येक इति हित्वा अजा ये इति कथनं तु पुरुषबहुत्वस्य प्रमाणसिद्धत्वाद्वेदे अज इति सामान्याभिप्रायकमिति बोधनाय । जुषमाणामिति हित्वा स्वकार्योपभोगादिभिः सेवमानापरपर्यायजुषमाणामिति कथनं तु पुरुषस्याकर्तृतातच्छेषितालाभाय । अजा ये इत्यस्य तान्नुम इत्यत्रान्वयः । विघ्नाधिकाशङ्कया मङ्गलाधिक्यमिति ।

ननु प्रकृतेर्नमस्कार्यतावच्छेदकजगदुपादानत्वरूपसत्त्वेऽपि जीवानां तादृशरूपाभावात्कथं ते नमस्या इति चेन्न । तेषामपि भोक्तृत्वेन प्रकृतिं प्रति शेषित्वस्य तादृशस्य सत्त्वात् । तान्नुम इत्यत्र स्वावधिकोत्कर्षवत्तया ज्ञापनं नमस्कारः स एव नम्धात्वर्थः । तदेकदेशज्ञानान्वयिविषयित्वं द्वितीयार्थः । तथाच ग्रन्थकृदवधिकोत्कर्षवत्तया तादृशाजविषयकज्ञानानुकूलव्यापारवान्ग्रन्थकर्त्तेत्यन्वयबोधः ।

तेषां स्वापेक्षयोत्कर्षवत्त्वमुपपादयितुं यत्पदार्थं विशिनष्टि *जहतीत्यादिना । भुक्तो भोगो यया सा भुक्तभोगा ताम्, इत्यत्र कर्तृत्वं तृतीयार्थः । भोगः सुखादिग्रहणम् । ग्रहणं च तदाकारता । सा च कूटस्थचितौ बुद्धेरर्थाकारवत्परिणामो न सम्भवतीत्यगत्या प्रतिबिम्बरूपतायां पर्यवस्यति । तथाच सुखादिरूपबुद्धिवृत्तिप्रतिबिम्बः कूटस्थचितौ भोगः । तस्मिन् भुक्तत्वम् अतीतकालोत्पत्तिकत्वम्, अत्रत्यधात्वर्थस्य भोगपदेनैव लाभे विवक्षाऽसम्भवात् । तथाच अतीतकालोत्पत्तिकोक्तभोगानुकूलसुखादिपरिणामवतीमित्यर्थः ।

ननु चिन्निष्ठसुखादिप्रतिबिम्बस्य भोगत्वे "चिदवसानो भोगः" इति ( सां० सू० अ० १ सू० १०४ ) सूत्रविरोधः । सूत्रं तु-पुरुषरूपे चैतन्ये पर्यवसानं समाप्तिः, विचार्यमाणे तद्रूपता यस्य सः; अवसानपदेन परिणामित्वरूपधर्मादिनिरासः, इत्येवं व्याख्येयमिति चेद्, न । सुखाद्युपरक्तवृत्तिप्रतिबिम्बावच्छिन्नस्वरूपचैतन्यरूपभानस्य सुखादिप्रतिबिम्बावच्छिन्नस्वरूपचैतन्यरूपभानस्य वा भोगपदेन विवक्षितत्वात् । अत एव पुरुषस्वरूपत्वेन तस्य नित्यत्वेऽपि अवच्छिन्नरूपेण कार्यतया प्रकृतेस्तत्कर्तृत्वोपपत्तिः । एवं पुरुषस्य बुद्धिगतप्रतिबिम्बेन भास्यमानसुखाद्याश्रयत्वरूपभोक्तृत्वोपपत्तिरपि ।

यत्तु-भोगः सुखदुःखे । तथा च भुक्तः साक्षात्कृतः, अतीतकालोत्पत्तिकसाक्षात्कारविषयः भोगः सुखदुःखे यस्या यस्यां वा सा । अस्मिन्पक्षे 'ज्ञातो घटः' 'कृतो घटः' इत्यादिवद्भोगे भुजिधातुकर्मत्वलाभेन भुजिधातोर्नानर्थकत्वमिति । तन्न । त्वन्मते भुजेः साक्षात्कारार्थत्वाभावात्, उक्तसूत्रविरोधाच्च । 'सर्वं प्रत्युपभोगम्' (सां० का० ३७ ) इत्यादौ वक्ष्यमाण-'सुखदुःखानुभवो हि भोगः' इति मिश्रोक्तिविरोधाच्च । 'सुखं दुःखं विषयान्वा भुञ्जे' इत्यादिसर्वजनीनानुभवविरोधाच्च ।

'ज्ञातो घटः' इत्यादिवत्कर्तृसाकाङ्क्षतया प्रकारान्तरेण विग्रहानुपपत्तेश्च। सुखादिसाक्षात्कारस्य स्वप्रतिबिम्बविशिष्टनित्यसाक्षिचैतन्यरूपतया नाशाभावे संस्काराभावेन सुखादिस्मरणानुपपत्तिरिति न च वाच्यम्। सुखाद्याकारवृत्तिप्रतिबिम्बाङ्गीकारपक्षे दोषाभावात्। न चास्मिन्पक्षेऽपि अनवस्थापत्त्या वृत्तेर्वृत्त्यन्तरानभ्युपगमेन तदीयस्मरणानुपपत्तिरिति वाच्यम्। 'यद्वृत्त्यवच्छिन्नचैतन्येन यत् प्रकाश्यते तद्वृत्त्या तद्गोचरसंस्काराधानम्' इति नियमाभ्युपगमात्। वृत्तिं विनाऽपि द्वितीयपक्षे स्मरणस्य व्युत्पादितत्वाच्च।

तथाहि—प्रमात्वावच्छिन्नं प्रत्येवान्तःकरणस्य परिणामित्वाङ्गीकारेण जाग्रत्स्वप्नभ्रमविषयस्मरणानुपपत्तिनिरासाय यद्वृत्त्यवच्छिन्नत्वाद्यपेक्षया लाघवात् 'यदवच्छिन्नचैतन्ये यद् अवभासते तत्सूक्ष्मावस्था एव तत्संस्कारः' इत्येव नियमः कल्प्यते, तेनैव जाग्रदादिभ्रमे स्वविषयसूक्ष्मावस्थारूपसंस्कारात् सुषुप्तौ सूक्ष्ममनोऽवच्छिन्नचिद्भास्याविद्यादेः सूक्ष्ममनोनाशरूपस्थूलावस्थारूपसंस्कारात्स्मृतिसम्भवः। न च समानविषयकत्वनियमभङ्ग इति वाच्यम्। पूर्वनियमवादिनोऽप्येतद्दोषसत्त्वात्। न च समानविषयकत्वनियमरक्षणाय वृत्तेरपि स्वविषयकत्वमङ्गीकृत्य जाग्रद्भ्रमस्थलेऽन्तःकरणस्य, स्वप्नसुषुप्त्योरविद्यायाः, सर्वत्र भ्रमेऽविद्याया एव वा वृत्तिं स्वीकुर्म इति वाच्यम्। असम्भवात्। तथाहि—चक्षुरादेः पुरोवर्तिविद्यमानवस्तुविषयकान्तःकरणवृत्त्युत्पादकत्वात् जाग्रद्भ्रमस्थलेऽन्तःकरणवृत्त्यसम्भवः। रजतोत्पत्त्यनन्तरं वृत्त्यभ्युपगमे प्रवृत्तौ द्वित्रिक्षणविलम्बापत्तिः। ज्ञानाज्ञानयोरेकावच्छेदेन चिद्विषयतानियमाय ज्ञानीयविषयतावच्छेदकतासम्बन्धेन ज्ञानं प्रति स्वीयविषयतावच्छेदकतासम्बन्धेनाज्ञानस्य हेतुत्वं वाच्यम्। तच्च न सम्भवति। पश्चाद्भाविनः स्वीयकार्यस्य शुक्तिरजतादेः स्वीयविषयतावच्छेदकत्वासम्भवादिति।

'सुखादिगतप्रतिबिम्बत्वं भोगत्वम्'इति पक्षे तु प्रतिबिम्बस्यानित्यत्वान्न स्मृत्यनुपपत्तिः। पक्षोऽयम् "अध्यवसायो बुद्धिः" ( सां० त० कौ० का० २३ ) इत्यत्र व्युत्पादयिष्यते।

भुक्तभोगामिति विशेषणेन हेयत्वे दुःखसम्बन्धप्रयोजकत्वरूपं बीजं सूचितम्। अत एव जहतीत्युक्तम्। जहति त्यजन्ति। उक्तदुःखजनकसंयोगविरोधिविभागानुकूलव्यापारवन्त इत्यर्थः। अत्र व्यापारस्तु सत्त्वपुरुषान्यताख्यातिरूपः।

ननु प्रकृतिपुरुषयोरपरिच्छिन्नतया नित्यत्वेन च संयोगासम्भवः, तत्सम्भवेऽपि मुक्तामुक्तपुरुषसाधारणतया कथं बन्धहेतुत्वम्, कथं वा तस्य निवृत्तिः, सम्बन्धिनोर्नित्यत्वे तस्यापि नित्यत्वादिति चेत्, न। प्रकृतेः परिच्छिन्नापरिच्छिन्नत्रिविधगुणसमुदायरूपतया परिच्छिन्नगुणावच्छेदेन पुरुषसंयोगोत्पत्तिसम्भवात्। स्वस्वबुद्धिभावापन्नप्रकृतिसंयोगविशेषस्यैवात्र संयोगशब्दार्थत्वाच्च।

वैशेषिकादिवदेव भोगजनकतावच्छेदकत्वेन सिद्धस्यान्तःकरणसंयोगे वैजात्यस्याङ्गीकारेण च सुषुप्त्यादौ न बन्धप्रसङ्गः।

पुरुषस्य बुद्धौ स्वत्वं च स्वभुक्तवृत्तिवासनावत्त्वम्। तच्चानादि। तादृशसंयोगश्चाविवेकहेतुकः, अविवेकस्तु मुक्तेषु नास्तीति न पुनस्तेषां संयोगसंभावना, नवा संयोगस्य नित्यत्वम्।

न चाजसंयोगे मानाभाव इति वाच्यम्। आकाशादिकमात्मना संयुज्यते संयोगित्वात् घटवदित्यस्यैव मानत्वात्। नच मूर्त्तत्वादिरत्रोपाधिः। व्यतिरेकासिद्धेः। यदमूर्तं तदात्मना न संयुज्यते यथा रूपमिति व्यतिरेकस्तत्र चासंयोगित्वस्यैवोपाधितया व्यतिरेकासिद्धेः। मूर्त्तत्वं चावच्छिन्नपरिमाणाधिकरणत्वम्। ततश्च परिमाणाधिकरणत्वेनैव व्याप्तिसिद्धेरवच्छिन्नविशेषणस्य पक्षमात्रव्यावृत्तिप्रयोजनस्य पक्षेतरता।

न चान्यतरकर्मोभयकर्मसंयोगरूपकारणत्रितयजन्यत्वं संयो-

गस्य गृहीतम्, तच्च व्यावर्त्तमानं तस्य संयोगत्वमपि व्यावर्तयतीति वाच्यम् । कारणबहुत्वकारणमहत्त्वप्रचयविशेषरूपात्रितयकारणजन्यत्वं महत्त्वस्य गृहीतम्, तेनात्मादिषु व्यावर्त्तमानेन महत्त्वस्यापि व्यावृत्त्यापत्तेः । सम्बन्धत्वस्यानित्यत्वव्याप्यतया समवायस्याप्यनित्यत्वापत्तेश्च । ज्ञानस्यास्मदादिशरीरेन्द्रियादिजन्यत्वनियमेनेश्वरस्य शरीरादिनिवृत्त्या तन्निवृत्त्यापत्तेश्च ।

नच प्रकृतिपुरुषयोस्संयोगाङ्गीकारे पुरुषस्य प्रकृतिवत् परिणामसङ्गौ प्रसज्येयाताम्, संयोगस्योभयपरिणामरूपत्वादिति वाच्यम् । सामान्यगुणातिरिक्तधर्मस्यैव परिणामत्वात् । अन्यथा कूटस्थस्य सर्वमूर्त्तसंयोगित्वरूपविभुत्वानुपपत्तेः । परिणामहेतुसम्बन्धस्यैव सङ्गशब्दार्थत्वे द्वितीयदोषाभावात् । अन्यथा पुरुषासङ्गतायां पद्मपत्रस्थजलेन पत्रासङ्गताया दृष्टान्तत्वानुपपत्तेः ।

नन्वविवेकोऽत्र न प्रकृतिपुरुषाभेदसाक्षात्कारः, संयोगात्प्रागसत्त्वात् । नापि विवेकप्रागभावः, जीवन्मुक्तस्यापि भाविविवेकव्यक्तिप्रागभावेन धर्माधर्मोत्पत्तिद्वारा पुनर्बन्धप्रसङ्गात् । किंतु "अहमज्ञः" इत्यादिज्ञानवासनारूपो वाच्यः, स च बुद्धिधर्मस्तेनान्यत्र संयोगजनने मुक्तेऽपि तज्जननापत्तिरिति चेत्, न । स्वस्वबुद्धिभावापन्नप्रकृतिद्वयगृहीतासंसर्गकोक्तप्रकृतिपुरुषोभयविषयकबुद्धिवृत्तिरूपज्ञानवासनारूपस्याविवेकस्य प्रतिबिम्बरूपविषयतासम्बन्धेन पुरुषधर्मत्वात् । मुक्तपुरुषेषु साक्षात्कारेण नष्टस्य प्रतिबिम्बासम्भवेन न संयोगोत्पत्तिः । नच सत्कार्यवादे निरन्वयनाशानभ्युपगमेन पुनः स्वस्वबुद्धिभावापन्नप्रकृत्युत्पत्त्या तदुत्पत्तेरावश्यकत्वादुक्तदोषतादवस्थ्यमिति वाच्यम् । मूलप्रकृतेर्नित्यत्वेऽप्युक्तावस्थारूपपरिणामस्य निरन्वयनाशाभ्युपगमात् । पुनस्तदुत्पत्त्यभावान्न सत्कार्यवादहानिरपि । न चोक्ताविवेकस्य प्रकृतिकार्यबुद्धिपुरुषाविवेकरूपत्वेन मूलप्रकृतिपुरुषसंयोगाजनकत्वादगृहीतासंसर्ग-

कस्वप्रकृतिपुरुषोभयविषयकबुद्धिवृत्तिरूपज्ञानवासनाख्यस्याविवेकस्यावश्यकत्वे बुद्धिभावापन्नेति विशेषणं व्यर्थमिति वाच्यम् । भवदुक्ताविवेकस्य मुख्यत्वेऽपि साक्षादबन्धकतया तदाकाङ्क्षितद्वारलाभायोक्तविशेषणस्य सार्थकत्वात् ।

न चाविवेकस्य संयोगहेतुत्वे मानाभाव इति वाच्यम् ।

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् ॥

कारणं गुणसङ्गोऽस्य सदसद्यक्तियोनिषु(१)॥ (गी०) इत्यस्य–

प्रकृतिस्थः प्रकृतिसंयुक्तः प्रकृतिस्थताख्यसंयोगवानित्यर्थः । अस्य-विशेषणीभूतसंयोगस्य, गुणसङ्गो गुणाभिमानोऽविवेकाख्यः कारणं निमित्तम् इत्यर्थकभगवद्वचनस्य मानत्वात् ।

नचाविवेकस्यस्साक्षादेव हेतुत्वमस्तु किमन्तर्गडुना संयोगेनेति ?। "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इत्यादिश्रुतिविरोधापत्तेः । आत्मेन्द्रियेत्यत्रात्मपदं शरीरपरं प्रकरणात् । आत्मानमिति द्वितीयान्तं पदमात्मेन्द्रियमनोयुक्तमितिद्वितीयान्तपदविशेष्यत्वेन प्रकरणसामर्थ्याद्योग्यतयाऽनुषज्यते । एवं चात्मेन्द्रियमनोयुक्तमितिपदमात्मानमित्यस्य द्वितीयान्तं पुँल्लिङ्गं विशेषणम् । तथाच मनीषिणः शरीरेन्द्रियमनोभिर्युक्तं विशिष्टमात्मानं भोक्तेत्याहुरित्यन्वयः । एतदभिप्रायेणैव "आत्मेन्द्रियमनोयुक्तं शरीरेन्द्रियमनोभिस्सहितं युक्तमात्मानं भोक्ता संसारी इत्याहुः" इति कठभाष्ये भगवच्छङ्कराचार्य्यैरुक्तम् । आत्मा भोक्तेत्युक्ते भोक्तृत्वं स्वाभाविकमित्येव भ्रमः स्यात्तद्वारणायात्मेन्द्रियमनोयुक्तमित्युपात्तम् ।

केचित्तु-"आत्मानं रथिनम्" इत्यत्रोपात्तमात्मस्वरूपं परिशोधयितुं दर्शयति आत्मेति । मनीषिणः इन्द्रियमनोयुक्तं यथा स्यात्तथा भोक्ता आत्मा भवतीत्याहुरित्यन्वयः ।

यद्वा-आत्मानमित्यत्रोपात्तस्यात्मनः परिशोधनाय किञ्चिद्गु-

(१) गीतायां सदसद्योनिजन्मसु इति पाठः ।

णं दर्शयति आत्मेति । मनीषिण आत्मा इन्द्रियमनोयुक्तं यथा स्यात्तथा भोक्ता भवतीत्याहुरित्यन्वय इत्याहुः ।

अत्र विचारयामः—प्रथमव्याख्याने भोक्तोद्देश्य आत्मा विधेयः । द्वितीयव्याख्याने आत्मोद्देश्यो भोक्ता विधेयः । एवं च प्रथमव्याख्याने विधेयस्यात्मेतिपदस्य पश्चान्निर्देशार्हस्य परिदृश्यमानः प्रथमनिर्देशोऽसङ्गतः स्यात् । जाग्रदवस्थस्यैवात्मत्वोपवर्णनेन स्वप्नसुषुप्त्यवस्थापन्नयोस्तैजसप्राज्ञयोरध्यात्मत्वेन निरूपणीययोरग्रहणापत्तिश्च । न च जाग्रदवस्थापन्न एवात्र निरूपणीयः । स्वप्नाद्यवस्थापन्नस्यानात्मत्वापत्त्याऽवस्थात्रयानुस्यूतत्वेनात्मनो बोधकस्याप्रामाण्यापत्तेः ।

द्वितीयव्याख्याने जाग्रदवस्थापन्नस्यैव भोक्तृत्वं स्यान्न तु स्वप्नसुषुप्त्यवस्थापन्नयोः । तयोरनङ्गीकारे "घ्नन्तीव जिनन्तीवानन्दभुक्"इत्यादेरप्रामाण्यापत्तेः ।

न च भगवच्छङ्कराचार्यमतेऽपि शरीरेन्द्रियमनोभिर्विनाऽपि स्वप्नसुषुप्त्यवस्थापन्नयोर्भोक्तृत्वसत्त्वेन तेषामपि भोक्तृत्वव्याप्यत्वे सति व्यापकत्वरूपभोक्तृत्वप्रयोजकत्वं न सम्भवतीति वाच्यम् । औदासीन्यादिदशायां भोक्तृत्वापत्तिवारणायात्मेत्यादेर्यथासम्भवं कर्माविद्यावासनादेरुपलक्षणपरत्वात् । न च परमतेऽपि यथासम्भवमुपलक्षणपरत्वम् । स्थूलदेहं विना इन्द्रियमनसोः सत्त्वे भोगानुत्पत्त्या स्थूलदेहस्य प्रधानत्वेन तदघटितस्योपलक्षणत्वासम्भवात् । न ह्यप्रधानस्योपलक्षणत्वं सचेतनोऽनुमनुते । न चानुषङ्गं विनोपपत्तावनुषङ्गकल्पनादोषः । अनुपपत्तेरुक्तत्वात् । "आत्मानं रथिनम्" इत्युपात्तात्मनः स्वभावतः शुद्धाशुद्धविलक्षणरूपेण विशेषणीयतयाऽनुषङ्गावश्यकत्वाच्च ।

अविवेकस्य बन्धनजनने द्वारजातमुक्तमक्षचरणसूत्रे—"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावाद-

पवर्गः" इति (न्या०सू० अ०१ आ०१ सू०२) सूत्रं तु तेषु जन्मादिषु मध्ये उत्तरोत्तराणामपाये तदनन्तराभावादव्यवहितपूर्वाभावात् अपवर्गः आत्यन्तिकी दुःखनिवृत्तिः। तथाच न्यायसूत्रम्—'बाधनालक्षणं दुःखं तदत्यन्तविमोक्षोऽपवर्गः' इति । (न्या०सू० अ०१आ०१सू०२१–२२) दुःखानि–शरीरम्, षडिन्द्रियाणि, षड् विषयाः, षड् बुद्धयः, सुखम्, दुःखं चेत्येकविंशतिः। तत्र दुःखत्वजातिशून्ये शरीरादौ दुःखसाधनतया गौणं दुःखत्वम् । स्वर्गादिसुखस्यापि तन्नाशज्ञानेन दुःखसाधनत्वमव्यावृत्तमेव । न चैकविंशतिदुःखान्तर्गतयोर्मनःश्रवणयोर्नित्यत्वात्कथं नाश इति वाच्यम्। तद्रूपविशिष्टस्य श्रवणस्य ज्ञानद्वारा दुःखहेतुतया दुःखत्वम् । तद्रूपस्य कर्णशष्कुल्या नाशेन विशिष्टश्रवणेन्द्रियरूपदुःखनाशात् । एवमात्मसंयोगरूपव्यापारविशिष्टस्यैव मनसो ज्ञानद्वारा दुःखरूपतया व्यापारनाशेन तद्विशिष्टमनोरूपदुःखनाशसम्भवादिति । दुःखनिवृत्तावात्यन्तिकत्वं च स्वसमानाधिकरणदुःखासमानकालीनत्वमिति परिष्कुर्वन्ति न्यायाचार्या उद्द्योतकरादयः ।

अत्र विचारयामः—षडिन्द्रियाणि षड्विषया इति यत्, तन्न। घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च संशयः । 'गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्या' इत्यादिविभागपरीक्षासूत्रविरोधात् । न च 'परमतमप्रतिषिद्धमनुमतं भवति' इति न्यायान्नायदोष इति वाच्यम् । परीक्षाविरोधेनाप्रतिषिद्धत्वाभावात् । परीक्षावैयर्थ्यापत्तेश्च । जायादीनां विषयत्ववारणायानितरेतरसाधनसाध्यत्वमेकैकेन्द्रियग्राह्यत्वापर्यायं विषयत्वं वक्तव्यम्, षण्णां बुद्धीनां सुखदुःखयोश्च मनोरूपैकेन्द्रियग्राह्यत्वाद्विषयपदेनैव लाभे तेषां पृथग्ग्रहणं व्यर्थम् । जायादेरपि सुखादिवत् दुःखसाधनत्वात् विषयप-

दस्य विशेषपरत्वे युक्त्यभावाच्च ।

एतेन–यद्यपि बुद्धिसुखदुःखान्यपि मनसो विषयास्तथापि तस्यैव विषयत्वेन दुःखत्वोपचारो यद् विषयीक्रियमाणं दुःखं जनयति । तथाच एकैकेन्द्रियग्राह्यत्वे सति ज्ञायमानत्वेन दुःखसाधनत्वं विषयत्वमित्युक्ते बुद्ध्यादेर्विषयत्वनिरासः–इति परास्तम् । जायादेर्नाशसत्त्वेऽपि तन्नाशज्ञानाज् जायारूपादेर्दुःखोत्पत्त्या ज्ञायमानत्वेन हेतुत्वाभावाच्च ।

एतेन–बुद्धिसुखदुःखानि न मनसो विषयः ज्ञायमानत्वेन दुःखाजनकत्वात् किन्तु इच्छाद्वेषप्रयत्ना एव, ज्ञायमानत्वेन दुःखजनकत्वात्–इति परास्तम् ।

न चैकैकेन्द्रियग्राह्यत्वे सति यद्विषयकज्ञानं दुःखजनकं तत्त्वं विषयत्वम्, बुद्धिसुखदुःखानि तु न तादृशानीति वाच्यम् । विषयपदस्य विशेषपरत्वे युक्त्यभावरूपदोषानिवृत्तेः । 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इत्यादिवाक्यजन्या साक्षान्मोक्षाजनके कर्मणि साक्षान्मोक्षजनकत्वबुद्धिरिति ज्ञात्वा जातिस्मरो दुःखायते मोक्षालाभात्, शत्रौ मित्रबुद्धिर्जातेति ज्ञात्वा यथाऽन्य इति । शत्रुपुत्रगतयोः सुखदुःखयोर्ज्ञायमानयोर्दुःखजनकत्वेन च बुद्ध्यादेरपि मनोविषयत्वस्य दुर्वारत्वाच्च ।

नच सर्वत्र बुद्ध्यादेर्न तथात्वमिति वाच्यम् । पिपासादेः क्वचित्स्वरूपसत्तया ते हेतुतया सर्वत्रातथात्वात् । नचोक्तभ्रमादिस्थले बुद्ध्यादिज्ञानेऽपि कर्मसत्त्वादिज्ञानस्यावश्यकत्वात्तस्यैव दुःखहेतुत्वं न तु बुद्ध्यादिज्ञानस्येति वाच्यम् । केवलकर्मादिज्ञानसत्त्वेऽपि दुःखानुत्पत्त्या तथा वक्तुमशक्यत्वात् । शत्रुमित्रगतसुखदुःखयोर्मनोविषयत्वापत्त्यनुद्धाराच्च ।

यत्तु रागद्वेषमोहप्रवृत्तिधर्माधर्माणां दुःखहेतुत्वेऽपि तत्परित्यागे बीजं शरीरादिव्यतिरेकेणात्मलाभाभावो दुःखं प्रति

व्यापाराभावश्चेति तन्न। शरीरं विना इन्द्रियादेरप्यात्मलाभाद्यभावेनाग्रहणापत्तेः। सर्वेषामितरेतराधीनतया विनिगमनाविरहेण सर्वेषां ग्रहणापत्तेश्च।

यत्तु–मिथ्याज्ञानम् "आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्" (न्या.सू.अ.१आ.१सू.९) इति मोक्षोपयोगिद्वादशविधप्रमेयेषु मुख्ये आत्मनि 'नास्ति, क्षणिकविज्ञानमात्मा' इत्यादि, अमुख्ये च शरीराद्ये 'शरीरमात्मा' इत्याद्यनेकविधम्। तद्विरोधि तत्त्वज्ञानं च "इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्" (न्या.सू.अ.१आ.१सू.१०) इति सूत्रोक्तविशेषगुणलिङ्गकशरीरादिभेदविशिष्टात्मविषयकज्ञानम्, तेन मिथ्याज्ञानं निवर्त्यते, मिथ्याज्ञानाभावे "प्रवर्त्तनालक्षणा दोषाः" (न्या.सू.अ.१ आ.१ सू.१८) "तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात्" (न्या.सू.अ.४आ.१सू.३) इति सूत्रोक्ता रागद्वेषमोहाख्या दोषा निवर्त्तन्ते। ये तावदनुत्पन्ना रागादयस्ते कारणाभावादेव मा भूवन्, उत्पन्नानां च वैराग्यान्निवृत्तिः। दोषाभावे "प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः" (न्या.सू.अ.१आ.१सू.१७) इति सूत्रोक्ता निवर्तते। सा च जन्महेतुधर्माधर्मरूपा। यौ वाऽनागतौ धर्माधर्मौ, तौ कारणाभावान्नोत्पद्येते, वर्त्तमानौ स्वकार्येण निवर्त्येते। प्रवृत्त्यभावे जन्माभावः, यद् अन्यच्छरीरं तद् न भवति, नतु वर्तमानं न भवतीति। वर्त्तमानशरीरस्य निवृत्तिस्तु तदवस्थितिहेतुधर्माधर्मसंस्कारनिवृत्त्या। जन्माभावे दुःखाभावः, निरायतनस्यानुत्पत्तेः। यद्यपि दुःखाभावान्नापवर्गः किं तु स एव, तथाऽप्यभेद एव तत्र पञ्चम्यर्थ इति।

तत्र विचारयामः—आत्मगुणानां नित्यत्वे सुखादिसत्त्वेनानिर्मोक्षप्रसङ्गः, अनित्यत्वे 'शरीरादिभिन्नो जन्यज्ञानेच्छादिमानात्मा' इत्यादिरूपयथार्थज्ञानेन मिथ्याज्ञाननिवृत्तावपि न तान्नि-

वृत्त्या रागनिवृत्तिः सम्भवति, मिथ्याज्ञानस्य तद्वासनाया वा रागाद्यप्रयोजकत्वात्, ज्ञानिनोऽपि रागादिदर्शनाच्च ।

किञ्च "तत्त्रैराश्यम्" तेषां दोषाणां त्रयो राशयस्त्रयः पक्षाः, अन्ये मायादयोऽन्तर्भवन्ति तदात्मानो भवन्तीति सूत्रार्थः ।

तत्र रागपक्षः—कामो मत्सरः स्पृहा तृष्णा लोभो माया दम्भ इति । कामः—रिरंसा । मत्सरः—स्वप्रयोजनप्रतिसंधानं विना पराभिमतनिवारणेच्छा, एवं परगुणनिराकरणेच्छाऽपि । स्पृहा धर्माविरोधेन प्राप्तीच्छा । तृष्णा 'इदं मे न क्षीयताम्' इतीच्छा । उचितव्ययीकरणेनापि धनरक्षणेच्छारूपं कार्पण्यमपि तृष्णाभेद एव । धर्मविरोधेन परद्रव्येच्छा लोभः । परवञ्चनेच्छा माया । कपटेन धार्मिकत्वादिना स्वोत्कर्षख्यापनेच्छा दम्भः ।

द्वेषपक्षः—क्रोध ईर्ष्याऽसूया द्रोहोऽमर्षोऽवमान इति । क्रोधो नेत्रलौहित्यादिहेतुर्दोषविशेषः । ईर्ष्या साधारणे वस्तुनि परस्वत्वात्तद्ग्रहीतरि द्वेषः । यथा दायादादीनाम् । असूया परगुणादौ द्वेषः । द्रोहो नाशाय द्वेषः । हिंसा तु द्रोहजन्या । अमर्षः कृतापराधेऽसमर्थस्य द्वेषः । अवमानोऽपकारिण्यकिञ्चित्करस्यात्मनि द्वेषः ।

मोहपक्षः—विपर्ययसंशयतर्कमानप्रमादभयशोकाः । विपर्ययो मिथ्याज्ञानापरपर्यायोऽयथार्थनिश्चयः । संशयोऽनिर्धारणात्मा, स एव विचिकित्सेत्युच्यते । व्याप्यारोपेण व्यापकप्रसञ्जनं तर्कः । आत्मन्यविद्यमानगुणारोपेणोत्कर्षधीर्मानः । गुणवति निर्गुणत्वधीरूपस्मयोऽपि मानेऽन्तर्भवति । प्रमादः पूर्वं कर्तव्यतया निश्चितेऽप्यकर्तव्यताधीः । भयम् अनिष्टहेतूपनिपाते तत्परित्यागानर्हताज्ञानम् । शोक इष्टवियोगेन तल्लाभानर्हताज्ञानमिति—

दोषराशिमध्ये मिथ्याज्ञानरूपमोहस्यापि गणनया मोहनिवृत्त्या मोहो निवर्तते इत्युक्तं स्यात्, तच्चासङ्गतम् । आत्माश्रयात् ।

यच्च रागाद्यभावे धर्माद्यनुत्पत्तिः, तन्न । रागं विनाऽपि गङ्गा-

जलसंयोगादिना धर्मोत्पत्तेः। नित्याकरणे अधर्मोत्पत्तेश्च। एतेन यद्यपवर्गस्तत्त्वज्ञानानन्तरं तर्हि सम्प्रदायोच्छेदो वातपुत्रीयत्ता च शास्त्रस्य स्यात्, तद्वारणायोपात्तधर्माधर्मप्रचयस्याभुक्तस्य भुज्यमानस्य वा यावत्सत्त्वं तावद्धर्माधर्मानुत्पादरूपजीवन्मुक्तिः, तदनन्तरमुक्तविदेहकैवल्यरूपा मुक्तिरभ्युपेयते इति—परास्तम्॥

ननु श्रवणमननावधृतात्मतत्त्वस्यात्मनि पूर्ववदेव दिङ्मोहादिवत् विपर्ययवासनानुवृत्तेरतो 'निदिध्यासनजन्यसाक्षात्कार एव विपर्ययनिवर्तकः, तद्वासना तद्वासनानिवर्तिका' इत्युपेयते, एवं च 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे'"ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन' इत्यादिश्रुतिस्मृत्यविरोधाय प्रायश्चित्तेनेव ज्ञानेनाद-त्तफलानां कर्मणामवश्यनाशे सहसैव विदेहमुक्तिरुपेयते, नतु जीवन्मुक्तिः, उक्तश्रुत्यादिविरोधात्। न च 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति स्मृतिविरोध इति वाच्यम्। ज्ञानाग्निं विना न क्षीयत इत्यत्र तात्पर्यात्। न च सम्प्रदायविच्छेदादिदोषः। आन्वीक्षिकीविद्यावधृतात्मतत्त्वस्य सम्प्रदायप्रवर्त्तकत्वात्। न च प्रायश्चित्तस्याधिकारापत्तिः फलम्। अदृष्टकर्मणामागममन्तरेण फलविशेषकल्पनायां प्रमाणाभावात्। महापातकातिरिक्तस्थलेऽनधिकाराभावाच्च। प्राणान्तिकप्रायश्चित्तेऽधिकारापत्तेरसम्भवाच्च। श्रूयमाणपापध्वंसरूपफलत्यागप्रसङ्गाच्च। न च विमतं कर्म भोगनाश्यं कर्मत्वादिति बाधकबलाच्छ्रूयमाणफलत्यागेऽपि न दोष इति वाच्यम्। अनन्यथासिद्धतया बलवता आगमेनानुमानस्य बाधितत्वेन दुर्बलत्वात्। अन्यथा सुरापेयत्वानुमानमपि दुर्वारं स्यात्। नच प्रायश्चित्ताचरणदुःखमेव ब्रह्महत्यादीनां फलम्, तत्फलत्वेनाश्रुतेः। अकरणेऽनिष्टाभावेन प्रायश्चित्तविधिवैफल्यप्रसङ्गाच्च। ब्रह्महत्यादेर्घोरनरकफलजनकत्वविधानानुपपत्तेश्चेति चेत्, न। "तस्य तावदेव चिरं यावन्न विमो-

क्ष्ये अथ सम्पत्स्ये" 'नाभुक्तं क्षीयते कर्म,' विवादाध्यासितानि कर्माणि भोगादेव क्षीयन्ते, अचीर्णप्रायश्चित्तकर्मत्वाद् आरब्धशरीरकर्मवत्, इत्यादिश्रुतिस्मृतिन्यायविरोधात्, उक्तश्रुतिस्मृत्योरदत्तफलभुज्यमानफलकर्मातिरिक्तकर्मक्षयपरत्वात् ।

श्रुतिस्तु–अस्य तत्त्वसाक्षात्कारवतस्तावदेव चिरं विलम्बः, यावन्न विमोक्ष उपात्तकर्मराशेः सकाशात्फलोपभोगेन । अथ तस्मिन्सति सम्पत्स्यते कैवल्येनेति व्याख्येया ।

अन्ये तु–तस्य तावदेव विलम्बो यावदज्ञाननिवृत्तिर्न भवति तन्निवृत्तौ मोक्षं प्राप्नोतीत्यर्थ इत्याहुः ।

यदप्युक्तम् आत्मसंयोगरूपव्यापारनाशेन तद्विशिष्टमनोरूपदुःखनाश इति तन्न । आत्मनः सर्वमूर्त्तसंयोगित्वरूपविभुत्वाभावप्रसङ्गात् । व्यापकं नित्यं विभुमात्मानं विहाय नित्यस्याणुरूपस्य मूर्त्तस्य मनसोऽवस्थानासम्भवेऽप्यवस्थानं सम्भवतीत्युक्तिर्नैयायिकानामेव शोभते। यथा आत्यन्तिकदुःखनिवृत्तिर्न मोक्षस्तथा वक्ष्याम इति ।

यद्यपि "न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवति"इत्यादिश्रुत्या जीवात्मैक्यगतप्रियत्वबोधिकया तमुपक्रम्योक्तया "आत्मा वा अरे द्रष्टव्यः" इत्यादिश्रुत्या "आत्मानं चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन्कस्य कामाय शरीरमनु संज्वरेत्" "तरति शोकमात्मवित्"इत्यादिश्रुत्या स्वात्मसाक्षात्कार एव मोक्षहेतुरिति गम्यते । युक्तं चैतत्, तस्यैव मिथ्याज्ञानविरोधित्वादिति । यद्विषयसाक्षात्कारो मोक्षहेतुस्तद्विषयकमननं निदिध्यासनं च मोक्षहेतुः, ईश्वरमननं तु न तत्रोपयोगि, तथाऽपि "तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय"इत्यादिश्रुतौ स्वात्मज्ञानस्येव तज्ज्ञानस्यापि मोक्षहेतुत्वश्रवणात्, "द्वे ब्रह्मणी वेदि-

तव्ये" इत्यत्र ब्रह्मवेदनस्यापि प्रकृततया "श्रोतव्यो मन्तव्यः" इत्यत्र तस्यान्वयात् ईश्वरसाक्षात्कारद्वारैव स्वात्मसाक्षात्कारस्य हेतुत्वावश्यकत्वे ईश्वरसाक्षात्कारे जीवन्मुक्तिपरमुक्त्योरुपायमीश्वरमननमुपयुज्यते इति 'स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः'इत्युदयनाचार्यकृतकुसुमाञ्जलेराशयं वर्णयन्ति वर्द्धमानोपाध्यायादय इति ।

तदपरे न क्षमन्ते । परस्य परात्मतद्गुणानां साक्षात्कारासम्भवात् । सम्भवेऽपि तस्य स्वात्मविषयकापरोक्षभ्रमानिवर्त्तकत्वाच्च । एतेनेश्वरज्ञानमेवापेक्षितमिति परास्तम् । तदीयमनननिदिध्यासनयोर्वैयर्थ्यापत्तेश्च । अत एव स्वात्मसाक्षात्कारप्रतिबन्धकपापनाशद्वारा तदीयमनननिदिध्यासनयोरुपयोग इति परास्तम् । कलृप्तदृष्टसाक्षात्काररूपद्वारसम्भवेऽदृष्टद्वारकल्पनायां गौरवान्मानाभावाच्च । ईशात्मनोर्भेदे "मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञाननेदं सर्वं विदितम्" "ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद, सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमानि भूतानीदं सर्वं यदयमात्मा" इत्याद्यग्रिमतनात्मस्वरूपनिरूपणपरश्रुतिविरोधापत्तेः । न च "तमेव विदित्वा"इत्यादिश्रुतिविरोधस्तवाप्यस्तीति वाच्यम् । "आत्मा वा अरे द्रष्टव्यः" इत्याद्युक्तश्रुतियुक्त्येकवाक्यतयाऽन्तःकरणशुद्धिसाधनोपासनाद्वारा मोक्षे तात्पर्यात्। अत एव "पुरुष एवेदं सर्वम्"इत्याद्युपपद्यतेऽन्यथा प्रत्यक्षविरोधापत्तेः । अत एव न बाधायां सामानाधिकरण्यम् । न च मयाऽप्येवं व्याख्येयमिति वाच्यम् । ईश्वरसाक्षात्कारद्वारेत्यादिस्वोक्ते विरोधापत्तेरिति ।

हेयाया ग्रहणे निमित्तं दर्शयितुं तां विशिनष्टि—जुषमाणामिति । प्रीत्यर्थकजुषिधातोः कर्त्तरि शानच्प्रत्यये इदं रूपम् । तथाच जुषमाणां सुखाकारेण परिणताम् । अत्र विषयत्वं द्वितीया-

कपिलाय महामुनये मुनये शिष्याय तस्य चासुरये॥
पञ्चशिखाय तथेश्वरकृष्णायैते नमस्यामः ॥ २ ॥

र्थः । भजन्ते इत्यत्र रागो धात्वर्थः । तथाच तद्विषयकरागाश्रया इत्यन्वयबोधः । एवं च तरुण्याद्याकारपरिणतप्रकृतिसौन्दर्यदर्शनादिनोद्बुद्धो यः 'इयं मदिष्टा'इत्यादिज्ञानविशेषरूपोऽनाद्यविवेक एव रिरंसादिरूपरागद्वारा पुरुषं प्रवर्त्तयतीत्यर्थः ॥ १ ॥

नन्वीश्वरकृष्णप्रणीता आर्या मुमुक्षुभिरनुपादेया असर्वज्ञपुरुषप्रणीतत्वात् । न च हेत्वसिद्धिः । पुराणादिषु विद्यासम्प्रदायप्रवर्त्तकमध्येऽगणनादित्याशङ्कां दूरीकुर्वन्—

यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ ॥
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ १ ॥

इति सुबालोपनिषद्बोधितेतिकर्त्तव्यताकं गुरुवर्गनमस्कारात्मकं कृतं मङ्गलं शिष्यशिक्षायै स्वस्य शास्त्रानवबोधशङ्कानिरासाय च निबध्नाति–कपिलायेत्यादिना । प्रतारणादिदोषाभावविशिष्टातीन्द्रियार्थावबोधसूचनाय महामुनय इति विशेषणम् । तस्य तादृशकपिलस्य । अत्र शिष्यपदेन विद्यालाभस्सूचितः । मुनिपदेन विपरीतभानादिनिरासः । पञ्चशिखायेत्यादौ मुन्यादिपदद्वयमनुवर्त्तनीयम् । इत्थं च परम्पराप्राप्तकपिलमहर्ष्युक्तार्थानुवादकत्वेनानुपादेयत्वशङ्का निराकृतेति । एते वयमित्यर्थः ॥ २ ॥

ननु "तमेव विदित्वाऽति मृत्युमेति" "तरति शोकमात्मवित्" "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" ।

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ॥
तदात्मानमविज्ञाय दुःखस्यान्तो भविष्यति ॥ १ ॥

"न स पुनरावर्त्तते"इत्यादिश्रुत्या आत्मयाथार्थ्यज्ञानस्य मोक्षहेतुत्वमवगतम्, तत्र प्रमाणाकाङ्क्षायाम्—"अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्" "स पर्यगाच्छुक्रमकाय-

इह खलु प्रतिपिपित्सितमर्थं प्रतिपादयन् प्रतिपाद्-मव्रणमस्नाविरं शुद्धमपापविद्धम्" "औपनिषदं पुरुषं पृच्छामि" इत्यादिश्रुत्योक्तात्मतत्त्वसाक्षात्कारे आगमरूपशब्द एव मानम्, नतु बाह्यमान्तरं वा प्रत्यक्षम्, तयोरुक्तात्मतत्त्वावधारणेऽसामर्थ्यात्, विपरीतग्राहकत्वाच्च ।

कपिलमुनिप्रणीतोपपत्तिरूपषडाध्यायीमूलकेश्वरकृष्णप्रणीतोपपत्तिरूपार्थे प्रेक्षावत्प्रवृत्त्यङ्गजिज्ञासा न सम्भवतीति चेत्, मैवम् । "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यादिश्रुतिष्वात्मसाक्षात्कारहेतुतया श्रवणादित्रयं विहितम् । तत्र श्रवणादावुपायाकाङ्क्षायां स्मर्यते—

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ॥
मत्वा च सततं ध्येय एते दर्शनहेतवः ॥ इति ।

ध्येयः,योगशास्त्रप्रकारेणेति शेषः। श्रुतेषु पुरुषार्थतद्धेतुज्ञानतद्विषयात्मस्वरूपादिषु "न तर्केण मतिरापनेया"इत्याद्येकवाक्यतया श्रुत्यविरोध्युपपत्तेराकाङ्क्षितत्वादित्याह—इहेत्यादिना । इह शास्त्रे । खलु निश्चयेन ।

न च न्यायवैशेषिकाभ्यामप्येतेष्वर्थेषु न्यायस्य प्रदर्शितत्वात्ताभ्यामागमस्य गतार्थत्वमिति वाच्यम् । "तीर्णो हि तदा भवति हृदयस्य शोकान्" "कामः सङ्कल्पो विचिकित्सा श्रद्धा ऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" "स समानः सन्नुभौ लोकावनुसञ्चरति" "ध्यायतीव लेलायतीव" "स यदत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवति" "प्रज्ञानघन एवायमात्मा"

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ॥
अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते ॥ १ ॥

इत्यादिश्रुतिस्मृतिभिर्न्यायवैशेषिकोक्तस्य सुखी दुःखीत्याद्यात्मस्वरूपप्रतिपादकन्यायस्य बाधितत्वात् । आत्मनि सुखादिभावस्य

लोकसिद्धत्वेन "यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यते" इत्यादिश्रुतेस्तत्र तात्पर्याभावात्। न च साङ्ख्यस्यापि 'नेश्वराधिष्ठिते फलनिष्पत्तिः कर्मणा तत्सिद्धेः' ( सां सू० अ० ५ सू० २ )इत्यादिपञ्चमाध्यायस्थसूत्रैरीश्वरप्रतिषेधं कुर्वतो "यः सर्वज्ञः सर्ववित्" "एष सर्वेश्वरः"इत्यादिश्रुतिविरोध इति वाच्यम् । ईश्वराभावस्य लोकसिद्धत्वेन तत्र तात्पर्याभावात् । 'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्'इति भगवतेश्वराभावानुवादस्य स्पष्टीकरणाच्च । न चानुवादे फलाभावः । वैराग्यादेः फलत्वात् । यदि हि लोकायतिकवन्नित्यैश्वर्यं न प्रतिषिद्ध्येत्तदा नित्यैश्वर्यदर्शनेन तत्र चित्तमावेशयतो विवेकाभ्यासप्रतिबन्धः स्यात् । नचैवम्—

यं न पश्यन्ति योगीन्द्राः सांख्या अपि महेश्वरम् ॥
अनादिनिधनं ब्रह्म तमेव शरणं व्रजेत् ॥ १ ॥

इत्यादिकूर्म्मे नारायणादीनां सांख्यानामीश्वराज्ञानोक्तिर्विरुद्ध्येतेति वाच्यम् । एतस्योक्तभगवद्वाक्यैकवाक्यतया तत्र तात्पर्याभावात् । अन्यथा योगीन्द्राणां तदज्ञानासम्भवेनोक्तवाक्यस्याप्रामाण्यापत्तेः । अत एव—

अक्षपादप्रणीते च काणादे सांख्ययोगयोः ॥
त्याज्यः श्रुतिविरुद्धांशः श्रुत्यैकशरणैर्नृभिः ॥ १ ॥
जैमिनीये च वैयासे विरुद्धांशो न कश्चन ॥
श्रुत्या वेदार्थविज्ञाने श्रुतिपारङ्गतौ हि तौ ॥ २ ॥
न्यायतन्त्राण्यनेकानि तैस्तैरुक्तानि वादिभिः ॥
हेत्वागमसदाचारैर्यद्युक्तं तदुपास्यताम् ॥ ३ ॥

इतिपराशरीयमोक्षधर्मवाक्याभ्यां विरोध इति परास्तम् । अनयोरप्युक्तभगवद्वाक्यैकवाक्यतया तत्र तात्पर्याभावादिति ।

अत्र साङ्ख्यपदं च योगरूढम्, सम्यक् ख्यायतेऽनेनेति व्यु-

यिताऽवधेयवचनो भवति प्रेक्षावताम् । अप्रतिपित्सितमर्थं तु प्रतिपादयन् 'नायं लौकिको नापि परीक्षकः' इति प्रेक्षावद्भिरुन्मत्तवदुपेक्ष्येत । स चैषां प्रतिपित्सितोऽर्थो यो ज्ञातः सन् परमपुरुषार्थाय कल्पते,

---

स्पत्तेः । किं तदाख्याति ? इत्याकाङ्क्षायां रूढ्यर्थतावच्छेदकमुक्तं महाभारतादौ—

सङ्ख्यां प्रकुर्वते चैव प्रकृतिं च प्रचक्षते ॥
तत्त्वानि चतुर्विंशतिस्तेन साङ्ख्याः प्रकीर्तिताः ॥ १ ॥
इत्यादि ।

प्रतिपित्सितम्—ज्ञातुमिष्टम् । ज्ञातत्वप्रकारकेच्छाविषय- इति यावत् । अवधेयवचनः श्रोतव्यवचनः, श्रद्धेयवाक्य इति यावत् । ननु बालबुद्धीनामजिज्ञासितेऽप्यर्थे प्रवृत्तिदर्शनात्तदर्थमेव शास्त्रं स्यादित्यत आह–प्रेक्षावतामिति । प्रकर्षेणेक्षा प्रेक्षा हेयोपादेयविषयिणी बुद्धिस्तद्वताम् । एकवचनं तु तादृशस्य दौर्लभ्यसूचनाय । तदेव व्यतिरेकेण समर्थयते- अप्रतीति । ननु पञ्चविंशतितत्त्वविदो लौकिकव्यवहारातीतत्वेऽपि शास्त्रव्यवहारकुशलत्वात्कथं प्रेक्षावद्भिरुपेक्षणीयत्वमिति चेत्, तत्राह–परीक्षक इति । सुखसाधनयागादीनां प्रतिपित्सितार्थत्ववारणाय स्वयमेव प्रतिपित्सितमर्थं दर्शयति—स चैषामिति । यो ज्ञातः सन् परमपुरुषार्थाय कल्पते स प्रेक्षावतां प्रतिपित्सितोऽर्थ इत्यन्वयः । स चात्यन्तदुःखहानिरूपमोक्षसाधनीभूतसत्त्वपुरुषविवेकविषयौ सत्त्वपुरुषौ तादृशमुख्यपदार्थावित्यर्थः । व्यक्ताव्यक्तज्ञलक्षण इत्यन्ये । एतदेवोक्तं भाष्ये 'तदिदं मोक्षशास्त्रं चिकित्साशास्त्रवच्चतुर्व्यूहम् । यथा हि रोगः, आरोग्यम्, रोगनिदानम्, भैषज्यमिति चत्वारो व्यूहाः समूहाश्चिकित्साशास्त्रस्य प्रतिपाद्याः, तथैव हेयम्, हानम्, हेयहेतुः, हानोपायश्चेति

**इति प्रारिप्सितशास्त्रविषयज्ञानस्य परमपुरुषार्थसाधनहेतुत्वात् तद्विषयजिज्ञासामवतारयति–**

चत्वारो व्यूहा मोक्षशास्त्रस्य प्रतिपाद्या भवन्ति, मुमुक्षुभिर्जिज्ञासितत्वात् । तत्र त्रिविधं दुःखं हेयम्, तदत्यन्तनिवृत्तिर्हानम्, प्रकृतिपुरुषसंयोगद्वारा चाविवेको हेयहेतुः, विवेकख्यातिस्तु हानोपाय इति व्यूहशब्देन चैषामुपकरणसंग्रहः' इति । इति प्रारिप्सितेति । अत्रेतिशब्दो हेत्वर्थः । यतः शास्त्रविषयः प्रेक्षावज्जिज्ञासाविषयोऽपेक्षितोऽत इत्यर्थः । प्रारिप्सितस्यारब्धुमिष्टस्य शास्त्रस्य यो विषयोऽर्थस्तस्य यज्ज्ञानं तस्येत्यर्थः । एतस्य परमपुरुषार्थसाधनत्वेऽन्वयः । तत्र साधनपदं तज्ज्ञानपरम् । तथाच शास्त्रविषयज्ञानसम्बन्धिपरमपुरुषार्थसाधनत्वप्रकारकज्ञानहेतुकामिति समुदायार्थः । परमपुरुषार्थसाधनत्वादिति पाठस्तु सुगम एव । तद्विषयजिज्ञासाम्–शास्त्रविषयजिज्ञासाम् । ज्ञातुमिच्छा जिज्ञासेति व्युत्पत्त्या विवेकख्यातिरूपहानोपायविषयकेच्छामिति यावत् ।

नचैवं 'जिज्ञासा तदभिघातके' इत्यादिना हानोपायविषयजिज्ञासाबोधनात्तेन विरोध इति वाच्यम् । तत्रत्याजिज्ञासापदेन 'यो ज्ञातः सन्'इत्याद्यविरोधाय मुख्यशास्त्रार्थपुंप्रकृतिविषयकजिज्ञासाया विवक्षितत्वेऽपि तस्या विशेषणांशविषयकत्वावश्यकतया तत्रैव तात्पर्यकल्पनेनाविरोधात् ।

तद्विषयां ज्ञानविषयिकामित्युक्ते न पूर्वोक्तदोष इत्यन्ये । तन्न । ज्ञानविषयकज्ञानस्य परमपुरुषार्थसाधनत्वाभावेन 'यो ज्ञातः सन्' इत्यादिग्रन्थविरोधापत्तेः । तथाचैतस्य शास्त्रस्यैव तादृशज्ञानहेतुत्वात्तत्र प्रेक्षावतां प्रवृत्तिरुपपन्नेति भावः । जिज्ञासापदेनानुबन्धचतुष्टयमपि सूचितम् ।

ननु 'दुःखत्रयाभिघातात्'इत्यादिना दुःखसम्बन्धस्य स्वहानहेतुजिज्ञासाहेतुत्वं प्रतीयते । तच्च न सम्भवति, तस्य जिहा-

दुःखत्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ॥
दृष्टे साऽपार्था चेन्नैकान्तात्यन्ततोऽभावात्॥१॥

एवं हि शास्त्रविषयो न जिज्ञास्येत, यदि दुःखं नाम जगति न स्यात्, सद् वा न जिहासितम्, जिहासितं वा अशक्यसमुच्छेदम्। अशक्यसमुच्छेदता च द्वेधा—दुःखस्य नित्यत्वात्, तदुच्छेदोपायापरिज्ञानाद्वा। शक्यसमुच्छेदत्वेऽपि च शास्त्रविषयस्य ज्ञानस्यानुपायत्वाद्वा, सुकरस्योपायान्तरस्य सद्भावाद्वा॥

तत्र 'न तावद् दुखं नास्ति, नाप्यजिहासितम्'इत्यु-

सितत्वाभावात्। नहि सम्भवति अजिहासितस्य स्वहानहेतौ जिज्ञासाहेतुत्वम्, सुखसम्बन्धादौ तथा अदर्शनात्। तथा च तस्य प्रतिकूलवेदनीयत्वेन जिहासितत्वं व्युत्पादयन् व्यतिरेकमुखेन जिज्ञासां समर्थयते—एवं हीत्यादिना। एवं वक्ष्यमाणप्रकारे सति।

ननु शास्त्रविषयविज्ञानस्यार्थसिद्धेरभावात्किं तज्जिज्ञासयेत्याशङ्क्य व्यतिरेकमुखेन तृतीयविकल्पावान्तरविभागसहितविकल्पपञ्चकद्वारा विषयस्य प्रयोजनवत्त्वेन जिज्ञासां समर्थयते—एवं हीत्यादिना इत्यन्ये।

शास्त्रविषयः प्रकृतिपुरुषरूपः। जिहासितम् विभागाश्रयत्वेनेच्छाविषयम्। 'यदि दुःखम्' इत्यत्रत्य—'यदि'शब्दोऽत्रानुषञ्जनीयः। तथाच 'सद् वा यदि न जिहासितम्'इत्यन्वयः। एवं जिहासितमित्यादावप्यूह्यम्। तत्र तेषु मध्ये। 'तावत्' इत्यस्य 'उक्तम्'इत्यत्रान्वयः। इत्युक्तमिति। अत्रेतिशब्दः 'तत्र न तावत्'इत्याद्यर्थद्वयपरः। तथाच 'दुःखत्रयाभिघाताद्'

क्तम्–"दुःखत्रयाभिघातात्" इति । दुःखानां त्रयं दुःख-त्रयम् ।

---

इतिपदेन तादृशार्थद्वयं बोधितमित्यर्थः । दुःखानां त्रयमिति । अत्र त्रयपदं व्यूहत्रयपरम् । आध्यात्मिकादेरपि प्रत्येकं नानात्वात् । अभेदः षष्ठ्यर्थः । तथाच दुःखाभिन्नव्यूहत्रयमित्यर्थः । अन्यथा दुःखसम्बन्धि तद् अन्यदेव किञ्चित् प्रतीयेत ।

अत्र त्रिपदं न्यूनाधिकसङ्ख्याव्यवच्छेदायेति केचित् ।

तदभिघातकेत्यत्र तत्पदस्य दुःखसामान्यपरामर्शत्वाय तद् इत्यपरे ।

ननु "सङ्ख्याया अवयवे तयप्"(पा. सू. ४२ पा. २ अ. ५) इत्यनेनावयवे वर्तमानात्सङ्ख्यावाचकाच्छब्दादवयविनि तयप्प्रत्यये विहिते तेनैवाभेदलाभे अभेदः षष्ठ्यर्थ इत्यसङ्गतम् । न च सूत्रेऽवयविबोधकपदाभावात्कथमवयविलाभ इति वाच्यम् । अस्येत्यधिकारात् । अत एव 'अवयवे या सङ्ख्येत्युच्यते । अवयवशब्दोऽयं गुणशब्दः, अस्येत्यनुवर्त्तते, तत्र य प्रति अवयवा गुणस्तस्मिन्नवयविनि प्रत्ययेन भवितव्यम्'इति महाभाष्यमपि सङ्गच्छते । 'अवयवे या सङ्ख्या'इति भाष्यं तु कैयटेन 'अवयवे यः सङ्ख्यावाची शब्दो वर्त्तते तस्मादस्येत्यधिकारादवयविनि प्रत्ययो भवति'इति व्याख्यातम् । अवयवे प्रत्ययविधाने च पञ्चावयवा दशावयवा इत्यत्रापि स्यात् । अत एव 'त्रयोऽवयवा अस्य तत् त्रयम्'इतितत्त्वबोधिनीकारोक्तिरपि सङ्गच्छते । अन्यथाऽवयविपरत्वतात्पर्यकास्येतिकथनानुपपत्तेरिति चेत्, न । प्रत्ययस्याभेदार्थकत्वाभावेनार्थादभेदलाभेऽपि शब्देनालाभात् । नच प्रकृते समुदायस्यावयवारब्धत्वाभावाद् 'अवयवारब्धो यो अवयवी'इति कैयटोक्तिर्विरुद्धेति वाच्यम् । 'पटत्रयं पटत्रयम्'इत्यादौ बाधापत्त्या तद्वाक्यस्थयोगक्षेमसाधारणारब्धत्वपरत्वात् । नच कर्मधारया-

तत् खलु आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकञ्च इति। तत्राध्यात्मिकं द्विविधम्–शारीरं मानसं च। शारीरं वातपित्तश्लेष्मणां वैषम्यनिमि-

पत्तिरिति शङ्क्यम्। 'विशेषणं(१) पूर्वम्'इति विशेषणस्य त्रयपदस्य पूर्वनिपातापत्तेः। 'त्रिदुःखाभिघातात्, त्रयदुःखाभिघाताद्'इत्युक्तौ छन्दोभङ्गापत्तेरिति।

आध्यात्मिकमिति। अत्रात्मपदं स्वसङ्घातपरम्। सङ्घातश्च मनःशरीरेन्द्रियरूपः। विभक्त्यर्थे अव्ययीभावाद् 'आत्मनि' इत्यध्यात्मं तन्निमित्तमाध्यात्मिकम्(२)। तत्त्वं चान्तरोपायसाध्यत्वम्। अत एवान्तरमिदमित्याचक्षते।

आधिभौतिकमित्यत्र भूतपदं व्याघ्रचौरादिप्राणिपरम्, न पृथिव्यादिभूतपरमपि, देवपदेनैव तेषां लाभात्। नच पृथिव्यादिषु देवशब्दप्रवृत्तौ मानाभाव इति वाच्यम्। "इमास्तिस्रो देवताः" इत्यादेर्मानत्वात्। टीकास्थस्थावरपदं तु लौकिकाभिप्रायेणेति। तन्निमित्तमाधिभौतिकम्।

आधिदैविकमित्यत्र देवपदेन पृथिव्यादयोऽपि ग्राह्याः, तन्निमित्तमाधिदैविकम्। बाह्योपायसाध्यत्वाद्द्विविधमिदं बाह्यमित्याचक्षते।

बाह्येन्द्रियाणि शरीरेऽन्तर्भाव्य साधनद्वैविध्येनाद्यस्य द्वैविध्यमाह–शारीरं मानसं चेति। ननु सर्वस्यापि दुःखस्य मनोधर्मत्वेन मानसत्वात् कथं मानसत्वामानसत्वव्यवहार इति चत्,

(१) "उपसर्जनं पूर्वम्" इत्यनेन समासविधायकशास्त्रघटकप्रथमान्तपदबोध्यस्योपसर्जनस्य समासे पूर्वनिपात इत्यर्थकेन विशेषणस्य पूर्वनिपातबोधनादिति भावः।

(२) "अव्ययं विभक्तिसमीप-"इत्यनेन सूत्रेण सप्तम्यर्थकाधिशब्दस्यात्मशब्देन समासे ततोऽध्यात्मादित्वाट्ठञि रूपम्। एवमग्रेऽपीति बोध्यम्।

त्तम्, मानसं कामक्रोधलोभमोहभयेर्ष्याविषादविषयविशेषादर्शननिबन्धनम् । सर्वञ्चैतदान्तरिकोपायसाध्यत्वादाध्यात्मिकं दुःखम् । बाह्योपायसाध्यं दुःखं द्वेधा-आधिभौतिकम्, आधिदैविकञ्च । तत्राधिभौतिकं मानुषपशुमृगपक्षिसरीसृपस्थावरनिमित्तम्, आधिदैविकं तु यक्षराक्षसविनायकग्रहाद्यावेशनिबन्धनम् ।

तदेतत् प्रत्यात्मवेदनीयं दुःखं रजःपरिणामभेदो न

---

न । मनोमात्रजन्यत्वाजन्यत्वाभ्यां मानसत्वामानसत्वव्यवहारात् ।

अत्रेदं बोध्यम्-दुःखं द्विविधम्-आन्तरं बाह्यं च । आद्यं द्विविधं शारीरं मानसं च । अन्त्यमपि द्विविधम्-आधिभौतिकमाधिदैविकं चेत्येवं विभागसम्भवे त्रैविध्यकथनमसङ्गतम् । अत एव बाह्योपायसाध्यं च दुःखं द्विधेति उभयसाधारणधर्मोपपादकाग्रिमतद्ग्रन्थोऽपि सङ्गच्छते । अन्यथा तदुपपादनस्य निष्प्रयोजनत्वापत्तेः । वातपित्तेति । वातपित्तादीनां शरीरस्थूणात्मकत्वान्न तज्जन्यस्य दुःखस्य शरीरनिमित्तकत्वानुपपत्तिः । एवमग्रेऽपि बोध्यम् । कामादयस्तु पूर्वं व्याख्याताः । यक्षराक्षसेति । पृथिव्यादिकमप्युपलक्षणीयमित्युक्तं प्राक् । अन्यथा पाषाणादिपतनदाहशीतादिजन्यस्यासङ्ग्रहापत्तेः । दुःखत्वे अनुभव एव मानमित्याह-तदेतदिति । 'आत्मानमात्मानं प्रति' इति वीप्सायामव्ययीभावसमासे प्रत्यात्मम्, तेन वेदनीयं साक्षात्कृतमित्यर्थः । तस्य कारणमाह-रजःपरिणामेति । परिमाणभेदः कार्यविशेषः । परिणामग्रहणं तु विवर्त्तारम्भकार्यवारणाय । स्वकारणाभिन्नसमसत्ताकत्वं परिणामत्वम् । कारणाभिन्नन्यूनसत्ताकत्वं विवर्त्तकार्यत्वम् । स्वभिन्नत्वे सति समवेतत्वमारम्भकार्यत्वम् । विशेषपदं च लोभादिव्यावर्त्तनाय ।

ननु मोक्षो नाम बन्धनिवृत्तिः, स च बन्धः स्वाभाविक उत आगन्तुक इति । आद्ये नाशायोगः । नह्यग्नेः स्वाभाविकादौष्ण्या-

**शक्यते प्रत्याख्यातुम् । तद् अनेन दुःखत्रयेणान्तःकरण- वर्तिना चेतनाशक्तेः प्रतिकूलवेदनीयतयाऽभिसम्ब-**

न्मोक्षः सम्भवति, स्वाभाविकस्य यावद्द्रव्यभावित्वात् । नच स्वाभाविकमपि पटस्य शौक्ल्यं रागद्रव्येणापनीयते, बीजस्य स्वाभाविक्यप्यङ्कुरशक्तिरग्निनेति वाच्यम् । यावद्द्रव्यभाविन आश्रयापायमन्तरेणापायासम्भवेन पटादिशौक्ल्यादेस्तिरोधानात् । अन्यथा रजकादिव्यापारैर्योगिसङ्कल्पादिना च रक्तपटभृष्टबीजयोः पुनः शौक्ल्यस्याङ्कुरशक्तेश्चाविर्भावो न स्यात् । न च दुःखशक्तितिरोभाव एव मोक्षो भवत्विति वाच्यम् । योगीश्वरसङ्कल्पादिना भृष्टबीजेष्विव शक्त्युद्भवे पुनर्बन्धापत्तेः। द्वितीये तन्निमित्तापरिज्ञानादजिज्ञास्यत्वमित्याशङ्क्यं निराह–तदनेनेत्यादिना । तत् तस्माद्,दुःखस्य प्रत्याख्यातुमशक्यत्वादित्यर्थः। 'नाप्यजिहासितम्'इत्युक्तं तत्र हेतुमाह–प्रतिकूलवेदनीयतयेति । द्वेषविषयतयेत्यर्थः । ननु परनिष्ठस्य दुःखस्य शत्रुगतदुःखस्येव न प्रतिकूलत्वं स्वसम्बन्धित्वाभावादित्याशङ्क्याह–चेतनाशक्तेरिति । **अभिघात इति** । अभि सम्मुखं हन्ति गच्छतीत्यभिघातः प्रतिबिम्बाख्यो विकारोऽन्तःकरणपरिणाम एव सम्बन्धः, एतन्मते अध्यासाद्यभावात् ।

**एतस्मिन् दर्पणे स्फारे समस्ता वस्तुदृष्टयः ॥**
**इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ॥ १ ॥**

इतिस्मरणात् । "कुसुमवच्च मणिः"(१) (सां.सू.अ. २सू.३५) इति सूत्राच्च । अत्र दृष्टिपदं बुद्धिवृत्तिसामान्यपरं युक्तिसाम्यात् । दुःखस्यान्तःकरणत्वे श्रुतिरुक्ता । युक्तिस्तु वक्ष्यते । सम्ब-

(१) 'अत्र सूत्रे चकारो हेतौ । कुसुमेनेव मणिरित्यर्थः । यथा जपाकुसुमेन स्फटिकमणी रक्तोऽस्वस्थो भवति, तन्निवृत्तौ च रागशून्यः स्वस्थो भवति तद्वद्'इति भाष्यम् ।

न्धो ऽभिघात इति । एतावता प्रतिकूलवेदनीयत्वं जिहासाहेतुरुक्तः ।

यद्यपि न सन्निरुध्यते दुःखम्, तथाऽपि तदभिभवः शक्यः कर्तुमित्युपरिष्टादुपपादयिष्यते ।

तथा चोपपन्नम् "तदपघातके हेतौ" इति । तस्य दुःखत्रयस्य अपघातकस्तदपघातकः । उपसर्ज-

न्धादिपदं विहायाभिघातपदोपादानं तु सम्बन्धिविशेषलाभाय, तस्य च प्रतिकूलतासूचनाय । नाप्यजिहासितमित्यत्रोक्तहेतुमुपसंहरति–एतावतेति । एतावता– चेतनाशक्तेः प्रतिकूलतया दुःखसम्बन्धकथनेन। रजःपरिणामभेदस्य दुःखस्यैतन्मते नित्यत्वादशक्यसमुच्छेदतेत्युक्तं तदनूद्य निराकरोति–यद्यपीत्यादिना । न सन्निरुध्यते—निरन्वयं यथा स्यात्तथा न नश्यति । तदभिभवः, अनागतस्य दुःखस्यानुत्पत्तिः । यथा चैतत्तथोक्तं प्राक् ।

यत्तु अभिभवो नाम विवेकख्यात्या तदसम्बन्धतामात्रम्, न तु तस्य नाशः, कार्यमात्रस्य सत्यादित्वात् इति । तन्न । एतन्मते सम्बन्धस्यापि सत्यत्वात् । सम्बन्धिनः सत्त्वे सम्बन्धस्यापि सत्त्वावश्यकत्वाच्च । व्यापकादात्मनोऽन्यत्रासम्बद्धस्यासम्भवाच्च । एतेन विवेकिनमात्मानं विहायान्यत्र दुःखं गच्छतीति परास्तम् ।

उपरिष्टादिति ।

तेन निवृत्तप्रसवामर्थवशात्सप्तरूपविनिवृत्ताम् ॥

प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वस्थः ॥ इत्यादाविति । ( सां० का० ६५ )

प्रसवनिवृत्त्या तन्निरोधस्य व्युत्पादनीयत्वादत्र नोक्तम् । प्रतिकूलवेदनीयत्वेन दुःखस्य जिहासितत्वात्स्वापघातकजिज्ञासाहेतुत्वं सम्भवतीत्युक्तमुपसंहरति–तथाचोपपन्नमिति । तथाशब्दस्तस्मादित्यर्थे । तथाच जिहासितत्वात्तस्योक्तहेतुत्वमुपपन्नमित्यर्थः ।

नस्यापि बुद्ध्या सन्निकृष्य(१) 'तदा' परामर्शः ।

ननु तदादीनां पूर्वप्रधानपरामर्शकत्वात्कथं समासनिविष्टस्योपसर्जनस्य दुःखस्य परामर्श इत्याशङ्क्याह–उपसर्जनस्येति । तथाच शक्त्यानन्त्यभिया तदादेर्बुद्धिविषयतावच्छेदकवति शक्तेरावश्यकतया तदा उपसर्जनपरामर्शेऽपि न क्षतिरित्यर्थः ।

नच बुद्धिविषयतावच्छेदकत्वेनावच्छेदकभानम् । घटत्वाद्यनुगमय्य बुद्धिविषयतावच्छेदकत्वस्योपलक्षणतया निवेशे तत्र शक्तेरभावात् । पदार्थोपस्थितिस्तु प्रकरणादिना घटत्वादिनैव नतु बुद्धिविषयतावच्छेदकत्वेनातो न पदार्थोपस्थितौ शाब्दबोधे वा तस्य भानमिति ध्येयम् ।

सन्निकृष्य, उपस्थाप्य । निष्कृष्येति पाठे तु समासात्पृथक्तयोपस्थाप्येत्यर्थः । अत्राप्युपसर्जनस्येति विभक्तिविपरिणामेनान्वयः । तदा, तत्पदेन । परामर्शः, ज्ञानम् । इदं चोपसर्जनस्येत्यनेन सम्बध्यते । तथाच बुद्ध्योपसर्जनं सन्निकृष्य तदोपसर्जनस्य परामर्श इत्यन्वयः । एतेन सन्निकृष्येत्यस्य कर्मानुपादानात्क्रियान्तरकर्तुरनुपादानाच्च बुद्ध्या सन्निकृष्येत्यसङ्गतमिति परास्तम् ।

केचित्तु–प्रतिबिम्बरूपदुःखसम्बन्धस्यैव प्रतिकूलतया तत्त्यागस्यैव परमपुरुषार्थत्वेनेप्सितत्वाद् दुःखस्य हेयत्ववर्णनं तत्पदस्य दुःखपरत्ववर्णनं चासङ्गतमित्याहुः ।

सम्बन्धित्यागं विना सम्बन्धत्यागायोगाद् 'दुःखं मे मा भूत्' इत्यादिना तस्यैव जिहासितत्वावगमात्, 'हेयं दुःखमनागतं सर्वम्' 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानाम्–(न्या.अ.१.पा.१.सू.२)' "अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः" (सां. सू. अ. १ सू. १) "तरति शोकमात्मवित्" इत्यादिविरोधात् दुःखनिवृत्तिरेव मोक्ष इत्यपरे ।

१ यद्यपि सर्वेषु मूलपुस्तकेषु सन्निकृष्टस्येति पाठस्तथाऽपि टीकाऽनुरोधेन तं हित्वा ऽयमत्रावस्थापितः ।

अपघातकश्च हेतुः शास्त्रप्रतिपाद्यो, नान्य इत्याशयः ॥

अत्र शङ्कते—"दृष्टे सा ऽपार्था चेत्" इति ।

अयमर्थः—अस्तु तर्हि दुःखत्रयम्, जिहासितं च तद् भवतु, भवतु च तच्छक्यहानम्, सहतां च शास्त्रगम्य

---

भाष्यकारास्तु प्रतिबिम्बरूपो दुःखसम्बन्धो भोगाख्यस्तन्निवृत्तिरेः पुरुषार्थः । 'दुःखं मा भुञ्जीय'इत्यापामरं प्रार्थनादर्शनात् । दुःखनिवृत्तिस्तु न पुरुषार्थस्तस्या अन्यशेषत्वात् । नच पूर्वोक्तवचनविरोधः । कण्टकादिनिवृत्तिप्रतिपादकवद् दुःखनिवृत्तेस्तादर्थ्यप्रतिपादकत्वेन विरोधाभावात् । एवं सुखमपि न स्वतःपुरुषार्थो युक्तिसाम्यात् । 'तस्मिन्निवृत्ते पुरुषः पुनरिदं तापत्रयं न भुङ्क्ते' इत्यादिना भाष्ये व्यासदेवैरपि दुःखभोगनिवृत्तेरेव पुरुषार्थत्वकथनाच्चेत्याहुः ।

दुःखत्रयप्रहाणे तदभिघातप्रहाणं पारमार्थिकमित्यभिप्राय इत्यन्ये ।

तदुच्छेदोपायापरिज्ञानाच्छास्त्रविषयस्यातदुपायत्वाद्वेत्युक्तं दूरीकुर्वन् 'तद्विपरीतः श्रेयान्'इत्यादिवक्ष्यमाणतदपघातकहेतुं दर्शयति—अपघातकश्चेति । शास्त्रव्युत्पाद्यः—शास्त्रैगकम्यः, । व्यक्ताव्यक्तपुरुषसाक्षात्काररूप इत्यर्थः । 'सुकरोपायान्तरस्य सद्भावाद्वा शास्त्रविषये न जिज्ञासा'इति यदुक्तं तच्छङ्कापरतया 'दृष्टे साऽपार्था चेद्'इतिमूलं योजयति—तत्र शङ्कत इति । दृष्टे इत्यत्र सुकरोपाय इति शेषः । शास्त्रव्युत्पादकहेतुजिज्ञासा अपार्था अपगतोऽर्थः प्रयोजनं यस्याः सा अपार्था । व्यर्थेति यावत् । तथा च सुकरोपाये सति दुःसाध्योपाये जिज्ञासा न भवतीत्यर्थः । हेयाद्यभावे सुकरोपायस्याप्यभावेन तत्र जिज्ञासैव प्रेक्षावतां न सम्भवतीति शङ्कापनुत्तये पूर्वोपपादितमर्थमनुवदति—अस्त्वित्यादिना । सहताम्—समर्थो भूयात् । भवतु च

उपायस्तद् उच्छेत्तुम्। तथा ऽप्यत्र प्रेक्षावतां जिज्ञासा न युक्ता, दृष्टस्यैवोपायस्य तदुच्छेदकस्य सुकरस्य विद्यमानत्वात्, तत्त्वज्ञानस्य तु अनेकजन्माभ्यासपरम्परायासमसाध्यतया ऽतिदुष्करत्वात्।

---

शास्त्रगम्यस्तदुच्छेदोपाय इति विहाय वक्रोक्तिस्तु शास्त्रोपायस्य वक्ष्यमाणतया तदुच्छेदे सामर्थ्यानिर्णयसूचनाय। विद्यमानत्वादिति। अनेन जिज्ञासाप्रयोजकेष्टसाधनताज्ञानं सूचितम्। अनेकजन्मेति। अनेन शास्त्रविषयजिज्ञासाप्रतिबन्धकं द्विष्टसाधनताज्ञानं सूचितम्।

नन्वध्ययनभावनानिर्णीतार्थपुरुषेणोक्ते मोक्षोपयोगिपदार्थे कतिपयदिनादिभिरेव शिष्याणां बोधोदयाल्लोके बहुषु तथार्थोपलब्धेः कथमनेकजन्मसाध्यत्वोक्तिः। मुख्योपायस्तु लौकिको धनं विवेकश्च। सच महाकालायाससाध्यः। उपसर्जनोपाया अपि शारीरकदुःखनिवृत्तये भिषजां वरैरुक्तास्तेऽपि दुर्लभास्तेषां भिषजां सर्वत्र सर्वदाऽवस्थानासम्भवात्। नच येन केन चिन्निर्वाहः। अभ्यासप्रतिभादितारतम्येनैकेन निर्वाहासम्भवात्। सर्वत्र सर्वदैकस्याप्यभावात्। मानसस्यापि मनोज्ञस्त्र्यादेर्महायाससाध्यत्वाद्धरणमरणादित्रासजनकत्वाच्च। एवमाधिभौतिकस्याप्युपायस्य नीतिशास्त्राभ्यासकुशलताया अत्यायाससाध्यत्वात्। तद्भिन्नरत्ययस्थानाध्यासनादयः। एवमाधिदैविकस्य मणिमन्त्राद्युपायस्य दुःसाध्यत्वात्पुनारक्षणानुष्ठानाद्यपेक्षत्वाच्च। विवेकस्थलेऽनुष्ठेयाभावादेतदपेक्षया विवेकस्यातिसुलभत्वाच्च। एवं विषयस्य सुकरत्वकथनासङ्गतिर्दुर्वारा इति चेत्, न। अभिप्रायानवबोधात्।

तथाहि—आत्मा बुद्धिप्रतिबिम्बितः स्वस्मिन् प्रतिबिम्बितं बुद्धिगतं दुःखं प्रकाशयति नतु बिम्बरूपेण कर्मकर्तृविरोधात्। सुखदुःखादि-

प्रकाश एवात्मनो भोगः । अगृहीतासंसर्गकमुभयविषयकम् 'अहं-चेतना'इत्याद्याकारकं ज्ञानमविवेको वृत्तिरूपः प्रतिबिम्बात्मना पुरुषधर्मस्तत्प्रयुक्त एव पुरुषस्य तापः । तथाच स्वाभासविशिष्टबुद्धिद्वारा दुःखप्रतिबिम्बाश्रयत्वेनात्मानं प्रकाशयति। अयमेव पुरुषस्य बन्धः। 'बुद्धिगतदुःखप्रतिबिम्बोऽयम्, अहं तु तदन्यः'इति बुद्धिगतविवेकोऽयम्,प्रतिबिम्बात्मना पुरुषधर्मस्तन्निवर्तक इति । पुरुषस्य भोक्तृत्वं निरूपकतासम्बन्धेन सुखाद्याकारबुद्धिगतप्रतिबिम्बाश्रयत्वमुक्तरूपं वा । प्रकृतिश्च नित्या सर्वदा प्रसवस्वभावा स्वतन्त्रेति मुक्तपुरुषं प्रति सृष्टिद्वारा भोगापवर्गाय न प्रवर्त्तते । यथा–'अमात्यादयो राज्ञोऽर्थं सम्पाद्य कृतार्थाः सन्तो न पुनाराजार्थं प्रवर्त्तन्तेऽन्यार्थं तु प्रवर्त्तन्ते' इति सिद्धान्तस्तस्य च निर्युक्तिकत्वेनानेकजन्माभिरपि विदुषामनिर्णयात् । तथा हि–दुःखहेतोर्बुद्धिवृत्तिरूपाविवेकस्य प्रतिबिम्बरूपेण पुरुषे स्थितस्य सत्त्वपुरुषान्यताख्यातिरूपसाक्षात्कारनिवर्त्यत्वं यदुक्तं तन्न संभवति, वृत्त्यन्तरोत्पत्त्यादिनैव तद्वृत्तिनाशे तत्प्रतिबिम्बस्यापि नाशेन सहजत एव दुःखनिवृत्तिरूपमोक्षः स्यात् । नच विरोधिवृत्तिनाशे पुनस्तदुत्पादने न तदत्यन्तनिवृत्तिरिति वाच्यम् । साक्षात्काररूपवृत्तिनाशेऽपि पुनस्तदुत्पादसम्भवेन बन्धानिवृत्त्यापत्तेः समत्वात् । नचाविवेकरूपवृत्तिः साक्षात्कारपर्यन्तमेकैव वृत्त्यन्तराणां तद्विरोधित्वाभावेन तन्नाशानभ्युपगमात्, तन्नाशोत्तरसाक्षात्कारेण नष्टस्य पुनरुत्पादानभ्युपगमान्न क्षतिरिति वाच्यम् । पूर्वपरिणामातिरोधानं विनोत्तरपरिणामादर्शनात् । उपाधिसन्निधौ 'दर्पणस्थमुखाद्ग्रीवास्थमुखं भिन्नम्'इति निश्चयेन प्रतिबिम्बनिवृत्तेरदर्शनाच्च । नच स्वस्ववृत्त्याश्रयबुद्धेरेव तिरोधानाभ्युपगमान्न दोषः । पुनरुत्पादसम्भवात् । अन्यथा' चलं गुणवृत्तम्'इति न्यायसिद्धस्य 'सरूपविरूपपरिणामाभ्यां न कदाचि-

तथा च लौकिकानामाभाणकः-
'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् ॥
इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत्'॥इति।
सन्ति चोपायाः शतशः शारीरदुःखप्रतीकारायेषत्करा भिषजां वरैरुपदिष्टाः । मानसस्यापि सन्तापस्य प्रतीकाराय मनोज्ञस्त्रीपानभोजनविलेपनवस्त्रालङ्कारादिविषयसम्प्राप्तिरुपायः सुकरः । एवमाधिभौतिकस्यापि दुःखस्य नीतिशास्त्राभ्यासकुशलतानिरत्ययस्थानाध्यासनादिः प्रतीकारहेतुरीषत्करः । तथाऽऽधिदैविकस्यापि मणिमन्त्रौषधाद्युपयोगः सुकरः प्रतीका-

---

दपि वियुज्यतेऽचेतनम्'इतिसिद्धान्तस्य भङ्गापत्तेः । न च 'अमात्यवत् कृतार्था सती तं प्रति न वर्तते' इति युक्तमिति वाच्यम् । दृष्टान्तवैषम्यात् । व्यापकप्रधानस्य जायमानानां बुद्धिद्वारा दुःखादिपरिणामानां व्यापके मुक्तपुरुषे प्रतिबिम्बनिरोधस्य कपिलेनापि कर्तुमशक्यत्वाच्च । योगमाहात्म्यादङ्गीकारे त्वन्यदपि स्यात्। इत्थं चैतदपेक्षया लौकिकोपायस्य सुकरत्वकथनमिति ।

लौकिकोऽप्ययं न भवतीति सूचनाय लौकिकीं सम्मतिमाह-तथाचेति । आभाणकः-अप्रसिद्धो वाक्यरूपः शब्दः । तदेव दर्शयति अर्के इति । अर्के गृहकोणे । मध्वर्थीति शेषः । मधुपदमभिलषितविषयपरम्, पर्वतपदमतिदुष्करोपायसाध्यपरम् । तदेव दर्शयति- इष्टस्येत्यादिना । इष्टस्याभिलषितस्य संसिद्धौ सम्प्राप्तौ । क्वचित्सम्प्राप्तावित्येव पाठः । उपाया इत्युपदिष्टा इत्यत्रान्वेति । भिषजां वरैः-उत्कृष्टवैद्यैः । उत्कर्षश्चाध्यापनम्, दुर्गतादिभ्यः स्वभैषजदानादि च । निरत्ययस्थानं बाधनशून्यं स्थलम् । अध्यासनादि उपवेशनादि । मणिमन्त्रादीत्यादिपदेनौषधादि । उपयोगः-मण्यादेर्धारणम्, मन्त्रादेः पाठादि ।

रोपाय इति ॥

निराकरोति-" न " इति । कुतः ? । " एकान्तात्यन्ततो ऽभावात् " । एकान्तो दुःखनिवृत्तेरवश्यम्भावः, अत्यन्तो निवृत्तस्य दुःखस्य पुनरनुत्पादः, तयोरेकान्तात्यन्तयोरभाव एकान्तात्यन्ततो ऽभावः । षष्ठीस्थाने सार्वविभक्तिकस्तसिः ।

एतदुक्तं भवति यथाविधि रसायनादिकामिनीनीतिशास्त्राभ्यासमन्त्राद्युपयोगे ऽपि तस्य तस्याध्यात्मिका-

---

विमतं मोक्षसाधनं न प्रेक्षावज्जिज्ञास्यं तत्साधनान्तरापेक्षया बह्वायाससाध्यसाधनत्वात्सम्मतवदिति शङ्काऽभिप्रायः ।

दुःखनिवृत्तिपदानुषङ्गेनार्यां योजयति-एकान्त इत्यादिना । निवृत्तस्य-निवृत्तजातीयस्य । तेन निवृत्तस्य यः पुनरनुत्पादस्तस्य संसारदशायामपि सत्त्वे न क्षतिः ।

ननु शास्त्रगम्योपायजिज्ञासा न व्यर्था एकान्तात्यन्तदुःखनिवृत्त्यभावादिति हेत्वसिद्धिनिरासाय दृष्ट इत्यनुषङ्गे तुल्यवित्तिवेद्यतया दृष्टोपायस्यात्यन्तिकदुःखनिवृत्तिसाधनत्वाभावपरतया मूलं योजयितुमाह-एतदुक्तं भवतीति । तथाच दृष्टोपायस्य तादृशेष्टसाधनत्वाभावाद्विशेषणासिद्ध्या उक्तहेत्वसिद्धिरिति भावः ।

प्रयोगस्तु विमतमिष्टसाधनं न प्रेक्षावज्जिज्ञास्यमुक्तेष्टसाधनत्वाभावात्संमतवदिति । प्रयोगान्तरं च स्वयमूह्यम् ।

रसायनमणिमन्त्रादयो नात्यन्तदुःखनिवृत्तिहेतवः, मुक्तिहेतुतया वेदानुक्तत्वात्सम्मतवद्व्यतिरेके तत्त्वज्ञानवदित्यन्ये ।

यथाविधीति तु मन्त्रान्तेषु सम्बध्यते । ननु दुःखस्य निवृत्तेरदर्शनेनैकान्तिकदुःखनिवृत्तिसाधनत्वाभावसाधनेऽसिद्धोऽयं हेतुर्दुःखनिवृत्तेर्दर्शनादित्याशङ्क्याह तस्य तस्येति । तथा कचिन्निवृत्ते-

देर्दुःखस्य निवृत्तेरदर्शनाद् अनैकान्तिकत्वम्, निवृत्तस्यापि पुनरुत्पत्तिदर्शनाद् अनात्यन्तिकत्वम्, इति सुकर्दर्शनेऽपि नियमासिद्ध्या नियमघटितसाधनत्वासिद्धिरित्यर्थः। एतेन तस्येति लेखकप्रमाद इति परास्तम्। यस्य कस्य चिद् दुःखस्य लाभसूचनेन सार्थकत्वात्। निवृत्तस्येति। पूर्ववद्व्याख्येयम्। नचैकान्तिकत्वविशेषणं व्यर्थं प्रकृतेऽनुपयोगादनैकान्तिकत्वसाधने धनार्जनादौ जिज्ञासादिदर्शनाच्चेति वाच्यम्। सुकरोपाये जिज्ञासादिसम्भवेऽपि महायाससाध्ये तादृशोपाये जिज्ञासाद्यसम्भवात्।

हेतुद्वयबोधकमिदमित्यपरे।

यत्तु बुद्धेः पुनरुत्पादापत्तिस्तन्न। जहतेति व्याख्यावसरे दत्तोत्तरत्वात्।

यद्यपि यत्किञ्चिद्बुद्ध्यादेर्निरन्वयनाशेऽपि विद्यमानबुद्ध्यादिपरिणामानां व्यापके पुरुषे प्रतिबिम्बो निरोद्धुमशक्यस्तथाऽप्युक्तस्वस्वबुद्धिभावापन्नेत्यादिविशेषणाभावेन विशिष्टाभावसंभवात्।

दुःखनिवृत्तेरैकान्तिकत्वं च नियमेन स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वम्। नियमस्तु यत्र यत्क्षणावच्छेदेन यद्धर्मावच्छिन्नसामग्री तत्र तदुत्तरक्षणे तद्धर्मावच्छिन्नोत्पत्तिरिति व्याप्तिः। दुःखनिवृत्तेरात्यन्तिकत्वं च स्वसमानाधिकरणदुःखासमानकालीनत्वम्। स्वमोक्षदशायां स्वसमानाधिकरणदुःखाभावेन दुःखध्वंसस्य तदसमानकालीनत्वाल्लक्षणसमन्वयः। संसारिणां दुःखसत्त्वेनेदानीन्तनदुःखध्वंसे तदसमानकालीनत्वाभावान्नातिव्याप्तिः। दुःखासमानकालीनत्वमात्रस्य दुःखध्वंसविशेषणत्वे चरममोक्षे लक्षणसमन्वयेऽपीदानीन्तने शुकवामदेवादिमोक्षे स्वव्यधिकरणास्मदादिदुःखसमानकालीनतया लक्षणसमन्वयो न भवतीत्यतः स्वसमानाधि-

करणत्वं दुःखविशेषणतयोपात्तम् । उपान्त्यदुःखध्वंसस्यापि तादृशचरमदुःखसमानकालीनतया न तत्रातिव्याप्तिः । नच सुषुप्तिदशायां दुःखाभावे दुःखध्वंसे तादृशदुःखसमानकालीनत्वाभावादतिव्याप्तिरिति वाच्यम् । तादृशदुःखासमानकालीनत्वस्य तादृशदुःखसमानकालीनभिन्नत्वरूपतया सुषुप्तिकालीनदुःखध्वंसस्य सुषुप्त्युत्तरतादृशदुःखसमानकालीनतया तदवच्छिन्नभिन्नत्वाभावात् । अत्यन्ताभावस्याऽव्याप्यवृत्तित्वेऽप्यन्योन्याभावस्य व्याप्यवृत्तित्वात् । नच तथाऽपि स्वत्वस्याननुगमेन लक्षणाननुगम इति वाच्यम् । स्वसामानाधिकरण्यकालिकाविशेषणतोभयसम्बन्धेन दुःखवान् यस्तद्भिन्नदुःखध्वंसस्य मोक्षरूपतयाऽननुगमाभावात् । सम्बन्धमध्ये स्वत्वस्य परिचायकतया निवेशेन सम्बन्धाननुगमस्यादोषत्वादिति ।

एतेन दुःखध्वंसो मोक्ष इत्यत्र दुःखप्रतियोगिताको वा दुःखत्वावच्छिन्नप्रतियोगिताको वा तत्तत्पुरुषीयदुःखत्वावच्छिन्नप्रतियोगिताको वा ध्वंसः ? । नाद्यः । संसारदशायामपि सत्त्वात् । न द्वितीयः । ध्वंसस्य प्रतियोगिजन्यतया यावद्दुःखानां युगपदसम्भवेनासम्भवात् । अत एव न तृतीयः । तत्तत्पुरुषीययावद्दुःखध्वंसोऽपि न, यावत्त्वस्य दुःखविशेषणत्वे पूर्वोक्तदोषानिवृत्तेः । ध्वंसविशेषणत्वे यावत्त्वस्यानिर्णयेन मोक्षस्यानिर्णयापत्तेरननुगमाच्चेति परास्तम् ।

अत्र वेदान्तिनस्तु दुःखध्वंसो न मोक्षस्तस्यापुरुषार्थत्वात् । न च हेत्वासिद्धिः । 'दुःखं मे मा भूद्'इति कामनाया दुःखानुत्पादविषयत्वेन दुःखध्वंसे पृथक्कामनाऽदर्शनात् । भूतभाविदुःखध्वंसे वर्त्तमानतत्त्वज्ञानस्य कारणत्वासम्भवेन स्वसमानाधिकरणस्वसमानकालीनदुःखध्वंसम्प्रत्येव हेतुता वक्तव्या, तथा च 'उत्पन्नं दुःखं मे मा भूद्'इत्यादिस्वविषयकज्ञानादिनाश्यतया तत्र

तत्त्वज्ञानस्यान्यथासिद्धत्वाच्च । नच स्वसमानाधिकरणस्वसमानकालीनयावत्प्रागभावानामुत्तरसमयसम्बन्धित्वरूपपरिपालनमेव तत्त्वज्ञानस्य फलमस्त्विति वाच्यम् । प्रतिबन्धकाभावविशिष्टदुःखसामग्र्या दुःखोत्पादसम्भवेन तादृशफलस्यानेन कर्त्तुमशक्यत्वात् । नच दुःखानुत्पाद एव पुरुषार्थो भवत्विति वाच्यम् । तत्प्रागभावस्यात्यन्ताभावस्य वा ज्ञानासाध्यत्वाद् ध्वंसस्य तु निरस्तत्वात् । एतेन चरमदुःखध्वंसो मोक्ष इति परास्तम् । अत्रापि पूर्वोक्तान्यथासिद्धत्वदोषानिवृत्तेः । दुःखप्रागभावासहवृत्तिदुःखध्वंसरूपचरमदुःखध्वंसत्वस्य नीलघटत्ववदार्थसमाजग्रस्ततया कार्यतानवच्छेदकत्वाच्च । आर्थसमाजग्रस्तत्वं च सामग्रीद्वयायत्तत्वम् । तच्चात्रापि विशेषणांशस्य तत्तत्प्रागभावनाशकदुःखसामग्रीस्वाव्यवहितक्षणोत्पन्नविशेषगुणोत्पादकसामग्र्योः सत्त्वादक्षतम् । नचार्थसमाजग्रस्तधर्मस्य कार्यतानवच्छेदकत्वे प्रमाणाभाव एव बीजम्, तच्चात्र नास्तीति वाच्यम् । चरमदुःखं तत्त्वज्ञानान्नश्यतीति बोधकप्रमाणश्रुतेरन्यस्य वाऽदर्शनात् । न च चरमदुःखमेव तत्त्वज्ञानादृते न भवतीति वाच्यम् । यावद्दुःखभावेषु नष्टेषु तत्कालीनदुःखस्यान्यत्र क्लृप्तकारणत एव निर्वाहे पृथक्कारणत्वकल्पनाऽसंभवात् । तत्कल्पने तु अहो अतिविलक्षणस्त्वं नैयायिकमुमुक्षुर्यस्त्वं ब्रह्मलोकान्तं सुखं परित्यज्य दुःखार्थमेव यतसे ।

नच यदि दुःखनिवृत्तिर्न पुरुषार्थस्तर्हि कथं मृग्यते इति वाच्यम् । अन्येच्छानधीनेच्छाविषयत्वरूपस्वतःपुरुषार्थत्वाभावेऽपि सुखं दुःखाभावे सत्येव भवतीति सुखसाधनान्तरवत्तस्यापि सुखसाधनत्वेनेच्छाविषयत्वसम्भवात् । नचैवं हि भोजनादिसुखे सत्येव बुभुक्षादुःखं निवर्त्तत इति दुःखनिवृत्त्यर्थमेव भोजनादिसुखं मृग्यते न तु

रोऽपि ऐकान्तिकात्यन्तिकदुःखनिवृत्तेर्न दृष्ट उपाय इति नापार्था जिज्ञासेत्यर्थः ॥

तदेव तस्य समीहितमिति वैपरीत्यमपि किं न स्यादिति वाच्यम्(१)। 'शिरो मदीय याति यास्यति' इत्यभिसन्धायोत्कटरागान्धानां क्षणिकसुखार्थं निन्दितपरदारग्राम्यधर्मादौ प्रवृत्तिदर्शनात्। अत्र क्षणिकसुखकालीनदुःखाभावस्य पुरुषार्थत्वे बहुकालदुःखानुभवायोगात् सुखसाधनताज्ञानस्यैव प्रवर्त्तकत्वसम्भवे दुःखाभावस्य पुरुषार्थत्वं परिकल्प्य तत्साधनप्रवर्त्तकसंग्रहायेष्टसाधनताज्ञानस्येच्छाविषयत्वप्रवेशेन गुरुघटितस्य प्रवर्त्तकत्वकल्पनापत्तेश्च "सत्यं ज्ञानमनन्तं ब्रह्म" "विज्ञानमानन्दं ब्रह्म" "ब्रह्मविद्ब्रह्मैव भवति" इतिश्रुत्या तत्त्वज्ञानप्रयोज्यसच्चिदानन्दरूपब्रह्मप्राप्तेरेव मोक्षत्वावधारणात्। नचानन्दो दुःखाभाव इति। उत्कर्षापकर्षानुभवविरोधापत्तेः। उत्तरोत्तरशतगुणोत्कर्षापादकश्रुतिविरोधाच्च।

ननु तव मते तादृशब्रह्मणः प्रत्यग्रूपतया नित्यप्राप्तत्वात्कथं तत्त्वज्ञानसाध्यत्वमिति चेच्छृणु। अविद्यया जीवभेदवदानन्दभेदोऽप्यध्यस्त इति संसारदशायां जीवान्तरवदानन्दापरोक्ष्यं नास्ति, अविद्यानिवृत्तौ तु आनन्दभेदविलयात्तदापरोक्ष्यमिति तन्निवृत्तिद्वारा तत्त्वज्ञानमुपयुज्यत इति। तस्मात्सिद्धं जीवस्याद्वैतब्रह्मसाक्षात्काराद्भेदभ्रमनिवृत्त्या सच्चिदानन्दब्रह्मावाप्तिर्मोक्ष इति दिगिति वदन्ति।

उपसंहरति **सुकरोपीति**। **न दृष्टोपायः**—उक्तधनादिरूपः। तथाच श्रुतिः—"अमृतत्वस्य तु नाशाऽस्ति वित्तेन" इत्यादि। अत्र वित्तपदं लौकिकदुःखनिवृत्तिसा-

(१) लौकिक्युक्तिरियम्। अपराधनिमित्तकं स्ववधमनुसन्धायापीत्यर्थः।

यद्यपि दुःखममङ्गलम्,' तथाऽपि तत्परिहारार्थत्वेन तदपघातो मङ्गलमेवेति युक्तं शास्त्रादौ तत्कीर्तनमिति ॥ १ ॥

---

स्यादेतत् । मा भूद् दृष्ट उपायः, वैदिकस्तु ज्योतिष्टोमादिः सहस्रसंवत्सरपर्यन्तः कर्मकलापस्तापत्रय-

---

धनान्तरोपलक्षकम् । नन्वयं ग्रन्थो ऽव्याख्येयोऽशिष्टप्रणीतत्वात् । नच हेत्वसिद्धिः । शिष्टाचारप्राप्तमङ्गलाकरणेन ग्रन्थकर्त्तुरशिष्टत्वादित्याशङ्कते यद्यपीति । समाधत्ते तथापीति । तदपघातो दुःखत्रयापघातबोधकः शब्दो माङ्गल्य ओंकारादिशब्दवन्मङ्गलहेतुः ॥७॥

हेयं हेयहेतुश्चेति व्यूहद्वयं संक्षेपणोक्त्वा वक्ष्यमाणहानोपायोपक्षया सुसाध्येन वैदिकोपायेन जिज्ञासावैयर्थ्यं शङ्कते–स्यादेतदित्यादिना । सहस्रसंवत्सरपर्यन्त इति । “पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः पञ्चपञ्चाशतः पञ्चदशाः पञ्चपञ्चाशतः सप्तदशाः पञ्चपञ्चाशत एकविंशाः विश्वसृजामयनं सहस्रसंवत्सरम्”इति वाक्यमुदाहृत्य षष्ठे “सहस्रसंवत्सरं तदायुषामभावान्मनुष्येषु” ( पू० मी० अ० ६ पा० ७ अ० १३ सू० ३७ )इत्यत्र विचारितम् । पञ्चपञ्चाशतः सार्द्धशतद्वयसंख्याकास्त्रिवृतः त्रिवृत्स्तोमकयागयुक्ताः । स्तोत्रीयऋक्त्रयस्य त्रिरावृत्तिर्यस्मिन्यज्ञे तद्युक्ता इति यावत् । एवं पञ्चदशा इत्यत्र स्तोत्रीयऋक्त्रयस्य पञ्चावृत्त्या पञ्चदशस्तोमकयागयुक्ता इत्यर्थः । एवमग्रेऽपि बोध्यम् ।

अस्मिन्सूत्रे सहस्रायुषां गन्धर्वादीनां त्वग्न्युपसंहारासामर्थ्याद्यदि मनुष्याणामेवाधिकारः तदा किं रसायनादिसम्पादितसहस्रायुषाम्, उत कुलकल्पः, उत विश्वसृजामयनं कुर्वतां सहस्रायुषां कल्प्यम्, अथवार्द्धतृतीयशतानामधिकारः, “उत यो मासः स

मेकान्तमत्यन्तञ्चापनेष्यति"। श्रुतिश्च-"स्वर्गकामो यजेत"इति ।

स्वर्गश्च—

---

सवंत्सरः" इति दर्शनाद् मासेषु संवत्सरत्वमाश्रित्य सुखेनायं मनुष्याधिकारः, उत "संवत्सरप्रतिमा वै द्वादशरात्रयः" इति प्रयोगाद्द्वादशरात्रिषु संवत्सरशब्दः, उत दिवसेषु इति पक्षाः ॥

नाद्यः। "शतायुः पुरुषः"इति विरोधात्। रसायनस्यैतावदायुःसम्पादनासामर्थ्यात् । न द्वितीयः । "शास्त्रफलं प्रयोक्तरि" इतिन्यायात्समग्रकर्मानुष्ठायिनामेव फलनिर्णये तेषां प्रवृत्त्यसम्भवात्। न तृतीयः। प्रत्यक्षादिविरोधात् । चतुर्थपक्षे "पञ्चपञ्चाशतः" इतियजमानाभिप्राया संख्या एकोऽपि त्रिवृत्स्तोमकयागयुक्तः संवत्सरः पञ्चपञ्चाशत्संख्यैः प्रत्येकं कर्तृभूतैः संबध्यमानस्तत्संख्यो भवति तथा पञ्चदशादयोऽपीति तेन चतुःसंवत्सरमिदं सत्रमर्द्धतृतीयैर्यजमानशतैः क्रियमाणं सहस्रसंवत्सरमिति कथ्यत इति "चतुर्विंशतिपरमाः सत्रमासीरन्"इति वचनविरोधापत्तिः। न पञ्चमः। आधानादूर्ध्वं सहस्रमासजीवनासम्भवेनाशक्तितादवस्थ्यात् । न षष्ठः। संवत्सरशब्दस्य प्रतिमाविशेषणत्वेन द्वादशरात्रिष्वप्रयोगात्तस्मात्त्रिवृदादिमासस्यादिवसेषु संवत्सरशब्दः । त्रिवृदादिपदैस्तोमविशिष्टमहरुच्यते नाहःसङ्घस्ततोऽहःसु गौणी संवत्सराभिधेति ।

ननु ज्योतिष्टोमस्य पूर्णमासादिजन्यस्वर्गे व्यभिचारवारणाय विजातीयस्वर्गं प्रत्येव हेतुत्वावश्यकत्वे कृतज्योतिष्टोमस्यापि परोत्कर्षासहनजन्यदुःखसम्भवात्कथमात्यन्तिकदुःखनिवृत्तिरित्याशङ्क्याह कर्मकलापइति । तथा च निखिलकाम्यकर्मानुष्ठाने परोत्कर्षासम्भवेन न दुःखोत्पत्तिरिति भावः ॥

"यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ॥
अभिलाषोपनीतं च तत् सुखं स्वःपदास्पदम्" ॥ इति ।
( तन्त्रवार्तिकम् )

दुःखविरोधी सुखविशेषश्च स्वर्गः । स च स्वस-

---

ननु स्वर्गपदस्य लोके ऽप्रयोगात्कथं स्वर्गपदशक्तिग्रह इत्याशङ्क्य तच्छक्तिग्राहकमर्थवादं दर्शयति स्वर्गश्चेत्यादि । तत्सुखम्—यन्नदुःखेनेत्यादिनोक्तं सुखम् । स्वःपदास्पदम्—स्वर्गपदवाच्यम् । अत्र मिलितं धर्मत्रयं स्वर्गपदशक्यतावच्छेदकम् । अत्र दुःखपदं स्वावच्छेदकपरम् । अवच्छिन्नत्वं तृतीयार्थः । तथाच स्वावच्छेदकावच्छिन्नभिन्नसुखत्वं तदर्थः । नच खण्डशरीरजन्ये ऐहिकसुखे ऽतिव्याप्तिरिति वाच्यम् । स्वावच्छेदकावृत्तिजात्याश्रयावच्छिन्नसुखत्वस्यैव विवक्षितत्वात् । स्वर्गावच्छेदकवृत्तिचैत्रत्वादिजातेर्दुःखावच्छेदकवृत्तिचैत्रत्वादिजातिभिन्नत्वान्नासम्भवः । नचग्रस्तमनन्तरमित्यस्य क्षणद्वयात्मककालोपाध्यवच्छेदेन स्वाभावावच्छेदकावच्छिन्नभिन्नसुखत्वमर्थः । नच क्रमिकखण्डशरीरावच्छिन्ने ऐहिकसुखे ऽतिव्याप्तिरिति वाच्यम् । क्षणद्वयात्मककालोपाध्यवच्छेदेन स्वाभावावच्छेदकावृत्तिजात्याश्रयावच्छिन्नसुखत्वस्य विवक्षितत्वात् । अभिलाषोपनीतमिति । अभिलाषविषयस्रक्चन्दनवनितादिजन्यसुखत्वम् । तद्विषयसम्बन्धगोचरेच्छाव्यवहितोत्तरकालावच्छेदेन तत्तद्विषयसम्बन्धत्वावच्छिन्नाभावावच्छेदकजात्याश्रयावच्छिन्नसुखत्वमिति यावत् । तेनैहिकसुखे नातिव्याप्तिः । ननु कर्मकलापस्य सुखविशेषरूपस्वर्गजनकत्वे ऽपि आत्यन्तिकदुःखनिवृत्तिरूपमोक्षाजनकत्वात्कथं तेन जिज्ञासावैयर्थ्यमित्यत आह दुःखविरोधीति ॥

ननु सुखविशेषरूपः स्वर्गो नागामिदुःखविरोधी सुखत्वादैहिकसुखवदित्याशङ्क्याह सचेति । तथाचार्थवादबाधितमिदम-

त्तया समूलघातमपहन्ति दुःखम् । न चैष क्षयी । तथा हि श्रूयते—"अपाम सोममसृता अभूम" इति ( अथर्वशिरस ३ )। तत्क्षये कुतोऽस्यामृतत्वसम्भवः ?।

---

नुमानमित्यर्थः । सच—उक्तसुखरूपविशेषरूपः स्वर्गः । ननु तत्तद्देशावच्छिन्नसुखस्य तत्तद्देशावच्छिन्नदुःखविरोधित्वादन्यदेशावच्छेदेन दुःखोत्पत्तौ बाधकाभाव इत्याशङ्क्यार्थवादाविरोधाय स्वरूपेणैव विरोधित्वान्मैवमित्याह स्वसत्तयेति । ननु सुखनाशाधिकरणतृतीयक्षणवर्तिना पशुहिंसादिजन्मना ऽनर्थहेतुनाऽपूर्वेण चतुर्थक्षणे दुःखोत्पादसंभव इत्याशङ्क्याह समूलघातमिति । तथा च कर्मकलापान्तर्गतप्रायश्चित्तेन तस्य नाशादिति भावः । समूलघातमितिक्रियाविशेषणम् । नच प्रायश्चित्तेन तन्नाशे सुखेन तन्नाशाभिधानमसंगतमिति वाच्यम् । सुखपदस्य प्रायश्चित्तसहकृतस्वजनकसामग्रीपरत्वात् । ननु "यत् कृतकं तद् अनित्यम्" इतिसामान्यतोदृष्टानुमानानुगृहीतया "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते"इत्यादिश्रुत्या स्वर्गस्याप्यनित्यत्वावगमान्न तेन जिज्ञासावैयर्थ्यमित्याशङ्क्याह नचैष क्षयीति । तथाच "अपाम सोममसृता अभूम" "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति"इत्यादिश्रुत्यविरोधाय प्रवाहानादित्वरूपं नित्यत्वमभ्युपेयते इति भावः । तदेवोपपादयति—तथा हीति । कचिद्देवानां जल्प आसीत् 'कथं वयमत्रागताः' इतिविचार्योचुः—

"अपाम सोममसृता अभूमागन्म ज्योतिरविदाम देवान् ॥
किं नूनमस्मान् कृणवदरातिः किमुधूर्तिरमृतमर्त्यस्य ॥ इति ।

तदेवाह अपामेत्यादिः । हेतुभूतातीतसोमकर्मकपानानुकूलकृतिवन्तो वयं तत्कालीनतत्कार्यभूतामृतत्वभवनाश्रया इत्यर्थः । तत्क्षये-सोमपानादिप्रयोज्यस्वर्गक्षये । अस्य-सोमपा-

तस्माद्वैदिकस्योपायस्य तापत्रयप्रतीकारहेतोर्मुहूर्तयामाहोरात्रमाससंवत्सरनिर्वर्तनीयस्यानेकजन्मपरम्परायाससम्पादनीयाद् विवेकज्ञानाद् ईषत्करत्वात् पुनरपि व्यर्था जिज्ञासा इत्याशङ्क्याह—

दृष्टवदानुश्रावकः, स ह्यविशुद्धिक्षयातिशययुक्तः ।
तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात् ॥ २ ॥

"दृष्ट-" इति । गुरुपाठादनुश्रूयत इत्यनुश्रवो वेदः । एतदुक्तं भवति—'श्रूयत एव परं न केनापि कि-

---

नादिकर्तुः । अमृतत्वसम्भवः—अमृतत्वकथनसम्भवः । उपसंहरति तस्मादिति । बह्वायासेति । यथैतत्तथोक्तं प्राक् ॥

वेदस्य भ्रमप्रतारणादिदोषनिरासफलकापौरुषेयत्वलाभायानुश्रवपदोपादानमित्याह एतदुक्तमिति।नकेनाचित् क्रियत इति।

ननु वेदोऽनित्यः सत्त्वे सति जन्यत्वात्, घटवत् । नच हेत्वासिद्धिः, प्रयत्नानभिव्यङ्ग्यत्वे सति तदनन्तरमुपलभ्यमानत्वात् घटवदित्यादिना हेतोः पक्षधर्मत्वावगमात् । यद्वा नियमेन द्रागेवानुपलभ्यमानत्वात् । नचासिद्धमनभिव्यङ्ग्यत्वम् । प्रतिबन्धकनिरासेन संस्काराधानेन वाऽभिव्यक्तेरयोगात् । नच स्तिमिता वायवः शब्दोपलब्धिप्रतिबन्धकाः प्रयत्नोत्थापितकोष्ठ्यवायुभिस्तेष्वपसारितेष्वभिव्यक्तिः संभवतीति वाच्यम् । तदा शब्दानां सर्वगततया युगपच्छ्रवणापत्तेः । कोष्ठ्या वायवः शब्दस्य संस्कारमादध्युरित्यपि न । अनवयवत्वेन संस्कारायोगात् । श्रोत्रं संस्कुर्युरित्यपि न, संस्कृतेन सर्वशब्दावधारणापत्तेः । अत एव नोभयमपि । उभयदोषसमुच्चयात् । तस्मान्न प्रयत्नाभिव्यङ्ग्यः शब्द इति । "अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः साम-

वेदश्च" इतिबृहदारण्यकेन अस्य महतो भूतस्य नित्यसिद्धस्य ब्रह्मणो निश्वसितं प्रमाणान्तरेणार्थज्ञानप्रयासं विना श्वासादिन्यायेन सिद्धमल्पप्रयत्नसिद्धो वेदो न त्वजन्य इत्यर्थकेन, "तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे" इतिमन्त्रेण सर्वैर्यज्ञैर्हूयमानाद्यज्ञशब्दवाच्याद् ब्रह्मणो जज्ञिरे उत्पन्ना इत्यर्थकेन वेदस्योत्पत्त्यवधारणाच्च । तथाच दृढे ऽनित्यत्वे दीपवत्साहश्यप्रत्यभिज्ञोपपादनीयेति चेन्न ।

नित्यः शब्दो व्योममात्रगुणत्वात् व्योमपरिमाणवत् । नचात्राप्रयोजकत्वम् । शब्दो यदि नित्यो न स्यात्तर्हि पूर्वकालीनतदभेदप्रत्यभिज्ञाविषयो न स्यादित्यनुकूलतर्कसत्त्वात् । नच पूर्वोक्तश्रुतिबाधितमिदमनुमानमिति वाच्यम् । "वाचा विरूप नित्यया" इति मन्त्रस्य विरूपेति देवतां संबोध्य नित्यया वाचा स्तुतिं प्रेरयेत्यर्थकस्य,

अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ।
आदौ वेदमयो दिव्या यतः सर्वाः प्रवृत्तयः ॥ इति–
स्मृतेश्चाविरोधायोक्तश्रुतेर्व्यञ्जकवायूत्पत्त्यादिपरत्वात् ॥

यत्तु स्तिमितवाय्वपसारणपक्षे सर्वशब्दप्रकाशापत्तिरित्युक्तम् तत्रोच्यते । ध्वनयो हि ताल्वादिस्थानविशेषसंस्कारविशेषसंपर्काद्विजातीया विलक्षणसामर्थ्या निष्पद्यन्ते । ततश्च कश्चिदेव ध्वनिः कस्य चिदेव शब्दस्य स्तिमितवाय्वपसारणमाधत्ते न सर्वस्य सर्वसाधारणमिति व्यवस्थोपपद्यते ।

एवं श्रोत्रसंस्कारपक्षे ऽपि कस्य चिदेव शब्दस्यानुगुणं संस्कारमाधत्ते न सर्वस्य सर्वसाधारणमतो न सकृत्संस्कृतश्रोत्रेण सर्वशब्दप्रकाशापत्तिः ।

दृष्टा च समानेन्द्रियग्राह्याणामप्यभिव्यञ्जकव्यवस्था । सावित्रं हि तेजो घटादीनामेवाभिव्यञ्जकं न नक्षत्राणाम् । निंबत्वक् चंद-

नगन्धस्यैव व्यञ्जको न गन्धान्तराणाम् ।

नच शब्दाभिव्यक्तिपक्षे सर्वपुंसामुपलब्धिप्रसङ्गः । ध्वनीनां प्रादेशिकत्वेन तद्देशावच्छेदेन शब्दे संस्काराभ्युपगमात् । तथाच तद्देशावच्छिन्नशब्देन यस्येन्द्रियं सन्निकृष्टं स एव शृणोति नान्य इत्युपपन्नम् ।

ननु ककारादयो नाना युगपन्नादेशेषूपलभ्यमानत्वात् संमतवदिति चेन्न । एकस्यैव सूर्यस्यैकस्य मुखस्य च युगपन्नानादेशेषूपलभ्यमानत्वेन तत्र व्यभिचारात् । तथाच विन्ध्यनिलयाः कामरूपनिलयाश्च पुरुषा भिन्नेषु स्वस्वप्रागुपरिदेशादिषु युगपदेकं सूर्यं पश्यन्ति योऽपराह्णे यस्मिन् यावत्तद्दूरदेशे सूर्यं पश्यति स 'अस्मिन् पर्वते सूर्यः' इति सवितारमीक्षमाण एव तं देशं गतस्ततः परस्तात्तथैव पश्यति, तत्रत्या अन्ये जना स्तथैवेति भिन्नेषु देशेषु युगपदेकस्यैवोपलभ्यमानत्वं सम्भवति । तथैकं मुखं भिन्नेष्वादर्शेषु युगपद् दृश्यते ।

ननु प्रतिबिम्बं नामार्थान्तरम् । मूर्त्तमध्ये मूर्त्तान्तरासम्भवात् । मुखेन विना ऽननुभवात्, क्वचित्कदाचिदपि वैलक्षण्येनानुपलभ्यमानत्वाच्च । अन्यथा शरावस्थमुदकं भूमेरुपरि नाभिदघ्ने धारयितुस्तस्योपरिष्टादरत्निदघ्ने मुखं कुर्वतः शरावाप्रतिबन्धादुदकस्याधस्तादरत्निमात्रे मुखप्रतिबिम्बदर्शनात्तथैव तत्पार्श्वस्थानां दर्शनापत्तेश्च । ग्रहणकारणं तूपाधिना जवेन प्रतिहतं परावृत्तं नायनं तेज एव । तस्मान्नानादेशोपलम्भस्यानैकान्तिकत्वान्न नानात्वसाधकत्वमिति भावः ॥

नचोत्पत्तिविनाशयोरुभयोर्बाधकत्वकल्पनापेक्षया प्रत्यभिज्ञामात्रस्य बाध्यत्वकल्पनायां लाघवमिति वाच्यम् । अनित्यत्वसाधकप्रमाणाभावे प्रमाणासहकारिणो लाघवस्याकिञ्चित्करत्वात् । सजातीयानन्तवेदकल्पनायामतिगौरवाच्च ।

यते' इति । तत्र भव आनुश्रविकः । तत्र प्राप्तो ज्ञात इति यावत् । आनुश्रविकोऽपि कर्मकलापो दृष्टेन तुल्यो वर्तते, ऐकान्तिकात्यन्तिकदुःखप्रतीकारानुपायत्वस्योभयत्रापि तुल्यत्वात् ।

यद्यपि च "आनुश्रविकः" इति सामान्याभिधानम्, तथाऽपि कर्मकलापाभिप्रायं द्रष्टव्यम्, विवेकज्ञानस्याप्यानुश्रविकत्वात् । तथा च श्रूयते-"आत्मा वाऽरे

नचैवं पौरुषेयाणां भारतादीनामपि वेदाविशेषापत्तिरिति वाच्यम् । आनुपूर्वीविशेषेण विशेषात् । नच आनुपूर्वीविशेषस्य पुरुषाधीनतया पौरुषेयत्वापत्तिरिति वाच्यम् । सजातीयोच्चारणानपेक्षोच्चारणविषयत्वरूपपौरुषेयत्वाभावात् । सर्गाद्यकाले ईश्वरः पूर्वसर्गसिद्धानुपूर्वीकं वेदं ज्ञात्वा तथैवाचख्यौ, नतु विजातीयानुपूर्वीकम् । तादृशवेदाध्ययनस्यैवाभ्युदयनिःश्रेयसहेतुत्वात् । अन्यथा तस्य वाग्वज्रतया ऽनर्थहेतुत्वापत्तेरिति । महाभारतादौ च सजातीयोच्चारणानपेक्षोच्चारणविषयत्वान्नापौरुषेयत्वापत्तिरिति ।

औपनिषदास्तु—षड्भिर्लिङ्गैरद्वितीये ब्रह्मणि तात्पर्यानुरोधादेकविज्ञानेन सर्वविज्ञानानुपपत्तेश्च वाचेत्यादिश्रुतिस्मृतीनामर्थवादत्वं प्रवाहरूपनित्यत्वं वा ऽभ्युपेयमित्याहुः ॥

वेदे अर्थस्य प्राप्तेरभावादाह ज्ञातइति । साधारणधर्मं दर्शयति ऐकान्तिकेत्यादि । ऐकान्तिकात्यन्तिकदुःखनिवृत्त्यनुपायत्वसाधकसह्यविशुद्धीत्यादिवक्ष्यमाणहेतोः पक्षैकदेशे ऽसिद्धिवारणायैतद्विपरीतइतिग्रन्थासङ्गतिनिरासाय च सामान्यपदस्य विशेषपरत्वमाह यद्यपीत्यादिना । ननु विवेकज्ञानस्य लोकत एवाविवेकनिवृत्तिद्वारा दुःखनिवृत्तिहेतुत्वं सिद्धमित्याशङ्क्याह तथाचश्रूयत इति । तथाचोक्तदुःखनिवृत्तिहेतुत्वं न लोकतः सिद्धमिति भावः । "आत्मा ज्ञातव्यः"

ज्ञातव्यः प्रकृतितो विवेक्तव्यः"(बृहदारण्यक २।४।५), "न स पुनरावर्तते न स पुनरावर्तते" (छान्दोग्य ८।१५) इति ॥

अस्यां प्रतिज्ञायां हेतुमाह—"स ह्यविशुद्धिक्षयातिशययुक्तः" इति । "अविशुद्धिः" सोमादियागस्य पशुबीजादिवधसाधनता । यथा ऽऽह स्म भगवान् पञ्चशिखाचार्यः—"स्वल्पसङ्करः सपरिहारः सप्रत्यवमर्षः" इति । 'स्वल्पसङ्करः' ज्योतिष्टोमादिजन्मनः प्रधानापूर्वस्य स्वल्पेन पशुहिंसादिजन्मना ऽनर्थहेतुना ऽपूर्वेण सङ्करः । 'सपरिहारः,' कियता ऽपि प्रायश्चि

इतिन्यायप्राप्तमनूद्य विवेकमेव विदधाति श्रुतिः—"प्रकृतितो विवेक्तव्यः" इति, अन्यथा पौनरुक्त्यापत्तेः, वाक्यभेदापत्तेश्च । अस्याम् दृष्टवदानुश्रविक इति प्रतिज्ञायाम् । अनुश्रविकः कर्मकलाप ऐकान्तिकात्यान्तिकदुःखनिवृत्त्यनुपाय इत्यात्मिकायामित्यर्थः । सः-आनुश्रविकः कर्मकलापः । ग्रन्थकर्त्तुरस्मिन्नर्थे भ्रमादिनिरासाय सम्मतिमाह यथाऽऽहस्मेति । मिश्रणारूपसांकर्यस्य सम्बन्धिनिरूपणाधीनत्वात्स्वल्पसंकर इत्यस्यार्थमाह स्वल्पः सङ्कर इत्यादिना । स्वल्पः प्रधानफलाधिकरणकालापेक्षया ऽल्पकालावच्छिन्नफलजनकः, सङ्करः प्रधानापूर्वस्य पशुहिंसादिजन्यापूर्वेणानर्थहेतुना मिश्रणम् । तेन प्रधानफलाधिकरणसमयवृत्तिदुःखफलोत्पादकत्वं पशुहिंसाजन्यापूर्वस्येति सूचितम् । प्रधानापूर्वस्य सांकर्याभिधानं तु प्रायश्चित्तपरिहार्यताया यागहिंसासु सम्भवादिति।

ननु तस्य फलनाश्यत्वे प्रायश्चित्तवैयर्थ्यमित्याशङ्क्याह सपरिहार इति । सः(१) पश्वादिवधजन्यापूर्वेण सम्बन्धः

(१) एतट्टीकाऽनुरोधी मूलपाठः 'शक्यो हि स कियताऽपि प्रायश्चित्तेन परिहर्तुम्' इति उपलभ्यते । तथापि केवलमूलपुस्तकेषु अन्या-

त्तेन परिहर्तुं शक्यः । अथ च प्रमादतः प्रायश्चित्तमपि नाचरितं प्रधानकर्मविपाकसमये स पच्यते । (१)तथा

सङ्कराख्यः । परिहारार्थमाह शक्योहीति । कियता—अल्पेन । प्रायश्चित्तेन प्रायश्चित्तादिना । आदिपदेन फलादिकं ग्राह्यम् । अत्र सङ्करनाशस्तु तत्सम्बन्ध्यनर्थहेतुनाशात् । फलेन नाशस्थले तूभयसम्बन्धिनाशादित्यवधेयम् ।

केचित्तु परिहारेण प्रायश्चित्तेन सह वर्त्तते इति सपरिहार इत्याहुः ।

तन्न । 'परिहर्त्तुं शक्यः' इति ग्रन्थविरोधात् । साहित्यस्य समभिव्याहृतक्रियान्वयिन एककालीनत्वस्य फलनाश्यसङ्करावस्थानक्रियायामसम्भवात् ।

नन्ववश्यानुष्ठेयप्रायश्चित्तेन तन्नाशे कथं तेन सांकर्य्यमित्याशङ्क्याह अथेति । प्रायश्चित्तमपीत्यपिना प्रायश्चित्तानुष्ठानं समुच्चीयते । तथाच कृते ऽपि प्रायश्चित्ते तत्रापि बीजादिवधसम्भवेन तत्रापि सांकर्य्यं दुष्परिहरमिति भावः ।

एतेन प्रेक्षावतां प्रमादालस्याद्यसम्भवेन साङ्कर्यासम्भव इति परास्तम् ।

प्रधानकर्मविपाकसमयइति । विपच्यते इति विपाकः फलम् । तथाच प्रधानापूर्वारब्धफलसमये इत्यर्थः । पच्यते इति । अत्र स इत्यनुवर्त्तनीयम् । क्वचित्स पचते इति पाठः स स्पष्ट एव । तथाच तत्कालावच्छिन्नफलोपधायकः स इत्यर्थः । तथाच तत्सहकृतप्रधानापूर्वेण स्वल्पदुःखविशिष्टमेव सुखं जन्यत इति भावार्थः । क्वचित्पच्यते इतिपाठः, तत्रापूर्वेणेत्यनुवर्त्तनीयम् ॥

ननु एवं सति विषसंस्कृतान्नवत्कुशलानां प्रधानयागे प्रवृत्तिर्न स्यादित्याशङ्क्याह तथापीति । यद्यप्यनर्थं प्रसूते तथापि

दृशा पवोपलब्धस्सच मूलेऽवस्थापितः । (१) पचते इति पाठः कु. पु.

ऽपि यावदसावनर्थं सूते तावत् प्रत्यवमर्षेण सहिष्णुतया सह वर्तत इति "सप्रत्यवमर्षः"। मृष्यन्ते हि पुण्यसम्भारोपनीतस्वर्गसुधामहाह्रदावगाहिनः कुशलाः पापमात्रोपसादितां दुःखवह्निकणिकाम्॥

न च—"मा हिंस्यात् सर्वा भूतानि" इति सामान्यशास्त्रं विशेषशास्त्रेण "अग्नीषोमीयं पशुमालभेत" इत्यनेन बाध्यते—इति युक्तम्। विरोधाभावात्। विरोधे हि बलीयसा दुर्बलो बाध्यते। न चेहास्ति कश्चिद्विरोधः, भिन्नविषयत्वात्।

---

यावन्तं प्रधानजन्यसुखापेक्षयाल्पमनर्थं प्रसूते तावान् तावदनर्थवानप्यनर्थजनको ऽपि सः सङ्करः प्रत्यवमर्शः द्वेषाविषयः। तथाच तण्डुलार्थिनस्तुषावनद्धेषु प्रवृत्तिवत् सुखार्थिनां प्रेक्षावतामपि बलवदनिष्टाजनकप्रधाने प्रवृत्तिः सम्भवतीति भावः॥

ननु "स्वर्गकामो यजेत" इत्यादिश्रुतिविरोधान्निर्मूलमिदं वचनं हेयमित्याशङ्क्याह मृष्यन्तेहीति। दुःखवह्निकणिकां मृष्यन्ते सहन्ते। इति श्रूयते इति शेषः। हिहेतौ। तथाच पुण्यजन्यं यत्सुखं तत्पापजन्यदुःखसंपृक्तमेव दृष्टं लोके इयतः सामान्यतोदृष्टानुमानानुगृहीता "न हिंस्यात्सर्वा भूतानि"इति श्रुतिरेव तत्र मूलमित्यर्थः।

ननु "आहवनीये जुहोति"इतिसामान्यशास्त्रम् "पदे जुहोति" इति विशेषशास्त्रेण यथा बाध्यते तथा प्रकृते ऽपि स्यादित्याशङ्कते नचेति। दृष्टान्ते समानविषयत्वरूपविरोधेन सामान्यशास्त्रस्य बाधे ऽप्यत्र विरोधाभावाद्बाधासम्भव इत्याशयेन समाधत्ते विरोधाभावादिति। विरोधाभावे ऽपि बाधः कुतो न स्यादत आह—विरोधेहीति। अन्यथा प्रकरणादिप्रमाणानां श्रुत्यविरोधिनामपि बाधापत्तेः॥

तथा हि—"मा हिंस्याद्" इति निषेधेन हिंसाया अनर्थहेतुभावो ज्ञाप्यते, न त्वक्रन्वर्थत्वमपि, "अग्नीषोमीयं पशुमालभेत" इत्यनेन वाक्येन च पशुहिंसायाः क्रत्वर्थत्वमुच्यते, नानर्थहेतुत्वाभावः, तथा सति

ननु हिंसात्वावच्छिन्नस्यानिष्टसाधनत्वबोधकश्रुत्या हिंसात्वव्याप्यधर्मावच्छिन्नाहिंसाया इष्टसाधनत्वबोधकश्रुतेर्विरोधो ऽस्त्येव विशेषधर्मावच्छिन्नहिंसायास्सामान्यधर्माक्रान्तत्वादित्याशङ्क्य विरोधाभावमुपपादयति तथा च नहिंस्यादित्यादिना ।

अनारभ्याधीतो ऽयं निषेधः पुरुषस्यानिष्टहेतुर्हिंसेत्याह, प्राकरणिकस्तु विधिर्हिंसायाः क्रतूपकारकत्वमाह, नतु पुरुषेष्टजनकत्वमपि । साङ्गप्रधानस्यैवेष्टसाधनत्वात् । तथा च हिंसायां परस्पराविरुद्धपुरुषानिष्टजनकत्वक्रतूपकारकत्वबोधकयोर्भिन्नविषयत्वान्न विरोध इति प्रघट्टकार्थः ।

ननु हिंसायाः प्रकरणेन क्रतूपकारकत्वबोधने ऽप्यनिसाधने इष्टसाधनत्वं विधिना कथं बोधनीयमिति चेन्न । हिंसाजन्यानिष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वरूपस्य बलवदनिष्टाननुबन्धित्वस्य बोधयितुं शक्यत्वात् । निषेधस्य वैधहिंसातिरिक्तहिंसापरत्वे युधिष्ठिरादीनां स्वधर्मे ऽपि युद्धादौ जातिवधादिप्रत्यवायपरिहारस्य प्रायश्चित्तश्रवणानुपपत्तेः ।

जपेनैव तु संसिद्ध्येद्ब्राह्मणो नात्र संशयः ॥
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥,
जपस्तु सर्वधर्मेभ्यः परमो धर्म उच्यते ॥
अहिंसया हि भूतानां जपयज्ञः प्रवर्त्तते ॥,
तस्माद्यास्याम्यहं तात दृष्ट्वेमं दुःखसन्निधिम् ॥ इति
त्रयीधर्ममधर्माढ्यं किंपाकफलसन्निभम् ॥ इति,
मनुमहाभारतमार्कण्डेयवचनविरोधापत्तेश्च ।

वाक्यभेदप्रसङ्गात् । न चानर्थहेतुत्वक्रतूपकारकत्वयोः कश्चिद्विरोधो ऽस्ति । हिंसा हि पुरुषस्य दोषमावक्ष्यति, क्रतोश्चोपकरिष्यतीति ॥

---

नच "अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः" इति श्रुत्या शास्त्रानुज्ञाविषयतीर्थान्यविषयकहिंसाया अनिष्टसाधनत्वबोधकया तुल्यवित्तिवेद्यतया शास्त्रानुज्ञाविषयहिंसाया अनिष्टसाधनत्वाभावं बोधयन्त्या विरोध इति वाच्यम् । स खल्वेवं वर्त्तयन् यावदायुष्यं ब्रह्मलोकमभिसंपद्यते नच पुनरावर्त्तते इत्यग्रिमतेनैकवाक्यतया वैधहिंसातिरिक्तहिंसानिवृत्तेरिष्टसाधनत्वे तात्पर्यावधारणादुभयत्र तात्पर्यकल्पने गौरवात्प्रमाणाभावाच्च ।

अत एव "जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम्" इति (यो० सू० ३ सा० पा०) योगसूत्रमपि संगच्छते, अन्यथा महाव्रतपदवैयर्थ्यापत्तेरिति ।

आवक्ष्यति प्रापयिष्यति ॥

अत्रेदमवधेयम्—"न हिंस्यात्सर्वा भूतानि" इत्यत्र सर्वभूतपदोपादानात् हिंसामात्रस्यानिष्टसाधनत्वं तत्र प्रत्याय्यते । ननु विधेयवद् निषेध्याया हिंसायाः किंचिदुद्देश्यकत्वमपि केनाचित्प्रत्याय्यते, अन्यथा ऽज्ञानप्रमादकृते उद्देश्यत्वाभावेन दोषाभावप्रसङ्गात् । तदेवं हिंसात्वव्याप्याग्नीषोमीयपशुहिंसात्वावच्छिन्नहिंसाबोधकविधिहिंसामात्रनिषेधयोः सामान्यविशेषभावसंभवेन विशेषविधिना सामान्यनिषेधस्य संकोचो ऽवश्यं सम्भवति । नच निषेध्यहिंसाया अनुद्देश्यकत्वेऽपि कस्येयमनिष्टजनिकेति संशयनिवर्त्तकेन "शास्त्रफलं प्रयोक्तरि" इति न्यायेन कर्त्रर्थत्वं प्रत्याय्यते । एवं सति अग्निषोमीयपशुहिंसात्वस्य कर्त्रर्थत्वावच्छिन्नहिंसात्वव्याप्यत्वाभावान्न सामान्यविशेषभावः सम्भवतीति वाच्यम् । क्रत्वर्था ऽपि हिंसा पुरुषेणैव कर्त्तव्याऽतो-

क्षयातिशयौ च फलगतावप्युपाये उपचारितौ । क्षयित्वं च स्वर्गादेः सत्त्वे सति कार्यत्वादनुमितम् ॥ ज्योतिष्टोमादयः स्वर्गमात्रस्य साधनम्, वाजपेयादयस्तु स्वाराज्यस्येत्यतिशययुक्तत्वम् । परसम्पदुत्कर्षो हि हीनसम्पदं पुरुषं दुःखाकरोति ॥

"अपाम सोममसृता अभूम" इति चामृतत्वाभिधानम् चिरस्थेमानमुपलक्षयति । यदाहुः—

त्रापि तन्न्यायेन कर्त्रर्थत्वावश्यकत्वात् ।

अत एव—

त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।

यज्ञदानतपःकर्म न त्याज्यं कार्य्यमेव तत् ॥

यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् । इति—

भगवदुक्तौ विधिनिषेधमूलको निर्णयः संगच्छते । प्रायश्चित्तादिवचनं तु प्रशंसापरम् ॥

ननु साधनगताशुद्धेर्दोषत्वेऽपि तन्निष्ठक्षयातिशययोर्न दोषत्वमन्यथा सत्त्वपुरुषान्यताख्यातेरपि सदोषत्वापत्तेरित्याशङ्क्याह फलगताविति । परमते ध्वंसे व्यभिचारवारणायाह सत्त्वेसतीति । नच सत्कार्यवादिनः क्षयित्वं कथमिति शङ्क्यम् । उत्पन्नव्यक्तेः पुनरुत्पत्त्ययोगेन तन्मतेऽपि कर्मकलापानुष्ठानेनोत्कर्षो न सम्भवतीत्युक्तं तथाऽपि साङ्गसर्वकर्मणामनुष्ठानासम्भवादिति भावः । परसम्पदुत्कर्षस्य दुःखहेतुत्वे ऽनुभव एव मानमित्याह दुःखाकरोतीति । नच यन्नदुःखेनेत्याद्यर्थवादविरोधस्तत्र दुःखपदस्य मानसातिरिक्तदुःखपरत्वात् । अन्यथा "स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नैव निर्वृत्तिः" इत्यादिवचनविरोधापत्तेः । अनुमानानुगृहीतबहुश्रुतिविरोधादपामेत्यादिश्रुतिरन्यपरेत्याहापामेति । स्थेमानम् स्थैर्य्यम् ॥ तत्र विष्णुपुराणसंमतिमाह यदाहुरिति ।

"आभूतसम्प्लवं स्थानममृतत्वं हि भाष्यते" इति ॥ अत एव च श्रुतिः—"न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः । परेण नाकं निहितं गुहायां वि-

---

एतदपि युक्तिसौकर्य्यादुक्तम् । "अपाम सोमम्" इत्यनेन कर्मप्राशस्त्यमेव लक्ष्यते न फलं विधीयते वाक्यभेदप्रसङ्गादिति । नच प्रवाहानादित्वपरैवापामेति भवतु ।

'इमं मानवमावर्त्तं न पुनरावर्त्तन्ते',
शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ॥
एकया यात्यनावृत्तिमन्ययाऽऽवर्त्तते पुनः ॥

इत्यादिविरोधापत्तेः । भूतसंप्लवः प्रलयः । यतः कर्मजन्यममृतत्वं न भवति, अत एव श्रुतिः कर्मणाममृत्वसाधनत्वं निषेधतीत्याह-अत एवच श्रुतिरिति । एके संसारविरक्ता अमृतत्वमानशुरानशिरे प्राप्ता इत्यर्थः । केन ? कर्मादित्यागेन, नतु कर्मादिनेति योजना । न त्वेके त्यागेनापरे त्वन्यथाऽपीति ।

'नान्यत्र सर्वे सन्त्यागान्मोक्षं विन्दन्ति मानवाः' ।

इत्यादिविरोधप्रसङ्गात् । त्यागरूपसंन्यासस्य च विज्ञानद्वारैव मोक्षकारणताऽभिमतेति "ज्ञानादेव तु कैवल्यम्"इत्यादेरविरोध एवेति । किं तदमृतमित्याकाङ्क्षायां तद्बोधकश्रुतिमुपन्यस्यति परेणेति । अत्राभेदे तृतीया । नाकं सुखम् । तथाचोत्कर्षावधिभूताभिन्नं सुखमित्यर्थः ॥

केचित्तु कं सुखं तद्भिन्नमकं दुःखं तदनधिकरणं स्वर्गस्ततः परेण परमित्याहुः ।

ननु यत् प्राप्यं तद् देशकालव्यवहितं परिच्छिन्नमनित्यं च दृष्टं यथा ग्रामादि तद्वदिदमपि स्यादत आह निहितं गुहायामिति । अत्र परतो नीरन्ध्रावरणसंकुचितद्वारगमनागम-

भ्राजते यद्यतयो विशन्ति " इति ( महानारायण, १० । नश्रमावहत्वरूपगुहासाधर्म्येण गुहापदेन स्थूलादिशरीरत्रयं गृह्यते । ननु मुख्यैव गुहा किमिति न गृह्यते इति चेच्छृणु । "सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायाम्"इति ( तै० ब्र० व० मं० १ ) तैत्तिरीयके ।

"ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे । ( क० व० ३ मं० १ )

"गुहाहितं गह्वरेष्ठं पुराणम्"इति ( क० व० २ मं० ११ ) काठके । "आविः संनिहितं गुहाचरं नाम महत्पदम्"इति ( मु० द्वि० मु० ख० २ मं० १ ) मुण्डके च समाम्नातं गुहापदम् । तत्र "ऋतंपिबन्तौ"इतिकठाम्नायसमाम्नातावेव "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते" ( मु० उ० मुं० ३ मं० १ ) इति गुहाविवरणपरमन्त्रेण वृक्षाश्रितसुपर्णौ निर्दिष्टौ भवतः । "ऋतं पिबन्तौ"इत्यूर्द्धमेव "ऊर्द्धमूलोऽर्वाक्शाख एषो ऽश्वत्थः सनातनः" इति ( क० व० ६ मं० १ ) मन्त्रेण शरीरस्य ऋतपानकर्तृसुपर्णाश्रितवृक्षनिर्देशात् शरीरमेव गुहेतिनिर्णये ऽत्रापि तदेव ग्राह्यमिति मुख्यग्रहे मानाभावात् ।

"हृद्यन्तर्ज्योतिः पुरुषः"इत्युक्तेर्हृदेव गुहेति केचित् ।

नन्वेवमपि परिच्छिन्नत्वं तदवस्थमेवेति चेन्न । घटाकाशादिवत्परिछिन्नत्वस्यौपाधिकत्वात् । अत एव "यदर्चिमद्यदणुभ्यो ऽणु च यस्मिंल्लोका निहिता लोकिनश्च"इति सङ्गच्छते । नचेदं सांख्यीयमतं न भवतीति भ्रमितव्यम् । तस्य श्रुत्यनुकूलयुक्तिप्रतिपादकत्वात्, अन्यथा तस्य हेयत्वापत्तेः ॥ अज्ञातसुखस्य पुरुषार्थत्वाभावादाह विभ्राजते इति । स्वयंप्रकाशत्वेन दीप्यते, परप्रकाश्यत्वे ऽनवस्थापत्तेः । यत्तु श्रुतिषु आनन्दात्मत्वेन प्रसिद्धम् । यदाह "सत्यं ज्ञानमनन्तं ब्रह्म यो

५ ) तथा " कर्मणा मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमीहमानाः। तथा परे ऋषयो ये मनीषिणः परं कर्मभ्यो ऽमृतत्वमानशुः " इति च ॥

तदेतत् सर्वमभिप्रेत्याह—"तद्विपरीतः श्रेयान्. व्यक्ताव्यक्तज्ञविज्ञानात्" इति। तस्मात् ( आनुश्रविकाद् दुःखापघातकोपायात् सोमपानादेरविशुद्धाद् अनित्यसातिशयफलात् ) विपरीतः विशुद्धः हिंसादिसङ्कराभावात, नित्यनिरतिशयफलः, असकृत् पुनरावृत्तिश्रुतेः। न च कार्यत्वेनानित्यता फलस्य

---

वेदनिहितं गुहायाम्"इति। विशन्तीति। ज्ञात्वेति शेषः। नन्वेवं धनार्जनकर्मादेः कुञ्जरशौचवद् दुःखानिवर्त्तकत्वे कथं तत्र प्रवृत्तिरित्याशङ्कोत्तरत्वेन श्रुत्यन्तरमुदाहरति तथाकर्मणेति ॥ यथा दुःखविवेककुशलाः कर्मभ्यः परं साक्षात्कर्मासाध्यममृतत्वमानशुः, तथा तदपरेऽकुशला अत एव प्रजावन्तः त्यागमकुर्वन्तः, अत एव द्रवणमीहमानाः, अत एव कर्मासक्ताः, अतएव कर्मणा जन्ममरणप्रवाहरूपं मृत्युं निषेदुः प्रापुरित्यर्थः। तथाच कुञ्जरादेरिव मन्दमतीनामापातदुःखनिवर्त्तके ऽपि प्रवृत्तिस्सम्भवतीति भावः ॥

नित्यनिरतिशयेति ॥ नित्यमक्षयि निरतिशयं स्वसमानाधिकरणस्वसमानकालीनसुखदुःखादिसम्बद्धं यद्यत् तत्भिन्नम्, नित्यं च निरतिशयं यत्तत्तथा। सत्त्वपुरुषान्यताख्यातिरूपसाधनस्यैकरूपत्वात्तत्फलाया मुक्तेर्नित्यनिरतिशयत्वे ऽपि जन्यत्वेनानित्यत्वानुमानमसकृदपुनरावृत्तिश्रुतिबाधितमित्याह असकृदिति। असकृत् पुनःपुनः, अनावृत्तिश्रुतेरनावृत्त्यापादकश्रुतेः। अभ्यस्तानावृत्त्यापादकश्रुतेरित्यर्थः। "एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्तन्ते नावर्तन्ते" ( छा० अ० ४ खं० १५ मं० ६ ) "तयोर्द्ध्वमायन्नमृतत्वमेति सखल्वेवं वर्त्त-

यन्मानवायुष्यं ब्रह्मलोकमभि सम्पद्यते नच पुनरावर्त्तते" इतिछान्दोग्यश्रुतेः । "तेषां न पुनरावृत्तिः" इत्यनभ्यस्ताना-वृत्त्यापादकबृहदारण्यश्रुतेश्च ॥

यद्यपि 'असकृन्नित्यानिरतिशयश्रुतेः' इत्येव युक्तं तथाऽपि "वेत्थ-यथा लोको न सम्पूर्यता३" इति "तस्मिन् यावत्सम्पातमुषित्वाऽथैत-मेवाध्वानं पुनर्निवर्त्तन्ते तेनासौ लोको न सम्पूर्यते" इतिप्रश्ननिरूप-णाभ्यां पितृयानेन पथा गतानां पुनरावृत्तिरिव देवयानेन प-था गतानां पुनरावृत्तिर्न कुत इत्याशङ्कानिरासाय श्रुत्या तथा-विधानौचित्ये ऽत्रापि तथाविधानमेवोचितमिति । नचैवमपि तच्छ्रुतिरेवोपन्यसितुं युक्तेति वाच्यम् । उक्तार्थे तात्पर्यग्राहकाभ्या-सलाभाय तथाऽभिधानात् । अन्यथा तस्या उपासनार्थवादत्वापत्तेः ।

नन्वपुनरावृत्तिश्रवणे ऽपि फलस्य नित्यनिरतिशयत्वं न स-म्भवति-तथाहि-"य एषो ऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्म" इति चतुर्थे उपकोशलविद्यायामेष आ-त्मा प्राणानां तदेवोक्तब्रह्मेत्युपासकानां ब्रह्मलोकगतिः "एष देवपथः" इत्यनेनोक्ता, अग्रे अष्टमाध्याये ब्रह्मज्ञानसहकारिणः परमसाधनस्य ब्रह्मचर्यस्य विधानायार्थवादे ब्रह्मलोकस्वरूपमुक्तं तद्यथा-

"अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येव यो ज्ञाता तं विन्दते ऽथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येवेष्ट्वात्मानमनुविन्दते ॥ १ ॥ अथ यत्सत्त्रायणमित्याक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येव सत आत्मनस्त्राणं विन्दते ऽथ यन्मौनमित्याच-क्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येवात्मानमनुविद्य मनुते ॥ २ ॥ अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्यमेव तदेष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते ऽथ यदरण्यायनमित्याचक्षते ब्रह्मचर्यमेव त-त्तदरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि तदैरं-मदीयं सरस्तदश्वत्थः सोमसवनस्तदपराजिता पूर्ब्रह्मणः प्रभुविमित-

ऽ हिरण्मयं तद्य एवैतावरं वै ण्यं चार्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषां सर्वेषु लोकेषु कामचारो भवति ( छा० अ० ८ खं० ५ )॥

अस्यार्थः—अथशब्दो ब्रह्मचर्यस्तुतिप्रारम्भार्थः । परमपुरुषार्थसाधनं यज्ञ इति लोके शिष्टाः कथयन्ति तद्ब्रह्मचर्यमेव, कुतो, ब्रह्मचर्यफलं ब्रह्मलोकस्तं ब्रह्मचर्येण आत्मज्ञानवाँल्लभते तस्मात् । इष्ट्वा पूजयित्वा । ईषणादिष्टं ब्रह्मचर्येणेषणा सम्पाद्यते इष्टेनापि तदेव सम्पाद्यते तस्मादुभयसाधर्म्यादिष्टमपि ॥ सत्रायणं बहुयजमानकं कर्म सतः परस्मात् त्रायणं रक्षणम् । ब्रह्मचर्यसाधनेन युक्तः सन्नात्मानं शास्त्राचार्याभ्यामनुविद्य पश्चाद् मनुते ध्यायति अतो मौनशब्दमपि ब्रह्मचर्यम् । यद्यप्यनाशकायनम् उपवासपरायणत्वं तथाऽप्यनाशकसाधनत्वरूपार्थमादाय साम्यं बोध्यम्, आत्मानं ब्रह्मचर्येण विन्दते स एष आत्मा ब्रह्मचर्यसाधनवतो न नश्यति तस्मादनाशकायनमपि ब्रह्मचर्यमेव । एवमरण्यवाच्ययोरण्यर्णवयोर्ब्रह्मचर्येणायनात्प्रापणादरण्यायनमपि ब्रह्मचर्यमेवेत्याह तदरश्चेति । भुवमन्तरिक्षं चापेक्ष्य तृतीया द्यौस्तस्यां तत् तत्रैवैरमिराऽन्नं तन्मय ऐरो मण्डस्तेन पूर्णं मदीयं तदुपभोगिनां मदकरं हर्षोत्पादकं सरस्तत्रैवाश्वत्थो वृक्षः सोमसवनो नामतः सोमो ऽमृतं तन्निःस्रवो ऽमृतस्रव इति वा तत् । तत्रैव ब्रह्मलोके ब्रह्मचर्यसाधनरहितैर्न जीयत इत्यपराजिता नाम पुरी ब्रह्मणो हिरण्यगर्भस्य प्रभुणा विशेषेण निर्मितं हिरण्मयं सौवर्णं मण्डपमिति वाक्यशेषः । तत् तत्र ब्रह्मलोके यो ज्ञानाद्यज्ञ ईषणादिष्टं सतस्त्राणात्सत्रायणं मननान्मौनमनशनादनाशकायनमरण्ययोगादरण्यायनमिति महद्भिः पुरुषार्थसाधनैः स्तुत्वा ब्रह्मलोकप्राप्तिः सर्वलोकसंचारसाधनत्वेन पुनः स्तौति तेषामेवेति ब्रह्मचर्यसाधनवतामेव तत्त्वन्तेषामित्यर्थः ॥

ननु 'इन्द्रस्त्वं यमस्त्वं वरुणः' इत्यादिभिर्यथा कश्चित्स्तूयते महार्ह एवमेव यज्ञादिशब्दैर्न स्त्र्यादिविषयतृष्णानिवृत्तिमात्रं स्तुत्यर्ह हीनत्वात्किन्तु ज्ञानं मोक्षसाधनत्वाद्यज्ञादिभिः स्तूयते तच्च ब्रह्मचर्यपदेन लक्षणीयमिति चेन्न ॥ स्त्र्यादिविषयासक्तस्य सर्वदा तज्ज्ञानेन दृढतरतत्संस्कारवतो ज्ञानानुत्पत्तौ पुनःसंसारापत्तेस्तस्य हीनत्वाभावात् ॥

स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम् ॥
संकल्पो निश्चयश्चापि वधूनां रतिहेतवः ॥

इत्युक्तहेतूनां त्यागरूपस्य ब्रह्मचर्यस्य कर्त्तुमशक्यत्वेन महत्वाच्च ।

नीरोगः कान्तिसंपन्नः सर्वदुःखविवर्जनः ।
ब्रह्मचारी भवेल्लोके पाप्मना च विवर्जितः ॥

इत्याद्यैहिकफलदर्शनेन तस्य महत्वानुमानाच्च । तद्भिन्नात्मज्ञानानुत्पादक"परांचि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यति नान्तरात्मन्" "ध्यायतो विषयान्पुंसः" इत्यादिश्रुतिस्मृतिभ्यो महत्त्वावगमाच्च ॥

नन्वेवमपि ब्रह्मचर्यस्य यज्ञादिभिरारोपितगुणवत्त्वरूपस्तुतित्वात्तेषामेव ब्रह्मलोकसाधनत्वं गुणस्य वास्तवत्वाङ्गीकारे तेषामपि तत्प्राप्तं तत्र नेष्टम् । "अथ य इमे ग्राम इष्टापूर्त्ते दत्तमित्युपासते ते धूममभि संभवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षात् षड्दक्षिणैति मासांस्तान्नैते संवत्सरमभिप्राप्नुवन्ति मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा"इति ( छां० अ० ५ खं० १० मं० ३—४ ) चन्द्रमसाभेदप्राप्तिबोधकश्रुतिविरोधापत्तेः । उभयविधाने वाक्यभेदापत्तेश्च । द्वितीयपक्षे तुल्यफलत्वापत्तिः । तेषां ब्रह्मलोकसाधनत्वानङ्गीकारे ब्रह्मचर्यस्तुत्यनुपपत्तिः । आरोप्यमाणगुणा-

प्रसिद्धेरिति चेन्न । यज्ञादीनां प्रसिद्धं पुरुषार्थसाधनत्वमपेक्ष्य स्तुत्युपपत्तेः । अत एव न तुल्यफलत्वापत्तिरित्यलं प्रसङ्गागतेन । प्रकृतमनुसरामः ।

तथा च ब्रह्मलोकगमनं तत्रत्यभोगश्च सशरीरस्यैव तथा सति भोगविषयस्य सुखादेः सत्त्वेन तत्साधनज्ञानाभावेन च तद्गतानामपि नित्यनिरतिशयात्मकमोक्षो न संभवति अस्या इह ग्रहणेनच पुनरावृत्तिसूचनेन न श्रुतेस्तत्र तात्पर्यं किंतु धूमादिमार्गापेक्षया ऽर्चिरादिमार्गप्राशस्त्ये ।

न च—

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।

परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् । इति—

स्मृतिविरोध इतिवाच्यम् । श्रुतिविरोधे स्मृतेरन्यथानयनात् । नच "तयोर्द्ध्वमायन्नमृतत्वमेति"इति श्रुतिविरोधः । "न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते" इत्यादिश्रुतिविरोधाद् "अभूतसम्प्लवं स्थानममृतत्वं हि भाष्यते" इति सापेक्षामृतपरत्वादिति चेन्न । तेषां मध्ये कृतसाक्षात्काराणां परप्राप्तिं वदन्त्याः स्मृतेः साक्षात्कारविरहवतां ब्रह्मलोकप्राप्तानां तत्राप्यकृतात्मनां तन्मानवातिरिक्तमानवे आवृत्तिं वदन्त्याः श्रुतेर्भिन्नविषयतया विरोधाभावात् । नच ब्रह्मलोकगतानां मध्ये कृतसाक्षात्काराणां परममोक्षप्राप्तिबोधिका स्मृतिरेव नतु श्रुतिस्तस्या अर्चिरादिमार्गप्राशस्त्यबोधनद्वारेह मानवे तेषां पुनरावृत्तिपरत्वात् तथा सत्यत्यन्तापुनरावृत्तिश्रुत्यभावेनासकृदपुनरावृत्तिश्रुतेरिति कथनासंगतिर्मिश्राणां तदवस्थैवेति वाच्यम् ॥

वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः ॥

ते ब्रह्मलोके परान्तकाले परामृताः परिमुच्यन्ति सर्वे ॥

इति श्रुत्यविरोधाय "तद्य इत्थं विदुर्ये चेमे श्रद्धा-

युक्ता, भावरूपस्य कार्यस्य तथाभावात्, दुःखप्रध्वंसनस्य तु कार्यस्यापि तद्वैपरीत्यात् । न च दुःखान्तरोत्पादः, कारणाप्रवृत्तौ कार्यस्यानुत्पादात् विवेकज्ञानोपजननपर्यन्तत्वाच्च कारणप्रवृत्तेः । एतच्चोपरिष्टादुपपादयिष्यते ॥

तप इत्युपासते ते ऽर्चिषमभि संभवति"इति श्रुत्या पञ्चाग्निविद्यावतां ग्रहस्थानां मरणोपलक्षितवैखानसानां परिव्राजकानां नैष्ठिकब्रह्मचारिणां च ब्रह्मोपासनाहीनानां ब्राह्मलोकगमनं प्रतिपादयन्त्यैकवाक्यतया तेषां न्यायसिद्धपुनरावृत्तेर्गमनातिरिक्तकल्पाधिकरणत्वकल्पने ऽपि तन्मात्रे तात्पर्याकल्पनात् ॥ नच तत्र गतानां सर्वेषां श्रवणादिद्वारा साक्षात्कारः कुतो न संभवतीति वाच्यम् । भोगासक्तत्वेन श्रवणाद्यसंभवात्तत्संभवे ऽपि भोगविग्रहतया साक्षात्कारासंभवात् ।

केचित्तु असकृत् पुनःपुनः परिषत्सु अनावृत्तिश्रवणादित्याहुः ॥

उत्पन्नव्यक्तेः पुनरुत्पादासंभवादाहान्तरेति । कारणाप्रवृत्तिरेव कथमत आह विवेकेति । ननु विवेकज्ञानोत्तरमपि कुतो न प्रवर्त्तते ऽत आह–एतच्चोपरिष्टादिति । "औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्त्तते लोकः"इत्यारभ्य "प्रकृतेः सुकुमारतरं न किंचिदस्तीति मे मतिर्भवति ॥ या दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य"इत्यन्तग्रन्थे ॥ उपरिष्टात्—विवेकख्यातिपर्यन्तं याति प्रकृतिचेष्टितमित्यत्रेति केचित् तन्न यदाहुरित्यादिपरकीयवचनमात्रोपन्यासे ऽपि व्युत्पादनाभावात् । तत्तात्पर्यार्थमुक्त्वा तद्विपरीत इत्यस्याक्षरतस्तदपकृष्टार्थो ऽपि संभवत्यतस्तन्निरासाय व्यक्तेरयाद्यग्रिमानुरोधेनाक्षरतो विशेषप-

अक्षरार्थस्तु-तस्मात् ( आनुश्रविकाद् दुःखापघातकाद् हेतोः ) विपरीतः [ सत्त्वपुरुषान्यताप्रत्ययः साक्षात्कारो ] दुःखापघातको हेतुः, अत एव श्रेयान् । आनुश्रविको हि वेदविहितत्वाद् मात्रया दुःखापघातकत्वाच्च प्रशस्यः । सत्त्वपुरुषान्यताप्रत्ययोऽपि प्रशस्यः । तदनयोः प्रशस्ययोर्मध्ये सत्त्वपुरुषान्यताप्रत्ययः श्रेयान् ॥

कुतः पुनरस्योत्पत्तिरित्यत आह—"व्यक्ताव्यक्तज्ञविज्ञानात्" इति । व्यक्तश्च अव्यक्तश्च ज्ञश्च व्यक्ताव्यक्तज्ञाः, तेषां विज्ञानम् विवेकेन ज्ञानम्, व्यक्ताव्यक्तज्ञविज्ञानम् । व्यक्तज्ञानपूर्वकमव्यक्तस्य तत्कारणस्य ज्ञानम्, तयोश्च पारार्थ्येनात्मा परो ज्ञायते, इति ज्ञानक्रमेणाभिधानम् । एतदुक्तं भवति-श्रुतिस्मृ-

---

रत्वं दर्शयति अक्षरार्थस्त्विति । एतेनापकृष्टस्यापि तद्विपरीतस्यासंभवेन 'अत एव श्रेयान्'इतिकथनासङ्गतिरिति परास्तम् । अत एव-ऐकान्तात्यन्तिकदुःखापघातकहेतुत्वादेव । मात्रयेति । सत्त्वपुरुषान्यताख्यातिरूपसाधनस्य प्रशस्यतरत्वलाभाय मात्रापदोपादानम् । अल्पकालावच्छिन्नमानसातिरिक्तदुःखापघातकत्वादिति समुदायार्थः । श्रेयान्-प्रशस्यतरः । तयोः-व्यक्ताव्यक्तयोः । पारार्थ्येन—पुरुषभोगापवर्गहेतुत्वेन । ननु सत्त्वपुरुषान्यताख्यातिरूपहेतोः सत्त्वपुरुषज्ञानाधीनत्वाद्व्यक्तज्ञानाधीनत्वाभिधानं व्यर्थमित्यत आह-इतिज्ञानक्रमेणेति । तथाच यतो व्यक्तज्ञानं विनाऽव्यक्तज्ञानं न संभवति, तदुभयज्ञानं विना पुरुषविज्ञानम्, अतस्तथाऽभिधानमिति भावः । ननु श्रुत्यादिभिरेव व्यक्तादिज्ञानेन सत्त्वपुरुषान्यताख्यातेः संभवेन मननात्मकमिदं शास्त्रं व्यर्थमित्याशङ्कानिरासार्थमाह एतदुक्तमिति । तथा च विपरी-

तीतिहासपुराणेभ्यो व्यक्तादीन् विवेकेन श्रुत्वा, शास्त्रयुक्त्या च व्यवस्थाप्य, दीर्घकालादरनैरन्तर्यसत्कारसेविताद् भावनामयाद् विज्ञानादिति । तथा च वक्ष्यति–

"एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् ।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम्" ॥ इति
( कारिका.६४ ) ॥ २ ॥

तदेवं प्रेक्षावदपेक्षितार्थत्वेन शास्त्रारम्भं समाधाय शास्त्रमारभमाणः श्रोतृबुद्धिसमवधानाय तदर्थं संक्षे-

तभावनादिनिरासोपयोगित्वान्न मननात्मकशास्त्रस्य वैयर्थ्यमिति भावः । अत एवेन्द्रविरोचनयोर्गुरुमुखाच्छ्रवणे समानेऽपि मननवत इन्द्रस्यैव तत्त्वज्ञानं नतु विरोचनस्येति श्रवणमुपपद्यते । शास्त्रयुक्त्या श्रुत्यविरोधिन्या युक्त्या । ननु अनादिपरम्परामिथ्यासंस्कारेण परिपन्थिना मनने कृते ऽपि साक्षात्कारप्रतिबन्धः स्यादत आह दीर्घकालेति । आदरपदेन श्रद्धा ग्राह्या । सत्कारपदेन ब्रह्मचर्यविद्यावैराग्यादयो ग्राह्याः । तथाच तादृशसाधनसंपन्नमननजन्यबोधो न तादृशसंस्कारेणाभिभूयते इत्यर्थः । अस्मिन्नर्थे ग्रन्थकर्त्तुः संमतिमाह तथेति ॥ २ ॥

पूर्वोत्तरार्थयोः संगतिं प्रदर्शयितुं संक्षेपेणोक्तं व्यूहचतुष्टयं 'प्रेक्षावद्'इत्यादिनाऽनुवदन् पंचविंशतितत्त्वरूपशास्त्रार्थप्रतिज्ञायाः फलं दर्शयति तदेवमित्यादिना । प्रकृतिसत्त्वपुरुषान्यताख्यातिप्रतियोगिकथनेनेोपोद्घातसंगतिरिति सूचितम् । 'चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः' इति लक्षणात् । श्रोतृबुद्धिसमवधानायेति । श्रोतृबुद्धः समवधानत्वं श्रवणानुकूलयत्नोत्पादकत्वम् । प्रतिज्ञां विना गुरूच्चारणस्य सन्दिग्धत्वेन तादृशप्रयत्नासंभवात् ।

पतः प्रतिजानीते-

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ॥
षोडशकस्तु विकारो, न प्रकृतिर्न विकृतिः पुरुषः ॥ ३ ॥

"मूल-" इति । संक्षेपतो हि शास्त्रार्थस्य चतस्रो विधाः—कश्चिदर्थः प्रकृतिरेव, कश्चिदर्थो विकृतिरेव, कश्चित्प्रकृतिविकृतिः, कश्चिदनुभयरूपः ।

तत्र का प्रकृतिरित्युक्तम्-"मूलप्रकृतिरविकृतिः" इति । प्रकरोतीति प्रकृतिः प्रधानम्, सत्त्वरजस्तमसां साम्यावस्था, सा अविकृतिः, प्रकृतिरेवेत्यर्थः । कस्मादि-

---

प्रतिजानीते—पूर्वोक्तार्थनिरूपणोत्तरकालकर्त्तव्यतया संक्षेपतः शास्त्रार्थभावं बोधयतीत्यर्थः । स्वमते न षट्पदार्थविभागनियमः षोडशपदार्थविभागनियमो वेत्याह संक्षेपतइत्यादिना । यथा चैतत्तथैतदार्य्यां व्युत्पादयिष्यति । प्रकृतिसामान्यलक्षणमाह तत्रेति । प्रकरोतीति । प्रकृतिस्तु स्वेतरकारणम् । मूलप्रकृतिलक्षणमाह सत्त्वरजस्तमसामिति । अत्र सत्त्वादीनि द्रव्याणि न गुणाः । संयोगविभागवत्त्वात्, लघुत्वचलत्वगुरुत्वादिधर्मकत्वाच्च । तेष्वत्र शास्त्रे श्रुत्यादौ च गुणशब्दः पुरुषोपकरणत्वात् पुरुषपशुबन्धकत्रिगुणात्मकमहदादिरज्जुनिर्मातृत्वाच्च गौणः । अत एव गुणाइति परार्थ इति वक्ष्यति । तेषां सत्त्वादिद्रव्याणां या साम्यावस्था न्यूनाधिकभावेनासंहननम् । अकार्यावस्थत्वमित्यर्थः । अन्यथा वैषम्यावस्थायां प्रकृतिनाशप्रसङ्गात् । न त्वत्र कार्यावस्थाविरोध्यवस्थावत्त्वम् । तस्याश्च कार्यावस्थादशायामसंभवेन मूलप्रकृतेरविकृतित्वरूपनित्यत्वं न संभवतीत्याशङ्क्याह प्रकृतिरेवेति । एवं चैवकारसमभिव्याहारात् 'कार्यभिन्नगुणत्रयत्वम्' इति मूलप्रकृतेर्लक्षणमिति सूचितमिति भावः । अत एव "सत्त्वरजस्तमसां साम्यावस्था प्र-

त्यत उक्तम्—"मूलेति"। मूलञ्चासौ प्रकृतिश्चेति मूलप्रकृतिः। विश्वस्य कार्यसङ्घातस्य सा मूलम्, न त्वस्या मूलान्तरमस्ति, अनवस्थाप्रसङ्गात्। न चानवस्थायां प्रमाणस्तीति भावः॥

कृतिः"इतिसूत्रविरोध इतिपरास्तम्। वैषम्यावस्थायां प्रकृतिनाशप्रसङ्गेनात्रैव सूत्रस्य तात्पर्यात्। 'तत्त्वान्तरोपादानत्वं प्रकृतित्वम्' इति तु प्रकृतिसामान्यलक्षणम्। "सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः"इतिसूत्रोक्तप्रकृतिसामान्यलक्षणस्य "अष्टौ प्रकृतयः" इतिकपिलसूत्रोक्तमहदादिप्रकृतिष्वव्याप्तिनिरासाय "मूले मूलाभावादमूलं मूलम्"इतिसूत्रेण मूलेन प्रकृतिर्विशेषितेतिमूलपदाभिप्रायमजानञ्छङ्कते कस्मादिति। तदभिप्रायं जानन् समाधत्ते इत्यत इति। न त्वस्या मूलान्तरमिति। नच 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम' इत्यादिस्मृतिविरोध इति वाच्यम्। पुरुषस्य कौटस्थ्यहान्यापत्त्या "अजामेकाम्"इत्यादिश्रुतिविरोधाच्च तस्मादित्यादिवाक्यस्य पुरुषसंयोगादिभिरभिव्यक्तिरूपगौण्युत्पत्त्यभिधायकत्वेन विरोधाभावात्। प्रधानस्य गौण्युत्पत्तिकथनं तु पुरुषस्य भोगापवर्गसम्पादकत्वेन प्रधानस्य पुरुषशेषत्वसूचनाय। बीजाङ्कुरजन्मना कर्माद्यनवस्थावदत्रेष्टापत्तिमाशङ्क्याह नचेति। बीजाद्यनवस्थायां प्रत्यक्षादिप्रमाणसत्त्वात्प्रधानादेरनुमानकल्प्यत्वेन दृष्टान्तवैषम्यमिति भावः।

*ननु 'प्रामाणिकी अनवस्था न दोषाय'इति प्रवादो ऽसङ्गतः। तथाहि—अनन्तपदार्थघटिताया अनवस्थाया निर्णयविषयत्वाभावेन प्रामाणिकत्वाभावात्। न ह्यनिर्णीतं प्रामाणिकञ्च सम्भवति, अर्थनिर्णायकत्वेनैव प्रमाणानां प्रामाण्यादिति।

अत्र केचित् आत्मनः स्वस्याश्रयोऽर्थात्स्वयमेव स आत्माश्रयः। स्वनिष्ठप्रयोज्यतानिरूपितस्वनिष्ठप्रयोजकत्वमिति यावत्।

अन्योन्यस्याश्रयो ऽर्थादन्योन्यम्, सोऽन्योन्याश्रयः। स्वप्रयोजकनिष्ठप्रयोज्यतानिरूपितस्वनिष्ठप्रयोजकत्वमिति यावत्॥ चक्रवत्परावर्त्तनाल्लक्षणया चक्रकम्। स्वप्रयोजकप्रयोजकनिष्ठप्रयोज्यतानिरूपितस्वनिष्ठप्रयोजकत्वमिति यावत्। अवस्थाऽवधिर्मूलानेपक्षमूलमुत्तरानपेक्षं कार्यं च, नावस्थाऽनवस्था। उपपाद्योपपादकानां परंपरापेक्षिततेति यावत्। इत्थं च कतिचिद्बीजाङ्कुराणां व्यक्तिभेदेन परस्परकार्यकारणभावस्य प्रत्यक्षसिद्धत्वे प्रत्यक्षमूलकानुमानकत्वम्। तथाहि विवादाध्यासितानि बीजानि बीजप्रयोज्याङ्कुरजन्यानि बीजत्वात् संमतबीजवदित्याहुः।

यथाहि पादपो मूलस्कन्दादिभिश्च संयुतः।
आदिबीजात्प्रभवति बीजान्यन्यानि वै ततः॥ इति-

विष्णुपुराणादत्रानवस्थैव नास्ति। तत्रानवस्थेति तु लोकदृष्ट्यभिप्रायम्।

योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः।
स्थाणुमन्ये तु संयन्ति यथाकर्म यथाश्रुतम्॥

इत्यादिश्रुतीनां च सामान्यतः कर्मणां फलजनकत्वे प्रमाणान्तरेण सिद्धे दुःखहेतुविशेषफलबोधनेन वैराग्ये तात्पर्यमित्यन्ये॥

परेतु स्वस्याव्यवहितस्वापेक्षणमात्माश्रयः। अन्योन्याश्रयादिव्यावृत्त्यर्थमव्यवहितेति। अन्योन्यस्याव्यवहितान्योन्यापेक्षित्वमन्योन्याश्रयः। चक्रकव्यावृत्त्यर्थमव्यवहितेति। अन्तरितस्य तदेव च द्वयं चक्रकम्। तद्द्वयव्यावृत्त्यर्थमन्तरितस्येति। अनवधिकोपपाद्योपपादकप्रवाहो ऽनवस्था। चक्रकव्यावृत्त्यर्थमनवधिकेतिविशेषणम्।

एते चोपपाद्यभेदेनाऽनिष्टप्रसञ्जकास्तर्कविशेषाः।

तत्र स्वस्य स्वापेक्षामारोप्यानिष्टप्रसञ्जी आत्माश्रयः। सचाय-

मुत्पत्तिस्थितिज्ञप्तिरूपद्वारभेदात्त्रिधा । तथाहि–'घटो यदि घटजन्यः स्यात्तर्हि घटभिन्नः स्यात्' । नचैतद्विपर्ययानुमाने घटत्वस्य हेतोरसाधारणतया विपर्ययापर्यवसितत्वमस्येति वाच्यम् । विशेषदर्शने ह्यसाधारणस्यादोषत्वात् । संशयस्य सत्प्रतिपक्षस्य वा दुष्टबीजस्यानुत्थापनादिति । स्थितौ 'यद्ययं घट एतद्घटवृत्तिः स्यात्तदा तथा प्रतीयेत' । ज्ञप्तौ तु 'घटज्ञप्तिर्यदि एतद्घटज्ञप्तिजन्या स्यादेतज्ज्ञप्तिभिन्ना स्यात्' । नचेष्टापत्तिः । स्वज्ञप्तेः स्वज्ञप्तिजन्यत्वनियमे त्वनवस्थानात् । स्वस्य स्वापेक्षापेक्षित्वं स्वप्रयोज्यप्रयोज्यत्वरूपमारोप्यानिष्टप्रसङ्गोऽन्योन्याश्रयः । अयमप्युत्पत्त्यादिरूपद्वारभेदात्त्रिधा । तथाहि–'घटो यदि घटप्रयोज्यजन्यः स्यात्तर्हि घटभिन्नः स्यात्' । दृष्टं हि पटरूपं तन्तुप्रयोज्यपटजन्यं तन्तुभिन्नमिति । स्थितौ तु 'यद्ययं घट एतद्घटप्रयोज्यवृत्तिः स्यात्तदा तथा प्रतीयेत', दृष्टं हि पटरूपं तन्तुप्रयोज्यपटवृत्ति तथा प्रतीतं चेति । ज्ञप्तौ तु 'घटज्ञप्तिर्यदि घटज्ञप्तिप्रयोज्यज्ञप्तिजन्या स्यात्तर्हि एतज्ज्ञप्तिभिन्ना स्यात्' । दृष्टा हि कृतिर्ज्ञानप्रयोज्येच्छाजन्या ज्ञानभिन्ना चेति । नचान्योन्याश्रयस्यात्माश्रयनियतत्वेनावश्यकत्वाद्, लाघवाच्चात्माश्रयदोष इति वाच्यम् । साक्षात्स्वापेक्षाऽभावात् । परम्परया वा तत्संभवे, आत्माश्रयनिर्वाहार्थं प्रथमोपस्थितस्य स्वतो दूषकत्वकल्पनात् । स्वापेक्षापेक्षापेक्षितत्वमारोप्यानिष्टप्रसङ्गश्चक्रकम् । अत्र त्रिकक्षत्वमविवक्षितम्, चतुःकक्षादेरपि चक्रकत्वात् । तथैव हि तान्त्रिकव्यवहारात् । इदमप्युत्पत्त्यादिद्वारभेदात्त्रिविधम् । तथाहि–'घटो यदि घटापेक्षापेक्षजन्यः स्यात्तर्हि घटभिन्नः स्यात्' । स्थितौ तु 'यद्ययं घट एतद्घटापेक्षापेक्षवृत्तिः स्यात्तर्हि तथा प्रतीयेत' । ज्ञप्तौ 'घटज्ञप्तिर्यदि घटज्ञप्त्यपेक्षापेक्षजन्या स्याद्, एतज्ज्ञप्तिभिन्ना स्यात्' । दृष्टान्तस्तु पूर्ववत् । पञ्चकक्षादिभेदे आपादकप्रयोजकीभूतरूप-

वदाधाद्यापादनमनवस्था । यथा 'ज्ञानं यदि समानकालीनसमानाधिकरणसाक्षात्कारविषयताव्याप्यजातिमत् स्यात्, तदाऽनुपदवेद्यं स्यात् सुखवत्' । एवञ्च तदप्यनुव्यवसीयेत तदप्यनुव्यवसीयेतेत्यनवस्था स्यात् । एषां चाभासत्वे प्रामाणिकत्वं बीजम् । तथाहि—'प्रमेयत्वं यदि प्रमेयत्ववृत्ति स्यात्तदा प्रमेयत्वाभिन्नं स्यादभिधेयत्ववद्' । अत्र प्रमेयत्ववृत्तित्वभिन्नत्वयोः प्रमेयत्वे व्यभिचारग्राहि 'नहि प्रमेयत्वं प्रमेयं किन्तु प्रमेयम्' इति प्रत्यक्षमेवात्माश्रये मानम् । 'बीजं यदि बीजापेक्षाङ्कुरजन्यं स्यात्तदा स्वभिन्नं स्याद्' इत्यत्र बीजापेक्षाङ्कुरजन्यत्वस्वभिन्नत्वयोर्बीजे व्यभिचारग्राहि 'बीजं न बीजभिन्नम्, किन्तु तद्बीजभिन्नम्' इति प्रत्यक्षादिरेवान्योन्याश्रये मानम् । एवं बीजादङ्कुरस्तस्मात्स्तंबस्तस्माद्बीजमित्यादिचक्रे ऽपि व्यक्तिभेदग्राहि प्रत्यक्षम् । तत्रत्यानवस्थायां 'बीजं यदि अनवधिपरम्परापेक्षजन्मादिमत्स्यात्तदा ऽजन्यं तत्स्याद्व्यतिरेके घटवत्' इत्यत्रैककार्यस्य प्रत्यक्षदृष्टकारणपरम्परानुमानमेव मानम् । नचैवमेते कुत्रापि दोषा न स्युरिति वाच्यम् । आभासत्वप्रयोजकप्रमाणाभावे एव दोषत्वसम्भवात् । तथाहि 'विवादाध्यासितं प्रयत्नजन्यं कार्यत्वाद्घटवद्' इत्यत्र 'कार्यत्वं भवतु, प्रयत्नजन्यत्वं मा भूत् किं बाधकम्' इति शङ्किते, कार्यत्वप्रयत्नजन्यत्वयोः परस्परपरिहारोपलम्भेन विरुद्धयोरेकत्र समुच्चये कीर्त्यमाने व्याघातो दृष्टो यथा घटप्रागभावयोर्घटतत्प्रध्वंसयोर्वा । अथ घटतत्प्रागभावयोः समुच्चयो नास्ति, प्रकृते तु स्यादेव, तन्न । प्रकृते विशेषोऽस्ति नो वा ? । नास्ति चेन्नियामकाभावात्कथं नियमसिद्धिः । अस्ति चेत्तत्र स एव किं प्रमाणमन्यो वा ? । स एव चेदात्माश्रयः । नन्वयं ग्राह्यग्राहकभावो नात्माश्रयो, नह्यत्र स्ववृत्तित्वमस्ति, तन्न । अव्यवधानेन स्वापेक्षितत्वस्यात्माश्रयलक्षणत्वात् । तच्च स्वापेक्षणमात्माधिकरणत्वेन, ग्राहकत्वेन, कर्तृत्वेन,

स्वामित्वेनोपनेयत्वेन वा भवति । तथा च ग्राह्यग्राहकादेरात्माश्रयान्तर्भावः । 'यद् यत्र प्रमाणं तत् ततो भिन्नं यथा चक्षूरूपात्' । इत्थं च स विशेषश्चेत्प्रमाणं तर्हि स्वान्यस्मिन् स्याद्। नो चेत्स्वस्मिन्स्याद्वाऽप्रमाणं वोभयथा ऽप्यनिस्तारः । नच यदि विशेषः स्वस्मिन् प्रमाणं स्यात्तर्हि आत्माश्रयः स्याद् अत्रान्वयव्याप्त्यभावादाभासत्वमिति वाच्यम् । पृथिवीत्यादाविव व्यतिरेकव्याप्तिसत्त्वात् । तथाहि-अथ विशेषान्तरं तर्हि तस्मिन् किं पूर्वः प्रमाणं तृतीयो वा ? । पूर्वश्चेदन्योन्याश्रयः स्यात् प्रथमे द्वितीयो, द्वितीये प्रथम इति । व्याप्तिस्तु 'यद् यत् प्रति प्रमाणम् तत् तत् प्रति प्रमेयं न भवति' यथा चक्षुर्घटं प्रति । प्रकृते ऽपि यदि द्वितीयो विशेषः प्रमाणं स्यात्तर्हि स्वप्रामाण्ये तस्येति व्यापकविरुद्धोपलब्धिः । नो चेदन्योन्याश्रयः स्यादप्रमाणत्वं वा । अथ द्वितीये तृतीयः प्रमाणं तर्हि तृतीये किं प्रथमः प्रमाणं प्रथमे तृतीय इति स्वीक्रियते, किंवा प्रथमे द्वितीयो द्वितीये तृतीयस्तृतीये प्रथम इति ? । आद्ये पूर्ववदन्योन्याश्रयः स्यात् । द्वितीये चक्रकम् । व्याप्तिस्तु 'यद् यत्र प्रमाणं तत् स्वप्रमाणप्रमितौ विषयीभूत्वा प्रमाणं, यथा श्रोत्रं शब्दे । प्रकृते तद्वैपरीत्याचक्रकं स्यादप्रमाणत्वं चेति । अथ तृतीये चतुर्थश्चतुर्थे पञ्चम इत्येवं न पूर्वोक्तदोषस्तर्ह्यनवस्था प्रसज्येत । व्याप्तिस्तु 'यत् प्रमाणं तद् उत्तरोत्तरप्रमाणापेक्षं न भवति यथा चक्षुः, प्रकृते तद्व्यापकविरूद्धोपलब्धेरवस्थायां कारणाभावादनवस्था । ननु बीजादङ्कुरः कल्प्यते ऽङ्कुराद्बीजान्तरमित्यनवस्थायामपि न दोषो भवति एवमत्र । तन्न । तत्रैककार्यस्य प्रत्यक्षदृष्टकारणपरंपरानुमाने ऽधोमुखीत्वान्न दोषमावहति । इह तु कल्पकस्यापि कल्पनीयत्वात्कल्पकपरंपराया-मूर्द्धमुखत्वान्मूलक्षयकरत्वे तद्दोषात् ।

यदाहुरुदयनाचार्याः

मूलक्षतिकरीमाहुरनवस्थां हि दूषणम् ।
वस्त्वानन्त्यादशक्तेश्च नानवस्था हि दूषणम् ॥ इति ।

अथ पञ्चमः स्वतःप्रमाणमतो न पूर्वोक्तदोषस्तर्हि द्वितीयोऽपि प्रथमे न प्रमाणमिति नियामकाभावः सामग्र्यास्तुल्यत्वात् । यत्र सामग्री तुल्या तत्र कार्यं तुल्यम्, यथा तुल्यस्वभावेषु तन्त्वादिषु पटादिकं तद्वत् । अथ किञ्चिद्विशेषं परिहाररूपं कल्पयसि तेन न्यायेनोभयत्रापि तुल्यत्वमिति । तदेवं प्रयत्नजन्यत्वं जगतः सिद्धमित्याहुः ।

एते तर्कभेदा एव यत आत्माश्रयो, ऽन्यान्याश्रयः, चक्रकम्, अनवस्था, व्याघातः, प्रतिबन्दीत्येतैरापाद्यैर्भिद्यमाना षट्तर्कीष्यते । षण्णां तर्काणां समाहारः षट्तर्कीत्यर्थ इति तर्कवादिनः । विरुद्धसमुच्चयो व्याघातः । चोद्यपरिहारसाम्यं प्रतिबन्दी । तर्कसामान्यलक्षणं तूक्तमक्षपादैः–"अविज्ञाततत्त्वे ऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः" इति । ( न्या० सू० अ० १ आ० १ सू० ४० ) तर्क इति लक्ष्यनिर्देशः, कारणोपपत्तित ऊह इति लक्षणम् । अविज्ञाततत्त्वे ऽर्थे तत्त्वज्ञानार्थमिति प्रयोजनकथनम् । कारणं व्याप्यं तस्योपपत्तिरारोपस्तस्माच्च ऊह आरोपः, अर्थाद्व्यापकस्य । तथाच व्याप्यस्याहार्यारोपाद्यो व्यापकस्याहार्यारोपः स तर्क इति । 'निर्वह्निः स्याद्द्रव्यं स्याद्'इत्यादिवारणाय व्याप्यस्येति । तद्व्याप्यारोपाधीनस्तदारोप इत्यर्थलाभाय व्यापकस्येति । आरोपग्रहणं तु तर्कस्य प्रमाणत्वनिराकरणाय । अर्थग्रहणं तु विज्ञातृनिराकरणार्थम् । अविज्ञाततत्त्वग्रहणं तु तर्कप्रवृत्तिं प्रति विषयतया संशयस्योपयोगिता सूचनाय । अन्यथा तर्केण द्वयोः पक्षयोरेकतरनिषेधेनैकतरस्य प्रमाणविषयतया नियतजिज्ञास्यत्वं न स्यात्, एकतरस्य जिज्ञासानिवृत्तिर्वा ॥ नच तर्कस्यापि संशयनिर्णयान्यतरात्मकत्वात्ततः पृथक्करणम-

नुचितामिति वाच्यम् । कारणोपपत्तिविशेषदर्शनाभावसामग्रीकृतत्वेन तद्विलक्षणत्वात् । नहि संशये कारणोपपत्तिरस्ति, विशेषदर्शनात्प्रमाणेन निश्चयो भवति, नचास्मिन् विशेषदर्शनमस्तीति ॥ नच तर्को ऽनुमाने हेतुः, 'तर्को,न्यायो,ऽन्वीक्षा'इत्यनुमानमाख्यायत इति अनुमानपर्यायत्वादिति वाच्यम् । आपाद्यव्यतिरेकनिश्चयरूपबाधघटितसामग्रीकत्वेन तर्कस्यानुमानातिरिक्तत्वे ऽवगते पर्यायत्वबोधकवाक्यस्याप्रमाणत्वेन तत्साधकत्वाभावात् । उक्ततर्के पक्षविशेष्यकापाद्याभावनिश्चयरूपबाधनिश्चयसहकृतापाद्यव्याप्यापादकवत्ताज्ञानं कारणम्, तच्च पक्षधर्मतांशे आहार्यम्, अप्रामाण्यज्ञानास्कन्दितं वा । स च तर्क आपादकबुद्धौ प्रतिबन्धकः । प्रतिबन्ध्यप्रतिबन्धकभावश्च–तद्धर्मावच्छिन्नविशेष्यकतद्धर्मावच्छिन्नापादकापत्तित्वेन दोषविशेषाजन्यानाहार्यतद्धर्मावच्छिन्नविशेष्यकतद्धर्मावच्छिन्नविशिष्टबुद्धित्वेन ॥ 'रूपं यदि परिमाणवत्स्याद्द्रव्यं स्याद्' इत्यापत्तेः 'रूपं परिमाणवन्न वा' इत्यादिसंशयवत् 'गुणः परिमाणवन्न वा' इत्यादिसंशये ऽपि प्रतिबन्धकत्ववारणाय तद्धर्मावच्छिन्नविशेष्यकत्वद्वयम् । तादृशापत्तेः 'रूपं द्रव्यत्ववन्नवा'इत्यादिसंशयप्रतिबन्धकत्ववारणाय तद्धर्मावच्छिन्नापादकत्वमापत्तिविशेषणम् । तद्धर्मावच्छिन्नापादकापत्तित्वञ्च स्वसमानाधिकरणस्वाव्यवहितोत्तरत्वसम्बन्धेन तद्धर्मावच्छिन्नवत्तापरामर्शविशिष्टत्वम् । नचापाद्यभेदेन परामर्शभेदादेकस्यैव निर्वह्नित्वरूपापादकस्य विशिष्टबुद्धौ निर्धूमत्वनिरालोकत्वाद्यापाद्यभेदेनानन्तप्रतिबन्ध्यप्रतिबन्धकभावापत्तिरिति वाच्यम् । इष्टत्वात् । तथाच पर्वतत्वावच्छिन्नविशेष्यकनिर्वह्नित्वविशिष्टबुद्धित्वेन प्रतिबध्यता पर्वतत्वावच्छिन्नविशेष्यकनिर्धूमत्वव्याप्यनिर्वह्नित्वत्वावच्छिन्नवत्तानिश्चयविशिष्टनिर्धूमत्वविधेयकापत्तित्व–पर्वतत्वावच्छिन्नविशेष्यकनिरालोकत्वव्याप्यनिर्वह्नित्वत्वावच्छिन्नवत्ता-

निश्चयविशिष्टनिरालोकत्वविधेयकापत्तित्वादिना प्रतिबन्धकतेति फलितम् । 'निर्धूमत्वव्याप्यनिर्वह्नित्ववान् गुणत्वव्याप्यरूपत्ववांश्च पर्वतः', इतिसमूहालम्बनपरामर्शजन्यस्य निर्धूमत्वबाधविरहवशात्पर्वतो रूपत्ववान्स्यात्, गुणत्वमात्रविधेयकस्यापि तर्कस्य तादृशनिश्चयविशिष्टतया निर्धूमासत्त्वविशिष्टबुद्धिप्रतिबन्धकत्ववारणाय विशेषतो निर्धूमत्वादिविधेयकत्वमापत्तिविशेषणम् । आपाद्यभेदेनैकस्यैवापादकस्य विशिष्टबुद्धौ प्रतिबन्धकत्वस्य स्वीकारात् इति ।

यत्तु 'तर्क आत्माश्रयान्योन्याश्रयचक्रकानवस्थाप्रमाणबाधितार्थप्रसङ्गभेदेन पञ्चविध' इतिनिबन्धकृदुदयनाचार्याः । तन्न ॥ आपाद्यभेदेन भेदे आपाद्यानन्त्येन तर्कस्यानन्त्यात् । तर्के आपाद्यस्य सर्वत्र बाध्यत्वे नियमेनात्माश्रयादिचतुष्टयस्यापि चरमेण ग्रहणसम्भवाच्च ।

यत्तु अनाहार्यसन्देहस्य तर्ककारणीभूतापाद्यव्याप्यापादकवत्ताज्ञानेनैव निरासादाहार्यसन्देह एव तर्केण निवर्त्तत इति भवानन्दभट्टाचार्यः । तन्न ॥ प्रमाणेन फले जननीये जनिते च तादृशशङ्कानिवृत्तेरनुपयोगित्वेन तर्कस्य प्रमाणानुग्राहकतानुपपत्तेः । तत्त्वनिर्णयार्थमितिसूत्रविरोधाच्च । नच पदार्थतत्त्वविचारे सूत्रविरोधप्रमाणानुग्राहकतानुपपत्ती न दोषायेति वाच्यम् ॥ अप्रयोजकत्वशङ्काकलङ्कितानुमानेन श्रुतिबाधसम्भावनाविरहे ऽनायासेन खण्डनकृतां विजयापत्तेः ।

नचैवं तर्ककारणीभूतज्ञानेनैवानाहार्यशङ्कानिराससम्भवात्तव मते ऽपि तर्कवैयर्थ्यमेवेति वाच्यम् । तेन निरासासम्भवात् । तथाहि 'तर्केण पक्षधर्मतांशे आहार्यापाद्यव्याप्यापादकवत्तानिश्चयो हेतुः' इति मते, निर्वह्नित्वव्यापकनिर्धूमत्वाभावव्यापकनिर्वह्नित्वाभावप्रतियोगिनिर्वह्नित्ववानित्याकारस्य व्यतिरेकिव्याप्तिविशिष्ट-

त्वानिर्णयस्य विशेषदर्शनविधया आपादकसंशयनिवर्त्तकत्वं वाच्यम्, तच्च न सम्भवति, तस्याहार्यज्ञानस्याप्रतिबन्धकत्वात्। समानधर्मिकत्वाभावेनाविरोधित्वाच्च। अन्यथा 'वह्निव्याप्यधूमवत्त्वज्ञानसमालोकवान्पर्वतः' इत्यादिज्ञानस्य 'पर्वतो वह्निमान्न वा' इत्यादिसंशयनिवर्त्तकत्वापत्तेः। एतेन तद्वत्ताबुद्धिं प्रति तदभाववत्ताज्ञानविशिष्टहेतुमत्ताज्ञानत्वेनैव प्रतिबन्धकत्वाभ्युपगमेन तादृशज्ञानस्य प्रतिबन्धकत्वं सम्भवतीति परास्तम्, मानाभावाच्च।

'व्याप्त्यंशे निश्चयात्मकम्, आपादकांशे संशयनिश्चयसाधारणम् आपाद्यव्याप्यापादकवत्ताज्ञानं तर्के हेतुः' इति मते च संशयस्य संशयाप्रतिबन्धकतया तेनापादकसन्देहप्रतिबन्धासम्भवात्॥

नन्वेवमपि तर्कहेतुरापाद्यव्यतिरेकनिश्चय एवापादकशङ्कां निवर्त्तयिष्यति आपादकस्यापाद्यव्याप्यतया आपाद्यव्यतिरेकस्यापादकव्यतिरेकव्याप्यतया च तन्निश्चयस्य विशेषदर्शनत्वात्। नचापाद्यव्यतिरेकनिर्णयस्य तत्र हेतुत्वे मानाभाव इति वाच्यम्। पक्षविशेष्यकापाद्यशङ्कारूपेष्टापत्तिशङ्कानिवर्त्तकत्वेन तस्य तत्र हेतुत्वावश्यकत्वात्। इष्टापत्तिशङ्कानिवृत्तिर्माऽस्त्विति तु न शङ्कनीयम्। तर्कस्य विपर्यये ऽपर्यवसानापत्त्या वैयर्थ्यापत्तेः। नचापाद्यव्यतिरेकस्यापादकव्यतिरेकव्याप्यत्वे ऽपि तादृशव्याप्तिप्रतिसन्धानानियमेन तर्कस्योपयोग इति वाच्यम्। आपाद्ये आपादकव्यापकताज्ञानस्य तर्ककारणतया कारणज्ञाननियमेनापाद्याभावे आपादकाभावव्याप्तिज्ञानाभावस्याकिञ्चित्करत्वात्, पुरुषत्वाभावे कराद्यभावव्याप्त्यग्रहेऽपि करादिव्यापकत्वेन पुरुषत्वादिग्रहसहितपुरुषत्वाद्यभावग्रहस्य करादिसंशयनिवर्त्तकत्वादिति चेन्न। तर्ककारणीभूतज्ञानांशे ऽपि तर्कसत्त्वे शङ्कानुपपत्त्यनुरोधेन तर्कस्योपयोगित्वात्। नच पूर्वजातस्यापाद्यव्यतिरेकज्ञानस्य नाशेऽपि तन्मूलकान्मानसतादृशज्ञानादापादकव्यापकताज्ञानाच्चोत्तरकालमपि शङ्कानुत्पाद-

निर्वाहात्तर्कस्याकिञ्चित्करतेति वाच्यम्। कुतश्चित्प्रतिबन्धकज्ञानानुत्पादेऽपि तर्केण शङ्काप्रतिबन्धात्।

केचित्तु-अयोग्योपाधिशङ्कया क्वापि व्याप्त्यनिश्चयात्कथमनुमानेनेश्वरसिद्धिरित्युक्तवन्तश्चार्वाकं प्रत्याहोदयनाचार्यः-

शङ्का चेदनुमाऽस्त्येव नचेच्छङ्का ततस्तराम्।
व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः॥ इति।

अस्यायमाशयः-किं व्यभिचारशङ्का दृश्यमाने धूमे, कालान्तरीये, देशान्तरीये वा?। नाद्यः। सहैवोपलब्धेः। न द्वितीयः। अनुमानं विनोभयभानासम्भवेन शङ्काऽनुपपत्त्याऽनुमानस्वीकारावश्यकत्वात्। नचेच्छङ्का तर्हि तरां सुतरां व्याप्तिग्रहादनुमानसिद्धेः। एवं निरस्तश्चार्वाकः शिष्यतां प्राप्तः पृच्छति-'भगवन् धूमे वह्निसामानाधिकरण्यात्मकधर्मस्य वाह्निव्यभिचार्यव्यभिचारिसाधारणस्य दर्शनाच्छङ्का जायत एव, सा कुतो न स्यात्। यदि च 'वह्निप्रवृत्तिः कथं वन्ह्यभावप्रवृत्तिर्भवेद्'इत्युत्तरं ददासि, तदा नूनं तयोर्विरोधो ऽवधृतोऽस्ति स एव नियमघटितः, कथमवधार्यः, इत्युक्तवन्तं प्रत्याह-तर्कः शङ्कावधिर्मतः। शङ्कानिवर्त्तक इत्यर्थः। तथा च 'धूमो यदि वह्निव्यभिचारी स्यात्, वह्निजन्यो न स्याद्'इति तर्केण व्यभिचारशङ्का वारणीया। अथ कदाचिद् वह्निरेव भविष्यतीत्यादिशङ्का तर्कविरोधिनी स्यात्तर्कान्तरात्तन्निवृत्तौ चानवस्थेत्युक्तवन्तं प्रत्याह-व्याघातेत्यादि। व्याघातो धूमाद्यर्थं वह्न्यादौ नियतप्रवृत्त्यादिः, सोऽवधिः पर्यवसानं निवर्त्तको यस्याः सा। तथा च नानवस्थेत्यर्थ इति श्रुत्वाऽऽचार्यं शिरसा श्लाघयन्नपि मनःप्रत्ययमलभमानः स्वसहचारिणो ऽन्यानवलोकयन्छिरो धून्वानस्तूष्णीमभवत्, ततोऽपर आह-'तन्न चारु, कुतः कृष्यादिप्रवृत्तिवत्सम्भावनयैवोक्तप्रवृत्त्युपपत्त्या तस्याः क्वापि शङ्काप्रतिबन्धकत्वाकल्पनात्। अन्यत्रा-

पि कदाचित्प्रवृत्तिः स्यादिति तु न शङ्कनीयम् । तदज्ञानात् । त्वदीयव्रतप्रवृत्तयो व्याहन्येराश्निति वदन्नाचार्य्यः प्रष्टव्यः कुत इति, यदि व्रते परस्परविरोधादिति तर्हि नूनं तयोर्विरोधो ऽवधृतोऽस्ति स एव नियमघटितः, स कथमवधार्य्य इति त्वयैव दत्तोत्तरत्वात्, इति श्रुत्वाऽऽचार्यः सन्दिहानो बभूव इति ।

एतेनात एव—

व्याघातो यदि शङ्काऽस्ति नचेच्छङ्का ततस्तराम् ।
व्याघातावधिराशङ्का तर्कः शङ्कावधिः कुतः ॥

इति खण्डनं निरस्तम् । नहि व्याघातः शङ्काश्रितः, किन्तु स्व-क्रियैव शङ्का प्रतिबन्धिकेति मणिकृद्गङ्गेश्वराचार्योक्तं परास्तम् । क्रियाकारणीभूतनिश्चयव्याघातेत्यस्य परत्वेऽपि चरमदोषानुद्धारात्।

खण्डनव्याख्यायां दीधितिकृतस्तु–यच्च मणिकृता 'नहि व्याघातः शङ्काश्रितः किन्तु स्वक्रियैव शङ्काप्रतिबन्धिका'इति खण्डनमुद्धृतम्, तदसत् । प्रवृत्तेः शङ्काप्रतिबन्धकत्वस्य व्याप्यत्वकल्पनात् । क्रियाकारणीभूतनिश्चयस्य प्रमात्मकस्य क्वाप्यसिद्धेः । प्रमामात्रस्य खण्डितत्वात् । भ्रमात्तु न वस्तुसिद्धिः । किञ्च क्रियाऽपि सम्भावनाऽत एवोपपन्ना न निश्चयमपेक्षत इति किञ्चिदेतादित्याहुः ।

खण्डनं तु व्याघातो विरोधस्य यदि तदा तदाश्रयभूता शङ्का ऽस्त्येव शङ्कामन्तरेण तदाश्रयीभूतस्य व्याघातस्यैवासम्भवात् । नहि धर्मिणमन्तरेण धर्म्मस्संभवति । नचेद्व्याघातस्तदा ततः प्रतिबन्धाभावात् तरां सुतरां शङ्का । ततस्तरामिदं समस्तं बोध्यम् । व्याघातावधिः व्याघाताश्रयो यतः शङ्का, अतः शङ्काया अवधिः पर्यवसानं स्वपूर्वशङ्कानिवर्त्तकः स्वोत्तरशङ्कानुत्पत्तिप्रयोजकस्तर्कः कुतस्तर्कमूलव्याप्तावपि शङ्कातादवस्थ्यादित्येवं व्याख्येयम् । नचैवं 'स्थाणुर्वा पुरुषो वा'इति विम-

र्शनान्तरं करादिवृत्तिसंस्थानविशेषोपलम्भादपि शङ्कानिवृत्तिर्न स्यात् इति वाच्यम् । तृतीयक्षणे स्वत एव निवृत्तिसम्भवात् । नच तत्र विशेषदर्शनात् 'पुरुषो ऽयम्' इतिनिश्चयोत्तरमपि पुनः संशयापत्तिरिति वाच्यम् ॥ निश्चयोत्तरं करादिसंस्थाने सत्यपि यदि न पुरुषत्वं तदाऽपि नानिष्टं शिल्पिनैपुण्यविशेषादपि तदुपपत्तिरिति प्रतिसन्धाने सति इष्टापत्तेः । यदपि व्याप्यारोपाद् व्यापकारोपस्तर्क इति । तदपि न । आरोपितव्याप्यहेतुकासदर्थकानुमितावतिव्याप्तेः । नापि व्याप्यारोपाद्व्यापकप्रसञ्जनम् । प्रसञ्जनं हि तर्को वा आरोपमात्रं वा ? । नाद्यः । तस्यैव निरूप्यत्वात् । विशेषणवैयर्थ्याच्च । न द्वितीयः । दूषितत्वात् । नापि व्यापकाभाववत्तया ज्ञाते व्याप्यारोपाद्व्यापकारोपः । शङ्खत्वेन द्रव्यमवगम्य 'पीतो ऽयं शङ्खो न तु शुक्लः' इति प्रत्यक्षतो ऽवगच्छतः शङ्खत्वाच्छुक्ल इत्यनुमितावतिव्याप्तेः । व्यापकाभावावधारणे व्यापकारोपासम्भवाच्च । नचाहार्यो ऽयमबाधिते न सम्भवतीति वाच्यम् । आहार्यान्तरे ऽनुमित्याद्यात्मके ऽतिव्याप्तेः । प्रयोक्तुर्व्यापकारोपस्य परं प्रत्यनुपयुक्ततया प्रसङ्गानात्मकत्वापत्तेश्च । एतेन 'तर्कयामि'इति प्रतीतिसाक्षिको बहिरिन्द्रियादिनिरपेक्षमनोजन्यज्ञानावृत्तिमानसत्वव्याप्यो जातिविशेषस्तल्लक्षणमिति परास्तम् । तर्कस्यानिष्टानुपनायकत्वनिरासाय विषयवैलक्षण्यमवश्यं वाच्यम् । तत एव व्यवहारोपपत्तौ जातिभेदे प्रमाणाभावाच्च । अन्यथा घटज्ञानत्वादिकमपि जातिः स्यात् । 'यदि पर्वतो निर्वह्निः स्यात्तदा निर्धूमः स्याद्भूतलं घटवद्' इतिज्ञाने भूतलाद्यंशे तर्कत्वस्वीकारे तदनुव्यवसायापत्तिः । तदनङ्गीकारे आंशिकत्वापत्त्या तर्कत्वं न जातिरित्यपि केचित् ।

यत्तु—निबन्धोपायकृद्वर्द्धमानोपाध्यायाः अव्यवस्थिता-

भ्युपगम्यमानकोट्युपाधिनिष्ठसत्त्वप्रतिसन्धानं तर्कः । तदुपाधिकत्वं च तस्मिन्सत्यावश्यकत्वम् । तथाहि—यदि 'शब्दो नानित्यः स्यात्कार्यो न स्याद्' इत्यादौ यदिशब्देन समभिव्याहृतकोटेः अव्यवस्थिततत्वं परिगृहीततत्वं चोच्यते ।

तदाहुराचार्य्याः—अनियतकोट्युपनिपात नियतकोट्युपग्रहस्य यद्यर्थत्वं तदेत्यनेन समभिव्याहृतं प्रत्युपाधित्वमुच्यते । अव्यवस्थिततत्वं च तस्य हीनबलत्वार्थम्, अन्यथा ऽऽपादकस्य व्यवस्थिततत्वे हि तस्यापाद्यविरहेण तुल्यत्वे परस्परप्रतिबन्ध एव स्यान्न त्वापादकस्य भङ्ग इत्याहुः ।

तन्न । तर्कस्याप्रसङ्गात्मकत्वदोषानिवृत्तेः । 'अयं धूमो वाऽऽलोको वोऽऽभयथाऽपि वह्निव्याप्यः'इति ज्ञानजन्यानुमितावतिव्याप्तेश्च । नचाभ्युपगतव्याप्यं प्रति व्यापकप्रसञ्जनं तर्कः । तत्प्रसञ्जने तर्काभासे ऽतप्रसङ्गवारणायाभ्युपगतेति, अव्यापकप्रसञ्जन आभासे तद्वारणाय व्यापकेति इति, विवक्षिते न पूर्वोक्तदोष इति वाच्यम् ॥ 'यदि जलं सहकारिभिः संपत्स्यते तदा मे तृषं शमयिष्यति'इत्यादिसम्भावनानामतर्के 'व्याप्तिमद्स्तिचेद्व्यापकं स्यादेव'इतिनिश्चयरूपप्रसङ्गात्मके ऽव्याप्तेः ॥ येन गिरेग्निमत्त्वमिष्टं येन आत्मनः सुखादिस्वरूपत्वमिष्टं तं प्रति 'यदि अयं धूमवान्स्यात्तदाग्निमान् स्यात्', 'अयमात्मा यदि ब्रह्माभिन्नः स्यात् 'सत्यं ज्ञानम्'इत्यादिश्रुत्युक्तलक्षणः स्याद्'इत्यादीष्टापादने तर्काभासे ऽतिव्याप्तेश्च । नचानभ्युपगतव्यापकमभ्युपगतव्याप्यं च प्रति व्यापकप्रसञ्जनमिति वक्तव्यमिति वाच्यम् ॥ अव्याप्येनेन्धनवत्त्वादिना ऽनभ्युपगतपर्वताग्निमभ्युपगतधूमव्याप्यं प्रति इन्धनवत्त्वेन प्रसञ्जने ऽतिव्याप्तेः । नच व्याप्येनेत्यपि कार्य्यम् । तथाचानभ्युपगतव्यापकमभ्युपतव्याप्यं च प्रतिव्याप्येन व्यापकप्रसञ्जनं तर्क इत्युक्ते नोक्तदोष इति वाच्यम् ॥

विकल्पे क्रियमाणे स्वीकर्तुमशक्यत्वात् । किं परमार्थतो व्याप्यतया व्यापकतया च व्यवस्थितयोर्व्यापकाद्यंशमपहाय स्वरूपेण व्याप्यस्येष्टत्वरूपमभ्युपगतं व्यापकस्य चानिष्टत्वरूपमुत व्याप्यव्यापकाकारेणेष्टत्वानिष्टत्वे । तत्र नाद्यः । धूमाग्न्योर्विद्यमानमपि व्याप्यव्यापकभावमज्ञात्वा धूमेन वह्निप्रसञ्जनेऽन्यतरासिद्धव्याप्तिकतया तर्कमूलोभयसिद्धव्याप्त्यभावेन प्रशिथिलमूलत्वात्तर्काभासेऽतिव्याप्तेः । धूमस्य व्याप्यत्वमग्नेश्च व्यापकत्वं न च येनष्यते तं प्रति धूमेनाग्निप्रसञ्जने वह्निव्यापकत्वस्य तत्प्रत्ययभिज्ञ्या तर्काभासेगतत्वाच्च । न च तेषां सत्तर्कत्वमेवेति तु शङ्क्यम् । नैयायिकादिभिर्व्याप्यतयाऽनङ्गीकृतेन मीमांसकैर्नैयायिकादीन् प्रति व्याप्यतया प्रतिपादयितुमशक्येन वस्तुगत्या व्याप्येन श्रावणत्वादिना शब्दस्य शब्दत्वव्याप्तित्यत्वप्रसञ्जने उक्तलक्षणसत्त्वात्सत्तर्कत्वापत्त्या मीमांसकस्य विजयापत्तेः । न च शङ्खनादादीनामनित्यत्वेन श्रावणत्वात्कथमनैकान्तिकस्य वस्तुगत्या व्याप्यत्वमिति वाच्यम् । स्वन्यन्यत्वेन विशेषितत्वात् । नापि द्वितीयः । उभयेष्टेन व्यवहारादिना व्याप्येनोभयानिष्टस्य सत्तायां सत्ताश्रयत्वस्य व्यापकस्य प्रसञ्जने—

यश्चोभयोः समो दोषः परिहारोऽपि वा समः ।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥

इति न्यायेन प्रयोक्तुरपि प्रतिकूलतया तर्काभासेऽतिव्याप्तेः । नचाभ्युपगतव्याप्यमनभ्युपतव्यापकं प्रति स्वयं व्याप्यतयाऽनिष्टेन व्यापकत्वप्रसञ्जनं तर्क इत्युक्ते नायं दोष इति वाच्यम् । अदृष्टादिनोभयेष्टेन प्रमेयत्वव्याप्येन मीमांसकं प्रत्यनिष्टस्य तत्प्रत्यक्षत्वस्य व्यापकस्य प्रसञ्जने तर्के स्वयमनिष्टेनेति विशेषणाभावाद्व्याप्तेः । अधिकन्तु खण्डनादावनुसन्धेयमित्याहुः ।

अपरे तु आत्माश्रयादेस्तर्कस्य मूलव्याप्तौ प्रमाणोपगमे व्या-

प्तिप्रमाणेनैव व्याप्यव्यापकयोर्ग्रहणादविरोधेन निर्दोषत्वम्प्रसज्येत। नचेत्तर्हि प्रशिथिलमूलतयाऽऽभासत्वमित्युभयथा पाशबन्धोऽनिवार्यः। नचाश्रयत्वमाश्रयित्वञ्च भेदे प्रमितं, तद् यदि विवादाध्यासितत्वेनोपेयते तदैकैकेन भेदापादने दोषत्वमस्त्येवेति वाच्यम्। घटादौ प्रतियोगिभेदेन रूपाद्याश्रयत्वमृदाश्रयित्वोभयोर्दर्शनेन व्यभिचारित्वात्। न च यदैतदेवैतदाश्रयादि स्यात्तदैतन्न स्यादेतदारम्भकद्रव्यतदाश्रितरूपादिवदित्येकप्रतियोगिकयोराश्रयत्वाश्रयित्वयोर्भेदाव्यभिचारित्वमस्त्येवेति वाच्यम्। 'एतद्घटः' इत्येतेन प्रमिते धर्मिणि 'एतद्घटो न स्याद्'इत्याद्यापाद्यमानस्य भेदस्य व्याहतत्वेन प्रमाणबाध्यस्यापादयितुमशक्यत्वात्। न च सर्वत्र तर्के आपाद्यस्य प्रमाणबाध्यताऽनुकूलैव प्रमाणबाध्यस्यैवापाद्यत्वादिति वाच्यम्। पक्षे आपाद्यापादकयोः सामानाधिकरण्याङ्गीकारे विरोधेनापाद्यासिद्धेर्विरोधस्य दत्तजलाञ्जलितापत्तेश्च। यत्र क्वापि विद्यमानेनापादकेन यत्र क्वाप्यापाद्यापादने एकत्वाभिमतानां सर्वेषामनेकत्वप्रसङ्गात्। 'यदीश्वरः कर्त्ता स्यात्तर्हि रागादिमान्स्याद्'इत्यादेरपि धर्म्माधर्मोपाधिकस्यापाद्यस्य रागादिमत्त्वस्य प्रमाणबाध्यत्वेऽपि सत्तर्कत्वापत्तेः। एवं विपर्ययापर्यवसानमपि स्यात्। एवं हि विपर्ययो वक्तव्यः—यस्मादेतद्घट एतद्घटो भवति तस्मान्नैतदाश्रय इति। तन्न सम्भवति। एतदित्युद्दिष्टे धर्मिण्येतद्विधानासम्भवात्। उद्देश्यविधेययोः प्रकारभेदस्याभावात्। न च स्वपक्षसाधनार्थं प्रयुक्ते प्रसङ्गे विपर्ययपर्यवसानमपेक्षितं, परपक्षबाधाय प्रयुक्ते आत्माश्रये तु न विपर्ययपर्यवसानापेक्षेति युक्तम्। अस्य प्रसङ्गस्याऽऽभासतावारणाय प्रसङ्गमूलव्याप्तिरवश्यमभ्युपेया, तया च प्रसञ्जितस्यानेकत्वादेर्निषेधे तद्व्यतिरेकस्यैकत्वादेरप्रामाणिकत्वे तस्या

अपि प्राप्तायाः प्रामाणिकत्वानिरासायाऽऽपाद्यनिषेधे तद्व्यतिरेकप्रामाणिकत्वस्यावश्यं मन्तव्यत्वापत्तेः । न च 'एतदेतन्न स्याद्' इति न प्रसञ्जयामो येन व्याघातः स्यात्, किन्तु 'यद्येतदेतदाश्रयादि स्यात्तर्ह्यन्यत् स्याद्'इति युक्तम् । कस्मादन्यदित्याकाङ्क्षायामेतस्मादिति स्वरूपभेदमादायैव प्रतीतिपर्यवसायितयैव प्रसङ्गे वाच्ये तत्र च एतद्भवति न भवतीति व्याघाततादवस्थ्यात् । 'एतदन्यत्स्याद्'इतिप्रसङ्गस्य विपर्ययो भवति, एतदन्यन्न भवतीति विधाने एतदनन्योऽयमित्येवंरूपो वक्तव्यः । स च न सम्भवति । एतदनन्यत्वस्यैतदन्यान्यत्वस्यैतत्त्वरूपतया स्ववृत्तित्वविरोधात् । न च एतद्विशेषितान्यविशेषितान्यत्वमात्रं न विधीयते येन विशेषणविशेषणताप्रविष्टैतदात्मनो विशेषणत्वेन निवेशे उक्तदोषः स्यात्, किन्तु अन्यत्वावधेरेतदात्मन उपलक्षणत्वेऽन्यविशेषितान्यत्वमात्रम् । तथा चैकस्यैवोद्देश्यत्वविधेयत्वाभावान्न पूर्वोक्तदोष इति वाच्यम् । अन्यस्य केवलान्वयितया तदन्यत्वस्य व्याहतत्वात् । एतेन प्रसङ्गे एतत्पदस्योपलक्षणत्वेन पूर्वोक्तदोष इति परास्तम् । भिन्नत्वेन प्रतियोगिज्ञानाद् धर्मिणो भेदस्य ज्ञानोपगमे प्रतियोग्यन्यत्वसिद्धौ धर्मिभेदसिद्धिस्तत्सिद्धौ प्रतियोग्यन्यत्वसिद्धिरित्यन्योऽन्याश्रयः कथङ्कारमुपन्यसनीयः । न तावद्यद्येतद् घटादिरूपमेतद्बोधाधीनबोधाधीनबोधं स्यात्तदा न बुध्येतेति । तथा सति एतद्बोधाधीनबोधं यत्तद्बोधाधीनबोधस्य दृष्टत्वे तत्रैवाऽऽपाद्याभावेन व्यभिचारात्, अदृष्टत्वे धर्मिण एवासिद्ध्याऽऽपाद्यापादकयोर्व्याप्त्यसिद्धेः । न च यद्वस्तु तत्परस्पराधीनबोधं न भवति यथा घटद्वयमिति सामान्येन व्याप्त्यङ्गीकारे प्रतियोगिज्ञाने स्वाधीनभेदज्ञानाधीनत्वस्यादृष्टत्वात् न व्यभिचारो न वा दृष्टचरत्वं दूषणम् । यदि वस्तु स्यात्तर्हि परस्पराधीनबोधं

न स्यादित्येवं प्रसङ्गः सम्भवतीति वाच्यम् । परस्पराधीनबोधासिद्ध्या ऽऽपाद्याप्रसिद्धेः । कयाचन कल्पनया ऽप्रसिद्धत्ववारणेऽपि वस्तुत्वं भवतु,परस्परायत्तबोधं चास्तु, किं बाधकमित्याशङ्काखण्डकदण्डस्य दुर्लभतया व्याप्त्यसिद्ध्या मूलशैथिल्यापत्तेः । एवमात्माश्रयान्योऽन्याश्रयावेव मध्ये परमन्तर्भाव्य चक्रकरूपेण परिणमते अतश्चक्रकं तद्दोषं नातिक्रामति । एवं व्याघातोऽपि कथमुपन्यसनीयः। न तावद् अयं सत् स्यात्तदा सन्न स्यादिति । तथा सति असन्न स्यादित्यस्यापि सत् स्यादित्यर्थे एव पर्यवसाने ऽभेदेन व्याप्यव्यापकभावस्यैवाभावेन मूलशैथिल्यात् । प्रतिबन्द्यपि दूषणं न भवति। तथाहि—परोद्भावितं दूषणमपहृत्य प्रतिबन्द्या प्रत्यवतिष्ठमानस्य को ऽभिप्रायः ?। किमुद्भावितं दूषणमेव न भवति दोषहीनेऽपि त्वत्पक्षे गतत्वात्, उत दूषणमपि सन्नोद्भाव्यम्—

यत्रोभयोस्समो दोषः परिहारोऽपि वा समः ।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥ १ ॥

इति न्यायेन वादिप्रतिवादिनोः समानयोगक्षेमत्वादिति । नाद्यः । दोषनिरासाय यत्नं विहाय प्रतिबन्दीग्रहणानुपपत्तेः । न द्वितीयः। तेनानुद्भावनेऽपि दोषसत्त्वेन सभापतेर्वस्तुनिर्णयानुपपत्तेः, स्वविजयानुपपत्तेश्च । अधिकन्तु खण्डनादावनुसन्धेयम् ।

विना येन प्रमाणानि प्रामाण्यं न मनागपि ।
यान्ति यान्ति च येनातस्तर्कस्तर्क्यः स तार्किकैः ॥ १ ॥

इति । प्रमाणानुग्राहकस्सत्तर्कः । स प्रमापकोऽप्रमापको वा । नान्त्यः । वैयर्थ्यापत्तेः । प्रमापकत्वे किं प्रमाणोत्पाद्यां प्रमां करोत्यन्यां वा । अन्यां चेत्कथं प्रमाणोपकरणत्वम् । न हि घटज्ञानजनकं पटप्रमाणोपकारीति सम्भवति । प्रमाणोत्पाद्यप्रमोत्पादकत्वे निर्द्दिष्टव्यार्था ये तत्त्वेन तुल्यत्वे सति एकेन प्रमोत्पादनिर्वाहेऽपरस्य वैयर्थ्यापत्तिः । नच तर्कव्याप्तेराभासत्वाङ्गी-

कारान्न प्रमाणतुल्यत्वमिति वाच्यम् । 'यदीश्वरः कर्ता न स्यात्तर्हि घटः स्याद्'इत्यादितर्कस्यानुमानोपकारित्वापत्तेः । तुल्यस्योपकारित्वे च प्रमाणस्यापि तर्कोपकारित्वं स्यात् । इष्टापत्तौ चान्योऽन्याश्रयादि स्यात् । प्रमाणोपकारिणः पूर्ववृत्तित्वनियमेन समकालत्वनियमेन वाऽङ्कुरादिकार्यं सकर्तृकं नवेति सन्देहे प्रमाणप्रवृत्तेः पूर्वं यदीदं सकर्तृकं न स्यात्तर्हि कार्यं न स्यादाकाशवदिति प्रयोक्तुमशक्यतया प्रमाणाङ्गत्वासम्भवाच्च । तर्कस्य प्रमाणोपकरणत्वेऽदृष्टादिकं कस्यचित्प्रत्यक्षं प्रमेयत्वात्करतलवदित्यादेः केवलान्वयिनो विपक्षाभावेनानुकूलतर्कासम्भवे आभासत्वापत्तेश्चेति । यत्तु प्रमाणं प्रमेये वर्त्तमानं स्वसामग्रीसहितं प्रवर्त्तते, तथा च प्रतिबन्धकाभावस्यान्वयव्यतिरेकानुविधायितया सामग्र्यन्तःपाते स्थिते साधके प्रमाणे प्रवृत्ते बाधकप्रतिबन्धनिवृत्तिस्तर्केण क्रियते इति तन्न । साध्यसन्देहे प्रमाणप्रवृत्तेरर्वाक् तर्कप्रवृत्त्यसम्भवस्यानुपदोक्ततया बाधकप्रतिबन्धनिवर्त्तकत्वासम्भवात् । प्रतिबन्धकाभावस्य स्वज्ञानं प्रति विषयत्वेन कारणत्वेऽपि प्रतिबन्धकाभावत्वेन कारणत्वे मानाभावेन सामग्र्यन्तःपातित्वासम्भवाच्च । 'प्रतिबन्धकाभावत्वेन कारणत्वे प्रतिबन्धोऽपि सामग्री'इत्यभियुक्तोक्त्या सामान्यतः सामग्र्यभावस्यैव प्रतिबन्धकतया मण्याद्यभावस्य प्रतिबन्धकाभावत्वे सिद्धे मण्यादेः सामग्र्यभावत्वेन प्रतिबन्धकत्वसिद्धिः, तस्य प्रतिबन्धकत्वे सिद्धे मण्याद्यभावस्य प्रतिबन्धकाभावत्वेन कारणत्वसिद्धिरित्यन्योऽन्याश्रयः स्यात् । न च मण्याद्यभावस्योक्तरीत्या प्रतिबन्धकाभावत्वेनाकारणत्वेऽपि मण्याद्यभावत्वेन कारणत्वे मण्याद्यभावे सति दाहस्तदभावे तदभाव इत्यनन्यथासिद्धान्वयव्यतिरेकसहकृतप्रत्यक्षमेव मानमिति वाच्यम् । मण्याद्यभावान्वयव्यतिरेकयोर्दाहादिसामग्रीकालीनदाहानुत्पादस्याऽग्रिमसमयसम्बन्धा-

भावविषयतयाऽन्यथासिद्धत्वेन गन्धे रूपप्रागभावस्येव दाहादिकार्ये तस्य कारणत्वे प्रत्यक्षाद्यभावात् । न च मण्यादेः कार्यानुत्पादप्रयोजकतया तद्व्यतिरेकस्य कार्यानुत्पादव्यतिरेकरूपकार्ये प्रयोजकत्वानियमेनोक्तान्वयव्यतिरेकयोर्नान्यथासिद्धत्वमिति वाच्यम् । अनुत्पादस्य प्रागभावरूपस्यानादित्वेन मण्यादेस्तत्प्रयोजकत्वासम्भवे कार्यानुत्पादस्याग्रिमसमयसम्बन्धस्यैव प्रयोजकत्वात् । ननु मण्यादेः कार्यानुत्पादाग्रिमसमयसम्बन्धप्रयोजकत्वमपि न सम्भवति कार्यानुत्पादस्याग्रिमसमयेन सम्बन्धानिरूपणात् । तथा हि–किं संयोग उत समवायः । आहो स्वरूपम् । नाद्यः, उभयोरद्रव्यत्वात् । न द्वितीयः, अवयवावयवित्वाद्यभावात् । तृतीयेऽपि किमेकैकस्वरूपं सम्बन्ध उतोभयस्वरूपम्, उभयथाऽपि तयोरनादित्वेन तन्निमित्तत्वासम्भवादिति चेन्न, अखण्डकालस्यानादित्वे ऽपि अग्रिमसमयस्यौपाधिकत्वेन सादितया तत्प्रयोजकत्वोपपत्तेः । न च कार्यानुत्पादस्याग्रिमसमयसम्बन्धव्यतिरेकः कार्यमेवेति वाच्यम् । कार्यस्य स्वप्रागभावरूपानुत्पादमात्रव्यतिरेकत्वात् । तथा कार्यं स्वानुत्पादस्याग्रिमसमयसम्बन्धव्यतिरेकसमयमपि ततोऽन्यदेवेति न तद्गोचरावन्वयव्यतिरेकौ न वा मण्याद्यभावोऽनन्यथासिद्ध इति भावः । न चान्वयव्यतिरेकयोरग्रिमसमयसम्बन्धाभावविषयत्वं किमर्थं कल्प्यते कार्यविषयत्वमेव किं न स्याद्विनिगमकाभावादिति वाच्यम् । दाहादिकार्यस्य क्लृप्तवन्ह्यादिकारणादेवोत्पत्तेर्मण्याद्यभावस्य कारणत्वं न कल्प्यते इति लाघवस्यैव विनिगमकत्वात् । न च वन्ह्यादेरपि न दाहकारणत्वं क्लृप्तं तदन्वयव्यतिरेकयोर्दाहानुत्पादाग्रिमसमयसम्बन्धाभावविषयत्वेनान्यथासिद्धत्वादिति वाच्यम् । दाहादिकार्यस्य स्वानुत्पादाग्रिमसमयसम्बन्धाभावापेक्षया प्रथमोपस्थितत्वात् । अभावापे-

क्षया भावस्य लघुत्वात् वन्ह्याद्युत्कर्षाद्दाहाद्युत्कर्षदर्शनाच्च। अन्यथोत्कर्षादेराकस्मिकत्वापत्तेः। एतेन दण्डादेरप्येवं सति घटकारणता न स्यात्, तत्रापि तदन्वयव्यतिरेकयोः घटकार्यानुत्पादाग्रिमसमयसम्बन्धाभावविषयतया ऽन्यथासिद्धिसम्भवादिति परास्तम्। प्रथमोपस्थित्यादिहेतुभिर्दण्डघटयोरेव प्रथमसम्बन्धकल्पनात्। न च पश्चाद्दण्डादिव्यतिरेकस्य कार्यव्यतिरेकाग्रिमसमयसम्बन्धप्रयोजकत्वकल्पनवद्दण्डादेरपि घटादिव्यतिरेकाग्रिमसमयसम्बन्धाभावप्रयोजकत्वावश्यत्वे पूर्वकल्पितं हेतुत्वं त्यज्यतामिति वाच्यम्। असति बाधके त्यागायोगात्। उपजीव्यविरोधाच्च। नच मण्याद्यभावस्य दाहाद्यकारणत्वे मण्यादिकालेऽपि दाहादिः स्यात्, तदानीमपि दाहसामग्रीसत्त्वादिति वाच्यम्। कार्यानुत्पादस्याग्रिमसमयसंबन्धस्यैव बलीयस्या मण्यादिघटितसामग्र्या प्रथमसम्पादनेन तदानीं दाहाद्यापत्त्यसम्भवात्। न च यस्य कार्यानुत्पादनिमित्तत्वं तदभावस्य तत्कार्यहेतुत्वमिति नियम इति वाच्यम्। प्रायश्चित्तस्य दुःखानुत्पादाग्रिमसमयसम्बन्धप्रयोजकत्वे ऽपि तदभावस्य दुःखाहेतुत्वेन व्यभिचारात्। नच प्रायश्चित्ताभावस्य दुःखाहेतुत्वमसिद्धमिति वाच्यम्। मण्याद्यभावान्वयव्यतिरेकवत्तदन्वयव्यतिरेकयोरन्यथासिद्ध्या तस्य कारणत्वे मानाभावात्। न चाग्रिमसमयसम्बन्धाभावत्वस्य मण्याद्यभावजन्यत्वावच्छेदकत्वे दाहत्वाद्यपेक्षया गौरवमिति वाच्यम्। कार्यानुत्पादस्य मण्यादिनिमित्तकत्वासम्भवेन मण्याद्यन्वयव्यतिरेकयोः कार्यानुत्पादाग्रिमसमयसंबन्धतदभावविषयत्वेनाग्रिमसमयसम्बन्धाभावस्यैव प्रथमोपस्थितत्वाद् अन्वयव्यतिरेकयोस्समानविषयत्वनियमेन दाहादिकार्यवादिनोऽपि तस्यैव तत्प्रयोज्यत्वस्यावश्यवक्तव्यत्वाद् अवश्यक्लृप्तवन्ह्यादिना दाहादिकार्योपपत्त्या दाहत्वादेस्तत्कार्यतावच्छेदकत्वे मानाभावाच्च गौ-

रत्वस्याकिञ्चित्करत्वात् । अथ मण्याद्यभावो दाहादिकारणमिति वदन्प्रष्टव्यः किं केवलमण्याद्यभाव उत उत्तेजकाभावविशिष्ट इति । नाद्यः। उत्तेजकसमवधाने मण्यादिसत्त्वेऽपि दाहदर्शनात् । नान्त्यः । प्रतिबन्धकताशक्तिविघटकोत्तेजकत्वस्याभावकारणताग्रहाधीनप्रतिबन्धकताबोधाधीनत्वेन चक्रकापत्तेरिति । तत्र वन्ह्यभावे ऽतिव्याप्तिवारणाय सामग्रीकालीनेत्यनुत्पादविशेषणम् । नच वन्ह्याद्यभावः प्रतिबन्धकः, वन्ह्यभावात्, दाह्याभावाद्वा दाहानुत्पत्तौ 'इदानीं दाहः प्रतिबद्धः'इति वृद्धप्रसिद्ध्यभावात् । लाघवान्मणित्वादिकमेव दाहाभावे प्रयोजकतावच्छेदकं न मण्यभावाभावत्वं गौरवात् । अतो मण्याद्यभावव्यतिरेकस्यान्यथासिद्धतयाऽपि न मण्याद्यभावस्य दाहादिहेतुत्वम् । नच मणित्वादिकमेव मण्याद्यभावाभावत्वम् । मणित्वस्य निष्प्रतियोगिकत्वात् । 'मणिर्मण्यभावाभावः' इति भिन्नतया प्रतीतेश्च । नच प्रतिबन्धकाभावस्याकारणत्वे प्रतियोग्युपलम्भाभावोऽपि अभावधीहेतुर्न स्यात् तत्रापि प्रतिबन्धकवत्प्रतियोग्युपलम्भस्याभावज्ञानानुत्पादस्याग्रिमसमयसम्बन्धप्रयोजकत्वे तद्व्यतिरेकस्याभावज्ञानानुत्पादाग्रिमसमयसम्बन्धाभावनिमित्तत्वेऽन्यथासिद्धत्वात् । प्रतियोग्युपलम्भत्वापेक्षया प्रतियोग्युपलम्भाभावाभावत्वस्य गौरवेणाभावज्ञानानुत्पादप्रयोजकतावच्छेदकत्वासम्भवेन प्रतियोग्युपलम्भाभावव्यतिरेकस्यान्यथासिद्धत्वाच्चेति वाच्यम् । इष्टापत्तेः । एवं विहितनित्यनैमित्तिकाकरणमपि न प्रत्यवायहेतुः । न च यथेष्टाचरणप्रसङ्गः । विहितविरुद्धकरणस्य तत्कालीनकायिकमानसादेः प्रत्यवायहेतुतया यथेष्टाचरणासम्भवात् । तदुक्तं भट्टपादैः—

स्वकाले यदकुर्वंस्तु करोत्यन्यदचेतनः ।
प्रत्यवायोऽस्य तेनैव नाभावेन स जन्यत इति ॥

अस्यार्थः—स्वकाले विहितकाले । अन्यत् विहितविरुद्धम् ।

अचेतनः—कृत्याकृत्यविवेकशून्यः । प्रत्यवायः—दोषः—पापमिति यावत् । अस्य—विहितविरुद्धकर्तुः पुंसः । तेनैव-विहितविरुद्धकरणेनैव । अभावेन—विहिताकरणलक्षणेन । सः—प्रत्यवायो न जन्यत इति । अथ 'प्रतिबन्धकाभावो दाहादिकारणम्' इति वदन् प्रष्टव्यः—किं प्रतिबन्धकाभावत्वेन मणिमन्त्रौषधाद्यभावस्य कारणत्वम्, उत मण्याद्यभावसमुदायत्वेन ? नाद्यः । अन्योन्याश्रयस्योक्तत्वात् । द्वितीयेऽप्युत्तेजकस्थले व्यभिचारेणोत्तेजकाभावविशिष्टमण्याद्यभावकूटत्वेन हेतुत्वं वाच्यम् । तत्र चोत्तेजकत्वं दुर्निरूपम् । तथा हि—उत्तेजकत्वं न कार्यानुकूलत्वम्, दाह्यसंयोगादेरपि तथात्वापत्तेः । न चेष्टापत्तिः । प्रतिबन्धके सत्यपि कार्यापत्तेः । न च प्रतिबन्धके सति कार्यानुकूलत्वम् । उत्तेजकाभावविशिष्टस्यैव प्रतिबन्धकत्वेन तत्सत्त्वे उत्तेजकासम्भवेनोक्तलक्षणासम्भवात्, मण्यादेः कार्यमात्रे व्यभिचारेण प्रतिबन्धकप्रयुक्तानुत्पत्तिप्रतियोगिकार्यत्वावच्छेदेनानुकूलता ग्राह्या, तथा च प्रतिबन्धकग्रहे उत्तेजकग्रहः, तद्ग्रहे च तदभावविशिष्टमण्याद्यभावकारणताग्रहपुरस्सरं प्रतिबन्धकत्वग्रहः, इति परस्पराश्रयाच्च । नाऽपि शक्त्यनुकूलत्वम् । नैयायिकमते तदभावात्, मीमांसकमतेऽपि वह्न्यादिशक्तेस्तत्सहभावित्वेनोत्तेजकस्य तदनुकूलत्वासम्भवात् । एतेन 'कार्याभावव्याप्याभावप्रतियोगित्वमुत्तेजकत्वम्' इति परास्तम् । कार्यमात्रविवक्षायां व्यभिचारात्, प्रतिबद्धकार्यविवक्षायामप्युत्तेजकप्रतिबन्धकोभयाभावस्थलीयदाहादौ व्यभिचारात्, उक्तपरस्पराश्रयदोषप्रसङ्गाच्च । नाऽपि सामग्र्युत्तरकालीनकार्यानुत्पादप्रयोजकाभावप्रतियोगित्वम् । कार्यानुत्पादस्य सामग्र्यनन्तरकालीनत्वानुपपत्त्या प्रतिबन्धकाभावस्य कारणत्वानुपपत्तेः, सामग्रीपदानुपादाने च सहकारिमात्रेऽतिव्याप्तेरुक्तत्वात् । नाऽपि यदभावविशिष्टत्वेन प्रतिबन्धकत्वं

कतमाः पुनः प्रकृतिविकृतयः, कियत्यश्चेत्यत उक्तम्—"महदाद्याः प्रकृतिविकृतयः सप्त" इति। प्रकृतयश्च विकृतयश्च ता इति "प्रकृतिविकृतयः" सप्त। तथा हि—महत्तत्त्वम् अहङ्कारस्य प्रकृतिः, विकृतिश्च

---

तत्प्रतियोगित्वम्। अभावकारणताग्रहे कारणीभूताभावप्रतियोगितया मण्यादेः प्रतिबन्धकत्वग्रहः। तद्ग्रहे च तद्विशेषणीभूताभावप्रतियोगितयोत्तेजकत्वग्रहः। तद्ग्रहे चोत्तेजकाभावविशिष्टमण्याद्यभावकारणताग्रहः, इति चक्रकापत्तेः। एतेन 'कारणीभूताभावप्रतियोगिविशेषणाभावत्वमुत्तेजकत्वम्' इति परास्तम्। नापि कारणान्यत्वे सति कार्याभावप्रयोजकाभावप्रतियोगित्वम्। तत्र यत्किञ्चित्कारणान्यत्वे विवक्षिते वन्ह्यादेरप्युत्तेजकत्वापत्तेः, निखिलकारणान्यत्वविवक्षायाञ्च प्रतिबन्धकाभावकारणग्रहात्पूर्वं निखिलकारणान्यत्वस्य ग्रहीतुमशक्यतया परस्पराश्रयात्। एतेन 'कारणाभावातिरिक्तकार्याभावप्रयोजकाभावप्रतियोगित्वम्' इति परास्तम्। नाऽपि प्रतिबन्धकाभावेतरसकलसाधनसमवधानकालीनकार्याभावप्रयोजकाभावप्रतियोगित्वम्। चक्रकापत्तेः। अधिकन्तु खण्डनादावनुसन्धेयमित्याहुः।

कतमाः—किंस्वरूपा इति धर्मिस्वरूपप्रश्नः, कियत्य इति सङ्ख्याप्रश्न इति विभागः। स्वरूपमाह—महदाद्या इति। सङ्ख्यामाह—सप्तेति। कस्य को विकृतिः? प्रकृतिश्च कस्य? इत्यतस्ता विवृणोति—तथा हीति। प्रकृतिविकृतित्वञ्च—तत्त्वान्तरोपादानत्वे सति कार्य्यत्वम्। यत्तु—अजन्यत्वे सति जनकत्वं प्रकृतित्वम्, तत्त्वविभाजकोपाध्यवच्छिन्नजनकत्वे सति जन्यत्वं प्रकृतिविकृतित्वमिति; तन्न। आद्ये 'अष्टौ प्रकृतयः' इति कपिलसूत्रोक्तमूलप्रकृत्यतिरिक्तप्रकृतिष्वव्याप्तेः। मूलप्रकृतित्वमित्युक्ते तु न दोषः। अन्त्ये तत्त्वविभाजकमूलप्रकृतित्वाद्यवच्छिन्नजन्यताया अप्रसिद्धेः।

मूलप्रकृतेः । एवमहङ्कारतत्त्वं तन्मात्राणामिन्द्रियाणाञ्च प्रकृतिः, विकृतिश्च महतः । एवं पञ्चतन्मात्राणि तत्त्वानि भूतानामाकाशादीनां प्रकृतयः, विकृतयश्चाहङ्कारस्य ॥

अथ का विकृतिरेव, कियती च ? इत्यत उक्तम्– "षोडशकस्तु विकारः" इति । षोडशसङ्ख्यापरिमितो गणः षोडशकः । 'तु'शब्दोऽवधारणे भिन्नक्रमः–पञ्च महाभूतानि एकादशेन्द्रियाणीति षोडशको गणो विकार एव, न प्रकृतिरिति । यद्यपि पृ-

---

महत्तत्त्वादियत्किञ्चिन्निवेशे तु प्रकृतिविकृतिषु यत्किञ्चिदुपाध्यवच्छिन्नजनकत्वाभावसत्त्वेनाऽव्याप्तेः ।

भिन्नक्रम इति विकारोत्तरं सम्बन्धनीय इति भावः । तदेव दर्शयति–पञ्चभूतानीत्यादिना । विकारत्वं च–तत्त्वान्तराजनकत्वे सति जन्यत्वम् । आद्यविशेषणेन प्रकृतिविकृतिनिरासः । द्वितीयेन पुरुषस्य ।

तत्त्वविभाजकोपाध्यवच्छिन्नाजनकत्वे सति जन्यत्वं विकारत्वमिति केचित् । तन्न । तत्त्वविभाजकमूलप्रकृतित्वाद्यवच्छिन्नजन्यताया अप्रसिद्धेः । महत्तत्वादियत्किञ्चिन्निवेशे तु प्रकृतिविकृतिषु यत्किंचिदुपाध्यवच्छिन्नजनकत्वाभावसत्त्वेनाऽतिव्याप्तेः ।

'कार्योपादानत्वं प्रकृतित्वम्'इति मनसि निधाय शङ्कते–यद्यपीति । तथा च विकार एव न प्रकृतिरिति न सम्भवति । पृथिव्यादीनां घटादिप्रकृतित्वसम्भवात् । प्रकृतिविकृतयः सप्तेत्यपि न सम्भवति । पृथिव्यादिविकाराणां गोवृक्षादीनां पयोबीजादिजनकत्वेन तेषामपि सत्त्वादेति भावः । न च पृथिव्यादीनामित्यादिनाऽपि प्रकृतिविकृतयः सप्तेति नियमभङ्गसम्भवे एवं विकारभेदानामित्यादेर्वैयर्थ्यं तदवस्थमेवेति वाच्यम् । द्वादशेत्यादिनियमभङ्गपर-

थिव्यादीनां गोघटवृक्षादयो विकाराः, एवं तद्विकारभेदानां पयोबीजादीनां दध्यङ्कुरादयः; तथाऽपि गवादयो बीजादयो वा न पृथिव्यादिभ्यस्तत्त्वान्तरम् । तत्त्वान्तरोपादानत्वं च प्रकृतित्वमिहाऽभिप्रेतम्, इति न दोषः । सर्वेषां गोघटादीनां स्थूलत्वेन्द्रियग्राह्यता च समा, इति न तत्त्वान्तरत्वम् ॥

---

त्वात् । एतेन—'गोघटादीनां पृथिव्यादिविकारत्वकथनेनैव न प्रकृतिरित्यस्यासङ्गतत्वनिर्वाहे एवं तद्विकारभेदानामित्यादिकथनमसङ्गतम्' इति परास्तम् । 'तत्त्वान्तरोपादानत्वं प्रकृतित्वम्' इत्यभिप्रायेण समाधत्ते—तथापीति । नन्वेवमप्यत्र तत्त्वपदम्—तस्य भावस्तत्त्वमिति भावपरं न, किन्तु यथार्थे पदार्थे रूढम् । एवं च गोघटादीनामपि यथार्थपदार्थत्वात्पृथिव्यादिविलक्षणत्वाच्च पदार्थान्तरत्वमस्त्येवेत्याशङ्क्याऽऽह—सर्वेषामिति । स्थूलता—महत्परिमाणम् । इन्द्रियग्राह्यता—बाह्येन्द्रियग्राह्यता । तेन महत्परिमाणवति पुरुषे आन्तरेन्द्रियग्राह्यत्वसत्त्वेऽपि न क्षतिः । चशब्देनाऽनुक्ता अपि शान्तघोरमूढाख्या ग्राह्याः ।

एतदुक्तं विष्णुपुराणे—

तस्मिंस्तस्मिंस्तु तन्मात्रास्तेन तन्मात्रता स्मृता ॥

न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिणः ॥ १ ॥ इति ।

अस्यायमर्थः—तेषु तेषु भूतेषु तन्मात्रास्तिष्ठन्ति, इति कृत्वा धर्मधर्म्यभेदाद् द्रव्याणामपि तन्मात्रता स्मृता । ते च पदार्थाः पञ्च तन्मात्रारूपाः शान्तघोरमूढाख्यैः स्थूलगतशब्दादिविशेषैः शून्याः । एकरूपत्वात् । तथाच शान्तादिविशेषशून्यशब्दादिमत्त्वमेव भूतानां शब्दादितन्मात्रत्वमित्याशयः । अत एवाऽविशेषिणः—अविशेषसंज्ञका इति । शान्तम्—सुखात्मकम्, घोरम्-दुःखात्मकम्, मूढम्—मोहात्मकमिति ।

अनुभयरूपमाह—"न प्रकृतिर्न विकृतिः पुरुषः" इति। एतत् सर्वमुपरिष्टादुपपादयिष्यते॥

॥ ३ ॥

तथाच गोघटादीनां तत्त्वान्तरप्रयोजकतत्तदसाधारणशान्तादिधर्मशून्यत्वाभावात्, बहिरिन्द्रियग्राह्यगुणशून्यत्वाभावाद्वा न तत्त्वान्तरत्वमिति भावः। प्रयोगस्तु-विमता गोघटादयः पृथिव्यादिभ्यो न तत्वान्तराणि, स्थूलत्वात्, बाह्येन्द्रियग्राह्यत्वात्, शान्तादिधर्मवत्त्वाद्वा, प्रसिद्धपृथिव्यादिवत्, व्यतिरेके पुरुषवदिति।

अनुभयरूपमिति। अनुभयरूपत्वं च-अजनकत्वे सत्यजन्यत्वम्। ननु 'महत्तत्त्वमहङ्कारस्य प्रकृतिः' इत्यादिनियमे पुरुषस्यानुभयरूपत्वे च प्रमाणाभाव इत्याशङ्क्याऽऽह—एतत्सर्वमिति। उपपादयिष्यते—तत्तत्पदार्थनिरूपणावसर इति शेषः। उपपादनश्च क्वचिद्युक्त्या, क्वचित् श्रुत्यादिसमानार्थकपदोपन्यासमात्रेण। तेन क्रमे युक्त्यदर्शनेऽपि न क्षतिः। ननु तन्त्रान्तरसिद्धानां दिक्कालगुणकर्मसामान्यविशेषसमवायाभावानां सत्वेन कथं चत्वार एव पदार्था इति चेच्छृणु—दिक्कालयोस्तत्तदुपाधिषु गुणकर्मसामान्यादीनां धर्मधर्म्यभेदात्तत्रैवाऽन्तर्भावात्।

भाष्यकारास्तु-"दिक्कालावाकाशादिभ्यः" (साङ्ख्य० सू० अ० २ सू० १२) इति सूत्रे नित्यौ यौ दिक्कालौ तावाकाशप्रकृतिभूतौ प्रकृतेर्गुणविशेषावेव, अतो दिक्कालयोर्विभुत्वोपपत्तिः। "आकाशवत् सर्वगतश्च नित्यः" इत्यादिश्रुत्युक्तं विभुत्वञ्चाऽऽकाशस्योपपन्नम्। यौ तु खण्डदिक्कालौ तौ तु तत्तदुपाधिसंयोगादाकाशादुत्पद्येते इत्यर्थः, आदिशब्देनोपाधिग्रहणादिति। यद्यपि तत्तदुपाधिविशिष्टाकाशमेव खण्डदिक्कालौ; तथापि विशिष्टस्यातिरिक्तताऽभ्युपगमवादेन। वैशेषिकनये श्रोत्रस्य कार्यतावत् तत्कार्यत्वं

१ साङ्ख्यभाष्यकारा विज्ञानभिक्षवः।

तत्रोक्तम्, इति विशेषमाहुः । गर्भमैत्रेयोपनिषदादिषु–'अष्टौ प्रकृतयः षोडशविकाराः'इत्यादिना तथैव व्युत्पादनाच्च । ननु दिक्कालयोस्तत्तदुपाध्यवन्तर्भावो न सम्भवति। तथा हि–स्वजन्यविभागप्रागभावावच्छिन्नं कर्म, स्वजन्यविभागनाश्यपूर्वसंयोगविशिष्टस्वजन्यविभागः, स्वजन्यविभागजन्यपूर्वसंयोगनाशावच्छिन्नस्वजन्योत्तरसंयोगप्रागभावः, उत्तरदेशसंयोगावच्छिन्नं कर्मेत्यादिक्षणादिघटितादिव समामादिवैचित्र्यनिर्वाहकतपनपरिस्पन्दादिरूपाः । ते च 'इदानीं घटः' 'अष्टवार्षिका ब्राह्मणाः' इत्यादिप्रतीतौ विशेषणत्वेन भासन्ते। अत्र तपनपरिस्पंदाः घटादिविशेष्यकस्वविशेषणकधीजनकप्रत्यासत्तिमन्तः,घटादिविशेष्यकविशिष्टधीजनकविशेषणत्वात्,घटादिरूपवत्, इत्यनेन तत्सम्बन्धसिद्धिः। स च न समवायः,बाधात्। नाऽपि स्वाश्रयसंयुक्तसंयोगिसमवायः, तद्घटकपृथिव्याद्यभावात् । नापि स्वाश्रयसंयुक्तसमवायः, तपनपिण्डयोरसंसर्गात् । न चाऽहस्करकरनिकर एव तथा । तदभावेपि गृहनिखातपदार्थेषु मासाद्यवच्छेदात्। तथा चोपाधीनां बहुतरतपनपरिस्पन्दादीनां परम्परासम्बन्धाभावे साक्षात्सम्बन्धानुपपत्त्या तत्सम्बन्धघटकस्तदतिरिक्तः कालोऽवश्यमभ्युपेयः। ज्येष्ठे परत्वप्रत्ययः, कनिष्ठे चापरत्वप्रत्ययोऽयमस्मात्परोऽयमस्मादपर इति। स च परत्वापरत्वगुणविशेषाधीनः।परत्वापरत्वे सासमवायिकारणके, भावकार्य्यत्वात्।असमवायिकारणं च तस्य कालपिण्डसंयोग एव,इत्यतोपि परत्वापरत्वासमवायिकारणसंयोगाश्रयतया कालोऽवश्यमभ्युपेयः।न च पिण्डगतरूपादेरेव परत्वापरत्वासमवायिकारणत्वमस्त्विति वाच्यम् । कालिकपरत्वापरत्वयोर्वाय्वादावुत्पत्त्या व्यभिचारात् । अत एव पृथिवीपिण्डसंयोगस्यापि न तत्र कारणत्वम् । पृथिव्यसंयुक्तपदार्थेऽपि तदुत्पादेन व्यभिचारात् । न चाऽऽकाशदिगात्ममनोभिः पिण्डसंयोगस्य तथात्वमस्त्विति वाच्यम्। आकाशादिसंयोगस्य तथात्वे जीवात्मभिः प्रत्येकं विनिगमना-

विरहात्, आत्ममनसोस्त्वनन्तत्वात् । एवं यदपेक्षयोदयाचल-संनिहितो यो देशः सा तम्प्रति प्राची । यदपेक्षयाऽसंनि-हितो यो देशः, यदपेक्षयाऽस्ताचलसंनिहितो वा देशः सा तम्प्रति प्रतीची । एवं यदपेक्षया सुमेरुसन्निहितो यो देशः सा तम्प्रति उदीची । तद्व्यवहिता त्ववाची । यदपे-क्षयोदयाचलसन्निहितत्वं च–तन्निष्ठोदयाचलसंयुक्तसंयोगापेक्षयो-दयाचलसंयुक्तसंयोगाल्पीयस्त्वम् । असन्निहितत्वञ्च भूयस्त्वम् । निशावसानहेतुसूर्यसंयोगवत्त्वमुदयाचलत्वम् । निशाकारणीभूतसू-र्यसंयोगवत्त्वमस्ताचलत्वम् । देशश्च सूर्यादिनिष्ठतत्तत्संयोगः, नतु मूर्त्तम् । तत्रापीदं प्राच्यामित्यादिव्यवहारात् । अन्यथा तत्सम्बन्धस्य घटादौ सिद्धत्वेन दिगसिद्ध्यापत्तेश्च । इत्थञ्च सूर्यादिगतानां त-त्तत्संयोगरूपोपाधीनामुक्तरीत्या परम्परासम्बन्धाभावे साक्षात्सम्ब-न्धानुपपत्त्या तत्सम्बन्धघटका दिगवश्यमभ्युपेया । एवं संयुक्त-संयोगाल्पीयस्त्वभूयस्त्वविषयकापेक्षाबुद्धिजन्यपरत्वापरत्वासमवा-यिकारणसंयोगाधिकरणतयाऽवश्यमभ्युपेया । ननूपाधीनामननु-गतत्वादनुगतप्राच्यादिव्यवहारो न स्यादिति चेन्न । तत्तत्प्राच्यादि-व्यवहारस्यऽनुगतत्वात् । न चाऽऽकाशस्य सूर्यक्रियाल्पीयस्त्वादि-विषयकापेक्षाबुद्धिजन्यपरत्वापरत्वासमवायिकाणसंयोगाधिकरणत्वं क्रियाया अत्रोपाध्युन्नायकत्वम्, संयुक्तसंयोगाल्पीयस्त्वभूयस्त्व विषयकापेक्षाबुद्धिजन्यपरत्वापरत्वासमवायिकारणसंयोगाधिकरणत्वं च संयोगोपाध्युन्नायकत्वरूपं तत्तदुपाधिसम्बन्धघटकत्वं सम्भवती-ति वाच्यम् । जीवात्मभिर्विनिगमनाविरहस्योक्तत्वात् ।किञ्चाऽऽका-शं न तत्तदुपाधिसम्बन्धघटकं, विशेषगुणवत्त्वात्, पृथिवीवत् । न चाऽत्राऽव्यापकत्वमुपाधिः । सकलमूर्त्तसंयोगित्वाभावरूपस्याऽव्या-पकत्वस्य पक्षमात्रव्यावर्त्तकसकलमूर्त्तपदविशेषणकत्वेन पक्षेतरत्व-वदनुपाधित्वात । एतेन 'अत्र मूर्त्तत्वमुपाधिः' इति परास्तम् । अ-

वच्छिन्नपरिमाणवत्त्वस्य मूर्त्तत्वस्य पक्षमात्रव्यावर्त्तकावच्छिन्नपद-विशेषणकत्वेन पक्षेतरत्वतुल्यत्वात् ।

यत्तु—दिक्कालौ नेश्वरादतिरिच्येते, मानाभावात्, तथाविधमाकाशमिति दीधितिकृत आहुः,तन्न । मानस्य लीलावतीकृद्भिर्न्यायवल्लभाचार्यैरुक्तत्वात् । विमतमीश्वरादि न तत्तदुपाधिसम्बन्धघटकम्, विशेषगुणवत्त्वात्, पृथिवीवत् । घटनिष्ठसूर्यक्रियाविशिष्टज्ञानं नेश्वरादिघटितसम्बन्धजन्यम्, घटनिष्ठक्रियाविशिष्टज्ञानत्वात्, घटश्चलतीति विशिष्टज्ञानवदित्यादेर्बाधकत्वाच्च । 'ईश्वरान्नातिरिच्यते आकाशादि' इति वदतस्तत्र कोऽभिप्रायः ?–किं यथा घटादयः परस्परभिन्नाः सन्तोपि मृत्कार्यत्वान्मृद्भिन्ना न सन्ति, उतेश्वरेणैव तत्तत्कार्यनिर्वाहे शशशृङ्गादिवन्नैव सन्तीति ? नाद्यः । तथाऽनङ्गीकारात् । न द्वितीयः । आत्मन आकाशः संभूतः, नैवेह किञ्चन आसीन्मृत्युनैवेदमावृतमासीन्मृत्युर्यस्योपसेचनं स कालकालः, तथाक्षरात्सम्भवन्तीह विश्वमित्यादिश्रुतिविरोधापत्तेः । ननु कालकार्यकारिणी दिगेवास्तु दिक्कार्यकरः कालोवास्तु, लाघवादिति चेन्न । दिशः संयोगमात्रोपनायकत्वात् कालस्य च क्रियामात्रोपनायकत्वात् । नहि सूर्यक्रियासंयोगयोरेकमुपनेयतावच्छेदकमस्ति । अन्यतरत्वस्य क्रियात्वाद्यपेक्षया गुरुत्वात्, इति चिरन्तनः पन्थाः, इति चेन्न । तरणिस्पन्दघटकत्वेन कालसिद्धिर्न सम्भवति । इदानीं घट इत्यादिप्रतीतेस्तरणिस्पन्दवैशिष्ट्यविषयत्वे मानाभावात्, दिक्कालयोः प्रमाणाभावाच्च । नतावद्दिक्कालयोः प्रत्यक्षं प्रमाणम् । द्रव्यग्राहकयोस्त्वक्चक्षुषोरूपविरहिणि स्पर्शविरहिणि चाप्रवृत्तेः । मनसश्च बाह्यानिरपेक्षस्य बहिरप्रवृत्तेः । नाप्युपानीतभानात्मकं प्रत्यक्षम् । इतः पूर्वमनुपलम्भात् । एतेन 'इदानीं घट इत्यादि प्रत्यक्षं तत्र मानम्, इति परास्तम् । इदानीं घटो न तदानीमित्याद्यनुपपत्तेश्च । यदपि तपनपरिस्पन्दाः

घटादिविशेष्यकस्वविशेषणधीजनकप्रत्यासत्तिमन्तः, घटादिविशेष्यकधीजनकविशेषणत्वात् घटादिरूपवदिति, तन्न । तपनपरिस्पन्दानां तादृशविशिष्टधीविषयत्वे मानाभावेन हेत्वसिद्धेः । यदपि 'इदानीं घटः'इत्यादिप्रत्यक्षं तरणिस्पन्दाद्युपाधिविषयम्, तदपि न । तरणिस्पन्दादेर्लौकिकविषयत्वासम्भववदलौकिकप्रत्यक्षविषयत्वस्य घटादावसम्भवात् । तथा हि—"यत्र हि यदनुभूतं तत्रैव तज्ज्ञानं प्रत्यासत्तिः" इति नियमे घटादौ तज्ज्ञानस्य प्रत्यासत्तित्वासम्भवात् । तादृशनियमाभावे पूर्वमदृष्टदण्डे देवदत्ते 'दण्डयमासीत्'इति प्रतीत्यापत्तेः । न चेष्टापत्तिः, सर्वजनीनसंशयानुपपत्तेः । न च दोषात् सः, ज्ञातवैशिष्ट्ये तददर्शनेन तदज्ञानातिरिक्तदोषाभावात् । चम्पकादौ सौरभ्यज्ञानेऽपि चन्दने तदज्ञाने 'सुरभि चन्दनम्' इत्यप्रतीतेश्च । तादृशनियमाभावेऽपि 'तरणिस्पन्दादौ न घटादि' इत्यादिसर्वजनीनानुभवबाधेन, क्रियायां द्रव्यगुणाद्यधिकरणत्वस्य त्वयाऽनङ्गीकारेण च तादृशप्रतीतेर्भ्रमत्वापत्तेरनिवार्यत्वात् । वस्तुतस्तु—इन्द्रियायोग्यानां पिशाचपरमाण्वादीनामुपनीतभानाभाववत्सूर्यस्पन्दानामप्युपनीतभानं न सम्भवतीति बोध्यम् । न च तव मतेऽपि 'इदानीं घटः' इत्यादिप्रतीत्यनुपपत्तिरिति वाच्यम् । कारणत्वेनाऽभ्युपगतप्रधानगुणस्य प्रतिक्षण जायमानपरिणामभेदवैशिष्ट्यविषयत्वेनैवोपपत्तेः न च प्रधानगुणस्य घटादिपरिणामातिरिक्तपरिणामाभावेन तत्परिणामानां च भेदे 'इदानीं घटपटादीनि'इत्येकपदार्थविशिष्टविषयकप्रतीत्यनुपपत्तिरिति वाच्यम् । प्रधानगुणपरिणामत्वेनैकार्थविषयकत्वनिर्वाहात् । त्वयाऽपि-'इदानीं घटः'इत्युत्तरम्-'इदानीं घटः'इत्यादिप्रतीतिनिर्वाहाय तथैव वक्तव्यत्वाच्च । न च युगपज्जायमानस्थले तथाऽकल्पनान्मम लाघवमिति वाच्यम् । स्पन्दादिविषयकबुद्धेर्भ्रमत्वापत्त्या एतल्लाघवस्याऽकिचिञ्चित्करत्वात् । न च वाच्यम्-प्रतिक्षण-

परिणामे मानाभावः, जीर्णतरादिबुद्धेरेव मानत्वात् । परत्वापरत्वासमवायिकारणसंयोगाधारतयाऽपि न कालसिद्धिः । 'कुतः ?' इति वदतस्तव कोऽभिप्रायः?–परत्वापरत्वे कालपिण्डसंयोगासमवायिकारणके, उत सासमवायिकारणके, जन्यगुणत्वात्, भावकार्यत्वाद्वेति? नाऽऽद्यः। कालाप्रसिद्ध्या साध्याप्रसिद्धेः। रूपाद्यसमवायिकारणकस्य मूर्त्तवृत्तेः रूपाद्यात्मकतावत् तदात्मकतापत्तेः, संयोगासमवायिकारणकस्य संयोगातिरिक्तस्य मूर्त्तवृत्तेर्द्रव्यत्वनियमेन तयोर्द्रव्यत्वापत्तेश्च । न द्वितीयः । क्रियासमवायिकारणकात्प्रचुराप्रचुरपरिणामान्तरितजन्मत्वादतिरिक्तपरत्वापरत्वयोर्मानाभावेन परिशेषासिद्ध्या कालासिद्धेः । अन्यथा परत्वापरत्ववत् मध्यमत्वस्यापि गुणान्तरत्वापत्तेः । ज्येष्ठे तादृशजन्मत्वं च–कनिष्ठत्वाभिमतव्यक्तिजन्माधिकरणप्रधानपरिणामरूपक्षणकूटवृत्तिध्वंसप्रतियोगिप्रधानपरिणामक्षणवृत्तिजन्मत्वम् । कनिष्ठे च–तदधिकरणप्रधानपरिणामक्षणध्वंसाधिकरणोक्तक्षणवृत्तिजन्मत्वम् । न चैवं 'इदानीमयमेतस्मात्परः' इति वर्त्तमानपरत्वप्रत्ययानुपपत्तिः, जन्मत्वस्याऽतीतत्वादिति वाच्यम् । तथा सति 'इदानीमयं घटो न तदानीम्' इत्यादिवत् 'इदानीं रामः कृष्णात्परो न तदानीम्' इत्याद्यापत्तेः । यदि 'इदानीं घटः' इत्यादिप्रतीतेस्तरणिस्पन्द एव विषयः, परत्वापरत्वप्रतीतेश्च प्रचुराप्रचुरतरणिस्पन्दान्तरितजन्मत्वमिति मतम्, तदाऽपि प्रधानद्वाराऽपरजन्मावच्छेदकतरणिस्पन्दवृत्तिध्वंसप्रतियोगितरणिस्पन्दवृत्तिजन्मत्वमुक्तजन्मत्वं बोध्यम् ।

सौगतास्तु–विशेषणता विषयविषयिभावो वा कालाख्यः साक्षादेव पिण्डसूर्यस्पन्दयोः सम्बन्धोऽस्तु, कालस्य द्रव्यत्वे तद्व्यापकसंख्याद्यनेककल्पनापेक्षया लाघवात् । उक्तसम्बन्धेन परत्वाद्यव्यवहिततरणिकर्मणः पिण्डगतसङ्ख्याया वाऽसमवायिहेतुतया, अपरजन्माऽपेक्ष्य प्रचुरकर्मापेक्षाबुद्धेर्निमित्ततया च परिशे-

षासिद्ध्या न परत्वाद्यसमवायिकारणघटकतया कालसिद्धिः । तत्र तरणिकर्मणो घटेन साक्षात्सम्बन्धाङ्गीकारे 'घटश्चलति'इति-धीप्रसङ्गः । समवायसम्बन्धस्थले तथाऽङ्गीकारेऽपि तद्विलक्षणसम्बन्धत्वेनाऽत्र तथाकल्पनाऽसम्भवात् । अन्यथा-तत्र मनेपि 'चलति'इति धीप्रसङ्गात् । न च कार्यकारणान्यतरैकार्थसमवायस्याऽसमवायिकारणतानिर्वाहकप्रत्यासत्तित्वे कथं सूर्यस्पन्दस्याऽसमवायिकारणत्वमिति वाच्यम् । तादृशनियतसम्बन्धमात्रस्यैव तत्त्वात् । नन्वेवमप्यद्रव्यनिरूपितस्य साक्षात्सम्बन्धस्य समवायत्वनियमभङ्गापत्तिः। घटपटसंयोगे व्यभिचारवारणायाऽद्रव्यनिरूपितेति। घटादौ तद्वारणाय सम्बन्धेति । परम्परासम्बन्धव्यभिचारवारणाय साक्षादिति, इति चेन्न । समवायातिरिक्तसम्बन्धग्राहकमानबाधापत्त्या तादृशनियमे मानाभावात् । गगनपरिमाणादावीश्वरीयज्ञानादिसम्बन्धे व्यभिचाराच्चेत्याहुः ।

अपरे तु–छान्दोग्ये दशमाध्याये "अथ यत्रैतस्माच्छारीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्द्ध्वं आक्रमते", एवं मुण्डकेऽपि "नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकाधिवासः", एवं छान्दोग्ये दशमे प्रपाठके "अमुष्मादादित्यात्प्रतायन्ते ता आसु नाडीसु सुप्ताः" इत्यहोरात्राद्यविशेषेणाऽहस्करकरनिकरसम्बन्धश्रवणात्, निदाघसमये निशास्वपि प्रतापादिकार्यदर्शनेन किरणानुवृत्तिकल्पनाच्च, इत्थं चाऽहस्करकरनिकरसम्बन्धेन तरणिस्पन्दस्यैव परत्वाद्यसमवायिकारणतया 'इदानीम्'इत्यादिधीनिर्वाहकतया च परिशेषासिद्ध्या न कालसिद्धिः । स्तोकाहस्करकरनिकरसम्बन्धस्य निखातेऽपि सम्भवेन न तत्र क्षणादिव्यवहारानुपपत्तिः । अत एव 'युगपज्जायन्ते' 'युगपत्तिष्ठन्ति' 'युगपत्कुर्वन्ति' 'युगपन्न जायन्ते' इत्यत्रोत्पत्त्यादौ यौगपद्यम्, अयौगपद्यं च–एक सूर्यगत्यवच्छिन्नत्वम्, परस्परभिन्नैकैकसूर्यगत्यवच्छिन्नत्वम्, 'चिरं तिष्ठन्ति' 'क्षिप्रं

करोति'इत्यादौ च चिरत्वम्—बहुतरसूर्यगत्यवच्छिन्नत्वम्, क्षिप्रत्वम्—अल्पतरसूर्यगत्यवच्छिन्नत्वं कालं विनापि निर्वहति, रश्मिसम्बन्धस्य सम्भवादित्याहुः । एवं गुणादिप्रागभावाच्छिन्नं द्रव्यं क्षणः । कार्यप्रागभावोपहिता सामग्री क्षण इति वा । ननु कारणप्रागभावानाधारः कार्यप्रागभावाधारः क्षणः सामग्री इति क्षणगर्भं सामग्रीलक्षणम्, सामग्रीगर्भं च क्षणलक्षणमित्यन्योन्याश्रय इति चेन्न । सामग्रीपदस्य चरमकारणपरत्वात् ।

क्षणद्वयं लवः । अक्षिपक्ष्मसंयोगानिमित्तमेकं कर्म निमेषः ।

अष्टादश निमेषाः स्युः काष्ठा, त्रिंशत्तु ताः कलाः ।

मुहूर्त्तयामादयः प्रसिद्धा एव ।

एतद्भूखण्डवृत्तिरविरश्मिसम्बन्धोऽत्र दिनम् । दिनसामान्यस्य लक्ष्यत्वे एतद्भूखण्डवृत्तिरविरश्मिसत्वकालीनद्वीपान्तरीयरात्रावतिव्याप्तिप्रसङ्गात् । भूखण्डे रवेरसत्वाद्रश्मिपदम् । रात्रावपि चन्द्रादीनां रश्मिसत्वादसम्भववारणाय रवीति । न च रात्रावपि वालुकादौ प्रतापादिकार्यदर्शनेन रविरश्म्यनुवृत्तिकल्पनात्तत्रातिव्याप्तिरिति वाच्यम् । रश्मिपदस्य प्रकृष्टमहत्वोद्भूतरूपवत्तेजःपरत्वात् ।

एतद्भूखण्डवृत्तितादृशतेजःसामान्याभावोऽत्र रात्रिः । रात्रिसामान्यस्य लक्ष्यत्वे तद्भूखण्डवृत्तिरविरश्मिसत्वकालीनद्वीपान्तरीयरात्राव्याप्तिप्रसङ्गात् । न च दिवसेऽपि द्वीपान्तरावच्छेदेन तादृशसामान्याभावसत्वादतिव्याप्तिरिति वाच्यम् । निरवच्छिन्नतादृशसामान्याभावस्य विवक्षितत्वात् । रात्रावपि द्वीपान्तरवृत्तिरविरश्मिसत्वेनाऽसम्भववारणाय—एतद्भूखण्डवृत्तीति* । रात्रावपि त्रस-

*इदमुपलक्षणम् । रात्रावपि चन्द्रादिग्रहवृत्तिरविरश्मिसत्वादसम्भववारणाय तदुपात्तमिति ध्येयम् । रविरश्मिभिरेव खलु चन्द्रादीनां दीप्तिर्ज्योतिः शास्त्रसिद्धा । दृष्टौहि यदाहि रविचन्द्रयोर्मध्ये पृथिवी समागच्छति तदोपरागव्यवहारोलोकानामिति सुधीभिर्विभावनीयम् ।

रेण्वादितेजःसत्त्वादसम्भववारणाय—तादृशेति । प्रकृष्टमहत्त्वोद्भूत-रूपवत्तेज इत्यर्थः ।

एवं पक्षमासत्वयनसम्वत्सरादिकं बोध्यम् । वर्त्तमानत्वं च—अनुत्पन्नध्वंसत्वे सति विनष्टप्रागभावत्वम् ।

न्यायकणिकायां मिश्रास्तु—पारिभाषिकं वर्त्तमानत्वम्, 'विद्यते व्योम' इत्यादौ तदभावात्, न चाऽत्र भाक्तः प्रयोगः, विशेषाभावादित्याहुः । भविष्यत्वं च—प्रागभावप्रतियोगित्वम् । अतीतत्वं च—उत्पन्नध्वंसप्रतियोगित्वम्, इत्यादिरीत्योपाधिनैव सर्वत्र निर्वाहसंभवान्न कालसिद्धिः ।

यत्तु—उदयनाचार्याः "नचैव व्यवहार उपाधिभेदमात्रेण शक्यते । यदा भारते वर्षे मध्यान्हस्तदोत्तरेषु कुरुषु अर्द्धरात्रमित्यादौ सम्बन्धाभावात्" इत्याहुः,

एतच्च व्याख्यातं वर्द्धमानोपाध्यायैः—"यदेह मध्यान्हस्तदोत्तरेषु कुरुषु अर्द्धरात्रमिति । वर्त्तमानयोः सामानाधिकरण्यमसति काले नोपपन्नमिति तद्घटककालो मन्तव्य इत्यर्थः" इति,

तन्न, प्रधानेनैव निर्वाहात् । यत्तच्छब्दार्थतयोभयाधिकरणत्वेन प्रतीयमानस्योपाध्यतिरिक्तस्याऽखण्डकालस्याऽङ्गीकारे 'इदानीं घटो न तदानीम्'इत्यादिप्रतीतिवत् 'यदेह मध्यान्हस्तदा तत्र न मध्यान्हः'इत्यादिव्यवहारानुपपत्तेः । 'यदा धूमस्तदा वन्हिः' 'यदा यत्र धूमस्तदा तत्र वन्हिः' 'यदाऽयं काश्यां तदा स प्रयागे' इत्यादिप्रसिद्धस्थलादित्यागे बीजाभावाच्च, उपाधिरूपस्याऽवच्छेदकस्याऽङ्गीकारे प्रतिज्ञाविरोधात् । यदि च 'इदानीमयं काश्यां न प्रयागे' इत्यादिप्रतीत्या कालवृत्तौ देशस्यावच्छेदकत्वाङ्गीकारात् अशोकवनिकान्यायेन चाऽस्मत्पक्षोक्तदोषद्वयं न सम्भवतीति विभाव्यते; तदापि महत्त्वोद्भूतरूपतदभाववत्किरणसम्बन्धाभ्यां क्रमेण मध्यान्हा-

द्धेरात्रोपाधेः सूर्यस्पन्दविशेषस्य सूर्येणैव, सांख्यमते च 'अजामेकाम्'इत्यादिश्रुतिस्मृतिसिद्धप्रधानेनैवोपपत्तौ अतिरिक्तकालकल्पनाया आभासत्वात् । विमतं तरणिपरिस्पन्दसंसर्गघटकं न भवति, विशेषगुणशून्यत्वात्, मनोवत्, *विशेषगुणशून्यत्वं तरणिपरिस्पन्दसंसर्गघटकवृत्ति न भवति, विशेषगुणशून्यमात्रवृत्तित्वान्मनस्त्ववत्, इत्यादिविरोधाच्च ।

एतेन दिगपि व्याख्याता, तस्या अनध्यक्षत्वादलिङ्गत्वाच्च । 'प्राच्यां घटः'इत्यादिप्रत्ययानां निरुपाधिदिगावलम्बनत्वे दिशां दशविधत्वप्रसंगेन 'नवैव द्रव्याणि'इति व्याघातात्* । न चात्मत्वेनाऽऽत्मनां सङ्ग्रहवद्दिशामपि दिक्त्वेन सङ्ग्रहाददोषः, शब्दलिङ्गानामपि भिन्नतया तत्कारणाकाशस्याऽऽप्यानन्त्यप्रसङ्गात्, आकाशत्वेन सङ्ग्रहस्य तत्रापि तुल्यत्वात् । न च तथैवाऽस्तु, को दोष इति वाच्यम् । "आकाशकालदिशामेकैकत्वादपरजात्यभावे पारिभाषिक्यस्तास्ताः संज्ञा आकाशं कालो दिक्"इति(१)भाष्यविरोधात् । उपाधिदिगावलम्बनत्वे तु तेनैव प्रत्ययानामन्यथासिद्ध्या दिगसिद्धेः । न च सुराशिखरिणि शिखरपरिभ्रमन्मार्त्तण्डमण्डलनिशावसानहेतुभूतप्रथमसंयोगाद्युपाध्युपधानेन प्राच्यादिव्यवहारस्योपपन्नत्वेऽपि 'मथुरातः प्राच्यां प्रयागः'इत्यादिव्यवहारानुपपत्तिः, मार्त्तण्डगतानां संयोगोपाधीनां प्रयागे सम्बन्धाभावादिति वाच्यम् । 'मथुरातः प्राच्यां प्रयागः'इत्यादौ मथु-

*सत्कार्यमतेऽसतोऽलीकस्याऽप्यङ्गीकारेण तन्मनुसारेण पूर्वमसद्रूपं विप्रतिपत्तिविषयं कालं पक्षीकृत्याऽनुमानमुपन्यस्तम् । अलीकानङ्गीकर्तृनैयायिकमतेन एतादृशवस्तुनः सिद्ध्यसिद्धिपराहतत्वेन तथा साधनासम्भवादनुमानान्तरमुपन्यस्तमिति वेदितव्यम् ।

*दशसङ्ख्यया सह नवसङ्ख्यामेलने एकोनविंशतिसङ्ख्यायानिष्पाद्यमानतया द्रव्याणां निरुक्तसङ्ख्याकत्वापत्तिरिति भावः ।

१ प्रशस्तपाद (वैशेषिक) भाष्यम् । (द्रव्यग्रन्थे आकाशनिरूपणम्)

रानिष्ठोक्तोदयगिरिसंयुक्तसंयोगपर्याप्तसङ्ख्यादिव्यापकसङ्ख्यादिपर्याप्त्यधिकरणोक्तोदयगिरिसंयुक्तसंयोगवद्देशवृत्तिः प्रयागः, एवं 'काशीतः प्रतीच्यां प्रयागः' इत्यादौ काशीनिष्ठोक्तोदयगिरिसंयुक्तसंयोगपर्याप्तसङ्ख्यादिव्यापकसङ्ख्यादिपर्याप्त्यधिकरणोक्तोदयगिरिसंयुक्तसंयोगवद्देशवृत्तिः प्रयागः, इत्याद्यन्वयबोधसम्भवात् । न च भिन्नदिगवस्थितयोर्योजनार्द्धयोजनान्तरितयोः कनिष्ठज्येष्ठयोरपि परापरव्यवहारेण कालकृतपरत्वापरत्ववैलक्षण्यात्तदसमवायिकारणसंयोगाश्रयतया दिक्सिद्धिरिति वाच्यम् । जन्यगुणत्वेन भावकार्यत्वेन वा दिग्पिण्डसंयोगासमवायिकारणकत्वरूपसाध्यस्य दिगप्रसिद्ध्या साधयितुमशक्यत्वात् । असमवायिकारणकत्वसाधने तु व्यवहर्त्तुः स्वेन संयुक्तपृथिव्यादिभिर्हस्तदण्डादिसंयोगानामल्पीयस्त्वभूयस्त्वाभ्यामर्थान्तरत्वापत्तेः व्यवहर्त्तुर्निवेशाच्च परापरव्यवहार उदयगिरिप्रचुराप्रचुरसंयोगहेतुकः, भिन्नदिगवस्थितयोजनार्द्धयोजनान्तरितयोस्तुल्योदयगिरिसंयुक्तसंयोगाश्रययोरपि परापरव्यवहारात्, इति परास्तम्(१) । न चैवमपि प्रमातर्यपि परापरव्यवहारप्रसङ्गः, प्रचुराप्रचुरसंयुक्तसंयोगाधिकरणत्वेन प्रतीयमाने एव तादृशव्यवहारात्, प्रमातुस्तु अवधित्वेन प्रतीतेः । यदा तु प्रमातैव तदधिकरणत्वेनाऽनुसन्धीयते; तदा भवत्येव प्रमातरि परापरव्यवहारः । यथा—'चतुर्योजनान्तरिता मत्तो वाराणसी' 'द्वियोजनान्तरितं शुभ्रपुरम्' इत्यनुसंधाय 'परा वाराणसी' 'अपरं शुभ्रपुरम्, इत्यादिव्यवहारः, तथा—'वाराणसीतः परोऽहम्' इत्यादिः। यदि च प्रमातुर्विभुत्वेन मूर्त्तत्वस्यैव तत्समवायिकारणतावच्छेदकत्वेन च तत्र परादिव्यवहारो न सम्भवति, तदा प्रमातृपदं तच्छरीरपरं बोध्यम् । यद्यपि परत्वादेः सावधित्वेन प्रतीतेर्न संयोगादिनाऽन्यथासिद्धिः, संयोगादेः सावधित्वाभावात्, तथापि

१ निरुक्तसम्बन्धेन दिशः क्लृप्तपदार्थातिरिक्तत्वं परास्तमित्यर्थः ।

तद्भूयस्त्वादेरवधिनिरूप्यत्वेन सावधित्वधीसम्भवात् ।

केचित्तु—"प(१)रापरसङ्ख्ययैव तद्व्यवहारः, यत्संख्यासमानाधिकरणात्यन्ताभावाप्रतियोगित्वे सति यदत्यन्ताभावसमानाधिकरणत्वं तत्संख्यापेक्षया परत्वम् । यत्समानाधिकरणात्यन्ताभावप्रतियोगित्वे सति यदत्यन्ताभावव्यापकात्यन्ताभावप्रतियोगित्वं तदपेक्षयाऽपरत्वम्"इत्याहुः ।

यत्तु—"परत्वापरत्वयोरेकवृत्तित्वेन प्रतीतेर्न संयोगादिनाऽन्यथासिद्धिः, संयोगस्य व्यासज्य वृत्तेः । संयोगभेदापरिगणने परापरव्यवहारानुपपत्तेश्च"इति, तन्न । 'दण्डी पुरुषो न पुरुषी दण्डः'इत्यादिव्यवहारवदत्राऽपि व्यवहारोपपत्तेः । परस्परसापेक्षत्वस्योभयत्राऽपि तुल्यत्वाच्च । तव मतेपि प्रचुराप्रचुरसंयुक्तसंयोगापेक्षाबुद्धेर्हेतुत्वेन द्वितीयदोषस्योभयसमाधेयत्वात् । अपेक्षाबुद्धिविशेषविषयत्वस्य विवक्षितत्वात्सामान्यतोऽवगमाच्च ।

एवं यदपेक्षया मेरुसन्निहितत्वव्यवहितत्वे च तस्योत्तरत्वदक्षिणत्वे ।

अधस्त्वं च—गुरुत्वासमवायिकारणकक्रियानाश्रयत्वे सति तादृशक्रियाजन्यसंयोगाश्रयत्वम् । वृक्षसंलग्नतादृशशाखायामतिव्याप्तिवारणाय सत्यन्तम् । न च संयोगे तादृशक्रियाजन्यत्वमधःसंयोगत्वेनैव ग्राह्यम्, इत्यन्योन्याश्रय इति वाच्यम् । संयोगत्वेन क्रियाजन्यत्वग्रहे क्रियायां च क्रियात्वावान्तरजात्यवच्छेदेन गुरुत्वासमवायिकारणकत्वग्रहे विशिष्टवैशिष्ट्यधीसम्भवात् ।

एवमदृष्टवदात्मसंयोगजन्याग्निक्रियानाश्रयत्वे सति तादृशक्रियाजन्यसंयोगाश्रयत्वमूर्द्ध्वत्वम् । वायुक्रियाजन्यसंयोगाश्रयतिर्यगादावतिव्याप्तिवारणायाऽग्निपदम् । अभिघातजाग्निक्रियामादाय तत्रैवाऽतिव्याप्तिरतोऽदृष्टवदात्मसंयोगेति । यद्यप्यदृष्टवदात्मसंयोगस्य क्रिया-

(१) अधिकन्यूनसङ्ख्ययैव ।

मात्रकारणतया तत्राऽतिव्याप्तिस्तदवस्थैव, तथाऽपि विलक्षणासमवायिकारणत्वमात्रस्य विवक्षितत्वान्न दोषः । अन्योन्याश्रयदोषस्तु (१)पूर्वोक्तरीत्याऽत्राऽपि निरसनीयः। न चैवमपि मध्यदेशस्योर्द्ध्वावधिकोर्द्ध्वत्वमधोवधिकाधस्त्वं स्यात्, उक्तलक्षणयोगादिति वाच्यम् । तद्देशावस्थिततादृशर्वाह्निक्रियाजन्यसंयोगाश्रयत्वं तदवधिकोर्द्ध्वत्वम्, तद्देशावस्थितपतनजन्यसंयोगाश्रयत्वं तदवधिकमधस्त्वमित्यननुगतस्यैवोर्द्ध्वत्वादेर्विवक्षितत्वात् । एतेन 'यद्देशे वन्ह्यादेरसत्वमज्ञानं वा तत्र तादृशव्यवहारानुपपत्तिः, तद्योग्यतायां दुर्वचत्वाच्च' इति परास्तम् । अननुगततादृशपृथिवीत्वादेर्योग्यतात्वात् ।

खण्डनोद्धारे वाचस्पतिमिश्रास्तु—यत् यदपेक्षया गुरुत्वासमवायिकारणकक्रियाजन्यफलाश्रयः, तत् तदपेक्षया अध इति । सूर्यापेक्षया भूः, तदपेक्षया पातालम्, तदपेक्षया नरकाः, तदपेक्षया गर्भोदकमित्यादि यथाक्रममधः। एतत्प्रतिलोममूर्द्ध्वम् । उभयरूपाश्रयो मध्यमित्यादीत्याहुः। मथुरापाटलिपुत्रोभयापेक्षोभयाश्रितपरस्परावधिकसंयुक्तसंयोगाल्पीयःसंयुक्तसंयोगाश्रयत्वं मथुरापाटलिपुत्रोभयापेक्षमपरत्वमेव मध्यत्वम् । 'दशरथस्य रामलक्ष्मणयोर्मध्यमोऽयं भरतः पुत्रः' इत्यत्र रामलक्ष्मणोभयजन्मावच्छेदकपरस्परस्पन्दावधिकोत्तरपूर्वस्पन्दावच्छिन्नजन्मत्वं उभयजन्मनिरूपितापरत्वमेव मध्यत्वम् । अथ वा रामलक्ष्मणजन्मावच्छेदकपरस्परक्षणवृत्तिप्रागभावप्रध्वंसाभावप्रतियोगिक्षणावच्छिन्नजन्मत्वम् । इत्थं च परत्वापरत्वयोर्गुणान्तरत्वाङ्गीकारे मध्यत्वस्याऽपि तद्व्यापकत्वात्तदापत्तिरावश्यकी, यतः 'इदमनयोरन्तरालम्' इत्यत्रैकैकावध्यपेक्षयाऽवध्यन्तरे संयुक्तसंयोगादिभूयस्त्वबुद्धावन्यत्राऽपि संयुक्तसंयोगाद्यल्पीयस्त्वमतेरावश्यकत्वात् । न च परत्वापरत्वाभ्यामेव निर्वाहः । मध्यत्वस्योभयसापेक्षत्वेनैकैकसापेक्षपरत्वापरत्वाभ्यां विलक्षणत्वात्

(१) अधस्त्वलक्षणनिर्वचनसमयोक्तरीत्या ।

यत्तु दिक्कालयोः प्रसाधनाय प्रमाणमुक्तं न्यायलीलावतीकृद्भिर्वल्लभाचार्यैः—परममहत्परिमाणसामान्यं विशेषगुणशून्यद्रव्याधिकरणकानेकव्यक्तिवृत्ति, परिमाणतारतम्यविश्रान्तिविषयजातित्वात्, अणुत्वन्ववत्(१)। तथा विवादाध्यासितान्यव्यापकद्रव्याणि युगपद्विशेषगुणशून्यानेकद्रव्यसंसर्गीणि, द्रव्यत्वादात्मवदिति(२)। आद्यं च दिगादेः सिद्धावेव प्रत्येकं तदनेकत्वसाधकम्।

तदुक्तं वर्द्धमानप्रकाशकृद्भिः शङ्करभगीरथोपाध्यायैः–दिगादेः सिद्धावेव तदनेकत्वसिद्ध्यर्थमस्याऽनुमानस्याऽवतार इति। अन्यथैकैकदिक्कालाद्यनेकव्यक्तिसिद्ध्याऽर्थान्तरम्। (३)दिगाद्यसिद्धिनिबन्धनसाध्याप्रसिद्धिर्वा। न च तथाप्यन्यतरानेकत्वसिद्ध्याऽर्थान्तरम्। स्वाश्रयीभूत—विशेषगुणासमानाधिकरण—दिगवृत्ति—परिमाण—भिन्न—विशेषगुणासमानाधिकरण—कालावृत्ति–(अनेक–)परिमाण—वृत्तित्वस्य साध्यत्वात्। एतेन 'तादृशमहत्त्वादेकद्रव्यसिद्ध्याऽर्थान्तरम्'इति परास्तमिति(४)।

(१) अत्र मनोऽवच्छेदेन व्याप्तिग्रहः।

(२) आत्मनि तादृशेन द्रव्येण मनोरूपेण संसर्गसत्त्वाद् दृष्टान्तसिद्धिरिति द्रष्टव्यम्।

(३) स्वाश्रयीभूतेत्यादिवक्ष्यमाणनिरुक्तिं दिगादिघटितामभिप्रेत्योक्तं दिगादीत्यादि।

(४) स्वाश्रयीभूतात् दिगवृत्तेर्विशेषगुणासमानाधिकरणात् परिमाणाद्भिन्नं यत् विशेषगुणासमानाधिकरणं कालावृत्ति परिमाणं तद्वृत्तित्वस्येत्यर्थः। अत्र च दिगवृत्तितादृशकालपरिमाणभिन्ने अर्थात्–दिग्वृत्तौ कालावृत्तित्वसिद्ध्या दिक्कालयोर्भेदः सिद्ध इति भावः। स्वाश्रयीभूतविशेषगुणासमानाधिकरणतन्मनोऽणुत्वभिन्नविशेषगुणासमानाधिकरणकालावृत्त्येतन्मनोऽणुत्ववृत्तित्वस्य दृष्टान्ते सत्त्वाद्व्याप्तिग्रहः, सामान्यभेदस्याऽनिविष्टत्वात्। अन्यथा कालसिद्धेः प्राक् 'दिगेव कालः'इत्यपि वक्तुं शक्यतया तयोरभेदेनाऽर्थान्तरं स्यात्। एतदेवोक्तमेतेनेत्यादिना। अत्र स्वत्वं पक्षदृष्टान्तसाधारणम्।

दीधितिकृतस्तु—विशेषगुणशून्य—स्वाश्रयाधिकरण—निष्ठान्योन्याभावप्रतियोगितावच्छेदकविशेषगुणशून्य—वृत्तिवृत्तीत्यर्थ इत्याहुः(१)। अत्राऽपि दिगाद्यसिद्धिनिबन्धनदोषनिरासाय दिगादिसिद्धिरावश्यकी। तारतम्येत्यादेरनित्यावृत्तिपरिमाणवृत्तिजातित्वात्, नित्यपरिमाणवृत्तिजातित्वाद्वेत्यत्र तात्पर्यम्। समवायरूपवृत्तिलाभाय—जातीति।

तत्तदणुत्ववत्वादौ व्यभिचारवारणाय—जातीत्यन्ये।

(२)एवमप्येकैकादिगादिसिद्ध्याऽर्थान्तरं तदवस्थमेव(३)। न च जातित्वानुपपत्त्या नाऽर्थान्तरमिति वाच्यम्। ईश्वरादेर्महत्परिमाणान्यादाय जातित्वोपपत्तेः। न च मूलेऽनेकेति निवेशादत्रत्यमपि परिमाणपदमनेकत्वेन विशेषणीयमिति वाच्यम्। अनेकत्वं यद्येकत्वानधिकरणत्वम्, तदा सिद्धसाधनात्, अनेकसङ्ख्याधिकरणत्वे तु बाधात्। न च दीधितिकृन्मते एकैकदिगादिसिद्ध्यर्थमेवेदमिति वाच्यम्। विशेषगुणशून्यस्वाश्रयाधिकरणाप्रसिद्ध्या साध्याप्रसिद्धेः। न च मुक्तात्मादि तथा, तदादायाऽर्थान्तरानिवृत्तेः। किं च(४) स्वपदस्य परममहत्परिमाणत्वपरत्वे दृष्टान्तासिद्धिः, अणुपरिमाणत्वपरत्वे बाध इति।

(१) विशेषगुणशून्यं यत् स्वाश्रयाधिकरणं दिक्, तन्निष्ठो यो कालवृत्तिपरिमाणवत्प्रतियोगिकभेदः, तत्प्रतियोगितावच्छेदकं यत्कालवृत्तिपरिमाणं तद्वृत्तीत्यर्थः। अनेनाऽपि कालदिशोर्भेदः सिद्ध्यतीति भावः।

(२) खण्डयति—एवमपीत्यादिना।

(३) लीलावतीकृद्भिः पूर्वापरादिप्रत्ययभेदेन दिशः, अतीतानागतादिप्रत्ययभेदेन च कालस्याऽनेकत्वं स्वीक्रियते। तन्मते उक्तानुमानेन कालदिशोर्भेदसिद्धावपि उक्तानुमानसाधनीयस्य दिगादेरनेकत्वस्याऽसिद्धेरर्थान्तरतेति भावः। दिगादिसाधनं तु पूर्वापरादिप्रत्ययेनैव तैः क्रियत इत्यवधेयम्।

(४) स्वत्वस्याननुगतत्वमनभ्युपेत्येदम्।

'अनुमानोपनीतः(१) कालः प्रत्यक्षे भासते'इति मते चरमं कालसाधकमनुमानमाह—विवादेति । दिगन्यत्वेन साध्यविशेषणान्न सिद्धसाधनमिति वर्द्धमानोपाध्यायाः(२) ।

(३)कालसाधने दिगन्यत्वनिवेशवत् दिक्साधनेऽपि कालान्यत्वनिवेशे न कश्चिद्दोष इत्यपरे ।

(४)कालभिन्नत्वेन दिक्साधने दिग्भिन्नत्वेन च कालसाधने अन्योन्याश्रयः, दिगाद्यन्यत्वानिवेशे चैकद्रव्यसिद्ध्याऽर्थान्तरापत्तिरित्यन्ये ।

अव्यापकद्रव्यमात्राभिधाने मनःसंसर्गेण सिद्धसाधनं स्यादतः—विवादाध्यासितानीति । मनोऽसंसर्गिणीत्यर्थः ।

(५)अत्र केचित्—विशेषगुणशून्यैकद्रव्यमात्रसंसर्गित्वे साध्ये विशेषणाप्रसिद्धिः । तादृशैकैकद्रव्यसंसर्गित्वे साध्ये मनः संसर्गित्वेन सिद्धसाधनम् । न च मनःसंसर्गराहित्यस्य पक्षतावच्छेदकत्वादिदमसङ्गतमिति वाच्यम् । तन्निश्चायकाभावेनाऽज्ञान-

( १ ) ज्ञानलक्षणप्रत्यासत्त्येत्यर्थः

( २ ) इदमत्र तात्पर्यम् । लीलावतीकृता दिक्कालयोः प्रसाधनं तावत्प्रत्यक्षेणैव कृतम् । तत्र कालस्याऽप्रत्यक्षत्वाङ्गीकर्त्तृकमते कालसाधनाय 'विवाद—'इत्यादिकमनुमानं तैरुपन्यस्तम् । तत्र च दिशमादाय सिद्धसाधनात् दिगन्यत्वेन साध्यं विशेषणीयमिति । दिक् च पूर्वं प्रत्यक्षेण प्रसाधितेति भावः ।

( ३ ) कालवद्दिशोऽप्यप्रत्यक्षत्वाद्दिशः प्रत्यक्षेण प्रसाधनमनुचितमिति वदतां केषाञ्चिन्मतमाह—कालेति । तथा च कालानुमाने दिगन्यत्वं, दिगनुमाने च कालान्यत्वं विशेषणं दत्त्वा कालदिशौ प्रागुक्तानुमानेन प्रसाधनीयाविति तद्हृदयम् ।

( ४ ) वर्द्धमानोपाध्यायोक्त्यनुसारेण कालस्याऽप्रत्यक्षत्वं, दिशः प्रत्यक्षत्वं च स्वीकृत्यैव ग्रन्थः सङ्गमनीय इति वदतां तदनुसारिणां मतमाह—कालेति ।

( ५ ) तदेतत्खण्डयति—अत्रेत्यादिना ।

रूपाश्रयासिद्धेः । न च मनसां शरीराद्यवच्छेदेनाऽवस्थाननिश्चयाददृष्टादौ तदसंसर्गित्वनिश्चयः सुलभ एवेति वाच्यम् । मुक्तमनसामपि सम्भवेन तथा नियमासम्भवात् । यत्किञ्चिदेकमनःसंसर्गराहित्यस्य च तथात्वे मनोन्तरसंसर्गमादाय सिद्धसाधनतादवस्थ्यात् । न च विशेषगुणशून्यदिगन्यद्रव्यसंसर्गित्वमात्रं साध्यम्, (१)लाघवाचैककालसिद्धिरिति वाच्यम् । नानात्वेऽपि मनसां क्लृप्तत्वेनैकत्वलाघवस्याऽकिञ्चित्करत्वादित्याहुः ।

प्रत्यक्तत्त्वप्रदीपे चित्सुखाचार्यास्तु–'तदयुक्तम् । अन्तरेणाऽपि दिक्कालौ व्यापक-पञ्चाशद्वर्ण(२)द्रव्यप्रसाधनेनाऽर्थान्तरत्वात् । वेदान्तिनं प्रति दृष्टान्तस्य साध्यविकलत्वाच्च । मनसो विशेषगुणशून्यत्वे हि तद्गताणुत्वस्य विशेषगुणविधुरद्रव्याधिकरणकानेकव्यक्तिवृत्तित्वम्, आत्मनश्च युगपद्विशेषगुणशून्यद्रव्यसंसर्गित्वञ्च भवेत्, तच्च वेदान्तिनं प्रत्यसिद्धम्, मनसोऽपि विशेषगुणवत्त्वात् । न च तत्र मानाभावः, मूर्त्तत्वस्यैव तत्त्वात् । न च विशेषगुणवत्त्वे द्रव्यारम्भकत्वमुपाधिः, घटादिष्वन्त्यावयविषु व्यभिचारात् । न च द्रव्यारम्भकवृत्तिद्रव्यत्वावान्तरजातिमत्त्वमुपाधिः, आत्माकाशयोर्व्यभिचारात् । न च बाह्येन्द्रियग्राह्यविशेषगुणवत्त्वम्, भवदभिमतात्मनि व्यभिचारात् । न वा भूतात्मनोरन्यतरत्वमुपाधिः, वेदान्तिनं प्रति तमसि साध्याव्याप्तेः । "कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव"इति मनसो विशेषगुणवत्त्वश्रुतेश्च । न च कामादीनां निमित्तकारणत्वान्मनसस्तथा व्यपदेशः, मुख्ये बाधकाभावात् । निमित्तनैमित्तिकत्वमात्रेण सामानाधिकरण्यश्रवणानुपपत्तेश्च । न हि भवति 'कुलालो घटः'इति

(१) नन्वेवं मनःसंसर्गमादाय सिद्धसाधनमित्यत आह—लाघवादिति । अनन्तमनःसंसर्गकल्पनापेक्षयेत्यर्थः ।

(२) वेदान्त्यादिकानां मते शब्दस्यद्रव्यत्वमितिभावः ।

सामानाधिकरण्यम् । एतेन मानमनोहरप्रयोगोऽप्यपास्तः—विवादाध्यासितं कार्यं विशेषगुणरहितद्रव्याभ्यां जन्यते, कार्यत्वात्, अन्तःकरणद्वयसंयोगवदिति, तत्राऽपि दृष्टान्तस्य साध्यविकलत्वात्। 'विवादाध्यासितं विशेषगुणरहितद्रव्यैर्जन्यते'इति बहुवचनप्रक्षेपेणाऽपि प्रयोगसम्भवात्, अतिरिक्तद्रव्यसाधकतया समानयोगक्षेमत्वाच्च । न च दृष्टान्तासिद्धिः, अन्तःकरणाधिकरणापेक्षाबुद्धिजन्यबहुत्वस्यैव दृष्टान्तत्वोपपत्तेः । विवादाध्यासितं विशेषगुणरहितद्रव्याभ्यां न जन्यते,अन्तःकरणाकार्यत्वात्,आकाशवदिति सत्प्रतिपक्षितत्त्वाच्च । न च कार्यत्वमुपाधिः, वेदान्तिवादिभिराकाशस्याऽपि कार्यताङ्गीकारादित्याहुः ।

यत्तु लीलावतीचरमानुमानदोषनिरासायोक्तं वर्द्धमानोपाध्यायैः—तन्त्वनाश्रितानि कार्य्याणि तन्त्वाश्रितकार्याधिकरणजन्यानि,कार्य्यत्वात्, सम्प्रतिपन्नव(१)दित्यत्र तात्पर्यमिति । अत्र पक्षभिन्नस्यैव दृष्टान्ततालाभाय, पक्षतावच्छेदकैक्ये चांशतः सिद्धसाधनवारणाय पक्षविशेषणम् । कार्याधिकरणमात्माऽपीति तज्जन्यत्ववारणाय तन्त्वाश्रितत्वं कार्यविशेषणम् । अव्यासज्यवृत्तित्वमपि कार्यविशेषणम्, अतो न संयोगमादायोक्तदोषतादवस्थ्यम् । दिगन्यत्वमप्यधिकरणविशेषणम्, अतो न सिद्धसाधनम् । न च तन्तुनाऽर्थान्तरम्, बाधादेव तदसम्भवादिति,

तन्न। एतस्याऽनुमानान्तरत्वात्,प्रत्यक्षबाधाच्च, तन्त्ववृत्तित्वेन सत्प्रतिपक्षितत्वात्, तन्तुसमवेतत्वस्योपाधित्वाच्च । न च कार्यत्वस्यैव तत्प्रयोजकत्वेन व्याप्यतया न साध्यव्यापकत्वमिति वाच्यम्(२) । कार्यत्वस्यैव तद्व्यभिचारित्वात्(३) । एवमन्यान्य-

( १ ) पटवदित्यर्थः ।

( २ ) यदि कार्यत्वस्यैव व्याप्यत्वम्, तदा कैव कथा कार्यत्वव्याप्यतन्तुसमवेतत्वस्येति भावः ।

( ३ ) घटादौ व्यभिचारः प्रत्यक्षेणैव ।

ष्यनुमानानि सुधीभिर्विभावनीयानीति ।

ननु धर्मधर्म्यभेदाङ्गीकारे चक्षुषा धर्मिणि गृह्यमाणे धर्म्यभिन्नत्वात्सर्वधर्माणां स्पर्शादीनामपि चाक्षुषत्वापत्तिरिति वाच्यम् । धर्माणां तत्सम्बन्धस्य च पृथक्जन्माननुभवेन पारतन्त्र्यानुपपत्त्या च 'शुक्लो घटः'इत्याद्यभेदप्रतीत्या चाऽभेदे सिद्धे रूपादेश्चक्षुरादिग्राह्यत्वनियमकल्पनेनोक्तदोषाभावात् । धर्मधर्मिणोर्भेदवादिमतेऽपि योग्यव्यक्तिवृत्तिधर्मत्वेन गन्धादेरपि चक्षुर्योग्यत्वाच्चाक्षुषत्ववारणाय तन्नियमस्याऽऽवश्यकत्वाच्च । स्वरूपसम्बन्धेनैवोपपत्तौ समवायाकल्पनप्रयुक्तलाघवाच्च ।

समवायलक्षणप्रमाणयोरभावाच्च । तथा हि—न तावत्समवायत्वं जातिः, तदेकत्वपक्षे तदयोगात् । नानात्वपक्षेऽपि सम्बन्धाभावेन समवाये जातेरयोगात्, सम्बन्धाङ्गीकारे चाऽनवस्थानात् । नाऽपि नित्यसम्बन्धत्वम्, जन्यसमवायपक्षे तदसम्भवात् । नित्यसमवायपक्षेऽपि वाच्यवाचकभावसम्बन्धे, ईश्वरज्ञानपरमाण्वादिसम्बन्धे विषयताख्येऽतिव्याप्तेश्च, स्वरूपसम्बन्धातिव्याप्तेश्च। अत एवाऽयुतसिद्धत्वादिकमपि परास्तम् । न च सम्बन्धिभिन्नत्वेन विशेषणीयमिति वाच्यम्। समवायस्याऽपि स्वात्मकस्वरूपसम्बन्धित्वेनाऽसम्भवात् । नानात्वपक्षे चाऽननुगतत्वाच्च(१) । स्वपदस्य(२) समवायपरत्वेन स्वलक्षणे स्वस्य निवेशेऽन्योन्याश्रयाच्च । यत्तु—

'तावेवाऽयुतसिद्धौ द्वौ विज्ञातव्यौ ययोर्द्वयोः ।
अवश्यमेकमपराश्रितमेवाऽवतिष्ठते-'इति ।

अस्य चाऽयमर्थः—ययोरेकं स्वनाशपूर्वक्षणपर्यन्तमपराश्रितमेव तिष्ठति, तत्त्वमयुतसिद्धत्वम् । तन्तुनाशात्पटनाशस्थले नाशक्षणे पटोऽनाश्रित एव तिष्ठति, तत्राऽव्याप्तिवारणाय स्वनाशकपू-

(१) समावायत्वस्येत्यर्थः ।
(२) स्वभिन्नसम्बन्धिभिन्नत्वेन विशेषणीयत्वइत्यर्थः ।

र्वेक्षणपर्यन्तनिवेश इति,

तन्न । घटत्वजातेरीश्वरतज्ज्ञानयोरात्मात्मत्वयोर्नित्यद्रव्यविशेषयोर्नित्यत्वेन स्वनाशाप्रसिद्ध्याऽव्याप्तेः । जन्यस्य नाशपर्यन्तं दिक्कालयोः सत्त्वेन तयोः, आत्मसुखादिप्रागभावयोश्चाऽतिव्याप्तेः। चक्रे एवोत्पन्नविनष्टघटस्य चक्रेण सह, भूतलादावेवोत्पन्नविनष्टखण्डपटादीनां भूतलेन सह, एवमन्यत्राऽप्यतिव्याप्तेश्च ।

महादेवपुणतानकरास्तु–विशेषणतान्यसाक्षात्सम्बन्धेन स्वाश्रयाश्रयिभावव्याप्यस्वोभयकालकत्वमयुतसिद्धत्वम्(१)। तन्तुपटादीनां यदा कालस्तदा तेषामाश्रयाश्रयिभावनियमेन तदुभयकालस्य तद्व्याप्यत्वमस्तीति लक्षणसमन्वयः । न त्वेवं तुरीपटादीनाम्, इति न तत्राऽतिव्याप्तिः। पटोत्पत्तिपूर्वं तन्तुसत्वात्तदानीमाश्रयाश्रयिभावासत्वेनाऽसम्भववारणाय–उभयेति । चक्रपटोभयकाले यत्किञ्चिदाश्रयाश्रयिभावसत्त्वादतिप्रसङ्गवारणाय–स्वेत्युक्तम् । वायुरूपाभावादीनां तद्वारणाय–विशेषणतान्यसम्बन्धेनेति । अत एव कालदिशोर्घटादिना नाऽयुतसिद्धत्वम् । विशेषणातान्यसम्बन्धेनाऽऽश्रयाश्रयिभावविरहात् । चक्रे एवोत्पन्नविनष्टघटादेश्चक्रेण स्वसंयुक्तकपालसमवेतत्वसम्बन्धेनाऽऽश्रयाश्रयिभावसत्त्वादतिप्रसङ्गवारणाय-साक्षादितीत्याहुः,

तन्न। व्याप्यव्यापकतायाः कालिकसम्बन्धावच्छिन्नाया निवेशे घटभूतलाधिकरणतरणिपरिस्पन्दरूपखण्डकालाधिकरणे महाकाले कालिकसम्बन्धेन घटभूतलाश्रयाश्रयिभावस्याऽपि सत्त्वेनाऽतिव्याप्तेः । घटभूतलाधिकरणमहाकालोपादाने कालिकसम्बन्धेन तदधिकरणाप्रसिद्ध्याऽसम्भवापत्तेः । न च यदा यदा घटभूतलाधिकरणखण्डकालस्तदा तदाऽऽश्रयाश्रयिभावाभावेन नाऽतिव्याप्ति-

(१) स्वाश्रयाश्रयिभावव्याप्यः–स्वोभयकालो यस्य स्वस्य–येन स्वेन निरूपितः, तत्त्वमित्यर्थः ।

रिति वाच्यम् । एकस्य यत्तच्छब्दार्थस्य खण्डकालातिरिक्तस्य महाकालस्यैव सम्भवे तत्र घटभूतलाश्रयाश्रयिभावसत्त्वेन व्यभिचाराभावात् ।(१) स्वोभयस्य स्वाश्रयाश्रयिभावव्याप्यत्वनिवेशेनैवोपपत्तौ स्वोभयाधिकरणकालनिवेशस्य वैयर्थ्याच्च(२) । न च तावन्मात्रमेवाऽस्तु । (३)ईश्वरज्ञानपरमाण्वोरतिव्याप्तेः ।(४)किं च विशेषणतान्यसाक्षात्सम्बन्धपदेन किं विवक्षितम्?—समवायः, संयोगादिर्वा? नाद्यः । स्वलक्षणे स्वानिवेशेनाऽऽत्माश्रयाद्यापत्तेः । न द्वितीयः । घटभूतलादावतिव्याप्तेः ।

यदपि संयोगविभागायोग्यत्वमयुतसिद्धत्वम्, तदपि न । देवदत्तस्य हस्तादीनामयुतसिद्ध्यभावप्रसङ्गात् । तस्मान्न लक्षणं सुवचम् ।

नाऽपि तत्र मानम् । (५)नाऽपि 'इह तन्तुषु पटसमवायः' इति

(१) ननु स्वाश्रयाश्रयिभावव्याप्यस्वोभयकालकत्वमित्यत्र स्वोभयकालाधिकरणत्वस्य खण्डकालेऽपि सत्त्वाद्घटभूतलाश्रये तस्मिन् सर्वस्मिन्नपि स्वाश्रयाश्रयिभावाभावादेव नाऽतिव्याप्तिः । न च स्वस्मिन्नपि स्वस्य वृत्तित्वं स्वोभयकालरूपखण्डकालाश्रयत्वस्य खण्डकाले स्वीकर्तृमते स्यादिति शङ्क्यम् । इष्टापत्तेरित्याशयेन दूषणान्तरमाह–स्वोभयस्येत्यादि ।

(२) लक्षणस्य हि प्रयोजनमितरभेदसाधनम् । एवञ्चाऽयुतसिद्धत्वलक्षणस्याऽपि भवदुक्तस्येतरभेदसाधकत्वमावश्यकम् । तत्र व्यभिचारावारकविशेषणाघटितहेतोरेव व्याप्यतया प्रयोक्तुं शक्यत्वेन लाघवात् तस्यैव व्याप्यत्वेन तादृश—(व्यर्थ-विशेषणघटित-)हेतोर्व्याप्यत्वासिद्धत्वात् । हेतौ व्यर्थविशेषणघटितत्वस्यैव व्याप्यत्वासिद्धिपदार्थत्वादित्याशयः ।

(३) यदेश्वरज्ञानपरमाणू, तदा विषयविषयिभावरूपविशेषणतान्यसाक्षात्सम्बन्धेन तयोराश्रयाश्रयिभावः, इति तयोरतिव्याप्तिरित्याह–ईश्वरेति ।

(४) ननु यदेश्वरज्ञानपरमाणू, तदा तयोर्विषयविषयिभावेनाऽऽधाराधेयभावापरनामकाश्रयाश्रयिभावोनाऽङ्गीक्रियते, विषयितादेर्वृत्त्यनियामकत्वादित्यत आह–किञ्चेति ।

(५) मानाभावमेवोपपादयति—नाऽपीहेत्यादिना ।

प्रत्यक्षम् । तस्य परैः कल्पितत्वात् । नाऽपि 'इह तन्तुषु पटः'इति प्रत्यक्षम् । तस्याऽऽधाराधेयविशेषणविशेष्यभावादिविषयकत्वात् । अन्यथा 'भूतले घटः'इत्यादेरपि तत्त्वापातात्(१) । नापि 'शुक्लः पटः'इति प्रत्यक्षं तत्र मानम् । परमते सामानाधिकरण्यप्रतीतेरभेदविषयकत्वस्य 'घटो द्रव्यम्'इत्यादौ क्लृप्तत्वात् । न च 'शुक्लः'इत्यस्य शुक्लवद्विषयकतया सम्बन्धविषयकत्वे समवायविषयकत्वमेवेति वाच्यम् । 'घटवद्भूतलम्'इतिज्ञानतुल्यतया संयोगविषयकत्वव्यतिरेकानिश्चयात् । 'घटाभाववद्भूतलम्'इतिज्ञानवत्स्वरूपसम्बन्धविषयकत्वोपपत्तेश्च ।

चित्सुखाचार्य्यास्तु—'इह तन्तुषु पटः'इतिप्रत्यक्षं न तत्र मानम् । विकल्पासहत्वात् । समवायो ह्याऽऽधारबुद्धिं कुर्यात्, आधेयबुद्धिं वा, उभयबुद्धिं वा, सर्वथाऽपि नोपपद्यते । तन्तुपटयोरुभयोरप्याधारबुद्धेः, आधेयबुद्धेः, उभयबुद्धेश्चाऽविशेषेण प्रसङ्गात्(२) । 'जातिजातिमन्तौ मिथः सम्बद्धौ'इत्यस्त्येवाऽनुभवान्तरमिति चेत्, मैवम् । विकल्पासहत्वात् । तथा हि—अस्मिन्ननुभवे समवायस्तदीयत्वेन, अन्यदीयत्वेन वा, स्वरूपेण वा(३) प्रथते इति वक्तव्यम् । नाऽऽद्यः । तदीयत्वस्य(४) सम्बन्धान्तरायत्तत्वेनाऽनवस्थापातात् । न हि द्वितीयः । अन्यत्रैव सम्बन्धबोधप्रसङ्गात् । न तृतीयः । क्वचिदपि सम्बन्धप्रत्ययानुपपत्तेः । असत्येव सम्बन्धे(५) तदीयत्वमनुभवसिद्धमिति चेन्न । जात्यादेरप्यसत्येव सम्बन्धे त-

(१) इत्यादिप्रतीतेरपि समवायविषयकत्वापातात् ।

(२) समवायस्य संसर्गतया द्विनिष्ठत्वेन 'इह पटे समवायेन तन्तवः'इत्यपि धीः 'इह तन्तुषु पटः'इति धीरिव स्यादिति भावः ।

(३) जातिजातिमत्सम्बन्धित्वेन, तदन्यसम्बन्धित्वेन वा, स्वतन्त्रतया वेति भावः ।

(४) तन्निरूपितसम्बन्धवत्स्वरूपतयेति शेषः ।

(५) जातिजातिमद्भ्यामित्यर्थः ।

दीयत्वानुभवप्रसङ्गात्, असत्ख्यातिप्रसङ्गाच्च(१)। (२)असत्येव सम्बन्धे सम्बन्धिभ्यां निरूपणात्(३) तदीयत्वव्यवहारे जातावपि सम्बन्धमन्तरेण व्यक्त्या(४) निरूपणात्तदीयत्वव्यवहारप्रसङ्ग इत्याहुः।

न च 'शुक्लो घटः, इह कपाले घटः'इत्यादिप्रत्ययाः विशेषणविशेष्यसम्बन्धविषयाः, विशिष्टप्रत्ययत्वात्, दण्डीपुरुषः, इह कुण्डे बदराणीतिप्रत्ययवदित्यनुमानमिति वाच्यम्। स्वरूपसम्बन्धेनाऽर्थान्तरत्वात्। स्वरूपातिरिक्तेति विशेषणदाने चाऽभावविशिष्टबुद्धौ व्यभिचारात्। न च स्वरूपाणामानन्त्येन गौरवेण लाघवादेक एव सम्बन्धः सिद्ध्यति, स एव च समवाय(५) इति वाच्यम्। धर्मधर्म्युभयकल्पनापेक्षया क्लृप्तस्वरूपेषु सम्बन्धत्वरूपधर्मकल्पनाया एव न्याय्यत्वात्(६)। अन्यथाऽभावविशिष्टबुद्धिपक्षीकरणे तत्राऽपि समवायसिद्ध्यापातात्। किञ्च तस्य जन्यत्वपक्षे लाघवानवकाशात्। भावकार्य्यस्य समवायिजन्यत्वनियमेनाऽनवस्थानाच्च(७)। तदनियमे

(१) तदीयत्वम्–तन्निरूपितसम्बन्धवत्त्वम्। प्रकृते च तत्पदेन जातिजातिमन्तौ ग्राह्यौ। तथा च जातिजातिमन्निरूपितसम्बन्धवत्त्वाभाववति समवाये तदीयत्वप्रकारकज्ञानस्य सत्त्वादित्यर्थः। असत्ख्यातिः–तदभाववति तत्प्रकारकज्ञानम्।

(२) 'जात्यादेरपि–'इत्यादिहेतुमेव स्पष्टयति–असत्येवेत्यादिना।

(३) समवाये इति शेषः।

(४) जातिमता।

(५) "यद्धर्मे व्यापकतावच्छेदकत्वज्ञानम्, तद्धर्मावच्छिन्नाविधेयताकानुमितिः"इति नियमेऽपि सामान्यतोदृष्टानुमाने पक्षतासहकृतेनेतरविशेषबाधनिश्चयेन, लाघवज्ञानेन वा विशेषधर्मावच्छिन्नप्रकारताकानुमितेरप्यभ्युपगमादित्यर्थः।

(६) क्लृप्तपदार्थातिरिक्ततया समवायाङ्गीकारे समवायत्वरूपधर्मतदाश्रयीभूतसमवायरूपधर्मिकल्पनापेक्षया तव समवायत्वादिरूपधर्मेण समवायादिरूपधर्मिणः संसर्गस्य क्लृप्तपदार्थस्वरूपतया कल्पनायामिव क्लृप्तेष्वेव संसर्गत्वरूपधर्मकल्पनायां लाघवादित्यर्थः।

(७) समवायः स्वसमवायिनि समवायेनैवोत्पत्स्यते, सोऽपि तथेत्यनवस्थेति भावः।

च घटादावपि तदनापातात् । नित्यत्वपक्षे सम्बन्धितन्त्रतया तदभावे सम्बन्धत्वभङ्गात्(१) । प्रतियोग्यनुयोगिनोऽनित्यत्वे तन्नित्यत्वस्याऽनुभवबाधितत्वाच्च । अन्यथा संयोगादिसम्बन्धमात्रस्य नित्यत्वापत्तेः । किञ्च समवायस्य सामान्यानां च देशावच्छिन्नत्वं स्वीक्रियते, न वा । नाऽऽद्यः । तेषामद्रव्यत्वेन गमनासम्भवेऽवच्छेदकदेशातिरिक्तदेशे उत्पन्नव्यक्तिष्ववस्थानाभावप्रसङ्गात् । नाऽन्त्यः । सर्वत्राऽवस्थाने सर्वव्यक्तिसम्बन्धापत्त्या "अभावादेर्न समवायः, सामान्यं द्विविधम्-परमपरं च, सत्त्ववत्त्वं द्रव्यादित्रयाणाम्, सामान्यादीनां सामान्यराहित्यम्"इत्यादिविभागानुपपत्तेः । सर्वस्य सर्वात्मतापत्तीत्यापत्तेश्च । न च व्यञ्जकाभावान्न तथेति वाच्यम् । (२)आद्यदोषस्य

(१) समवायस्य नित्यत्वपक्षे तत्सम्बन्धिनोऽभावकाले सम्बन्धत्वं न स्यात्, सम्बन्धमात्रस्यैकप्रतियोगिकत्वापरानुयोगिकत्वनियमादिति भावः ।

(२) अयं भावः-"घटत्वादिरूपा जातिर्घटादावेव समवायेन तिष्ठति । समवायस्तु स्वस्वरूपेण स्वस्याऽनुयोगिनि प्रतियोगिनि च, नाऽन्यत्र । अन्यथा सर्वं सर्वं स्यात्"इति ते मतम् । न च तावन्यत्र तदन्यसम्बन्धेन स्थिताविति वाच्यम् । विकल्पासहत्वात् । तथा हि-स सम्बन्धः-समवायः, संयोगः, कालिकः,स्वरूपं वा । नाद्यौ । त्वयाऽस्वीकृतत्वात् । न तृतीयः । न च कालिकसम्बन्धेन स्वाश्रयतोऽन्यत्र सत्त्वे जातिसमवाययोर्देशावच्छिन्नत्वेन सह कश्चन विरोध इति वक्तुं युक्तम् । अन्यथा घटेऽपि देशावच्छिन्नत्वं न स्यात् । तथा चाऽवच्छेदकदेशातिरिक्तदेशे तयोरद्रव्यत्वेन द्रव्येतरावृत्तितया पूर्वोक्तनवोत्पन्नेष्ववस्थानाभावरूपदोषप्रसङ्ग इति । नान्त्यः । तत्स्वरूपस्य दुर्वचत्वात् । तथा हि-तत्स्वरूपमधिकरणस्य स्वस्य वा । नाऽऽद्यस्य । त्वयाऽनभ्युपगमात् । नान्त्यस्य वा । युक्त्या समवायेन वृत्तित्वप्रसङ्गात् । युक्तिश्च-घटादीनामन्तरे(पटादौ) घटत्वादिकं समवायसम्बन्धावच्छिन्नवृत्तित्वशालि, समवायेनाऽनुस्यूतत्वे (घटादिषु) सति तदन्तरे विद्यमानत्वात् । यथा—अनेक-पुष्पेषु संयोगेनाऽनुस्यूतं सत् तदन्तरे विद्यमानं सूत्रम् । यत् अनेकेषु येन सम्बन्धेनाऽनुस्यूतं सत् तदन्तरे विद्यमानम्, तत् तेन सम्बन्धेन तदन्तरे विद्यमानम्, इत्यत्र सामान्यमुखी

दुरुद्धरत्वात्। किञ्च सिद्धे प्रमाणतः सर्वत्र सम्बन्धे स्वभावभेदावलम्बनम्, नतु स्वभाववादप्रादुर्भावरिकयैव वस्तुसिद्धिः। अन्यथा 'पवनादावपि रूपादिकमस्तु स्वभावभेदादेवाप्रतीतिः'इत्यनर्गलगर्जनस्य कः प्रतीकारः स्यात्? एतत्सर्वं मनसि निधायोक्तं बाह्यैः—

नाऽऽयाति न च तत्रासीदस्ति पश्चान्न चांशवत्।
जहाति पूर्वं नाऽऽधारमहो व्यसनसन्ततिः! इति॥

न च सामान्यानङ्गीकारे(१)घटोऽयमित्याद्यनुगतव्यवहारानुपपत्तिरिति वाच्यम्। व्यक्तिविशेषतादात्म्यापन्नप्रधानेनैव तदुपपत्तेः। घटत्वादिकमपि परमते व्यक्तिविशेषसमवेतमेव नियामकम्, न तु स्वरूपेण। पटादावपि सत्त्वात्(२)। अत एव 'नायाति' इत्यादिरपि न दोषः। (३)तस्याऽधिष्ठानत्वात्। न च खण्डमुण्डादिविलक्षणव्याप्तिः। न चाऽप्रयोजकम्। सर्वत्र समवायेनैव वृत्तित्वकल्पने लाघवात्। न च तथा सति पटाद्यवच्छेदेनाऽपि घटत्वादेः प्रत्यक्षं स्यात्। न ह्येकत्र येन सम्बन्धेन यस्य प्रत्यक्षम्, तेन सम्बन्धेनाऽन्यत्राऽपि तस्य सत्त्वे प्रत्यक्षम्। अन्यथा समवायस्य रूपिद्रव्यावच्छेदेन प्रत्यक्षे तद्भिन्नेऽपि प्रत्यक्षं स्यात्। विषयतया घटत्वादेः प्रत्यक्षं प्रति स्वसमवेतत्वादिना पटादेः प्रतिबन्धकत्वकल्पनाच्च। कल्पनाया अनुभवानुसारित्वात्। अत एव 'सर्वं सर्वात्मकं स्यात्'इति परास्तम्। न चेष्टमेव। सिद्धान्तव्याघातात्। घटादेरन्यत्र न स्त एव ताविति चेत्, तयोर्देशावच्छिन्नत्वस्याऽऽवश्यकतया चोत्पत्स्यमानघटादिषु जातिसमवायौ कथं सम्पत्स्येते। न च तावाकाशवद्विभू, अपि तु विभुत्वविरुद्धवृत्तिमत्त्वधर्मवन्तौ। एतेन 'परस्परं विभुद्वयवत् तत्र तत्राऽसम्बद्धावेव'इति परास्तम्। तस्मात्सूक्तम् 'आद्यदोषस्य दुरुद्धरत्वात्'इति।

(१) परस्परं व्यक्तिभेदेऽपि 'घटोऽयम्' 'घटोऽयम्'इति समानाकारकव्यवहार इति भावः।

(२) यथा सामान्यं स्वसमवायितोऽन्यत्राऽपि स्वस्वरूपेण विद्यते, तथाऽपि घटादिव्यक्तिसमवेतं सदेव 'घटः' इत्यादिव्यवहारनिमित्तम्, तथा सर्वत्र प्रधानस्य सत्त्वेऽपि घटादिव्यक्तितादात्म्यापन्नमेव प्रधानं घटादिव्यवहारनिमित्तमित्यर्थः।

(३) प्रधानस्य।

तमिममर्थं प्रामाणिकं कर्तुमभिमताः प्रमाणभेदा लक्षणीयाः । न च सामान्यलक्षणमन्तरेण शक्यते विशेषलक्षणं कर्तुम्, इति प्रमाणसामान्यं तावल्लक्षयति—

दृष्टमनुमानमाप्तवचनं च, सर्वप्रमाणसिद्धत्वात् ।
त्रिविधं प्रमाणमिष्टं, प्रमेयसिद्धिः प्रमाणाद्धि ॥ ४ ॥

"प्रमाणमिष्टम्" इति । अत्र च 'प्रमाणम्'इति समाख्या लक्ष्यपदम् । तन्निर्वचनं च लक्षणम् । प्रमीयतेऽनेनेति निर्वचनात् प्रमां प्रति करणत्वमव-

नानाव्यक्तीनां परस्परव्यभिचारेण व्यञ्जकत्वासम्भवे एकस्यैव कस्यचिदुपाधेर्व्यञ्जकत्वं वाच्यम् । तथा च तुल्यन्यायेन तत्राऽपि व्यञ्जकान्तरावश्यकत्वेऽनवस्थापत्तिरिति वाच्यम् । (१)जात्यतिरिक्तवादिमतेऽप्युक्तदोषसाम्यात् । एतेन 'व्यञ्जकचरणशरणावश्यकत्वे जातिकल्पनवैयर्थ्यम्'इति परास्तम् ॥ ३ ॥

(२)उपोद्घातसङ्गतिं दर्शयन्नार्य्यामवतारयति—तमित्यादिना । व्याप्यरूपविशेषस्य व्यापकाधीनत्वादाह । नचेति । 'प्रमाणसामान्यं लक्षयति'इत्युक्तम्, तच्च न सम्भवति । आर्य्यायां लक्षणादर्शनात्, इत्याशङ्क्याऽऽह । अत्रचेति । 'प्रमाणम्'इति समाख्यया—लक्ष्यबोधकं पदमित्यर्थः । स्मृतेरविसंवादिप्रवृत्तिजनकत्वेऽपि व्यावृत्तिव्यवहारान्यतरप्रयोजनाय(३) प्रमात्वस्याऽभिधानात्तद्व्यावृत्तम्—

(१) ये जातिमतिरिक्तत्वेनाऽभ्युपगच्छन्ति, तन्मते—नैय्यायिकमते इत्यर्थः ।

(२) चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः ।

(३) अत्र व्यावृत्तिः-इतरभेदानुमितिः, व्यवहारश्च-'प्रमा' 'प्रमा' इत्यादिव्यवहारानुमितिः । मुग्धं प्रति सम्प्रतिपक्षेन तस्य सिद्धिः कार्या-इयं प्रमात्वेन व्यवहर्त्तव्या, असन्दिग्धाविपरीतानधिगतविषयचित्तवृत्तित्वात्, यन्नैवं तन्नैवम्, यथा—अप्रमा । प्रमाणत्वमिति वक्तव्ये-प्रमात्वकथनं कार्यकारणाभेदेनेति भावः । अन्यथा 'प्रमात्वमाह—असन्दिग्धेत्यादि' इति कथनं व्याहतं स्यात् । असन्दिग्धेत्यादिना वृत्त्यात्मक-प्रमाणस्य निर्वचनात् । अथ वा चक्षुरादेः करणत्वापे-

गम्यते । *तच्चाऽसन्दिग्धाविपरीतानधिगतविषया चित्तवृत्तिः । बोधश्च पौरुषेयः फलं प्रमा, तत्साधनं प्रमाणमिति । एतेन—संशयविपर्ययस्मृतिसाधनेष्वप्रमाणेष्वप्रसङ्गः ॥

प्रमात्वमाह । असन्दिग्धेत्यादि । स्मृतिसाधारणे तु अनधिगतपदं न देयम् । अविपरीतः—अबाधितः । सिद्धान्ते चक्षुरादेः करणत्वाभावादाह । चित्तवृत्तिरिति । 'तत्साधनं प्रमाणम्'इत्यत्राऽन्वेति । प्रमाणस्वरूपमाह । बोधः पौरुषेय इति । चैतन्यप्रकाशस्वरूप इत्यर्थः । ननु चैतन्यप्रकाशस्य नित्यत्वात्कथं प्रमाणफलत्वव्यवहारः ? इत्यत आह । फलं प्रमेति । तथा च चैतन्यप्रकाशस्य नित्यत्वेऽपि तत्तदर्थोपरक्तवृत्तिप्रतिबिम्बाश्रयत्वेन प्रमाणकार्यत्वादित्यर्थः । एतेनेति । असन्दिग्धादिनिवेशनेनेत्यर्थः ।

यत्तु–असन्दिग्धेत्यारभ्य फलमित्यन्तं प्रमालक्षणमिति, तन्न । चित्तवृत्तेः प्रमात्वे इन्द्रियाणां करणत्वापत्तेः ।

यत्तु–चित्तवृत्त्यन्तं 'प्रमाणम्'इत्यत्राऽन्वेति । प्रमामाह । बोधश्चेति । पौरुषेयः–तादृशवृत्तिसंसर्गाच्चिदनुग्रहः(१) ।

क्षया वृत्तौ प्रमात्वं स्वीकृत्य तत् । तथा च सूत्रम् (साङ्ख्य० अ० १ सू० ८७)–"द्वयोरेकतरस्य वाऽप्यसन्निकृष्टार्थपरिच्छित्तिः–प्रमा, तत्साधकतमं यत्, तत् त्रिविधं प्रमाणम्" । द्वयोः—बुद्धिपुरुषयोः । एकतरस्य—तदन्यतरस्य । असन्निकृष्टार्थः–अनधिगतः । परिच्छित्तिः– अवधारणम् । साधकतमम्–करणम् । भावार्थश्च प्रसङ्गादेवाऽस्य वक्ष्यमाणेन 'अत्र' इत्यादिना भाष्येण समीपे (पृ० १२० पं० १४) एव ज्ञातव्य इत्याशयः ।

* तच्च=प्रमाण च ।

(१) चिति प्रतिबिम्बं-चिदनुग्रहः । अस्मिन् मते चक्षुरादिद्वारा निर्गत्य विषयाकारेण परिणतं यत् बुद्धिदर्पणम्, तत्र प्रतिबिम्बितं चैतन्यमेव मुख्यं प्रमाफलं 'घटमहं जानामि'इत्याद्याकारकं 'अयं घटः' इत्याद्याकारकबुद्धिवृत्तिरूपकरणेन जायमानम् । अत्रत्यसिद्धान्तिमते

वदन्तोऽपि । हि–यतः प्रमाणादेव प्रमेयाणां सिद्धिः, अतः प्रमाणं त्रिविधमित्यर्थः, इत्याहुः, तन्न(१)। प्रमेयाणां प्रमाणतः सिद्धेः प्रमाणत्रैविध्यहेतुत्वासम्भवात्, प्रमातृत्वस्य वा । अन्तर्भावाद्यधीनतया तस्यैव (२)त्रैविध्यप्रयोजकत्वात् । ननु प्रमेयव्युत्पादनस्य प्रकृतो-

न्तिमतेऽर्थापत्त्यनुपलब्धी उपमानं चेति त्रीण्यधिकानि, पौराणिकमते तु उपमानार्थापत्त्यनुपलब्धिसम्भवैतिह्यानि पञ्चाऽधिकानीति बोध्यम् ।

(१) 'सर्वप्रमाणसिद्धत्वात्' इत्यत्र 'प्रमेयाणां प्रमाणतः सिद्धेः' इत्यर्थकतया प्रमाणत्रैविध्यहेतुत्वं यत् अभिमतम्, तन्न सम्भवति ।

तथा हि—'प्रमेयाणां प्रमाणतः सिद्धेः'इति हेतुना प्रमाणत्रैविध्यं साक्षात् साध्यते, आहोस्वित् परम्परया वा । न तावदाद्यः, हेतुसाध्ययोर्भिन्नाधिकरणत्वात् । अन्यथा श्वेतः प्रासादः, काकस्य कार्ष्ण्यात्, इत्यप्यनुमानं स्यात् । न द्वितीयः । परम्परयेत्यस्य को ऽर्थः? यदि "यत् यत् प्रमाणतः सिद्धं, तत् तत् प्रमेयम्,"इति व्याप्त्या प्रमाणत्रैविध्यस्यापि प्रमाणसिद्धतया प्रमेयत्वम्, तत्त्रैविध्यप्रमापकं प्रमाणं तु परिशेषादनुमानम्, अस्य हेतुस्त्वन्तर्भावादिरेवेति 'प्रमेयाणां प्रमाणसिद्धेः' अस्यास्ति प्रयोजकत्वम्" एवमर्थः, तदाऽन्तर्भावादेरेव प्रयोजकत्वं, अलं त्वदुक्तस्य प्रयोजकत्वेन । एवं 'प्रमातृसिद्धत्वात्' इत्यनेनापि न हि प्रमाणत्रैविध्यं साधितुं युक्तम् । एते प्रमातार इति यथार्थतया ज्ञानं यदा भवेत्, तदैव तत्सिद्धत्वस्य (तदभ्युपगतत्वस्य) हेतुत्वं स्यात् । तत्तु तदैव, यदा तदीयपदार्थस्य प्रामाणिकत्वं स्यात् । तथा चान्येन प्रमाणेनैव (अन्तर्भूतत्वादिहेतुकानुमानेनैव) प्रमाणत्रैविध्यस्य सिद्धिः । अन्यथाऽन्योन्याश्रयः स्यादिति ।

अपि तु प्रत्यक्षादित्रिके उपमानादेरन्तर्भावस्यैव प्रमाणत्रैविध्यहेतुत्वमित्याह–तन्नेत्यादिना त्रैविध्यप्रयोजकत्वादित्यन्तेन । अनुमानप्रकारस्तु–उपमानादिकं प्रत्यक्षानुमानागमान्यतमम्, प्रत्यक्षाद्यन्तर्भूतत्वात्, यत् यदन्तर्भूतं, तत् तदन्यतमम्–यथा पृथिव्याद्यन्तर्भूतं सुवर्णकरकादिकं पृथिव्याद्यन्यतमम् । न चात्र साध्यहेत्वोरैक्येन स्वरूपासिद्धिः । अन्यतमत्वस्य भेदकूटावच्छिन्नप्रतियोगिताकभेदवत्त्वरूपत्वात्, अन्तर्भावस्य च–यत्रान्तर्भावः, तद्वृत्त्यसाधारणधर्मवत्त्वरूपत्वात् ।

(२) उपमानादिप्रमाणानामन्तर्भावस्यैव ।

पपादयिष्यत इत्युक्तम् (पृ० १२० पं० ४।५)। अथ प्रमेय-व्युत्पादनाय प्रवृत्तं शास्त्रं, कस्मात् प्रमाणं सामान्यतो विशेषतश्च लक्षयति ? इत्यत आह—"प्रमेयसिद्धिः प्रमाणाद्धि" इति । सिद्धिः—प्रतीतिः । सेयमार्थोऽर्थक्रमानुरोधेन पाठक्रममनादृत्यैव व्याख्याता ॥ ४ ॥

सम्प्रति प्रमाणविशेषलक्षणावसरे प्रत्यक्षस्य सर्वप्रमाणेषु ज्येष्ठत्वात्, तदधीनत्वाच्चाऽनुमानादीनाम्, पयोगितया प्रमाणव्युत्पादनस्य वैयर्थ्यमाशङ्क्य परिहरति । अथेत्यादिना । पाठक्रमत्यागे बीजमाह । सेयमिति ॥ ४ ॥

प्रत्यक्षानन्तरमनुमाननिरूपणे, अनुमानात्प्राक् प्रत्यक्षनिरूपणे च सङ्गतिं दर्शयति(१) । ज्येष्ठत्वादिति । ज्येष्ठत्वं—तदुपजीव्यत्वम् । तथा चाऽनुमाननिरूपितं प्रत्यक्षे उपजीव्यत्वम्, अनुमाने प्रत्यक्षनिरूपितमुपजीवकत्वमित्यर्थः(२) । सङ्गत्यन्तरं च दर्शयति ।

(१) 'यत् यदनन्तरं निरूपणीयं भवति, तत् तन्निरूपितसङ्गतिमत् भवति' इति व्याप्तिः । 'नाऽसङ्गतं प्रयुञ्जीत'इत्यभियुक्तोक्तेः, इति सङ्गतस्यैव निरूपणीयत्वादित्यर्थः । सङ्गतिश्च—अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयरूपा । तथा च प्रकृते प्रत्यक्षानन्तरमनुमानस्याऽभिधानं, तत्प्रयोजिका जिज्ञासा—'प्रत्यक्षकार्यं किम्'इत्याकारिका, तज्जनकज्ञानं—'प्रत्यक्षं ज्ञातं, तस्य कार्यमपि स्यात्' इत्याद्याकारकं प्रत्यक्षकार्यत्वज्ञानम्, न त्वनुमानं प्रत्यक्षकार्यमिति ज्ञानम्, अनुमाननिरूपणात् प्राक् तज्ज्ञानासम्भवात् । तद्विषयः प्रत्यक्षकार्यत्वरूपः, इति सैव सङ्गतिः । विशेषतश्च-अनुमानरामरुद्रीयादौ द्रष्टव्यम् ।

(२) निरुक्तलक्षणा सङ्गतिः षोढा । तथा चोक्तम्—

सप्रसङ्ग उपोद्घातो हेतुताऽवसरस्तथा ।
निर्वाहकैक्यकार्यैक्ये षोढा सङ्गतिरिष्यते । इति ।

तत्र प्रसङ्गः उपेक्षानर्हत्वं, उपोद्घातादिभिन्नत्वे सति स्मरणप्रयोजकसम्बन्धो वा । उपोद्घातस्तु (११८ पृ० २३ प०) उक्तः । तत्र जिज्ञासा 'प्रकृतबोधानुकूलचिन्ताविषयः कः ?'इत्याकारिका, तज्जनकज्ञानं च 'प्रकृतबोधानुकूलचिन्ताविषयः स्यात्'इत्याकारकं तादृशचिन्ताविषयत्वज्ञानं बोध्यम् । हेतुता-कारणत्वम् । कारणत्वस्य कार्यत्वनिरूपितत्वेन हेतुतापदेन कार्यत्वमपि बोध्यम् ।

प्रतिवादिनामविप्रतिपत्तेश्च तदेव तावल्लक्षयति--

प्रतिविषयाध्यवसायो दृष्टं, त्रिविधमनुमानमाख्यातम् ।
तल्लिङ्गलिङ्गिपूर्वकमाप्तश्रुतिराप्तवचनं तु ॥ ५ ॥

"प्रतिविषयाध्यवसायो दृष्टम्"इति । अत्र "दृष्टम्" इति समाख्या लक्ष्यपदम् । परिशिष्टं तु लक्षणम् । समानासमानजातीयव्यवच्छेदो लक्षणार्थः । अवय-

प्रतिवादिनामिति । अविप्रतिपत्त्युक्त्या वलवद्द्वेषविषयत्वाजनकप्रतिपत्तिकतारूप–सुप्रतिपाद्यतासूचनेन प्रत्यक्षे एव प्रथमतः शिष्यजिज्ञासा,नाऽन्यत्रेति सूचितम् । तथा च प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्तावश्यवक्तव्यत्वरूपावसरसङ्गतिरनुमाने, अवश्यवक्तव्यत्वप्रयोजकाभावप्रतियोगिजिज्ञासाविषयत्वं प्रत्यक्षे(१), इति सूचितम् । लक्षणार्थ इति । लक्षणस्याऽर्थः–प्रयोजनमित्यर्थः । एतेन 'तादृशव्यवच्छेदस्याऽसाधारणधर्मरूप–लक्षणप्रयोज्यत्वात् कथं तादृशव्यवच्छेदस्य लक्षणार्थत्वोक्तिः(२)'इति परास्तम् । अवय-

अवसरः–अवश्यवक्तव्यत्वम् । निर्वाहकैक्यम्–एकप्रयोजकप्रयोज्यत्वम् । कार्यैक्यम्–एककार्यकारित्वम् । एतानि लक्षणानि तत्र तत्र सङ्गमयिष्यन्ते । प्रकृते तु षड्विधसङ्गतिषु मध्ये हेतुतारूप–सङ्गतिरित्यर्थः । उपजीव्यत्वम्–कारणत्वम् । उपजीवकत्वम्–कार्यत्वम् । अत्र अनुमानात्प्राक् प्रत्यक्षनिरूपणे 'प्रत्यक्षस्य प्रमाणेषु ज्येष्ठत्वात्'इति हेतुः, प्रत्यक्षानन्तरमनुमाननिरूपणे 'तदधीनत्वाच्चाऽनुमानादीनाम्'इति च हेतुरिति विभागः।

(१) कार्यमात्रं प्रति प्रतिबन्धकाभावस्य कारणत्वेन, (अनुमाननिष्ठस्य) अवश्यवक्तव्यत्वस्य प्रयोजको यः अवश्यवक्तव्यत्वप्रतिबन्धकीभूत (प्रत्यक्ष) जिज्ञासाऽभावः, तत्प्रतियोगिनी (प्रत्यक्ष) जिज्ञासा, तद्विषयत्वं प्रत्यक्ष इत्यर्थः । अत्राऽवसरसङ्गतिपक्षे निरुक्तसङ्गतिलक्षणघटकजिज्ञासा–'अवश्यवक्तव्यं किम्' इत्याकारिका, तज्जनकज्ञानं च—'प्रत्यक्षानन्तरमवश्यं वक्तव्यं किञ्चित्' इत्यवश्यवक्तव्यत्वप्रकारकम् । लक्षणसमन्वयप्रकारस्तु पूर्वोक्त एव सर्वत्र बोध्यः ।

(२) प्रत्यक्षं स्वेतरेभ्यो भिन्नम्, प्रतिविषयाध्यवसायत्वात्, यन्नैवं,

वार्थस्तु=विसिन्वन्ति–विषयिणमनुबध्नन्ति–स्वेन रूपेण निरूपणीयं कुर्वन्तीति यावत्–विषयाः–पृथिव्यादयः सुखादयश्च । अस्मदादीनामविषयास्तन्मात्रलक्षणाः

वार्थः—प्रतिपदार्थः, अत्र पदानामेव वाक्यान्वयत्वात् । विषयिणो बुद्धिवृत्तेर्मुख्यबन्धनासम्भवात्(१), (२)प्रकृतेऽनुपयोगाच्चाऽऽह । स्वेनेति । स्वेन–स्वीयेन-स्वसम्बन्धित्वेन रूपेण । तृतीया प्रकारतायाम् । (३)तथा च घटज्ञानं पटज्ञानमित्यादिस्वसम्बन्धित्वप्रकारकबोधजनकशब्दरूप-निरूपणविषयं कुर्वन्तीत्यर्थः ।के ते ? इत्यत आह । पृथिव्यादय इति । तन्मात्राणामस्मदीयप्रत्यक्षागोचरत्वाद्विषयत्वं न स्यादत आह । अस्मदादीनाम-

तन्नैवम्, यथाऽनुमानमित्यादौ प्रमाणत्वेन समानजातीयानुमानादिभ्यः, असमानजातीयघटादिभ्यो भेदस्याऽनुमितेः प्रतिविषयाध्यवसायत्वाद्यसाधारणरूप–लक्षणहेतुकत्वम्, तेन कथमितरभेदस्यैव लक्षणाभिधेयत्वम्, न हि साध्यमेव साधकम् । साध्यस्याऽसिद्धत्वात् । साधकस्य च सिद्धत्वात् । सिद्धत्वासिद्धत्वयोर्विरुद्धत्वात्, इति भावः ।

(१) चलनप्रतिबन्धकसंयोगविशेषो मुख्यबन्धनम् । तथा च बुद्धिवृत्तेरद्रव्यत्वेन तदसम्भवादित्यर्थः ।

(२) ननु बुद्धिवृत्तेश्चक्षुरादिद्वारा विषये सर्पणेन कथमद्रव्यत्वम्, अपि तु क्रियाश्रयत्वेन रथादिवत् द्रव्यत्वमेव । तथा च सूत्रम्–(साङ्ख्य० अ० ५ सू० १० ७) "भागगुणाभ्यां तत्त्वान्तरं वृत्तिः, सम्बन्धार्थं सर्पतीति" इति । अस्यार्थः—यतो बुद्ध्यादिवृत्तिर्विषयसम्बन्धार्थं सर्पति, ततो हेतोः सा वृत्तिर्बुद्ध्यादेर्विभक्तोऽग्निविस्फुलिङ्गादिवत् भागो न, यदि बुद्ध्यादिर्वृत्तितो विभक्तभागरूपा स्यात्, तर्हि भागत्वेनाऽभिमतवृत्तिरेव विषयसंबद्धा स्यात्, न तु बुद्ध्यादिः, तयोर्भेदात् । एवं रूपादिवत् गुणो न, गुणस्य क्रियाशून्यत्वात् । बुद्ध्यादिवृत्तेस्तु सर्पणाख्यक्रियाश्रयत्वात् । अपि तु ताभ्यां तत्त्वान्तरमेवेति, इत्यत आह–प्रकृतेऽनुपयोगाच्चेति ।

(३) 'बोधजनकः शब्दो निपूर्वकरूपधात्वर्थः, कर्मत्वार्थक–'अनीयर्'प्रत्ययार्थश्च विषयत्वमिति शेषः । इत्यादि=इत्याद्याकारकम् ।

योगिनामूर्द्ध्वस्रोतसां च विषयाः । विषयं विषयं प्रति वर्त्तते इति प्रतिविषयम्—इन्द्रियम् । वृत्तिश्च—सन्निकर्षः । अर्थसन्निकृष्टमिन्द्रियमित्यर्थः । तस्मिन्नध्यवसायः—तदाश्रित इत्यर्थः* । अध्यवसायश्च—बुद्धिव्यापारः, ज्ञानम्, उपात्तविषयाणामिन्द्रियाणां वृत्तौ सत्यां बुद्धेस्तमोऽभिभवे सति यः सत्त्वसमुद्रेकः, सोऽध्यवसाय इति वृत्तिरिति ज्ञानमिति चाख्यायते । इदं तत्

विषयाश्चेति । उर्द्ध्वस्रोतसाम्—ऊर्द्ध्वं स्रोतः—प्रवाहो—गमनं येषामाजन्मसिद्धानां देवादीनां,ते ऊर्द्ध्वस्रोतसः,तेषामित्यर्थः। इन्द्रियाणां व्यापारमाह। वृत्तिश्चेति । विषयाकारवृत्तिरूपपरिणामविशेषः, न तु संयोग इत्यर्थः(१)। तदाश्रित इति । न च तादृशेन्द्रियेणा-(२)ऽध्यवसाय इति कुतो नोक्तम् । एतन्मते नानाच्छिद्रघटान्तर्वर्त्तिप्रदीपप्रकाशवत् बुद्धिवृत्तिरूपाध्यवसायस्येन्द्रियाजन्यत्वात्(३) ।

* इन्द्रियनिष्ठ इत्याशयः ।

(१) अयमभिसन्धिः—इन्द्रियैः सह विषयस्य संयोगो भवति, परं तन्मात्रस्य कारणत्वे परमाणुभिस्तस्य संयोगसत्त्वेन तेषामपि प्रत्यक्षं स्यात् । अतश्चित्तवदिन्द्रियाणामपि विषयाकारेण परिणामः स्वीकार्यः । तेन परण्वाकारेन्द्रियपरिणामाभावेन नाऽतिप्रसङ्गः । न च कार्यमात्रं प्रति स्वस्वकारणकूटेनैव कार्योत्पत्त्यभ्युपगमेन प्रत्यक्षरूपकार्यस्याऽपि स्वकारणकूटेनैवोत्पत्त्या महत्त्वस्यापि तत्कूटान्तर्गततया परमाणुषु तदभावेन न तेषां प्रत्यक्षमितीन्द्रियपरिणामः किमर्थं स्वीकार्य इति वाच्यम् । प्रत्यक्षत्वेन तत्परिणामत्वेन कार्यकारणभावे लाघवात् । महत्त्वत्वेन प्रत्यक्षकारणत्वपक्षे उद्भूतरूपत्वादिनापि कारणत्वकल्पनाया आवश्यकतया गौरवात् । मम मते तु महत्त्वादेरिन्द्रियपरिणाममात्रोपयोगितया प्रत्यक्षेऽन्यथासिद्धत्वात् । तथा चोक्तं विज्ञानभिक्षुभिर्योगवार्त्तिके (यो०सू० ७ पा० १) "इन्द्रियाण्येव नाडी चित्तसञ्चरणमार्गः, तैः संयुज्य, तद्गोलकद्वारा बाह्यवस्तुषूपरकस्य चित्तस्येन्द्रियसाहित्येनैवाऽर्थाकारः परिणामो भवति, न केवलस्य चित्तस्य, शङ्खपीतत्याद्याकारतायां नयनादिगतपित्ताद्यन्वयव्यतिरेकाभ्याम्, अतो रूपादिवृत्तिषु चक्षुरादीनामपि कारणत्वं शास्त्रेषूच्यते" इति ।

(२) विषयाकारपरिणतेनेत्यर्थः ।

(३) तथा च यथा घटादिप्रदीपप्रकाशयोर्न जन्यजनकभावः, तथा विषयाकारपरिणतेन्द्रियबुद्धिवृत्त्योरपीति भावः ।

**पारो ज्ञानम् । उपात्तविषयाणामिन्द्रियाणां वृत्तौ सत्यां बुद्धेस्तमोऽभिभवे सति यः सत्त्वसमुद्रेकः, सोऽध्यवसायः**

किन्तु तदाकारस्यैवेन्द्रियजन्यत्वाभ्युपगमात् । एतेन 'प्रतिविषयः—नियतविषयोऽध्यवसीयते—श्रीयतेऽनेनेति प्रतिविषयाध्यवसायमिन्द्रियम्' इति परास्तम् । **बुद्धिव्यापारः**—बुद्धिपरिणामः । (१)नन्वेवमयोग्यविषयसन्निकृष्टेन्द्रियवृत्तिबुद्धिवृत्तिरूपं ज्ञानमपि दृष्टप्रमाणं स्यादत आह । उपात्तेति । उपात्तविषयाणां—स्वस्वयोग्यविषयाणाम् । तथा च योग्यविषये एव तत्तदिन्द्रियसन्निकर्षो न तु परमतवत् (२)प्रत्यक्षायोग्येऽपीत्यर्थः । **वृत्तौ सत्याम्**—परिणामरूपसन्निकर्षे सति । **बुद्धेस्तमोऽभिभवे सतीति** । **बुद्धेः**—त्रिगुणात्मकस्य बुद्धिसत्त्वस्य । (३)न च तमसः प्रतिबन्धकत्वे मानाभाव इति वाच्यम् । सर्वदा सत्त्वकार्यापत्त्या तत्कल्पनात् । तदभिभवश्च—क्वचिदिन्द्रियसन्निकर्षेण, क्वचिच्च योगिनां धर्मेण, अञ्जनसंयोगे नयनमालिन्यवत् । तथा च रजस्तमसोर्गुणत्वेन सहकारित्वे सतीति तात्पर्यार्थः(४) । अत एव वक्ष्यति—अन्योन्याभिभवेत्यादि (कारिका १२) । **सत्त्वसमुद्रेकः**—परिणामविशेषः । तस्य सञ्ज्ञान्तरमाह । **सोऽध्यवसाय इत्यादिना** ।

---

(१) योग्यघटादिप्रत्यक्षकालेऽयोग्यपरमाणवादिनापि सन्निकर्षेण घटादिसन्निकृष्टेन्द्रियनिष्ठबुद्धिवृत्तेः परमाण्ववच्छेदेनापि प्रत्यक्षप्रमाणत्वं स्यात्, इति—इन्द्रियाणां संयोगादिरूपसन्निकर्षमात्रस्य प्रत्यक्षकारणत्वं मत्वा शङ्कते—नन्वेवमित्यादिना ।

(२) नैय्यायिकमतवत् । प्रत्यक्षे इन्द्रियपरिणामरूप-सन्निकर्षः कारणं, न तु संयोगादिरित्यर्थः ।

(३) 'बुद्धेस्तमोभिभवे सति यः सत्त्वसमुद्रेकः' इत्युक्त्वा तमसः सत्त्वसमुद्रेकस्य प्रतिबन्धकत्वं सूचितम्, अतस्तत्र मानाभावमाशङ्क्य निषेधति—न चेत्यादिना ।

(४) सत्त्वरजस्तमसां परस्परं व्याप्यतया तदन्यतमस्याऽपि विभागासम्भवेन सत्त्वप्रधानकार्ये रजस्तमसोरप्रधानत्वमात्रमित्याशयः ।

इति, वृत्तिरिति च, ज्ञानमिति चाऽऽख्यायते । इदं तत्प्रमाणम् । अनेन यश्चेतनाशक्तेरनुग्रहः, तत्-फलं, प्रमा,

इदम्-वृत्तिरूपज्ञानम् । तत् प्रमाणम्-प्रत्यक्षप्रमाणम् । बुद्धिवृत्तेर्व्यापाराभावेन(१) कथं करणत्वमिति चेन्न । फलायोगव्यवच्छिन्नस्यैतन्मते करणत्वात् । (२)ननु फलायोगेन-फलाभावेन, व्यवच्छिन्नम्-शून्यम्,=स्वाव्यवहितोत्तरक्षणावच्छेदेन फलोपहितमिति यावत् । एवं सति व्यापारवदसाधारणकारणत्वापेक्षया गौरवमिति चेन्न(३) । नष्टस्याऽपि स्वजन्यव्यापारद्वारा करणस्य कारणत्वनिर्वाहाय कारणतायां फलव्यापारान्यतराव्यवहितपूर्ववृत्तित्वनिवेशे तव मतेऽतिगौरवात् । (४)कारणत्वस्य सम्बन्धविशेषघटि-

(१) व्यापारवदसाधारणकारणस्य च करणपदार्थतयेत्यर्थः ।

(२) व्यापारवदसाधारणकारणत्वरूप—करणलक्षणापेक्षया स्वाव्यवहितोत्तरक्षणावच्छेदेन फलोपहितत्वरूप-करणलक्षणे शब्दतो गौरवमिति शङ्कते—नन्विति ।

(३) यागादिस्थले यागादेः क्रियादिरूपतया क्षणिकत्वेन स्वजन्यस्वर्गादिरूप-फलस्य कालान्तरभावित्वेन कारणलक्षणघटक-फलाव्यवहितोत्तरपूर्ववृत्तित्वस्य यागादावसम्भवेन यागादावव्याप्तिभिया फलाव्यवहितोत्तरपूर्ववृत्तित्वस्य फलव्यापारान्यतरपूर्ववृत्तित्वतात्पर्यकतया वक्तव्यत्वेन तव मते करणलक्षणे तज्जन्यत्वे सति तज्जन्यजनकत्वरूप-व्यापारपदार्थस्य असाधारणत्वपदार्थस्य कारणत्वपदार्थस्य च निवेशेन, मम तु मते फलाव्यवहितपूर्ववृत्तित्वार्थक-स्वा (करणत्वेनाभिमता) व्यवहितोत्तरक्षणावच्छिन्नफलोपहितत्वमात्रस्य करणलक्षणतयाऽतिलाघवम्, अतिगौरवं च तवेति समाधत्ते—नेति ।

(४) ननु येन केनापि सम्बन्धेन घटादिरूप-फलाव्यवहितपूर्ववृत्तित्वस्य रासभादावपि सत्त्वेनाऽतिव्याप्तिः कारणलक्षणस्येति सा वृत्तिता कारणतावच्छेदकसम्बन्धेन बोध्या । तेन कालिकादिना रासभादेर्घटादिरूप—फलाधिकरणे सत्त्वेऽपि नातिव्याप्तिः । कालिकस्य घटादिरूप—फलाधिकरणवृत्तितानवच्छेदकत्वात् । येन सम्बन्धेन कारणं कार्याधिकरणेऽभिमतम्, तस्यैव तादृशवृत्तितावच्छेदकत्वात् ।

तत्त्वेन तव तत्तत्सम्बन्धावच्छिन्नत्वनिवेशेऽपि पुनः स्वातन्त्र्येण व्यापारवत्त्वनिवेश व्यापारवत्त्वस्य च प्रकारतया भाने तत्राऽपि सम्बन्धनिवेशावश्यकत्वेनाऽतिगौरवाच्च । ईश्वरज्ञानस्याऽदृष्टादिव्यापारवत्त्वेन कार्यत्वावच्छिन्नं प्रति कारणत्वेन च प्रत्यक्षानुमित्यादावपि करणत्वापत्तेश्च । न चेष्टापत्तिः । एकस्यैव चतुष्टयकरणतया प्रमाणचतुष्टयत्वेन व्यवहारानुपपत्तेः । (१)कार्यत्वानवच्छिन्नजन्यतानिरूपितत्वरूपासाधारणत्वनिवेशेऽपि आत्मनो आत्ममनःसंयोगव्यापारवत्त्वेन जन्यज्ञानत्वावच्छिन्नकारणत्वेन ज्ञानकरणत्वापत्त्या

न चाऽन्यथासिद्धिशून्यत्वे सति फला(कार्या)व्यवहितपूर्ववृत्तित्वरूपकारणलक्षणेऽन्यथासिद्धिशून्यत्वमात्रनिवेशेन रासभादेर्व्यावृत्तिः स्यात्, इति वाच्यम् । कारणत्वेनाऽभिमतं यत्, तद्भिन्नत्वे सति फलाव्यवहितपूर्ववृत्तित्वस्याऽन्यथासिद्धिपदार्थत्वात् । रासभादेस्तु तद्भिन्नत्वेऽपि फलाव्यवहितपूर्ववृत्तित्वाभावेनाऽन्यथासिद्धिशून्यत्वात् । न चाऽन्यथासिद्धिलक्षणे सत्यन्तमेवाऽस्तु, अलं विशेष्यदलेनेति वाच्यम् । कारणत्वशङ्कागन्धशून्यस्याप्यन्यथासिद्धत्वापत्तेः । तथा च कारणलक्षणे न फलाव्यवहितपूर्ववृत्तित्वमित्यस्य फलव्यापारान्यतराव्यवहितपूर्ववृत्तित्वमर्थः । यागे तु स्वजन्यापूर्वरूप-व्यापारवत्त्वसम्बन्धेन स्वर्गरूप-फलाव्यवहितपूर्ववृत्तित्वस्य सत्त्वेनैव कारणलक्षणस्य नाऽव्याप्तिः, इति चेन्मैवम् । विकल्पासहत्वात् । तथा हि-तथापि करणलक्षणे स व्यापारः प्रकारविधया निवेश्यते, संसर्गविधया वेत्यत्राद्यान्त्ययोर्यथाक्रममुत्तरमाह-कारणत्वस्येत्यादिना करणत्वापत्तेश्चेत्यन्तेन । अत्र-व्यापारवत्त्वस्य संसर्गविधया निवेशे तु, अनवस्थाभिया संसर्गे संसर्गान्तरानभ्युपगमेनाऽतिगौरवं नास्ति, तथाऽपि करणलक्षणे व्यापारवत्त्वसंसर्गनिवेशेनापि (नैय्यायिकमते) गौरवं वर्त्तते एव, तथाऽपि तदभ्युपगम्य हेत्वन्तरमाह-ईश्वरेति, इति बोध्यम् ।

(१) ननु करणलक्षणे कारणत्वांशेऽसाधारणत्वनिवेशेनेश्वरज्ञानादेः कार्यमात्रं प्रति साधारणकारणत्वेन न तद्व्यवहारानुपपत्तिरित्यत आह-कार्यत्वानवच्छिन्नेति । साधारणकारणत्वं च-कार्यत्वावच्छिन्नकार्यतानिरूपित-कारणताशालित्वम् ।

प्रमाणत्वापत्तेः। एतेन(१) 'आत्मनो ज्ञानकरणत्वे इष्टापत्तिः'इति परास्तम्। न चाऽनुभवत्वव्याप्यधर्मावच्छिन्न-प्रमावृत्ति-कार्यतानिरूपितकारणत्वं(२), (३)प्रमाविभाजकधर्मावच्छिन्नकार्यतानिरूपितकारणत्वं वा प्रमाणत्वघटकम्, अतो नाऽऽत्मनः प्रमाणत्वमिति वाच्यम्। उक्तगौरवानिवृत्तेः। (४)घटादेः प्रमाणत्वापत्तेश्च। तस्येन्द्रियसंयोगरूप-व्यापारवत्त्वात्। (५)लौकिकविषयतासम्बन्धेन प्रत्यक्षत्वाव-

(१) तव मते प्रमाणचतुष्टयत्वेन व्यवहारानुपपत्त्या।

(२) नन्वत्रानुभवत्वावच्छिन्नकार्यत्वनिवेशेनैव कार्ये सिद्धे किमिति तद्व्याप्यधर्मावच्छिन्नकार्यत्वनिवेशनमिति चेन्न। अनुभवत्वावच्छिन्नकार्यतायां मानाभावात्। न च तुल्यन्यायेन घटत्वाद्यवच्छिन्नकार्यतायामपि मानाभाव इति शङ्क्यम्। यत्र क्व चन घटानुत्पत्तौ दण्डस्य घटकारणत्वेन दण्डाभाव एव प्रयोजक इति वक्तव्यम्। कार्यानुत्पत्तिं प्रति कारणाभावस्य प्रयोजकत्वाभ्युपगमात्। तथा च दण्डत्वेन घटत्वेन सामान्यतः कार्यकारणभावानभ्युपगमे तद्घटं प्रति तद्दण्डस्य कारणतेति विशेषत एव कार्यकारणभावाभ्युपगमे 'एतद्घटाभाव एतद्दण्डाभावेन'इति शृङ्गग्राहिकतया ज्ञानं भवितुमशक्यम्। अतो दण्डत्वेन घटत्वेन कार्यकारणभावः स्वीकार्यः। तेनाऽत्र घटत्वेन घटानुत्पत्तिर्दण्डत्वेन दण्डाभावेनेति सामान्यतो वक्तुं शक्यम्। न च तथा प्रकृते। अनुभवस्य चतुर्विधरूपेण(प्रत्यक्षानुमानोपमानागमरूपेण)ज्ञातुं शक्यत्वात्। घटादीनामनन्तत्वादिति। भ्रमकरणेऽतिव्याप्तिनिरासाय-प्रमावृत्तीति।

(३) ननु तथापि 'नीलदण्डः पुरुषः' इत्यादिविशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रति विशेषणतावच्छेदकीभूत-नीलादिज्ञानस्य स्वजन्यविशेषणीभूत-नीलदण्डादिज्ञानद्वारा कारणत्वेन व्यापारवदनुभवत्वव्याप्यधर्मावच्छिन्नप्रमावृत्तिकार्यतानिरूपितकारणत्वरूप-प्रमाकरणलक्षणस्य तत्रापि सत्त्वेनाऽतिव्याप्तिरित्यत आह—प्रमाविभाजकेत्यादि।

(४) ननु व्यापारस्य तु करणलक्षणे संसर्गविधया निवेश इति कुतो निरुक्तातिगौरवमित्यत आह-घटादेरिति।

(५) घटादौ व्यापारवत्त्वं प्रदर्श्याऽसाधारणकारणत्वं तत्रैव प्रदर्शि-

च्छिन्नं प्रति विषयत्वेन हेतुतया प्रत्यक्षत्वस्याऽनुभवत्वव्याप्यत्वेन, प्रमाविभाजकत्वेन वा निरुक्तधर्मावच्छिन्नकार्यतानिरूपित-कारणतावत्त्वाच्च ।

ननु भवदभिमतप्रमाणस्य प्रमाजनकत्वाभावात्कथं प्रमाणत्वमित्याशङ्क्याह । अनेनेति । अनुग्रहः-(१)सुखघटादिनिष्ठप्रतिवि-

यति-लौकिकेति । योगिनां योगजाख्यालौकिकसन्निकर्षेणातीतानागतवस्तुप्रत्यक्षेण तेषां प्रत्यक्षे विषयस्य कारणत्वाभावेन-लौकिकविषयतेत्युक्तम् । लौकिकसन्निकर्षप्रयोज्यविषयतासम्बन्धेनेत्यर्थः । लौकिकप्रत्यक्षं प्रत्येव विषयस्य कारणत्वमित्याशयः । निरुक्त—योगजाख्यालौकिकसन्निकर्षविशिष्टोभय-सामान्यलक्षणज्ञानलक्षणरूपालौकिकसन्निकर्षेणाऽपि प्रत्यक्षे विषयस्य न कारणत्वम् । सामान्यलक्षणस्थले सम्पूर्णघटाभावेऽपि यस्य कस्यचित् घटादेश्चक्षुरादिना सन्निकर्षेण स्व (चक्षुरादि) संयुक्त (घटादि) समवायेन घटत्वादेः प्रत्यक्षे, स्व (चक्षुरादि) सम्बद्ध (घटादि) विशेष्यकज्ञान ('अयं घटः' इत्याद्याकारक) प्रकार (घटत्वादि) वत्त्वरूप-सामान्यलक्षणप्रत्यासत्त्या घटादिमात्र प्रत्यक्षं भवति-'घटाः' इत्याद्याकारकम् । एवं ज्ञानलक्षणस्थले, प्राक् चन्दनादिगतगन्धादिप्रत्यक्षे इदानीं चक्षुरादिना चन्दनादिप्रत्यक्षे घ्राणादिना तद्गतगन्धाप्रत्यक्षेऽपि चन्दनादेश्चाक्षुषादिप्रत्यक्षेण जायमानतद्गतगन्धादिस्मरणेन स्व (चन्दनादिसन्निकृष्टचक्षुरादि) संयुक्तमनःसंयुक्तात्मसमवेतज्ञान (गन्धादिस्मरणादि) विषयत्वरूप—ज्ञानलक्षणसान्निकर्षेण चक्षुरादिना गन्धादिज्ञानं भवति—'सुरभि चन्दनम्' इत्याद्याकारकम । अत्रापि चन्दनांशे लौकिकचाक्षुषम्, सौरभ्यांशे तु-अलौकिकचाक्षुषम्, इति योजनीयम् । इत्थं चाऽलौकिकप्रत्यक्षमात्रे विषयस्य न कारणत्वमिति बोध्यम् ।

(१) सुखपदेनाऽऽन्तरविषया ज्ञानेच्छादयः, घटपदेन तु बाह्या विषयाः पटादयो बोध्याः । तथा च विषयाकारेण परिणता या 'घटः'इत्याद्याकारकवृत्त्यात्मिका बुद्धिः, तन्निष्ठत्वेन दर्पणनिष्ठतया दर्पणनिष्ठमुखप्रतिबिम्बस्य दर्पणगतमालिन्यादिविशिष्टतया भासेन मुखतद्गतस्वप्रतिबिम्बयोश्चाऽविवेकेमेव बुद्धिनिष्ठचेतनप्रतिबिम्बस्य बुद्धिवृत्तिविशिष्टतया भासेन चेतनबुद्धिगतस्वप्रतिबिम्बयोश्चाऽविवेकेन 'मे मुखं मलिनम्'

बोधः। बुद्धितत्त्वं हि प्राकृतत्वादचेतनमिति तदीयोऽध्यवसायोऽप्यचेतनो घटादिवत्। एवं हि बुद्धितत्त्वस्य सुखादयोऽपि परिणामभेदा अचेतनाः,पुरुषस्तु—सुखाद्यननुषङ्गी चेतनः। सोऽयं बुद्धितत्त्ववर्त्तिना ज्ञानसुखादिना तत्प्रतिबिम्बितस्तच्छायापत्त्या ज्ञानसुखादिमानिव भवतीति

म्वद्वारा 'तज्ज्ञानवानहम्'इत्याद्यभिमानः। 'ज्ञानसुखादिमानिव भवतीति चेतनोऽनुगृह्यते'इत्यग्रिमग्रन्थेन, तथैव व्युत्पादनात्। अभिमानस्य भ्रमरूपत्वात्तथैव दोष(१)इति चेन्न। प्रतिबिम्बरूपेण विषयोपरक्तबुद्धिवृत्तेस्तत्र(२) सत्त्वात्। चिच्छक्तेर्ज्ञानाद्यभिमानोपपादनार्थं(३) ज्ञानादेरन्यनिष्ठत्वमाह। सोयं बुद्धितत्त्ववर्त्तिनेति। 'ज्ञानसुखादिना'इत्यस्य 'ज्ञानसुखादिमानिव भव-

इति वत् 'अहं ज्ञानवान्' इति भ्रम इत्यर्थः। ज्ञानं—वृत्तिरिति चोक्तं मूले (पृ० १२८ पं० २)।

(१) भवदभिमतप्रमाया अभिमानात्मकतया भ्रमरूपत्वात्तत्करणे प्रमाणत्वाभावः। प्रमाणशब्दस्य प्रमाकरणत्वार्थकत्वादित्यर्थः।

(२) चेतने। ननु प्रतिबिम्बरूपेण चेतने बुद्धिवृत्तेः सत्त्वेपि प्रतिबिम्बस्य तुच्छतया तां प्रमात्वेन न वक्तुमर्हसीतिचेत्सत्यम्। परं च सिद्धान्ते तस्या भ्रमरूपत्वेऽपि शास्त्रस्य लोकमात्रव्युत्पादकतया लोकतस्तस्याः प्रमात्वात्। ननु तर्हि लोके भ्रमत्वं कस्येति चेच्छृणु,—शुक्रेश्चक्षुषा सन्निकर्षे तद्गतचाकचिक्यादिसादृश्यदर्शनेन जायमानरजतस्मरणेन बुद्धिरेव रजताकारेण परिणमते, तदा तत्परिणामशुक्त्योरविवेको यः, स एव वृत्तिविशेषो भ्रमः, न तु भेदेन ज्ञानाभावमात्रम्। अत्राऽभावस्याऽधिकरणावस्थाविशेषरूपत्वात्। प्रवृत्तिनिवृत्त्योर्ज्ञानपूर्वकत्वेनाऽनुभवसिद्धत्वाच्च। भ्रमस्याऽभावमात्रत्वे शुक्तिरजतादिस्थलेऽनुभवसिद्धप्रवृत्त्याद्यनुपपत्तेः।

(३) ज्ञानवत्तया भ्रमोपपादनार्थमित्यर्थः।

चेतनोऽनुगृह्यते। चितिच्छायापत्त्या चाऽचेतनाऽपि बुद्धिस्तदध्यवसायश्च चेतन इव भवतीति। तथा च वक्ष्यति—

ति'इत्यत्राऽन्वयः। तत्प्रतिबिम्बितः—बुद्धिप्रतिबिम्बितः। तच्छायापत्त्या—बुद्ध्यानुकारतया, तत्प्रतिविम्बाभिमानेन वा। ज्ञानेति। दर्पणान्तर्गतमुखप्रतिबिम्बाविवेकेन दर्पणान्तर्गतमालिन्याद्यभिमानवत् बुद्ध्यन्तर्गतप्रतिबिम्बाविवेकेन तदन्तर्गतज्ञानाद्यभिमान इत्यर्थः। (१)यद्वा (चेतनगत–) बुद्धितद्वृत्तिप्रतिबिम्ब एव फलं (चेतन गत–)बुद्धिप्रतिविम्बरूपेण, स्वात्मगतं बुद्धितद्वृत्तिप्रतिबिम्बं च प्रकाशयति, अतस्तदाश्रयत्वेन प्रमाता, प्रकाशकत्वेन च साक्षी, इति व्यवह्रियते इति। नन्वचेतनबुद्धिवृत्तेः कथं विषयप्रकाशकत्वमित्याशङ्क्याह। चितीति। तथा च चैतन्यप्रतिबिम्बाश्रयतया(बुद्धितदध्यवसाययोः) द्वयोश्चैतन्यवदवभास इत्यर्थः।

---

(१) ननु कृत्याश्रयत्वं कर्तृत्वमितिवत् प्रमातृत्वं खलु प्रमाश्रयत्वमिति लोकतः सिद्धम्। पूर्वोक्त्या तु बुद्धेरेव प्रमाश्रयत्वमायातम्। बुद्ध्यन्तर्गतचित्प्रतिबिम्बाविवेकस्यैव बुद्ध्यन्तर्गतज्ञानादेश्चिन्निष्ठत्वेनाभिमानकारणत्वोक्तत्वात्, तादृशाभिमानविशेषस्यैव च प्रमात्वेनोक्तत्वेनाऽर्थाकारेण परिणतया बुद्धिवृत्त्या स्वाकारतामापद्यमानस्य बुद्धिदर्पणे प्रतिबिम्बितस्यैव चेतनस्य प्रमात्वेनाभिमतत्वात्, प्रतिबिम्बितचेतनस्य तु बुद्धिधर्मत्वादित्यतआह—यद्वेति। अस्मिन् पक्षे 'चेतनाशक्तेरनुग्रहः' इत्यस्य स्वनिष्ठतया बुद्धिप्रतिबिम्बावसरप्रदानेनाऽनुकम्पेत्यर्थः। तथा 'तत्प्रतिबिम्बितः'इत्यस्य च तेन (ज्ञानसुखादिना) प्रतिबिम्बित इत्यर्थः। 'ज्ञानसुखादिना'इति पदस्य च चेतन इत्यनेनान्वयः। अत्र फलस्य जन्यताप्रदर्शनाय–बुद्धिप्रतिबिम्बरूपेणेत्युक्तम। तेन चितो नित्यत्वेऽपि न क्षतिः। इदं त्ववधेयम्–पक्षद्वयेपि ज्ञानाकार उक्तः (पृ० १९। १२० पं० २८। २३)। तत्र सिद्धान्तिपक्षे'अयं घटः'इत्यस्यैव फलत्वेन परमार्थतोपि प्रमात्वमेव, 'घटज्ञानवान्'इत्यनुव्यवसायस्य तु भ्रमत्वम्। लाकेवृकरीत्या प्रमात्वमेवेति।

तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वेऽपि तथा कर्त्तेव भवत्युदासीनः ॥
इति । (कारिका २०)

'चिति' इति सप्तम्यन्तमिति केचित् । अयं प्रघट्टकार्थः—प्रमा नाम—बुद्धिगतवस्त्ववधारणं, सा च यदि पुरुषमात्रनिष्ठा तदा विषयेन्द्रियसन्निकर्षे सति शरीरमध्यस्थबुद्धेस्तद्देशमारभ्य तत्तद्विषयाकारतया जायमानेन्द्रियाश्रितवृत्तिरेव प्रमाणम्=इन्द्रियार्थसन्निकर्षजन्याकाराश्रया इन्द्रियाश्रितवृत्तिः प्रत्यक्षप्रमाणमिति निष्कर्षः । प्रदीपप्रकाशवत् वृत्तेस्सन्निकर्षाजन्यत्वादाकारग्रहणम्(१) । (२) चैतन्यप्रकाशस्य नित्यत्वेऽपि तत्तदर्थोपरक्तवृत्तिमत्त्वेन चैतन्यप्रकाशः फलमित्युक्तं प्राक्(पृ० ११९पं० १३) । ननु लाघवात्स्मृतिव्यावृत्तं—तद्वति तत्प्रकारकानुभवत्वरूपं प्रमात्वं वाच्यम् । तथा हि(३)—दिनादिभेदेन पुरुषभेदेन च जायमानस्य घटादिज्ञानस्य(४) नानात्वात्तस्य च दिनान्तरावगत-

(१) एतच्चोक्तम् पृ० १२६ पं० ११) ।

(२) ननु अवधारणस्य प्रकाशरूपत्वेन चिद्भिन्नस्य च प्रकृत्युपादानकतया जडत्वेनाऽप्रकाशरूपतया चितिरेव फलमित्यापतितम् । तथा च कथं तस्य नित्यत्वेन फलत्वमित्यत आह—चैतन्येति ।

(३) असन्दिग्धाविपरीतानधिगतविषयकचित्तवृत्तित्वरूप—स्मृतिव्यावृत्ते प्रमात्वे, तद्वति तत्प्रकारकानुभवत्वरूप—प्रमात्वापेक्षया महद्गौरवमिति गौरवमुखेन स्वाभिमतलक्षणे लाघवमेवोपपादयतीत्यर्थः । अत्रासन्दिग्धेत्यादिप्रमालक्षणे स्मृतिव्यावृत्तयेऽनधिगतत्वं विषये विशेषणम्, स्मृतिविषये स्वकारणीभूतानुभवेनाऽधिगतत्वात् । तद्वतीत्यादिलक्षणे त्वनुभवत्वमेवस्मृतिव्यावर्त्तनाय, अनुभवत्वस्य स्मृतावभावात् ।

(४) घटाद्यनुभवस्येत्यर्थः ।

घटादिविषयकत्वेना(१)ऽव्याप्तिवारणायाऽनधिगतत्वमनुभवत्वेना-जन्यत्वं वक्तव्यम्(२)। तद्घटकीभूत-जन्यत्वं प्रागभावप्रतियोगित्वं, कालिकसम्बन्धेन घटत्वादिमत्त्वं(३) वेति विनिगमनाविरहेणोभय-

(१)असन्दिग्धेत्यादिप्रमालक्षणघटकीभूत-अनधिगतविषयकत्वस्य-चाऽसत्त्वेनेति शेषः।

(२) दिनान्तरावगतघटादिविषयकानुभवस्य दिनान्तरीयानुभवा-जन्यत्वेन स्मृतेस्तु संस्कारद्वाराऽनुभवजन्यत्वेन च नाऽव्याप्तिरति-व्याप्तिश्चेति भावः। तथा च-असन्दिग्धाविपरीतविषयकाऽनुभवाज-न्या चित्तवृत्तिः प्रमेति निष्कर्षः। अत्राप्यनुभवाजन्यत्वं संस्कारमा-त्रद्वारा बोध्यम्। तेन धूमादिप्रत्यक्षात्मकानुभवेन वह्न्यनुमित्याद्यात्म-कानुभवस्य, संस्कारेण च 'सोयं देवदत्तः' इत्यादिप्रत्यभिज्ञादेः स-त्त्वेऽपि न क्षतिः। अनुमित्यादौ संस्कारस्याऽकारणत्वात्। प्रत्य-भिज्ञादेस्तु संस्कारमात्रस्याकारणत्वात्। इन्द्रियसन्निकर्षादेरपि का-रणतयाऽऽवश्यकत्वात्।

(३) इदमत्राऽऽकूतम्-केचन क्लृप्तपदार्थातिरिक्ततया नित्यमेकं कालमभ्युपगच्छन्ति, अथ च "इदानीं (अस्मिन् काले) घटो न तदानीम् (तस्मिन् काले)" इत्यादिप्रतीत्या 'अस्ति' 'नास्ति' इति विधिनिषेधयोरेकत्र विरोधेन कञ्चनोपाधिं स्वीकुर्वन्ति, तथापि स-उपाधिर्यदि नित्यः स्यात्तर्हि नित्यस्य सर्वदा सत्त्वेन तदुपहितकाले च भेदाभावेन विधिनिषेधयोरेकत्र प्रसङ्गः स्यात्, अतो हेतोर्जन्यमे-वोपाधिः। तथा च जन्यस्य सर्वदाऽसत्त्वेन तत्तज्जन्यस्य च भेदेन जा-यमानतत्तदुपहितकालभेदेन न तयोः प्रसङ्गः इति च वदन्ति। साङ्ख्य-राद्धान्ते अत्र लाघवात् जन्या एव क्लृप्तपदार्थाः कालः। ननु तर्हि 'घटो द्रव्यम्' इत्यादिवत् 'घटः कालः' इति कथं न प्रतीतिः, अपि तु 'घट-स्य कालः' इत्यादिरेव घटकालयोर्भेदविषयकप्रतीति रितिचेन्न। 'घ-टस्य मृत्तिका' इत्यादिवत् सा भेदप्रतीतिर्भ्रान्ता। शाङ्खस्य तु न भवति, तर्हि साऽपि न भवति तस्येति समः समाधिः। तथा च घ-टादीनामेव कालत्वे सिद्धे 'इदानीं पटः' इत्यादिप्रतीतौ य आधारा-धेयभावोऽवभासते, तन्नियामकः कश्चन संसर्गः स्वीकार्यः। स सम्ब-न्धः संयोगो न भवितुमर्हति। घटेन पटस्य संयोगाभावेऽपि 'अस्मिन्

निवेशे(१) महद्गौरवमिति चेन्न। रङ्गरजतयोः 'इमे रजतरङ्गे'इत्यांशिकभ्रमे (२)कालिकादिसम्बन्धेनाऽबाधिते तत्तदतिरिक्तसम्बन्धेन च बाधितेऽतिव्याप्तिवारणाय 'तत्सम्बन्धेन तद्वन्निष्ठविशेष्यतानिरूपिततत्सम्बन्धावच्छिन्नतत्प्रकारताशालित्वं तेन सम्बन्धेन तत्प्रमात्वम्'इत्युक्ते प्रकारतानवगाहि 'प्रकृष्टप्रकाशश्चंद्रः'इत्यादिप्रमायामव्याप्तेः। न च तादृशप्रमैवाऽसिद्धेति वाच्यम्। तात्पर्यबलाच्छाब्दात्मकतादृशप्रमाया अन्यत्र व्युत्पादनात्(३)। लौकायतिकेन चार्वाकविशेषेण 'नानुमानं प्रमाणम्'इति वदता किम्? अनुमाने ऽप्रामाणेऽप्रामाण्यमनुमितिप्रयोजकतावच्छेदकीभूतव्याप्तिनिश्चयत्वरूपशून्यत्वालिङ्गकानुमानेन तु साधयितुं न शक्यते, तेनाऽनुमानानभ्युपगमात्। 'नानुमानं प्रमाणम्'इति वाक्येन स्वं प्रति, परं प्रति वा साध्यते? आद्ये वा-

काले पटः'इत्यादिप्रतीतेः, एवं क्षणरूप-क्रियया घटस्य कदाचिदपि संयोगासम्भवे 'अस्मिन् क्षणे पटः'इत्यादिप्रतीतेश्च सत्त्वात्। तस्मात्स संसर्गः स्वरूपविशेषः कालिकाख्यो विलक्षणः सिद्धः। तेन संसर्गेण जन्यपदार्थे एव सर्वे विद्यते, न नित्ये इति सुष्ठूक्तं-'कालिकसम्बन्धेन घटत्वादिमत्त्वम् (जन्यत्वम्)' इति । उपाधिरूप एव कालः इति वक्ष्यते मूले (का० ३३) 'कालश्च वैशिषिकमते' इत्यादिना।

(१) एकत्र पक्षपातिनी युक्तिर्विनिगमना, तस्या अभावेन प्रागभावप्रतियोगित्वेसति कालिकसम्बन्धेन घटत्वादिमत्त्वरूप-जन्यत्वस्याऽसन्दिग्धेत्यादिलक्षणे निवेशो इत्यर्थः।

(२) रजतत्वेन रङ्गावगाहिनि रङ्गत्वेन रजतावगाहिनि च ज्ञाने इत्यर्थः।

(३) केनचित् व्यक्तितश्चन्द्रो ज्ञातः, परञ्च न ज्ञातः स्वरूपतः, तेन कञ्चित् प्रति पृष्टम्-कश्चन्द्रः ? इति । तदा तेन 'अयं स्वरूपतो जानातु' इतीच्छयोक्तम्-'प्रकृष्टप्रकाशश्चद्रः (प्रकृष्टः-विलक्षणो यः प्रकाशः, तदभिन्नश्चन्द्रः) इति । अत्र निष्प्रकारक एव प्रमात्मकशाब्दबोधो भवतीति वेदान्तदर्शनेऽभिधानादित्यर्थः।

अध्यवसायग्रहणेन संशयं व्यवच्छिनत्ति । संशयस्याऽनवस्थितग्रहणेनाऽनिश्चितरूपत्वात् । निश्चयोऽध्यवसाय इति चाऽनर्थान्तरम् । विषयग्रहणेनाऽसद्विषयं विपर्ययमपाकरोति । प्रतिग्रहणेन चेन्द्रियार्थसन्निकर्षसूचनादनुमानस्मृत्यादयः पराकृता भवन्ति । तदेवं समानासमानजातीयव्यवच्छेदकत्वात् 'प्रतिविषयाध्यवसायः' इति दृष्टस्य सम्पूर्णं लक्षणम् । तन्त्रान्तरे तैर्थिकानां लक्षणान्तराणि न दूषितानि, विस्तरभयादिति ।

नाऽनुमानं प्रमाणमिति वदता लौकायतिकेनाऽप्रतिपन्नः सन्दिग्धो विपर्यस्तो वा पुरुषः कथं प्रतिपद्येत ? न च पुरुषान्तरगता अज्ञानसन्देहविपर्ययाः शक्या अर्वाग्दृशा प्रत्यक्षेण प्रतिपत्तुम् । नापि मानान्तरेण, अनभ्युपगमात् । अनवधृताज्ञानसंशयविपर्यासस्तु यं कञ्चित्पुरुषं प्रति प्रवर्त्तमानोऽनवधेयवचनतया प्रेक्षावद्भिरुन्मत्तवदुपेक्ष्येत । तदनेनाऽज्ञानादयः परपुरुषवर्त्तिनोऽभिप्रायभेदाद्वचनभेदाद्वा लिङ्गादनुमातव्याः, इत्यकामेनाप्यनुमानं प्रमाणमभ्युपेयम् । तत्र प्रत्यक्षकार्यत्वादनुमानं प्रत्यक्षानन्तरं लक्षणीयम् । तत्राऽपि सामान्यलक्षणपूर्वकत्वाद्विशेषलक्षणस्य, इत्यनुमानसामान्यं तावल्लक्षयति । लिङ्गलिङ्गिपूर्वकमिति । लिङ्गं—व्याप्यम् । लिङ्गि-

---

क्यवैयर्थ्यापत्तेः। अन्त्येऽप्यनुमानप्रामाण्यानभ्युपगन्तारं प्रति वाक्यवैयर्थ्यानुद्धारः। अप्रतिपन्नसन्दिग्धविपर्यस्तान्यतमं प्रति साधनं तु न सम्भवतीत्याह । नानुमानमित्यादिना । अनवधृताज्ञानादिकेनाऽन्यं प्रति साधने दोषमाह । अनवधृतेत्यादि । ननु व्याप्यं—व्याप्त्याश्रयः । व्याप्तिश्च—स्वाभाविकः सम्बन्धः । तद्ग्रहश्चोपाधिविरहज्ञानात् । उपाधिश्च—प्रकृतसाध्यव्यापकप्रकृतसाधनाव्यापकः । तस्य

**व्यापकम्। शङ्कितसमारोपितोपाधिनिराकरणेन वस्तु-स्वभावप्रतिबद्धं व्याप्यम्। येन च प्रतिबद्धं, तत् व्यापकम्।**

च सद्धेतावसम्भवे कथं तद्विरहग्रहः? इत्याशङ्क्याऽऽह। शङ्कितेति। पक्षेतरत्वादिरित्यर्थः। **स्वभावप्रतिबद्धमिति**। स्वाभाविक—साध्यसामानाधिकरण्यरूप-व्याप्त्याश्रय इत्यर्थः। व्यभिचारिणि तु साध्यसामानाधिकरण्यस्यौपाधिकत्वान्नातिव्याप्तिरिति भावः। **येन च प्रतिबद्धमिति**। व्याप्तिनिरूपकत्वं व्यापकत्व-मित्यर्थः। न च 'प्रकृतसाध्यव्यापकत्वे सति प्रकृतसाधना-व्यापकत्वमुपाधित्वं' न सम्भवति, 'स श्यामो मित्रातनयत्वात्'इत्यत्र साधनावच्छिन्नसाध्यव्यापके शाकपाकजत्वादौ, 'वायुः प्रत्यक्षो मूर्त्तत्वात्'इत्यत्र पक्षधर्मावच्छिन्नसाध्यव्यापके उद्भूतरूपादौ चाऽव्याप्तेः, तयोः काकादिसाधारणश्यामत्वाऽऽत्मादिसाधारण-प्रत्यक्षत्वयोरव्यापकत्वात्, (१)पक्षेतरत्वेऽतिव्याप्तेश्चेति वाच्यम्। यत्किञ्चिद्धर्मावच्छिन्नसाध्यव्यापकत्वे सति यत्किञ्चिद्धर्मावच्छिन्न-साधनाव्यापकत्वस्य विवक्षितत्वात्। यत्किञ्चिद्धर्मावच्छिन्नत्वं च—सामानाधिकरण्यसम्बन्धेन तद्विशिष्टत्वम्। 'धूमवान् वन्हेः'इत्यादौ च तादृशो धर्मो द्रव्यत्वादिकमेव, तद्धर्मावच्छिन्नसाध्यव्यापकत्वादा-र्द्रेन्धनादौ लक्षणसमन्वयः। 'स श्यामः' 'वायुः प्रत्यक्षः'इत्यत्र च तादृशो धर्मः—साधनं—मित्रातनयत्वं, पक्षधर्मोबहिर्द्रव्यत्वं (आत्म-भिन्न द्रव्यत्वं) च, तदवच्छिन्नसाध्यव्यापकत्वात् शाकपाकजत्वो-द्भूतरूपयोर्लक्षणसम्भवान्नाव्याप्तिः। अत एव (२)पक्षेतरत्वादावपि

(१) 'पर्वतो वह्निमान् धूमवत्त्वात्'इत्यादिसद्धेतुस्थल इति शेषः।

(२) उपाधिलक्षणघटकीभूत-साध्यांशे साधनांशे च यत्किञ्चिद्ध-र्मावच्छिन्नत्वस्य निवेशादेवेत्यर्थः।

नातिव्याप्तिः। तादृशपर्वतत्वादिधर्मावच्छिन्नसाध्याव्यापकत्वात्(१)।

(१) पक्षेतरत्वे केवलवह्न्यादिरूप-साध्यव्यापकत्वस्य सत्त्वेऽपि स्वाधिकरणवृत्तित्वसम्बन्धेन यत्किञ्चिद्धर्मात्मक-पर्वतत्वादिविशिष्टवह्न्यादिरूप-साध्यव्यापकत्वाभावादित्यर्थः । पक्षेतरत्वाभाववति पर्वतादौ पर्वतत्वाद्यवच्छिन्नवह्निसत्त्वात् । ननु अनुमानात्प्राक् साध्याज्ञानस्य साध्यसन्देहस्य वा सत्त्वेन कथं पर्वतादौ साध्यज्ञानम् । न च सन्देहस्यापि ज्ञानात्मकतया क्वचिदनुमानात्प्राक् साध्यसन्देहस्यापि सम्भवेन तत्र वह्न्यादिसन्देहरूप—ज्ञानं विद्यते एवेति वाच्यम् । तथापि साध्यसन्देहेन सन्दिग्धोपाधित्वप्रसङ्गात् । नचेष्टापत्तिः । हेतौ सन्दिग्धोपाधिकत्वस्यापि 'अनुमानप्रामाण्यविघटकत्वेन सद्धेतुकानुमानस्याप्यप्रामाण्यापत्तेः, इति चेन्न । पक्षे प्रत्यक्षादिना साध्यनिश्चये सत्यपि अनुमित्सयाऽनुमितेरभ्युपगमात् । तथा चोक्तम्-प्रत्यक्षपरिकलितमप्यनुमानेन बुभुत्सन्ते तर्करसिका'- इति वाचस्पतिमिश्रैः । अत्रापि प्रत्यक्षपदमनुमानाद्युपलक्षकं बोध्यम् । अत एव साध्यसन्देहः सिध्यभावो वा पक्षतेति पक्षद्वयं विदूष्य सिषाधयिषाविरहविशिष्टसिध्यभावः पक्षतेति लक्षणं कृतम् । तथा च साध्यनिश्चये, यत्किञ्चिद्धर्मपदेन पर्वतत्वादिधर्मोऽपि ग्रहीतुं शक्यः । तस्याऽज्ञाने सन्देहे वा पक्षेतरत्वादिर्वा । यत्किञ्चिद्धर्ममात्रस्य विवक्षितत्वेन तस्यापि ग्राह्यत्वात् । तस्य च स्वावच्छिन्नसाधनाव्यापकत्वाभावात् ।

इदमत्र बोध्यम्—बाधोन्नीतपक्षकस्थले-'वन्हिरनुष्णः कृतकत्वात्' इत्यादौ पक्षेतरत्वस्यापि उपाधित्वेनाभ्युपगमेन तत्राव्याप्तिवारणाय-यत्किञ्चिद्धर्मपदेन बाधोन्नीतपक्षाव्यावर्त्तकधर्मो बोध्यः । तेन तत्र वन्हिरूप—पक्षस्य साध्याभाववत्तया निश्चितत्वेन वन्हेर्बाधोन्नीतपक्षतया तदितरत्वस्य पक्षव्यावर्त्तकतया नाऽव्याप्तिरिति । ननु अनुमानात्प्राक् तस्य सन्देहः, निश्चयः, ज्ञानाभावो वाऽस्तु, किन्तेन ? सद्धेतुकस्थलीयपक्षे वस्तुनः साध्यस्य सत्त्वेन पक्षेतरत्वस्य चाऽसत्वेन पक्षेतरत्वे साध्यव्यापकत्वमेव नास्तीति तत्रातिव्याप्तिनिरासाय किमर्थं प्रयासः क्रियते, न हि स्वभावसिद्धयोर्व्याप्यव्यापकयोर्व्याप्यव्यापकभावः कस्यचिदज्ञानेन नश्येत् । अन्यथा स्वभावसिद्धमारकात्मकस्य गरलादेः प्राणवियोजकत्वमेव कस्यचिदज्ञानेन न स्यादिति साधु मतमायुष्मताम्, इति चेन्न । न हि मया तयोर्व्याप्यव्यापक-

न चैवमपि 'वह्निमान्धूमात्'इत्यादौ तादृशधर्ममहानसत्वाद्यवच्छिन्नसाध्यव्यापके व्यञ्जनवत्त्वादावतिव्याप्तिरिति वाच्यम् । यद्धर्मावच्छिन्नसाध्यव्यापकत्वं, तद्धर्मावच्छिन्नसाधनाव्यापकत्वस्य विवक्षितत्वात् । साध्यविरुद्धजलत्वादेरुपाधित्ववारणाय-सत्यन्तनिवेशः ।

दीधितिकृतस्तु–साध्यासमानाधिकरणधर्मस्य, साध्यव्यापकाभावस्य(१) वाऽधिकरणं यत् साधनाधिकरणं, तन्निष्ठप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणात्यन्ताभावप्रतियोगितावच्छेदकसाध्यसमानाधिकरणवृत्तिधर्मवत्त्वमुपाधित्वम् । भवति च धूमासमानाधिकरणायोगोलकत्वादेः, श्यामत्वासमानाधिकरणगौरमित्रातनयत्वादेः, प्रत्यक्षत्वासमानाधिकरणपरमाणुत्वस्य चाधिकरणं साधनाधिकरणम्–अयोगोलकगौरमित्रातनयपरमाण्वादि,तन्निष्ठस्य प्रतियोगितावच्छेदकविशिष्टप्रतियोगिव्यधिकरणार्द्रेन्धनशाकपाकजत्वोद्भूतरूपादेरभावस्य प्रतियोगितावच्छेदकं साध्यसमानाधिकरणवृत्ति यत् आर्द्रेन्धनत्वादिकं,तदादाय सर्वत्र लक्षणसमन्वयः । सद्धेतौ व्यञ्जनवत्त्वादावतिप्रसङ्गवारणाय–साध्यासमानाधिकरणधर्माधिकरणेति साधनाधिकरणविशेषणम् । न च तद्वारणाय–साध्यानधिकरणसाधनाधिकरणमित्येव निवेश्यमिति वाच्यम् ।

भावोऽज्ञानेन भज्यते, अपि तु साध्यसाधकतया प्रयुक्तहेतुनिष्ठानुमितिप्रामाण्याभावसम्पादकसोपाधिकत्वज्ञानस्योपाधिज्ञानाधीनतया उपाधेश्च साध्यव्यापकाद्यात्मकतयोपाधिज्ञानस्य साध्यव्यापकत्वादिज्ञानाधीनत्वेन च 'पर्वतो वह्निमान् धूमात्' इत्यादौ पक्षेतरत्वस्य च साध्यव्यापकत्वाभावज्ञानप्रदर्शनद्वारा परस्य–पक्षेतरत्वे उपाधित्वशङ्का वादिना निवर्त्यत इति प्रतिपाद्यत इति । इत्थञ्च बाधोन्नीत–पक्षाव्यावर्तकयद्धर्मावच्छिन्नप्रकृतसाध्यव्यापकत्वं, तद्धर्मावच्छिन्नसाधनाव्यापकत्वमुपाधित्वमिति निष्कर्षः । यत्तत्पदस्य फलमत्रैव ग्रन्थकृतैव वक्ष्यते ।

(१) साध्यस्य व्यापकः, तस्याऽभावस्तस्येत्यर्थः । प्रकृते आर्द्रेन्धनाद्यभावस्तादृशोऽभावः ।

उपाधिलक्षणज्ञानस्यैव हेतौ व्यभिचारविषयकतया उपाधिज्ञानानन्तरमुपाधिना व्यभिचारानुमानानर्थक्यापत्तेः । साधनपदं साधनतावच्छेदकावच्छिन्नपरम् । तेन 'द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वात्'इत्यादौ घटत्वादौ नाऽतिप्रसङ्गः। न वा 'द्रव्यं गुणान्यत्वे सति सत्त्वात्'इत्यादौ साधनव्यापकगुणान्यत्वादौ। 'धूमवान्वह्नेः''पृथिवी द्रव्यत्वात्'इत्यादौ संयोगादिवारणाय—प्रतियोगिव्यधिकरणत्वमत्यन्ताभावविशेषणम् । 'द्रव्यं जातेः'इत्यादौ विशिष्टसत्त्वादिसङ्ग्रहाय-प्रतियोगितावच्छेदकावच्छिन्नेति । न च साधनवति यत्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नत्वेनोक्ताभावाप्रसिद्धिवारणाय—साधनवति स्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वनिवेशावश्यकत्वे तत्तदुपाध्यभावस्य स्वपदेनोपादानात् तदननुगमेन सकलोपाधिसाधारणमीदृशमपि लक्षणं न सम्भवतीति वाच्यम् । साधनवन्निष्ठभेदप्रतियोगितावच्छेदकावच्छिन्नत्वेन प्रतियोगितानामनुगमसम्भवात् । धूमादिसाध्यकासद्धेतौ ह्रदत्वादिवारणाय-साध्यसमानाधिकरणेत्यादि । न च तद्वारणाय—साध्यसामानाधिकरण्यमेव निवेश्यमिति वाच्यम् । साध्यासमानाधिकरणार्द्रेन्धनाद्यसङ्ग्रहापत्तेः । नचैवमपि जलवृत्तित्वविशिष्टद्रव्यत्वादावतिप्रसङ्गः, स्वविशिष्टाधिकरणसाध्याधिकरणकत्वेन चरमधर्मविशेषणे स्वत्वाननुगमेन सकलोपाधिसाधारण्यानिर्वाहादिति वाच्यम् । साध्यवन्निष्ठाधिकरणतानिरूपकतावच्छेदकत्वस्य विवक्षणीयत्वात् । तथा च लघीयसा साध्यसमानाधिकरणेत्यादिविशेषणेनैव पर्यवसितसाध्यव्यापकविशेषणेन साध्यविरुद्धजलत्वादेर्वारणे तदनिवेशेन,यत्त्वानिवेशेन चाऽस्मिन्मते लाघवमित्याहुः, तन्न । साध्यासमानाधिकरणधर्मनिवेशपक्षे तुल्यत्वे, साध्यव्यापकाभावपक्षे अभावाधिक्येन गौरवात् । परार्थानुमानस्थले उपाधिघटकसाध्यव्यभिचारपर्यवसिततादृशसाधनोद्भावनेनैव कृतकृत्य-

तायामुपाध्युद्भावनवैयर्थ्यापत्तेश्च । साधनवन्निष्ठभेदप्रतियोगितावच्छेदकीभूतो यो धर्मः, तद्धर्मावच्छिन्नप्रतियोगिव्यधिकरणाभावनिवेशेन यत्तत्त्वानिवेशसत्त्वाच्च । स्वावच्छिन्नसाध्यव्यापकत्वस्वावच्छिन्नसाधनाव्यापकत्वोभयसम्बन्धेन यत्किञ्चिद्धर्मविशिष्टत्वमुपाधित्वमित्यनुगमस्य पूर्वमतेऽपि सम्भवाच्च ।

अन्ये तु स्वानधिकरणसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वमुपाधित्वम्। स्वपदं लक्ष्यपरम् । अत्र च यत्तत्त्वानिवेशेन साधनाव्यापकत्वानिवेशेन च लाघवम् । 'धूमवान् वन्हेः' इत्यादौ महानसायोगोलकान्यतरत्वादिरूप–तादृशधर्मावच्छिन्नसाध्यव्यापकत्वादार्द्रेन्धनादौ लक्षणसमन्वयः । सद्धेतौ तु व्यञ्जनवत्त्वादौ तादृशधर्मावच्छिन्नसाध्यव्यापकत्वाभावान्नाऽतिप्रसङ्गः । न चाऽत्र स्वत्वाननुगमेन लक्षणाननुगम इति वाच्यम् । स्वावच्छिन्नसाध्यव्यापकत्वस्वाधिकरणसाधनाधिकरणनिष्ठाभावप्रतियोग्यधिकरणतानिरूपकत्वोभयसम्बन्धेन किञ्चिद्धर्मविशिष्टत्वमुपाधित्वम् । स्वपदं धर्मपरम्, इति निष्कर्षादित्याहुः, तन्न । स्वानधिकरणसाधनाधिकरणकत्वरूप–साधनाव्यापकत्वस्य शब्दभङ्ग्या–निवेशेन लाघवासम्भवात् ।

परे तु–यद्धर्मावच्छिन्नप्रतियोगिताकाभावाधिकरणं साधनतावच्छेदकावच्छिन्नाधिकरणं साध्यतावच्छेदकावच्छिन्नसाध्याभावाधिकरणं, तद्धर्मावच्छिन्नत्वमुपाधित्वम् । साधनतावच्छेदकावच्छिन्नत्वनिवेशात् 'द्रव्यं विशिष्टसत्त्वात्' इत्यादौ विशिष्टस्याऽनतिरिक्तत्वेऽपि गुणवत्त्वादौ नातिव्याप्तिः । महानसत्वाद्यभावाधिकरणस्य–जलह्रदादेः साध्याभावाधिकरणत्वेन सद्धेतौ तत्राऽतिव्याप्तिवारणाय–साधनेति । महानसत्वाद्यभावाधिकरणस्य–पर्वतादेः साधनाधिकरणत्वेन सद्धेतौ तत्राऽतिव्याप्तिवारणाय–साध्येत्यादि । उभयाभावमादाय तत्राऽतिव्याप्तिवारणाय–साध्यतावच्छेदकनिवेशः । नचैव-

मपि 'द्रव्यत्वाद्यभाववान् प्रमेयत्वात्' इत्यादौ साधनव्यापकसंयोगाभावादावतिव्याप्तिः, संयोगाभावाभावस्याधिकरणे साधनवति द्रव्ये द्रव्यत्वाभावाभावस्य सत्त्वादिति वाच्यम् । यद्धर्मावच्छिन्नेत्यत्र निविष्टाधिकरणपदेन निरवच्छिन्नाधिकरणताश्रयस्य विवक्षितत्वात् । न चैवं 'धूमवान् वन्हेः' इत्यादौ ह्रदत्वाद्यभावाधिकरणेऽयोगोलकादौ धूमाद्यभावसत्त्वेन ह्रदत्वादावतिव्याप्तिरिति वाच्यम् । साध्यसमानाधिकरणवृत्तित्वेन धर्मस्य विशेषणीयत्वात् । न च ह्रदवृत्तित्वविशिष्टद्रव्यत्वेऽतिव्याप्तिरिति वाच्यम् । साध्यसमानाधिकरणवृत्तित्वपदस्य-स्वविशिष्टानधिकरणसाध्याधिकरणकं यद्यत्स्वं, तत्तद्भिन्नत्वपरत्वात् । अत्र नञ्द्वयोपादानान्न महानसवृत्तित्वविशिष्टद्रव्यत्वादेरुपाधित्वापत्तिरित्याहुः ।

ननु उपाधेर्दूषकत्वं स्वव्यतिरेकलिङ्गकपक्षविशेष्यकसाध्याभावानुमितिप्रयोजकरूप-सत्प्रतिपक्षोन्नायकतया, उत स्वाभाववद्वृत्तित्वलिङ्गकसाधनपक्षकसाध्यव्यभिचारानुमितिप्रयोजकरूप-साध्यव्यभिचारोन्नायकतया । नाद्यः । 'घटोऽनित्यो द्रव्यत्वात्' 'आर्द्रेन्धनवान्पर्वतो धूमवान् वन्हेः' इत्यादौ पक्षवृत्तिकार्यत्वार्द्रेन्धनाद्युपाधेर्दूषकत्वानापत्तेः । न च तेषामुपाधित्वमेव नास्तीति शङ्क्यम् । तल्लक्षणयोगित्वात् । अन्यथापि दूषकत्वसम्भवाच्च । न द्वितीयः । उपाधिनिष्ठसाध्यव्यापकताहेतुनिष्ठसाध्यव्याप्यताग्राहकसहचारयोस्तुल्यत्वे साध्यव्यापकोपाधिव्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वानुमानवत्-साध्यव्याप्यसाधनाव्यापकत्वेनोपाधेः साध्याव्यापकत्वानुमानसम्भवेनोपाधिव्यभिचारित्वेन साध्यव्यभिचारानुमानासम्भवादिति चेन्न । चरमपक्षस्यैवाङ्गीकारात् । न चाऽनुपदोक्तदोष इति वाच्यम् । साधने साध्यव्याप्तिग्राहकानुकूलतर्कासत्त्वे उपाधेश्च साध्यव्यापकत्वसाधनाव्यापकत्वनिश्चये संशये वा दूषकताबीजचिन्तनात् । तथा च सर्वत्र

व्यभिचारोन्नायकत्वमेव दूषकत्वमित्यर्थः

यत्तु 'अथोपाध्याभासाः' इत्यारभ्य नवधोपाध्याभासाः प्रतिपादिता गङ्गेश्वराचार्य्यैः, तत् अपरे न क्षमन्ते। तथा हि—असाधारण-विपर्यय इति ?। 'असाधारणो विपर्य्ययो—व्यतिरेको यस्य' इति बहुव्रीहिः। साध्याभावे साध्ये इति चादौ पूरणीयम्। तथा च यदभावः साध्याभावे साध्येऽसाधारणो भवति, स उपाध्याभास इत्यर्थः। असाधारण्यमिह सपक्षविपक्षव्यावृत्तत्वमात्रम्। साध्याभावरूप—साध्यवद्वृत्तित्वमिति यावत्। तथा च यदभावः साध्याभावरूप—साध्यवद्वृत्तिः स उपाध्याभास इति फलितम्। तस्य साध्यव्यापकत्वाभावेनाऽसदुपाधित्वादिति भावः, इति माथुरी।

ननूपाधेरसाधारणविपर्ययत्वं कथमाभासताप्रयोजकं, तद्व्यतिरेकस्याऽसाधारण्येन पक्षे साध्याभावासाधकत्वेऽपि 'धूमो वह्निव्यभिचारी पर्वतेतरत्वव्यभिचारित्वात् द्रव्यत्ववत्' इति रीत्या तद्व्यभिचारेण हेतौ साध्यव्यभिचारसाधनेऽसाधारण्यानवकाशेन तत्साधकतया दूषकत्वसम्भवात्। दूषकत्वे सदुपाधिताया दुर्वारत्वात्। न च सत्प्रतिपक्षस्थलाभिप्रायेण तदभिधानं, अत एव 'इदं च सत्प्रतिपक्षोन्नायकत्वमभिमेत्य' इति दीधितिग्रन्थोपि सङ्गच्छते, इति वाच्यम्। उपाधेरनित्यदोषतापत्तेः। न चेष्टापत्तिः। सद्धेतोरपि उक्तरीत्या सोपाधिकत्वापत्तेः। 'उपाधेर्नित्यदोषत्वात्' इत्यग्रिममूलविरोधाच्च। उपाधिव्यतिरेकहेतुना साध्याभावसाधनेन अन्वयव्याप्तिग्रहप्रतिबन्धकस्यासाधारण्यस्य दोषाभावाच्च। न च व्यतिरेकिणि असाधारण्यफलस्यान्वयव्याप्त्यग्रहस्याऽकिञ्चित्करत्वेपि सत्प्रतिपक्षप्रयोजकतयाऽसाधारण्यदोष एवेति वाच्यम्। सत्प्रतिपक्षे सत्प्रतिपक्षोत्थापकस्यादोषताया व्यवस्थापितत्वादिति चेत्—

अत्र—दीधितिकृत्—सत्प्रतिपक्षोन्नयनौपयिकसाध्यव्यापकत्व-

ग्राहकप्रमाणभावे तात्पर्यमिति । तस्यायमाशयः—'स श्यामो मित्रातनयत्वात्'इत्यादौ सत्प्रतिपक्षोन्नायकस्यापि शाकपाकजत्वादेः साध्यव्यापकत्वग्राहकप्रमाणशून्यत्वादाभासत्वं स्यादतस्सत्प्रतिपक्ष इति। तथा च 'स श्यामो मित्रातनयत्वात्'इत्यादौ शाकपाकजत्वादौ निरुक्तरूपसत्त्वे न तस्याऽऽभासत्वमित्यर्थः । न चैवमपि'काकः श्यामो मित्रातनयत्वात्'इत्यादौ तस्याऽऽभासत्वापत्तिर्दुर्वारा। तत्र तस्य निरुक्तरूपवत्त्वाभावादिति वाच्यम् ।सत्प्रतिपक्षोन्नयनौपयिकरूपमादायाऽऽभासतायामिष्टापत्तेः। तत्र तस्य व्यभिचारोन्नायकतया दूषकत्वेनोन्नयनौपयिकरूपवैकल्याभावेनाऽऽभासत्वविरहादुपाधित्वं सुघटम् । न चैवं'पर्वतो धूमवान् वह्नेः'इत्यादौ, आद्यविशेषणशून्यत्वेन सत्प्रतिपक्षोन्नयनौपयिकनिरुक्तरूपशून्यत्वेनाऽऽर्द्रेन्धनादेरप्याभासतापत्तिरिति वाच्यम् । यत्पक्षकयत्साध्यकयत्साधने यदुन्नायकतयोद्भावयितुरुपाधेर्दूषणत्वमभिमतं, तदुन्नयनौपयिकरूपवैकल्यस्यैवाऽऽभासत्वे प्रयोजकत्वात् । तथा च—यदि 'पर्वतो धूमवान्वह्नेः'इत्यादौ सत्प्रतिपक्षोन्नायकतया, तर्हि इष्टापत्तिः, नो चेत्तदाऽसदुपाधित्वमिति । अत एव 'यत्र यदुन्नायकतया दूषणत्वमुपाधेः, तत्र तदुन्नयनौपयिकरूपवैकल्यमेवाऽऽभासत्वे प्रयोजकम्' इति दीधितिग्रन्थोपि सङ्गच्छते इति । अस्योदाहरणमाह—यथाऽन्वयव्यतिरेकिणि साध्ये बाधोन्नीतान्यपक्षेतर इति । अस्योदाहरणं—'पर्वतो वह्निमान्धूमात्' इत्यादौ पर्वतेतरत्वादि । केवलान्वयिसाध्ये साध्याभावाप्रसिध्याऽन्वयव्यतिरेकिणीति । अन्वयः—साध्यतावच्छेदकसम्बन्धः, तदवच्छिन्नव्यतिरेकप्रतियोगिनीत्यर्थः । 'जलह्रदो वह्निमान्द्रव्यत्वात्' इत्यादौ ह्रदेतरत्वादेर्व्यतिरेकस्य साध्याभाववद्वृत्तित्वविरहाद्बाधोन्नीतान्येति—पक्षविशेषणमिति । साध्याभाववत्तया प्रमितान्येत्यर्थः ।

अत्र विचारयामः—'असाधारणविपर्ययः' इति मूलम् । व्यभिचारोन्नायकत्वपक्षे बाधोन्नीतान्यपक्षेतरत्वस्योपाध्याभासतां बो-

धयति, उत सत्प्रतिपक्षोन्नायकत्वपक्षे । नाद्यः । पूर्वोक्तरीत्या तद्व्यभिचारेण साधने साध्यव्यभिचारासाधनेऽसाधारण्यानवकाशात् । न द्वितीयः । उपाधिव्यतिरेकहेतुना साध्याभावसाधनेऽन्वयव्याप्तिग्रहप्रतिबन्धकस्याऽसाधारण्यस्याऽदोषत्वात् । अत एव 'यद्वा साध्यव्यापकाभाववद्वृत्तितया साध्यव्यभिचारित्वमुन्नेयम्' इति मूलाविरोधित्वोपपादकः, इदञ्च सत्प्रतिपक्षोन्नायकत्वमभ्युपेत्य' इति दीधितिरप्यसङ्गत इव प्रतिभाति । सत्प्रतिपक्षेऽऽभासत्वाङ्गीकारेपि व्यभिचारोन्नायकत्वपक्षे सदुपाधितयाऽनित्यदोषतापत्त्या तु 'उपाधेर्नित्यदोषत्वात्' इति मूलविरोधः । किञ्च 'वह्निरनुष्णः कृतकत्वात्' इत्यादौ बाधोन्नीतपक्षेतरत्वस्याऽऽभासतापत्तेः । व्यतिरेके पक्षमात्रवृत्तित्वरूपासाधारण्यात् । नचेष्टापत्तिः । तस्य साध्यव्यापकत्वनिश्चयेन सदुपाधित्वात् ।

अप्रसिद्धसाध्यविपर्ययः २ । यथा केवलान्वयिनि साध्ये पक्षेतरत्वादिः='अप्रसिद्धः–असत् साध्यविपर्ययो यस्य' इत्यत्र यत्पदार्थस्य पदार्थैकदेशे साध्येऽन्वयः । तथा चाऽप्रसिद्धविपर्ययसाध्यक इत्यर्थः–अत्यन्ताभावप्रतियोगितानवच्छेदकावच्छिन्नसाध्यसम्बन्ध इति यावत् । साध्यतावच्छेदकरूपेण व्यतिरेकाप्रतियोगित्वे निश्चिते तेन रूपेण साध्यव्यतिरेकसिद्ध्यसम्भवादाभासत्वम् । 'पक्षेतरत्वादिः' इत्यत्राऽऽदिपदात्पक्षेतरातिरिक्तवस्तुमात्रधर्मपरिग्रहः । केवलान्वयिनि साध्ये कुत्रचित्साध्यव्यापकत्वस्य, क्वचिच्च साधनाव्यापकत्वस्य विरहाद्वस्तुमात्रधर्मस्यैवोपाध्याभासत्वादिति भावः । 'अप्रसिद्धो ऽज्ञातः साध्यविपर्ययोऽस्य' इत्युक्ते 'पृथिवीतरेभ्यो भिद्यते पृथिवीत्वात्'इत्यादावज्ञातेतरभेदसिद्धिवत् व्यापकव्यतिरेकेण ज्ञातस्य साध्यविपर्ययस्य सिद्धिसम्भवादाभासत्वं न स्यादिति ।

अत्र विचारयामः–असत्पदं विहाय सन्दिग्धार्थकाप्रसिद्ध-

पदोपादानमनुचितम्, 'असत्साध्यः' इति च वक्तव्यम् । 'असत्साध्यं साध्याभावरूपं यस्य' इति विग्रहे तादृशार्थलाभात् । 'असद्विपर्ययसाध्यकः' इति वा । 'पक्षमात्रवृत्तिरसाधारणः' इति मतेऽसाधारणे एतस्याऽन्तर्भावः ।

बाधितसाध्यविपर्ययः ३ । 'व्याप्यतासम्बन्धेन बाधितः साध्यविपर्ययो यत्र' इति व्युत्पत्त्या साध्याभावव्याप्य इत्यर्थः । दृष्टो हि–व्याप्यतासम्बन्धेन वन्ह्यभावे धूमाभावो वाधितः, वन्ह्यभावश्च धूमाभावव्याप्य इति । अस्योदाहरणमाह–यथा 'वह्निरनुष्णः, तेजस्त्वात्' इत्यत्राऽकृतकत्वम् । 'न विद्यते कृतं कार्यं यत्र' इति व्युत्पत्त्या जन्यधर्मानाश्रयत्वमित्यर्थः । तेन जन्यत्वरूपाकृतकत्वस्य तेजःपरमाणावसत्त्वेपि न क्षतिः ।

अत्र विचारयामः–स्वस्मिन् साध्याभावव्याप्यत्वज्ञानेऽपि स्वाभावेन साध्याभावाज्ञापकत्वे विरोधाभावः । साध्याभावाभावः–उपाधिसमानाधिकरणो न भवति, उपाधिर्वा साध्याभावाभाववद्वृत्तिर्न भवतीति–ज्ञाने उपाध्यभावे निरुक्तसाध्याभावव्याप्यत्वज्ञानाभावेनोपाधेः सत्प्रतिपक्षोज्ञापकत्वासम्भवेनाऽऽभासत्वसम्भवेपि लाघवेन 'साध्याभावव्याप्यः' इत्येव वक्तव्यम् ।

पक्षाव्यापकविपर्ययः ४ । पक्षः–साध्यवान्, तद्वृत्तिविपर्ययक इत्यर्थः । क्वचित् 'पक्षाव्यावर्तकविपर्ययः' इति पाठः । तस्याप्ययमेवार्थः । अस्योदाहरणमाह—'क्षित्यादिकं सकर्तृकं कार्यत्वात्' इत्यत्राऽणुव्यतिरिक्तत्वम् । अत्राऽणुव्यतिरिक्तत्वव्यतिरेकस्य क्षित्यादेरेकदेशवृत्त्या भागासिद्धेः । क्षित्यादिकं–पृथिव्यादिकमित्यर्थः । अणुव्यतिरिक्तत्वं–परमाणुभिन्नत्वम् । अस्योपाध्याभासत्वे बीजमाह–अत्रेति । परमाणुव्यतिरिक्तत्वे इत्यर्थः । अणुव्यतिरिक्तत्वव्यतिरेकस्य एकदेशवृत्त्या–एकदेश एव वृत्त्या–नित्यपृथिव्यादावेव वृत्त्येतियावत् । भागासिद्धेः–उपाधिलक्ष-

णान्तर्गतस्य साधनाव्यापकत्वभागस्यासिद्धेरित्यर्थः ।

अत्र विचारयामः—'पर्वतो धूमवान्वह्नेः'इत्यादावार्द्रेन्धनादेराभासतापत्तिः, तद्व्यतिरेकस्य पक्षाऽव्यापकत्वात् । नचेष्टापत्तिः 'साध्यव्यापकः' इत्याद्युपाधिलक्षणस्य तत्र सत्त्वात् । उपाधेर्नित्यदोषत्वाङ्गीकारात् । दूषकताबीजस्य व्यभिचारोन्नायकत्वादेस्सत्त्वाच्च । पक्षपदस्य साधनपरत्वेपि उक्तदोषानुद्धारात् । न च साधनव्यापक इत्यत्रैव तात्पर्यम् । तादृशार्थे तात्पर्यग्राहकमानाभावात् । लाघवात्तथैव वक्तव्यत्वापाताच्च । सत्प्रतिपक्षोन्नायकत्वपक्षे साधनव्यापकत्वस्याऽऽभासताप्रयोजकत्वाभावाच्च । व्यभिचारोन्नायकत्वपक्षेपि 'साध्याव्यापकः,' 'साधनव्यापकश्च' एवंरीत्याऽऽभासताप्रयोजकविभागसम्भवेऽसाधारणेत्यादिरीत्या विभागकरणानुपपत्तेः ।

पूर्वसाधनव्यतिरेकः५। यथा—'शर्करारसोऽनित्यवृत्तिर्गुणत्वात्,' 'रसो नित्यो रसनेन्द्रियजन्यनिर्विकल्पकविषयत्वाद्रसत्ववत्' इत्यादौ। न च घटादिवृत्तिरसे रसनेन्द्रियजन्यनिर्विकल्पकाविषयत्वसत्त्वाद्व्यभिचार इति वाच्यम् । तस्य गुणान्यत्वेन विशेषणीयत्वात् । 'शर्करायां रसः'इत्युपनीतभानविषये शर्करायां व्यभिचारवारणाय निर्विकल्पकत्वेनोपादानम् । तच्च प्रकारभिन्नत्वम् । तेनांऽऽशिकनिर्विकल्पकमादाय न दोषस्य तादवस्थ्यम् ।

अत्र दीधितिकृत्—पूर्वसाधनव्यतिरेकत्वं चोपाध्याभासताप्रयोजकम्, 'अयोगोलकं धूमाभाववदार्द्रेन्धनाभावात्' तत्र, 'धूमाभावद्वन्हेः'इत्यादौ पूर्वसाधनव्यतिरेकस्याऽऽर्द्रेन्धनादेः सदुपाधित्वात् । परन्तु सत्प्रतिपक्षस्थले कथकसम्प्रदायवशात्तस्योपाधित्वेन नोद्भावनमित्यत्रैव मूलतात्पर्यम् । कथकसम्प्रदायवशादनुद्भावने बीजं—सत्प्रतिपक्षमात्रोच्छेदापत्तिः, सर्वत्रैव सत्प्रतिपक्षे पूर्वसाधनव्यतिरेकस्योपाधितयोद्भावनसम्भवादित्यर्थः ।

अत्र विचारयामः—'धूमवान्वह्नेः'इत्यादिस्थापनायां यत्राभासत्वं, तत्र 'न धूमवानार्द्रेन्धनाभावात्'इत्यादिप्रतिस्थापनायां पूर्वसाधनव्यतिरेकस्य साध्याव्यापकत्वेनानुपाधित्वात् 'क्वचित् पूर्वसाधनव्यतिरेक उपाध्याभासः' इत्येवं रीत्या यथाश्रुतमूलार्थसम्भवे 'सत्प्रपक्षोच्छेदः—पूर्वसाधनव्यतिरेकस्योपाधित्वेनानुद्भावने बीजं, नतूपाध्याभासत्वम्' इति मूलतात्पर्यवर्णनं दीधितिकृतामसङ्गतमिव भाति । उक्तरीत्या तदनुद्भावने उपाध्याभासत्वस्यैव नियामकत्वलाभात् । यदपि सत्प्रतिपक्षमात्रोच्छेदापत्तिः, तदप्यज्ञानविजृम्भितम्, आभासस्थल एव पूर्वसाधनव्यतिरेकरूपोपाधेराभासत्वेन सत्प्रतिपक्षसम्भवात् । मूले च 'धूमवान्वह्नेः'इत्यादिस्थापनायां 'वह्निव्यतिरेकः' इत्येव कथनौचित्यात् ।

पूर्वसाधनव्याप्यव्यतिरेकः६ । यथा—अकर्तृकत्वानुमाने नित्यत्वादि, कादाचित्कत्वेन किञ्चित्कालावृत्तित्वरूपेण सकर्तृकत्वस्थापनायामिति शेषः । अकर्तृकत्वानुमाने ऽकर्तृकत्वसाधके प्रतिहेतावजन्यत्वे इत्यर्थः । एतेन 'क्षित्यादिकं सकर्तृकं कार्यत्वात्'इत्यत्र स्थापनायामनित्यत्वस्य—प्रागभाववृत्तेः कार्यत्वाव्याप्यत्वेन नित्यत्वं पूर्वसाधनव्याप्यव्यतिरेको न भवति, एवं 'क्षित्यादिकं न सकर्तृकं शरीराजन्यत्वाद्व्योमवत्' इत्यादौ क्षित्यादिव्योमान्यतरत्वावच्छिन्नसाध्यव्यापकं नित्यत्वं कादाचित्कत्वाव्याप्यं सदुपाधिरेवेति कथमाभासत्वम्'इति परास्तम् । तथा च 'क्षित्यादिकं सकर्तृकं कादाचित्कत्वात्'इत्यत्रा ऽनित्यत्वं कादाचित्कत्वव्याप्यं, तद्व्यतिरेकश्च नित्यत्वमिति न पूर्वदोषः । 'क्षित्यादिकमकर्तृकमजन्यत्वात्'इत्यादिप्रतिहेतौ क्षित्यादिव्योमान्यतरत्वावच्छिन्नसाध्यव्यापकं नित्यत्वं यथा; तथा तदवच्छिन्नाजन्यत्वरूप—साधनव्यापकमपीति न सदुपाधित्वमिति न द्वितीयोपि दोष इति ।

अत्र विचारयामः—'धूमवान्वह्नेः'धूमाभाववानार्द्रेन्धनाभावात्,'

'द्रव्यं सत्त्वात्' 'इदं न द्रव्यं गुणशून्यत्वात्' इत्यादिप्रतिस्थापनायां वह्निव्याप्यधूमस्य,—सत्ताव्याप्यकर्मान्यत्वादेरभावः। तथा क्षित्यादिकं सकर्तृकं कादाचित्कत्वात्' इदमकर्तृकमजन्यत्वादित्यादिप्रतिहेतौ नित्यत्वमित्येवमुक्तस्य सम्भवे 'यथा ऽकर्तृकत्वानुमाने' इत्यादिक्लिष्टकथनमसङ्गतमिव भाति ।

पक्षविपक्षान्यतरान्यत्वमाभासताप्रयोजकं (१)न भवति ७ । 'अयोगोलकं धूमवद्वह्नेः' इत्यादौ ह्रदायोगोलकान्यतरान्यत्वस्य सदुपाधित्वात् । न च क्वचिदित्यध्याहार्यम् । क्वचित्पदमसत्स्थापनापरं, सत्स्थापनापरं वा । नाद्यः । पूर्वोक्तदोषानुवृत्तेः । चरमे पूर्वोक्तदोषाभावेपि प्रसिद्धानुमाने पक्षसपक्षान्यतरान्यत्वसपक्षविपक्षान्यतरान्यत्वादेरपि उपाध्याभासतया गणनापत्तेः ।

पक्षेतरसाध्याधारः ८ । यथात्रैव पर्वतेतरे वन्हिमत्त्वम्—पक्षेतरत्वविशिष्टसाध्यवत्त्वमित्यर्थः । अत्रापि सत्स्थानाभिप्रायकं क्वचित्पदमध्याहार्य्यम् । तेन 'अयोगोलकं धूमवद्वन्हेः' इत्यादावयोगोलकेतरत्वविशिष्टधर्मवत्त्वादेस्सदुपाधित्वेपि न क्षतिः ।

अत्र विचारयामः—पक्षेतरत्वविशिष्टसाधनाधारत्वपक्षेतरत्वविशिष्टसपक्षत्वादेरपि उपाध्याभासतया गणनापत्तिः। न चात्रव्यर्थविशेष्यत्वम् । पक्षेतरत्वविशिष्टसाध्यवत्त्वमित्यत्रापि तत्सत्त्वात् ।

न च (२)तत्तुल्यश्चेत्यनेन पक्षेतरत्वघटितत्वेन तुल्यो धर्मान्तरोपीत्यर्थकेन मूलेन त्वदुक्तसर्वेषां गणनाकृतेर्नैति वाच्यम् ९ । 'पक्षेतरसाध्याधारः' इत्यत्र व्यर्थविशेष्यतया एतस्य पक्षेतरत्वे पर्यवसाने पक्षेतरस्तत्तुल्यश्चेत्येवं सर्वसङ्ग्रहे असाधारणेत्यादिविशिष्यकथनासङ्गतेः । वौर्ल्यं च—सत्प्रतिपक्षाद्युन्नयनौपयिकरूपवैकल्येन बोध्यमिति ।

(१) "पक्षविपक्षान्यतरान्यः" इति सप्तम उपाध्याभास इत्यर्थः ।
(२) "तत्तुल्यः" इति नवम उपाध्याभास इत्यर्थः ।

लिङ्गलिङ्गिग्रहणेन विषयवाचिना विषयिणं प्रत्ययमुपलक्षयति । धूमादिर्व्याप्यो वह्न्यादिर्व्यापक इति यः प्रत्ययस्तत्पूर्वकम् ।

---

यत्तु "गङ्गेश्वराचार्याः–नापि स्वाभाविकसम्बन्धो व्याप्तिः । स्वभावजन्यत्वे तदाश्रितत्वादौ वाऽव्याप्त्यतिव्याप्तेरिति । एतच्च व्याख्यातं–मथुरानाथभट्टाचार्यैः–स्वाभाविकत्वं हि–हेतुस्वरूपजन्यत्वं, हेतुस्वरूपाश्रितत्वं वा । आद्ये 'द्रव्यं पृथिवीत्वात्'इत्यादौ पृथिवीत्वादिनिष्ठद्रव्यत्वादिसामानाधिकरण्यस्य नित्यतयाऽव्याप्तिः । द्वितीये 'द्रव्यं सत्त्वात्'इत्यादौ व्यभिचारिण्यतिव्याप्तिरित्याह–स्वभावेति । स्वभावजन्यत्वे–हेतुस्वरूपजन्यत्वे, तदाश्रितत्वादौ वा स्वाभाविकपदार्थे इति शेषः । अव्याप्त्यतिव्याप्तेरिति । अव्याप्तिसहातिव्याप्तेरित्यर्थः, मध्यमपदलोपीसमासात् । अन्यथा–द्वन्द्वद्वैविध्येन द्विवचननपुंसकलिङ्गयोरन्यतरापत्तेः । 'तदाश्रितत्वादौ'इत्यादिपदादनारोपिततत्त्वपरिग्रहः । तत्रापि 'द्रव्यं सत्त्वात्'इत्यादावतिव्याप्तिर्बोध्या, सत्तायां द्रव्यत्वसामानाधिकरण्यस्याऽनारोपितत्वादिति," तन्न । निरुपाधिकसम्बन्धस्यैव स्वाभाविकत्वाभिधानात् ।

तदुक्तं–तात्पर्यटीकायां वाचस्पतिमिश्रैः । तथा हि–"धूमादीनां वह्न्यादिसम्बन्धः स्वाभाविकः, न तु वह्न्यादीनां धूमादिभिः, ते हि विनाऽपि धूमादिभिरुपलभ्यन्ते । यदात्वार्द्रेन्धनादिसम्बन्धमनुभवति, तदा धूमादिभिः सह सम्बध्यन्ते । तस्माद्वह्न्यादीनामार्द्रेन्धनाद्युपाधिकृतः सम्बन्धो, न स्वाभाविकः, अतो न नियतः । स्वाभाविकस्तु धूमादीनां वह्न्यादिसम्बन्धः, उपाधेरनुपलभ्यमानत्वादिति । अधिकं तु तन्निबन्धादावनुसन्धेयम् ।

लिङ्गस्य करणत्वाभावादाह । लिङ्गलिङ्गिग्रहणेनेति । लिङ्गस्य करणत्वेऽतीतादिलिङ्गस्थलेऽनुमितिर्न स्यात्, अनुमित्य-

लिङ्गिग्रहणं चाऽऽवर्त्तनीयम्। तेन लिङ्गमस्यास्तीति पक्षधर्मताज्ञानमपि दर्शितं भवति। तद्व्याप्यव्यापकभावपक्षधर्मताज्ञानपूर्वकमनुमानमिति—अनुमानसामान्यं लक्षितम्। अनुमानविशेषांस्तन्त्रान्तरलक्षितानभिमतान् स्मारयति। त्रिविधमनुमानमिति। तत् सामान्यतो लक्षितमनुमानं विशेषतस्त्रिविधम्—पूर्ववच्छेषवत्सामान्यतो दृष्टञ्चेति। तत्र प्रथमं तावद्द्विविधं—वीतमवीतं च। अन्वयमुखेन प्रवर्त्तमानं विधायकं वीतम्।

---

व्यवहितपूर्वक्षणे लिङ्गाभावादिति भावः। व्याप्तिविशिष्टज्ञानसत्त्वेपि पक्षधर्मताज्ञानाभावेऽनुमित्यदर्शनादाह। लिङ्गिग्रहणं चेति। तद्व्याप्यव्यापकभावेति। एतन्मते फलायोगव्यवच्छिन्नस्यैव करणत्वादिति भावः। स्वमते प्रकारान्तरेण वक्तव्यत्वादाह। तन्त्रान्तरलक्षितानिति। तच्छब्दार्थमाह। सामान्यत इति। 'तन्त्रान्तरलक्षितान्'इति यदुक्तं, तद्दर्शयति। पूर्ववदित्यादिना। स्वमतेन विभागमाह। तत्रेति। तत्र—सामान्यविशेषरूपेषु मध्ये। प्रथमं—सामामान्यतोलक्षितं यदनुमानं, तत्। पूर्ववदादेः प्राचीनसाङ्ख्यीयसञ्ज्ञान्तरमाह। वीतमवीतंचेति।

केचित्तु—'तत्र—पूर्ववदित्यादिषु मध्ये प्रथमं—पूर्ववत् द्विविधम्'इत्याहुः, तन्न। तथा सति प्रथमं वीतं, द्वितीयमवीतमित्येव कथनापत्तेः, द्वयोः सञ्ज्ञान्तरविधानात्—अपरञ्च वीतं सामान्यतोदृष्टमिति चरमस्य वीतान्तरभावकथनासङ्गतेश्च, स्मारयतीति कथनासङ्गतेश्च। 'एवाभिमतान्'इत्यपपाठः। तथाचानुमानं द्विविधम्—वीतमवीतं च। अवीतं शेषवत्। वीतं द्विविधम्—दृष्टस्वलक्षणसामान्यविषयमदृष्टस्वलक्षणसामान्यविषयं च। आद्यं—पूर्ववत्। चरमं—समान्यतोदृष्टमिति। अयमर्थस्त्वग्रेस्पष्ट एव। अन्वयमुखेन—अन्वयसहचारग्रहजन्यव्याप्तिग्रहत्वेन। प्रवर्त्तमानम्—अनुमिति जनकम्।

व्यतिरेकमुखेन प्रवर्तमानं निषेधकमवीतम् ।

तत्रावीतं शेषवत् । शिष्यते परिशिष्यते इति शेषः, स एव विषयतया यस्यास्त्यनुमानज्ञानस्य तच्छेषवत् । यदाहुः—"प्रसक्तप्रतिषेधे, अन्यत्राप्रसङ्गात् शिष्यमाणे सम्प्रत्ययः परिशेषः" इति (वात्स्यायन-न्यायभाष्यम् अ० १ आ० १ सू० ५) अस्य चाऽवीतस्य व्यतिरेकिण उदाहरणमग्रेऽभिधास्यते ।

वीतं द्वेधा-पूर्ववत् सामान्यतो दृष्टं च । तत्रैकं

---

व्यतिरेकमुखेन-व्यतिरेकसहचारमात्रग्रहजन्यव्याप्तिग्रहत्वेन । निषेधकम्—अप्रसिद्धसाध्यकम् । तत्र संमतिमाह । यदाहुरिति । यथा इच्छादयः क्वचिदाश्रिता गुणत्वाद्रूपदिवदित्यादौ गुणत्वेन पृथिव्यादिकार्य—शरीरेन्द्रियाद्याश्रितत्वप्रसक्तौ अधिकरणाप्रत्यक्षत्वेन तन्निषेधे दिक्कालादिगुणानामतीन्द्रियतया तदाश्रितत्वाप्रसङ्गात्-अप्रसक्तेः शिष्यमाणे बुद्ध्याश्रितत्वे सम्प्रत्ययः-प्रमारूपः, स यस्यानुमानस्य प्रतिपाद्यतया अस्ति, तच्छेषवदित्यर्थः । न च पुरुषाश्रितत्वमेव परिशिष्यते, असङ्गो ह्ययमित्यादिश्रुतेः, कामः सङ्कल्प इत्यादिश्रुतेश्च । असदकरणादित्यार्यायामेतदुदाहरणस्यावश्यवक्तव्यत्वादाह । अग्रेऽभिधास्यते इति । न पटस्तन्तुभ्यो भिद्यते तन्तुधर्मत्वात्, इह यद्यतो भिद्यते तत्तस्य धर्मो न भवति यथा गौरश्वस्येत्यादौ (नवमकारिकायाम्) ।

यत्तु-अग्रे-'सामान्यतस्तु दृष्टात्'इति ६ आर्यायामित्यर्थ इति । तन्न । तत्र-उपलक्षणं चैतच्छेषवत इत्यपि द्रष्टव्यम् इति कथनेऽप्युदाहरणानुक्तेः । असदकरणादित्याद्युपसंहारे (नवमकारिकायां) तान्येतान्यभेदसाधनान्यवीतानीत्युक्तेश्च । महानसादौ प्रसिद्धस्य महानसीय-

दृष्टस्वलक्षणसामान्यविषयं यत्तत्पूर्ववत्, पूर्वं-प्रसिद्धं-दृष्टस्वलक्षणसामान्यमिति यावत्, तदस्य विषयत्वेनाऽस्त्यनुमानज्ञानस्येति पूर्ववत्। यथा धूमात् वह्नित्वसामान्यविशेषः पर्वतेऽनुमीयते, तस्य वह्नित्वसामान्यविशेषस्य स्वलक्षणं वह्निविशेषो दृष्टो रसवत्याम्। अपरं च वीतं सामान्यतो दृष्टम्-अदृष्टस्वलक्षणसामान्यविषयम्। यथेन्द्रियविषयमनुमानम्। अत्र हि रूपादिविज्ञानानां

---

वन्हेरनुमानविषयत्वासम्भवादाह। दृष्टेति। दृष्टं च तत् स्वलक्षणं च दृष्टस्वलक्षणं, स्वलक्षणं च-वह्नित्वावच्छिन्नमहानसादिवृत्तित्वविशिष्टो महानसीयवह्निव्यक्तिविशेषः, तस्य सामान्यं तज्जातीयं-वह्नित्वावच्छिन्नम्। विषयत्वेनेति। साध्यतयेति शेषः। तथा च प्रत्यक्षीकृतजातीयसाध्यकमित्यर्थः। उदाहरणमाह। यथा धूमादिति। वह्नित्वसामान्यविशेषः-वह्नित्वावच्छिन्नपर्वतीयवन्हिव्यक्तिविशेषः।

स्वं-सामान्यं लक्षयतीति स्वलक्षणा-व्यक्तिः, दृष्टा स्वलक्षणा यस्य तत्, तच्च तत् सामान्यं च तत्तथा, तत् विषयो यस्य तदिति विग्रह इति कश्चित्। तच्चिन्त्यम्। चिन्ताबीजन्तु-अनुमितेर्व्यक्तिविशेषविषयत्वाभावापत्तिः। स्वलक्षणपदस्य स्वयमेवार्थं दर्शयति। तस्येत्यादिना। वह्निविशेषः—वह्नित्वावच्छिन्नमहानसीयवह्निव्यक्तिविशेषः। अपरस्य वीतसंज्ञकस्य-सामान्यतोदृष्टस्य लक्षणमाह। अदृष्टेत्यादिना। न दृष्टं प्रत्यक्षेण तत् अदृष्टं, अदृष्टं च तत् स्वलक्षणं चाऽदृष्टस्वलक्षणं, तस्य सामान्यं यज्जातीयं, तत् विषयो यस्य साध्यतयाऽनुमानस्य तत् अदृष्टस्वलक्षणसामान्यविषयम्। तथाचाऽप्रत्यक्षीकृतजातीयसाध्यकमित्यर्थः। उदाहरणमाह। यथेन्द्रियविषयमिति। तदेवोपपादयति। अत्र हीति। अत्र-अनुमाने।

क्रियात्वेन करणवत्त्वमनुमीयते । यद्यपि करणत्वसामान्यस्य छिदादौ वास्यादि स्वलक्षणमुपलब्धम्, तथाऽपि यज्जातीयं रूपादिज्ञाने करणवत्त्वमनुमीयते तज्जातीयस्य करणस्य न दृष्टं स्वलक्षणं प्रत्यक्षेण। इन्द्रियजातीयं हि तत्करणम्, नचेन्द्रियत्वसामान्यस्य स्वलक्षणमिन्द्रियविशेषः प्रत्यक्षगोचरोऽर्वाग्दृशाम्, यथा वह्नित्वसामान्यस्य स्वलक्षणं वह्निः । सोऽयं पूर्ववतः सामान्यतो दृष्टात् सत्यपि वीतत्वेन तुल्यत्वे विशेषः ।

---

अनुमीयते इति । प्रयोगस्तु—रूपादिज्ञानं सकरणकं क्रियात्वात् छिदादिवदिति । न च ज्ञानस्य क्रियात्वाभावाद्धेत्वसिद्धिरिति शङ्क्यम्, स्वमताभिप्रायेण तथाभिधानात् । नन्वत्रापि सकरणकत्वसामान्यस्य स्वलक्षणविशेषो वास्यादिकरणकत्वरूपश्छिदादौ प्रसिद्धस्तत्कथमस्य दृष्टस्वलक्षणसामान्याद्भिन्नत्वमित्याशङ्कते । यद्यपीति । अत्रेन्द्रियजातीयकरणकत्वस्य साध्यतया तत्करणकत्वसामान्यजातीयविशेषस्याऽस्मदादिप्रत्यक्षागोचरत्वादित्यभिप्रायेण समाधत्ते । तथापीति । करणत्वसामान्यविशेषत्वस्य वास्यादावभिधानं तु सकरणकत्वस्य साध्यस्य करणे एव पर्यवसानमित्यभिप्रायेणेति बोध्यम् । व्यतिरेकदृष्टान्तमाह । यथेति । पूर्ववतः सामान्यतोदृष्टाद्भेदकं रूपं दर्शयति । सोऽयमिति । तत्पदेन—अनुपदोक्तदृष्टस्वलक्षणसामान्यसाध्यकत्वं गृह्यते । तस्य च विशेष इत्यग्रिमेणान्वयः ।

सोऽयं—सपक्षे साध्यदर्शनरूप इति कश्चित् ।

अन्ये तु सोऽयम्—अदृष्टस्वलक्षणात्मक इत्याहुस्तन्न । सामान्यतोदृष्टादितिपञ्चम्यनुपपत्तेः । पञ्चम्याः षष्ठ्यर्थत्वे तु नायं दोषः ।

परे तु सामान्यतोदृष्टात्—अदृष्टस्वलक्षणसामान्यविषयात् सोऽयं—सपक्षे दृष्टस्वलक्षणात्मकोऽपरवीतस्य पूर्ववतो विशेष इत्यर्थ-

**अत्र च दृष्टं दर्शनम्, सामान्यत इति सार्वविभक्तिकस्तसिः । अदृष्टस्वलक्षणस्य सामान्यविशेषस्य दर्शनं-सामान्यतो ऽदृष्टमनुमानमित्यर्थः ।**

इत्याहुः । सामान्यतोदृष्टपदाददृष्टस्वलक्षणसामान्यविषयमित्युक्तोऽर्थो न लभ्यते, अत उक्तार्थपरत्वं शङ्क्यैव दर्शयति । अत्र च दृष्टमित्यादिना । सामान्यतो ऽदृष्टमित्यत्राऽकारप्रश्लेषाभिप्रायेण प्रकृतमुपसंहरति । अदृष्टस्वलक्षणस्येति ।

ननु तच्चानुमानं त्रिविधं, केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात् । तत्र केवलान्वयिसाध्यकानुमानत्वं केवलान्वय्यनुमानत्वम् । साध्ये केवलान्वयित्वं च-अन्योन्याभावप्रतियोगितानवच्छेदकत्वम् । तादृशं च साध्यं-वाच्यत्वादिरेव, तद्धेतुरेवाऽत्र लक्ष्यः । संयोगाभाववान्मेयत्वादित्यादौ नाऽव्याप्तिः, अन्योन्याभावस्य व्याप्यवृत्तित्वाभ्युपगमात् । अनुमित्यव्यवहितसमानाधिकरणनिर्णयविषयतानवच्छेदकव्यतिरेकितावच्छेदकधर्मावच्छिन्नसाध्यकानुमानत्वं केवलव्यतिरेक्यनुमानत्वम् । लक्ष्यं चेतरभेदाद्यनुमानम् । न च "केवलव्यतिरेक्यनुमानमेव न संभवति, व्याप्तिविशिष्टपक्षधर्मताज्ञानमेवानुमितिहेतुः, प्रकृते च व्यतिरेकसहचारेण साध्यभावे हेत्वभावमात्रव्याप्तिर्गृह्यते हेतौ च पक्षधर्मताग्रह इति अनुमितिकारणाभावेनानुमितेरसम्भवात्" इति वाच्यम् । अनुभवबलेन साध्याभावव्यापकीभूताभावप्रतियोगित्वरूप-व्यतिरेकव्याप्तिज्ञानस्यानुमितिहेतुत्वाभ्युपगमेनोक्तदोषाभावात् ।

स्वाश्रयाभावव्यापकीभूताभावप्रतियोगित्वसम्बन्धेनाऽन्वयव्याप्तिसत्त्वादेव न दोषः इत्यपि कश्चित् । न च "तत्र साध्यं प्रसिद्धमप्रसिद्धं वा ? नाद्यः । अन्वयव्याप्त्यैव निर्वाहे व्यतिरेकव्याप्तेर्वैयर्थ्यापत्तेः । न द्वितीयः । साध्यतावच्छेदकावच्छिन्नप्रसिद्धिं विना तद्व्यतिरेकाप्रसिद्धेः" इति वाच्यम् । पृथि-

सर्वं चैतदस्माभिर्न्यायवार्तिकतात्पर्यटीकायां (अ० १ आ० १ सू० ५) व्युत्पादितमिति नेहोक्तं विस्तरभयात् ।

प्रयोजकवृद्धशब्दश्रवणसमनन्तरं प्रयोज्यवृद्धप्रवृत्ति-

व्याप्तिरभेदसाधनप्रकारस्यान्यत्र प्रसिद्धेः । न पटस्तन्तुभ्यो भिद्यते तन्तुधर्मत्वादित्यादौ साध्यस्य प्रसिद्धत्वेपि तत्र हेत्वभावेनान्वयव्याप्त्यसम्भवात् । अनुमित्यव्यवहितसमानाधिकरणनिर्णयविषयतावच्छेदकव्यतिरेकितावच्छेदकधर्मावच्छिन्नसाध्यकानुमानत्वं अन्वयव्यतिरेक्यनुमानत्वम् । लक्ष्यं चास्य वह्निमान्धूमादित्यादि । तथा चानुमानस्य त्रैविध्यसम्भवे द्वैविध्यकथनमसङ्गतम् । अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतोदृष्टं चेति न्याय—(अ० १ आ० १ सू० ५) सूत्रविरोधश्च । किं च पूर्ववदित्यादेः पूर्वं कारणमस्याऽस्तीत्याद्यर्थः प्रतीयते न तु पूर्वोक्तार्थ इत्याशङ्क्याह । सर्वं चैतदिति । साधारणादिसङ्ग्राहकव्यभिचारित्वादिवत् अन्वयव्याप्तिमत्त्वरूप—वीतत्वस्य केवलान्वय्यन्वयव्यतिरेकिसङ्ग्राहकस्य सम्भवे त्रैविध्यकल्पनाऽन्याय्येति मनसि निधाय—पूर्वेण तुल्यं वर्तते इति पूर्ववत्, क्रियातुल्यतायां च वतिः, सामान्यतो दृष्टमित्यतो दृष्टपदं सम्बध्यते । एवं च पूर्वम्—अन्यतरदर्शनेन सह यत्रान्यतरदर्शनं दृष्टान्तधर्मिणि, ततः पक्षेऽन्यतरदर्शनेन—साधनदर्शनेनाऽन्यतरस्य—साध्यधर्मस्य दर्शनमनुमानमनुमित्यात्मकं ज्ञानमिति भवति क्रियातुल्यतेत्यादिरीत्या तत्र व्युत्पादनादिति भावः ।

अनुमानानन्तरं शब्दनिरूपणे उपजीवकत्वरूप—सङ्गतिं दर्शयति । शब्दश्रवणसमनन्तरेति । प्रयोजकवृद्धोच्चरितेत्यादि । तथा च घटमानयेति प्रयोजकवृद्धोच्चरितशब्दश्रवणानन्तरं घटानयनप्रवृत्तस्य प्रयोज्यवृद्धस्य तदानयनरूपां चे-

हेतुज्ञानानुमानपूर्वकत्वाच्छब्दार्थसम्बन्धग्रहस्य, स्वार्थसम्बन्धज्ञानसहकारिणश्च शब्दस्यार्थप्रत्यायकत्वादनु-

---

पुमुपलभ्य–इयं चेष्टा यत्नजन्या चेष्टात्वात् अस्मदीयहिताहितप्राप्तिपरिहारानुकूलक्रियारूप–चेष्टावदिति तदनुकूलप्रयत्नरूपप्रवृत्तिमनुमाय–सा प्रवृत्तिर्ज्ञानजन्या प्रवृत्तित्वादस्मदीयप्रवृत्तिवदिति तत्कारणीभूतं ज्ञानमनुमाय—इदंज्ञानमेतद्वाक्यजन्यमेतद्विनाऽसत्त्वे सति सत्त्वादिति उक्तवाक्यजन्यत्वमनुमाय–पुनर्घटं नय गामानयेत्यादिशब्दश्रवणानन्तरं प्रवृत्तिं • दृष्ट्वाऽऽवापोद्वापाभ्यां घटपदं घटे शक्तमानयपदमानयने शक्तं लक्षणाग्रहाजन्यशक्तिभ्रमाजन्यैतच्छाब्दधीजनकत्वात्संमतवत्, इत्यादिरीत्या बालो घटादिपदस्य शक्तिं गृह्णाति । तीरे प्रयुज्यमाने गङ्गापदे, शक्तिभ्रमेण पटे प्रयुज्यमाने घटपदे (अपभ्रंशे) व्यभिचारवारणाय लक्षणाग्रहाजन्यशक्तिभ्रमाजन्येति । एवं रीत्याऽनुमानपूर्वकत्वं शब्दार्थसम्बन्धग्रहस्येत्यर्थः । न च शक्तिग्रहस्यानुमानपूर्वकत्वेपि शाब्दबोधेऽनुपयोग इत्याशङ्क्याह । स्वार्थसम्बन्धग्रहेत्यादि । स्वस्यार्थेन सम्बन्धः स्वार्थसम्बन्धस्तस्य ग्रहः सहकारी यस्येति विग्रहः ।

प्रभाकरास्तु–"व्यवहारादेवाद्या व्युत्पत्तिः । उपायान्तरस्य तदधीनत्वात् सा च कार्यान्विते एव । न च घटोद्वापस्थले शुद्धघटस्यैव विषयत्वात्तत्रैव शक्तिरावश्यकीति वाच्यम् । कार्यत्वमाविषयीकृत्य घटाद्यावापस्थले घटबुद्ध्यनुदये उद्वापस्थलेपि कार्यान्वितघटस्यैव विषयत्वाङ्गीकारात् । तथा च घटादिपदं कार्यान्विते शक्तं, नियमेन तदभिधायकत्वात्संमतवत् । घटादिपदं न कार्यानन्विते गृहीतसम्बन्धं तत्र वृद्धैरप्रयुज्यमानत्वात्, सम्बन्धग्राहकप्रयोज्यवृद्धप्रवृत्तिरूपसामग्र्यभावाच्च । नच 'इयं प्रवृत्तिः कृतिसाध्यत्वरूप–कार्यत्वप्रकारकज्ञानजन्या स्वतन्त्रप्रवृत्तित्वात् अस्मदीयप्रवृत्तिवत्, इत्येवंरीत्या कार्यान्विते शक्तिवत्–इयं प्र-

मानपूर्वकत्वमित्यनुमानानन्तरं शाब्दं लक्षयति—

वृत्तिरिष्टसाधनताज्ञानजन्या · स्वतन्त्रप्रवृत्तित्वादस्मदीयप्रवृत्तिव- दितीष्टसाधनताज्ञानमनुमाय तदन्वितेऽपि शक्तिप्रसङ्गः' इति वाच्यम् । इष्टसाधनतालिङ्गककृतिसाध्यताज्ञानस्यैव तन्मते प्रवर्तकत्वात् । न च 'एवं यद्यस्य बोधकं भवति असतिबाधके तत्तत्र शक्तमिति सामान्यव्याप्त्या घटादिपदानां कार्यताविशिष्टघटानयनादिकार्ये शक्तिव्युत्पादनेऽपि कार्यान्वितघटादौ शक्त्यव्युत्पादनात् कार्यान्विते शक्तिरिति प्रतिज्ञाविरोधः' इति वाच्यम् । कार्यत्वविशिष्टघटानयनादिकार्यज्ञानस्य कार्यान्वितघटविषयकत्वेऽप्रतिज्ञाविरोधात् । नचैवं घटपदेनैव कार्यान्वितघटोपस्थापने आनयनादिपदं व्यर्थमिति वाच्यम् । कार्यत्वेन कार्यान्वितघटोपस्थापनेऽपि विशेषकार्यलाभाय तदुपादानस्य सार्थकत्वात् । न च घटमानयेत्यादौ आनयनादिपदानां कार्यवाचकतया स्वान्वयासम्भवेन कार्यान्तरस्य चाऽभावेन कार्यान्वितस्वार्थबोधकत्वाभावात्—कथं तेषां कार्यान्विते शक्तिग्रह इति वाच्यम् । 'कार्यान्विते'इत्यनेन कार्यान्वयशालिनो विवक्षितत्वात् । न च घटादेः कर्मत्वेऽन्वयात्—कथं सर्वेषां कार्येऽन्वय इति वाच्यम् । साक्षात्—परम्परासाधारणाऽन्वयस्य विवक्षितत्वात् । घटकर्मत्वमानयेत्यादिनिराकाङ्क्षादिपदसमुदायादपि शाब्दबोधापत्तिः-इत्यपि न शङ्क्यम् । आकाङ्क्षादेरपि सहकारित्वकल्पनात् । न च 'इयं प्रवृत्तिः कृतिसाध्यत्वरूप—कार्यत्वप्रकारकज्ञानजन्या, इत्युक्तरीत्या कार्यत्वज्ञानस्य प्रवर्त्तकतया कार्यत्वान्विते शक्तिः स्यात्, न तु कार्यान्विते, तज्ज्ञानस्याऽप्रवर्त्तकत्वात्'इति वाच्यम् । कार्यान्विते शक्तिरित्यादौ कार्यपदस्य भावव्युत्पत्त्या कार्यत्वान्विते शक्तिरित्यभ्युपगमात्''इत्याहुः । तन्न । कार्यतावाचकालिङ्लोट्तव्यपञ्चमलकारा (लेडा) दिविधिप्रत्ययसमभिव्याहारादेव कार्यत्वान्वित-

धीनिर्वाहे न तत्र शक्तिकल्पना । गौरवतयोक्तानुमानस्याऽप्रयोजकत्वात् । एतेन 'अन्वितमात्रे एव शक्तिः, कार्यत्वनिवेशे गौरवात्'इति परास्तम् । प्रकारान्तरलभ्येऽपि शक्तिकल्पने—'अनन्यलभ्यो हि शब्दार्थः'इति न्यायविरोधापत्तेः । अन्यथा तव मते व्यक्तावपि शक्तिकल्पनापत्तेः । शब्दमात्रस्यैव तव मते कार्यत्वान्वितशक्तत्वेन कार्यत्वान्वितज्ञानस्यैव च शाब्दहेतुतया विधेरिव शब्दसामान्यस्यैव कार्यत्ववाचकपदत्वात्—सिद्धार्थपुराणानां कार्यत्ववाचक–लिङादिपदासमभिव्याहारमयुक्ताऽप्रमाणभावापत्तेश्च ।। सिद्धार्थेऽपिव्युत्पत्तिसम्भवाच्च । तथा हि ।–स्वभाषया–अनुपलब्धचैत्रपुत्रजन्मा बालः–तादृशेन वार्त्ताहारेण सह चैत्रसमीपं गतः–'पुत्रस्तेजातः'इतिवार्त्ताहारोक्तपदनिचयश्रवणसमनन्तरं चैत्रस्य—'अयं हर्षवान् विकसितवदनत्वात् मद्वत्'इति हर्षोत्पत्तिमनुमाय, अतश्च 'इयं प्रियार्थावगतिहेतुका हर्षोत्पत्तित्वात् संमतवत्'इति प्रियार्थावगतिमवगम्य तस्याश्च कारणविशेषाकाङ्क्षायां 'पुत्रस्तेजातः'इति वाक्यस्य—'इयमवगतिरेतद्वाक्यजन्या एतद्विनाऽसत्त्वे सति तत्सत्त्वात्'इत्यन्वयव्यतिरेकाभ्यां तद्धेतुत्वमध्यवस्यति । ततश्चाऽऽवापोद्वापाभ्यां पदान्तरप्रक्षेपपूर्वपदानुच्चारणाभ्यां—अवधृतशक्तिकतज्जातपदघटितपुत्रादिपदानां—लोकाचारपरिप्राप्तपुत्रजन्ममात्राव्यभिचारिणा–तत्पदाङ्कितपटप्रदर्शनलिङ्गेन 'पुत्रजन्मबोधनार्थमहमागच्छामि'इति वार्त्ताहारोक्तस्मरणेन च हर्षहेतुप्रियार्थावगतौ प्रियासुखप्रसवद्रव्यलाभाद्यविषयकात्वावगतौ ततः 'इयमवगतिस्तनयविषया इतराविषयकत्वात् संमतवत्'इत्यवगम्य ततः 'पुत्रपदं तनये शक्तं असति बाधके तद्बोधकत्वात्'इत्येवं रीत्या तनयादौ शक्तिमवधारयति । पुत्रजन्मज्ञानाव्यभिचारिवृद्धिश्राद्धादिक्रियाविशेषदर्शनात्–पुत्रजन्मज्ञानाऽनुमानसम्भवाच्च । तथा 'देवदत्तः काष्ठैः स्थाल्यामोदनं प-

"आप्तश्रुतिराप्तवचनं तु" इति । आप्तवचनमिति लक्ष्यनिर्देशः, परिशिष्टं लक्षणम् । आप्ता युक्तेति यावत् । आप्ता चासौ श्रुतिश्चेति आप्तश्रुतिः । श्रुतिः—वाक्यज-

चति' इति वर्त्तमानार्थनिष्ठेऽपि प्रयोगे व्युत्पन्नकाष्ठपदव्यतिरिक्तपदविभक्त्यर्थोऽव्युत्पन्नकाष्ठप्रातिपदिकार्थः—'पचति' इति प्रसिद्धार्थपदसमभिव्याहारेण 'यत् पाके करणं तत् काष्ठशब्दप्रतिपाद्यम्' इत्यवगम्य प्रत्यक्षेणेन्धनानां करणभावमवगच्छन् काष्ठपदस्येन्धने शक्तिं व्युत्पद्यते । प्रयोगाश्चात्र भवन्ति—'विवादपदानि नियमेन न कार्यान्वितस्वार्थसामर्थ्यानि पदत्वात् कार्यपदवत्' । कार्यादिपदेषु सिद्धसाधनवारणाय—विवादेति । यदा योग्येतरपदानुप्रवेशस्तदा कार्यान्वितस्वार्थसामर्थ्यवत्त्वमप्यस्तीति तदभावसाधने बाधस्तद्व्यावृत्तये—नियमेनेति विशेषणम् । विपर्यये कार्यपदसमन्वितपदानां कार्यान्वितपरत्वे पर्यायत्वप्रसङ्गो बाधकः ।

एतेन—'इदमनुपपन्नं सिद्धसाधनत्वात् कार्यान्वितमात्रे सामर्थ्यस्याऽनङ्गीकारात्, किन्तु अन्वितकार्ये कार्यान्वियिनि वा तदाश्रयणात्' इति परास्तम् । अन्वियिनि शब्दसामर्थ्ये सति 'कार्यान्वयिनि' इति वक्रोक्तेः केवलकण्ठशोषकरतयोपेक्षणीयत्वाच्च । न च 'अन्वयिनि' इत्येवास्त्विति वाच्यम्, गौरवात् ।

यत्तु—"कार्यपदव्यतिरिक्तानां कार्यान्विते सामर्थ्यं कार्यपदस्य तु स्वरूपेऽन्यान्विते वेति प्रयोजकद्वैविध्याङ्गीकारे गौरवप्रसङ्गात्—योग्येतरान्विते सामर्थ्यमित्येकमेव प्रयोजकमुपादेयमिति वदतो वेदान्तिनः प्रति सिद्धसाधनम्" इति । तन्न । योग्यान्यान्विते सामर्थ्यमङ्गीकुर्वतामप्यन्यपदार्थानामानन्त्येन तदन्वितानामानन्त्यात्—पदसामर्थ्यस्य बहुविषयताया दुष्परिहरत्वात् ।

आप्ता—परम्पराप्राप्ता । अनेनापौरुषेयत्वं सूचितम् । स्वमते फलाऽयोगव्यवच्छिन्नस्य करणत्वादाह । श्रुतिरित्यादि ।

नितं वाक्यार्थज्ञानम् ।

तच्च स्वतः प्रमाणम् । अपौरुषेयवेदवाक्यजनितत्वेन सकलदोषाशङ्काविनिर्मुक्तं(१) युक्तं भवति । एवं वेदमूलस्मृतीतिहासपुराणवाक्यजनितमपि ज्ञानं युक्तं भवति।

आदिविदुषश्च कपिलस्य कल्पादौ कल्पान्तराधीतश्रुतिस्मरणसम्भवः, सुप्तप्रबुद्धस्येव पूर्वेद्युरवगतानामर्थानामपरेद्युः । तथा च—आवट्यजैगीषव्यसंवादे भगवान् जैगीषव्यो दशमहाकल्पवर्तिजन्मस्मरणमात्मन उवाच "दशसु महाकल्पेषु विपरिवर्तमानेन मया" इत्यादिना ग्रन्थसन्दर्भेण ।

---

अपौरुषेयेति। अपौरुषेयत्वं तु सजातीयोच्चारणापेक्षोच्चारणविषयत्वम् । सकलेति । दोषाः—विप्रलिप्साकरणापाटवादयः, तद्रहितम् । युक्तं भवतीति । अबाधितार्थविषयं भवतीत्यर्थः । श्रुति(पृ० १६१ पं० ४) ग्रहणेनेतिहासादीनां वेदमूलकत्वेन लौकिकवाक्यानां तु प्रत्यक्षानुमानादिमूलकत्वेन प्रामाण्यमिति सूचितम् । तदेव दर्शयति । एवमित्यादिना ।

केचित्तु—'यथार्थज्ञानवानाप्तः, श्रूयते इति श्रुतिः—वाक्यम् । तथा चाप्तोक्तवाक्यत्वं लक्षणं पर्यवसितम्' इत्याहुः ।

ननु गतकल्पीयवेदस्मरणमस्मदादीनां न सम्भवत्याशङ्क्याह । आदिविदुषश्चेति । विदुषः सर्वज्ञस्येत्यर्थः । 'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्त्ति'(श्वे०५।२)इति श्रुतेः। अत्रेश्वरप्रतिषेधस्यैश्वर्यवैराग्याद्यर्थमनुवादान्न विरोधः । अन्यथा लोकायतिकमतानुसारेण नित्यैश्वर्यं न प्रतिषिध्येत तदा पूर्णनित्यनिर्दोषैश्वर्यदर्शनेन तत्र चित्तावेशतो विवेकाभ्यासप्रतिबन्धापत्तेः । तत्र कैमुतिकन्यायमाह । तथा चेति । यदि योगीन्द्रस्य

( १ ) विनिर्मुक्तेरितिपाठः ।

आप्तग्रहणेनाऽयुक्ताः शाक्यभिक्षुनिर्ग्रन्थकसंसारमोचकादीनाम्–आगमाभासाः परिहृता भवन्ति । अयुक्तत्वं चैतेषां विगानात्,—

---

जैगीषव्यस्य बहुकल्पानुभूतविषयस्य स्मरणं सम्भवति तदा किमुत सर्वज्ञस्येश्वरस्येत्यर्थः । अयुक्ताः–बाधितार्था विषयाः । शाक्यभिक्ष्वादयो–वैनाशिकाविशेषाः । आगमाभासाः–आगमवदाभासन्ते इत्यागमाभासाः । तत्र सादृश्यं तु–अज्ञातज्ञापकत्वम् । अयुक्तत्वे तु विगानं–श्रुत्यादिविरुद्धत्वं हेतुः, तदेवाह । विगानादित्यादि । विगानं तु–'बौद्धस्य चत्वारः शिष्या भवन्ति–सौत्रान्तिकवैभाषिकयोगाचारमाध्यमिकाः, तत्र प्रत्ययवैचित्र्यादर्थोऽनुमेय इति सौत्रान्तिकः, प्रत्यक्ष इति वैभाषिकः, इति आद्ययोरवान्तरमतभेदेपि सर्वास्तित्ववादिनौ,तृतीयस्तु विज्ञानास्तित्ववादी, चतुर्थस्तु सर्वशून्यत्ववादी'इति । नचेश्वरसत्त्वादिमतभेदेन विगानं तव मतेप्यस्तीति वाच्यम् । सेश्वरवादे एव तात्पर्योपपादनेन विगानाभावात् । न च तन्मतेपि हीनमध्यमोत्तमशिष्यभेदेन मतभेदोपपत्त्या शून्यरूपैकतत्त्वे एव पर्यवसानान्न विगानरूपदोष इति वाच्यम् । प्रमाणविरोधस्यैव मुख्यहेतुत्वात् । न च सर्वस्य सदभिमतस्य "नेहनानास्ति किञ्च न, अस्थूलमनणु"इत्यादिनिषेधादसदेव परमार्थ इति श्रौतपक्षे निर्णीते स्वाप्नदृष्टान्तेन जाग्रत्पपञ्चस्य मिथ्यात्वावगमे तद्ग्राहिप्रत्यक्षप्रमाणविरोधोऽकिञ्चित्कर इति वाच्यम् । "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनास्सत्प्रतिष्ठाः" इत्यादिश्रुतिविरोधात् । शून्यवादे पूर्वोक्तश्रुतेस्तात्पर्याभावात् । यदीदं सर्वं शून्यमेव स्यात्तर्हि वन्ध्यापुत्रवदपरोक्षं न स्यात् । न चाऽविद्यया तत्सम्भवः । तव मते आवरणीयरूपाभावेन निरधिष्ठानकापरोक्षभ्रमासम्भवात् । खे शुण्डकभ्रमस्यापितेजोऽवयवाधिष्ठितत्वात । न च शून्यमेव तदधिष्ठानम्, तत्तादात्म्येन प्रतीत्यापत्तेः । न च स्वाप्न-

विच्छिन्नमूलत्वात् प्रमाणविरुद्धार्थाभिधानाच्च कैश्चिदेव म्लेच्छादिभिः पुरुषापसदैः पशुप्रायैः परिग्रहाद् बोद्धव्यम् ।

---

रजतादौ तन्निषेधे च शुक्तिकाद्यधिष्ठानस्य शुक्तिकाद्यवधेश्चादर्शनेन सदधिष्ठानक एव भ्रमः सदवधिक एव निषेध इति नियमेनाभाव इति वाच्यम् । जागरणे स्वाधिष्ठानादेर्दर्शनेन निरधिष्ठानादेरदर्शनेन च स्वप्नेऽपि तथाकल्पनात् । न च 'स्वाप्नरजतादेः साधिष्ठानत्वकल्पना न सम्भवति, दूरदेशस्थशुक्त्यादेरसंनिकृष्टतया तदधिष्ठानत्वासम्भवात्—देशविशेषस्यैवाधिष्ठानतयोपलभ्यमानत्वेन चेतनस्याप्यधिष्ठानत्वासम्भवात्—प्रातिभासिकदेशस्यापि पूर्वकालीनत्वाभावेनाधिष्ठानत्वासम्भवात्'इति वाच्यम् । चैतन्ये देशविशेषविशिष्टत्वेन स्वाप्नरजतादेः कल्पनेन देशविशेषाधिष्ठितत्वेन प्रतीत्युपपत्तेः । न च चैतन्यस्याधिष्ठानत्वाङ्गीकारे भ्रमे शुक्त्यादिवत्सामान्यरूपेण भानापत्तिरिति वाच्यम् । सन् घट इत्यादिवत् सद्रजतमित्यादिप्रतीतेः । न चैवं "सर्वीः स्वप्नो भूत्वेमं लोकमनुसञ्चरति"इति श्रुतिविरोधापत्तिरिति वाच्यम् । "दशभिःसह पुत्रैश्च भारं वहति गर्दभी"इत्यत्र पुत्राणां भारानन्वयवदन्तःकरणस्य कार्येऽन्वयेनोक्तश्रुतेस्तद्विशिष्टे तात्पर्याभावात् । अत एवाहं सुखीत्यादिवदहं रजतमित्यादि न प्रतीत्यापत्तिः ।

विच्छिन्नमूलत्वात्—प्रत्यक्षवेदादिमूलशून्यत्वात् । ननु वेदमूलकत्वमनुमेयमित्याशङ्क्याह । विरुद्धार्थेति । तथा च उक्तप्रत्यक्षश्रुतिविरोधेऽनुमानासम्भवादित्यर्थः । शिष्टापरिग्रहादप्यनुमानं न सम्भवतीत्याह । कैश्चिदित्यादि । पुरुषापसदैः—सङ्करजातीयैः । अत्र 'च'शब्दः कैमुतिकन्यायसूचकः । यदि प्रत्यक्षश्रुतिविरोधादनुमानं न सम्भवति किमुत तदाऽशिष्टपरिग्रहैरित्यर्थः । संसारमोचकादीनामश्वत्यादिपदेन(पृ० १६३ पं० ३)जैनानामेकान्तभङ्गप्रयो-

जकः सप्तभङ्गीनयोपि ग्राह्यः । सच 'नैकस्मिन्नसम्भवात्' (ब्र० अ० २ पा० २ सू० ३३) इति सूत्रभाष्ये निरस्तः ।

तत्स्वरूपमुक्तमनन्तवीर्येण—

वाक्येऽनेकान्ततायोती गम्यं प्रति विशेषणम् ।
स्यान्निपातोऽर्थयोगित्वात्तिङन्तप्रतिरूपकः ॥ इति ।

अस्यार्थः—वाक्ये—स्यादस्तीत्यादिवाक्ये । 'स्यात्'इति-शब्दस्तिङन्तप्रतिरूपकः—तिङन्तसदृशनिपात इत्यर्थः । कोऽस्यार्थ इत्यत आह—अनेकान्ततेति । ननु कथमेतस्यानेकान्ततायोतकत्वमिति चेच्छृणु । यदिपुनरयमनेकान्तिकः 'स्यात्'शब्दो न भवेत् स्यादस्तीति वाक्ये स्यात्पदमनर्थकं स्यात् । अत एवोक्तम्—अर्थयोगित्वादिति। नन्वर्थवत्त्वान्यथानुपपत्त्या यः कश्चिदर्थो द्योत्यतां कथमनेकान्ततायोतकत्वम्। तद्योतकत्वेपि विनिगमनाविरहात्तस्य कस्य चिदनेकान्ततायोतकत्वापत्त्यासिद्धसाधनमर्थान्तरं वा स्यादित्याशङ्क्याह—गम्यं प्रतीति। तथा च धाद्युक्तास्त्याद्यर्थस्यैवानेकान्ततां द्योतयति सान्निध्याद्वादिबुद्ध्युपस्थितत्वेन लाघवाच्च । न चानेकान्ततावाचकत्वमेवास्त्विति वाच्यम् । निपातानां द्योतकत्वस्यैव तन्त्रान्तरे सिद्धान्तितत्वात् । तथा च स्यात्पदात्कथञ्चिदर्थोऽनुक्तः प्रतीयते इति न स्यात्पदस्यानर्थक्यम्—स्याच्छब्दघटितवाक्ये। सप्तभङ्गीनयो नाम—सप्तानां भङ्गानामर्थादेकान्तभङ्गानां समाहारः सप्तभङ्गी तस्य नयः—न्यायस्तत्प्रतिपादकं वाक्यम् । तथा च सप्तपदार्थस्यैकान्तभङ्गद्वारैव समाहारेऽन्वयात्सप्तैकान्तभङ्गप्रतिपादकं वाक्यमित्यर्थः । ननु सप्त एकान्तभङ्गाः कथं कथं कदा कदा प्रसरन्तीत्याकाङ्क्षायां तेनैवोक्तम्—

तद्विधानविवक्षायां स्यादस्तीति गतिर्भवेत् ।
स्यान्नास्तीति प्रयोगः स्यात्तन्निषेधे विवक्षिते ॥
क्रमेणोभयवाञ्छायां प्रयोगः समुदायभृत् ।
युगपत्तद्विवक्षायां स्यादवाच्यमशक्तितः ॥

आद्याऽवाच्यविवक्षायां पञ्चमो भङ्ग इष्यते ।
अन्त्यावाच्यविवक्षायां षष्ठभङ्गसमुद्भवः ॥
समुच्चयेन युक्तश्च सप्तमो भङ्ग उच्यते । इति ।

अस्यार्थः–यदा सत्कार्यवादिना साङ्ख्यमतानुयायिना सह विवादस्तदा 'स्यादस्ति'इतिप्रयोगः(१) स्यात् ।–यदा सर्वदा सन्निविक्षया 'घटः सर्वदा सन् अतीतादित्रितयावस्थावत्त्वादात्मादिवत्'इत्युक्ते 'घटः सर्वदा सन्न भवति सत्त्वाद्विद्युल्लतादिवत्' । यदि वस्तु सर्वदा स्यात्तर्हि सर्वदेशेपि स्यादन्यथा परिच्छिन्नत्वेनाऽसत्त्वापत्त्या सर्वदापि न स्यात् । तथा च यदि वस्तु एकान्ततोस्त्येव ततः सर्वथा सर्वदा सर्वत्र सर्वात्मनास्त्येवेति न तदेप्साजिहासाभ्यां क्वचित्कदाचित्कश्चित्प्रवर्तेत निवर्तेत वा । प्राप्तस्याऽप्रापणीयत्वात् हेयहानानुपपत्तेश्च–अनेकान्तपक्षे कथञ्चित्कदाचित्कस्यचित्केनचित्सत्त्वे–हानोपादाने प्रेक्षावतां कल्पेते ।

एतेन 'अनुकूलतर्काभावात्करटदन्तसङ्ख्यावत्प्रयोजनाभावाच्चाऽप्रयोजकमिदमनुमानम्'इति परास्तम् । तथा चास्तित्वनास्तित्वविरुद्धधर्माध्यासात्सर्वं वस्तु नानात्मकं भवतीति तात्पर्यार्थः । 'विमतमनेकात्मकं वस्तुत्वान्नृसिंहवत्'इति सामान्यतो बोध्यम् । एकान्तभङ्गे प्रयोजनमपि तेनैवोक्तम्—

स्याद्वादः सर्वथैकान्तत्यागात्किंवृत्तचिद्विधेः ।
सप्तभङ्गनयापेक्षो हेयादेयविशेषकृत् ॥ इति ।

अस्यार्थः—स्याद्वादे हेयादेयविशेषकृदित्यन्वयः । किंशब्दात्–'किमश्च' (पा० अ० ५ पा० ३ सू० २५) इति सूत्रेण थमुप्रत्ययो भवति । ततः 'कथम्'इति रूपं लभ्यते । तदुपरि 'चित्' इत्ययं निपातो विधीयते । 'ततः कथञ्चित्'इति स्यात् । तस्मात्किंवृत्तचिद्विधेर्हेतोः कथञ्चिदस्ति कथञ्चिन्नास्तीत्यादिरूपात्स-

(१) प्रथमभङ्गप्रवृत्तिरित्यर्थः ।

वैयर्थ्यैकान्तभङ्गात् भवतः सप्तभङ्गनयमपेक्ष्य स्याद्वादो हेयोपादेयाविशेषकृदित्यर्थः ।

कार्यसद्वादिनिरस्तेऽसद्वादी बौद्धः प्रयुङ्क्ते—'इदं सर्वदाऽसत् भावत्वाद्व्यतिरेकेऽभाववत्'इति प्रयोगे स्यान्नास्तीति द्वितीयभङ्गः ।—'इदं सर्वं सर्वदाऽसन्न भवति कादाचित्कार्थक्रियाकारित्वात् व्यतिरेके नरशृङ्गवत्'इति ।

एवमसद्वादिनिरस्ते सदसद्वादिवैशेषिकाः प्रत्यवतिष्ठन्ते—'घट उत्पत्तेः प्राक् नाशानन्तरञ्च तत्राऽसन् तदानीं तत्र प्रत्यक्षसामग्र्यां सत्यामप्यनुपलभ्यमानत्वात्, यो यदा प्रत्यक्षसामग्र्यां सत्यामपि यत्र नोपलभ्यते स तत्र नास्त्येव यथा पटशून्यभूतले पटः'। 'मध्ये च सन् उपलभ्यमानत्वात्'इति क्रमेण सत्त्वेऽसत्त्वे च साधिते स्यादस्ति नास्ति चेति तृतीयभङ्गप्रवृत्तिः ।—'विद्यमानोपि घटोऽसन् वस्तुत्वात्'। न चाऽप्रयोजकत्वम् । परिच्छिन्नत्वेनाऽसत्त्वापत्त्या सर्वदेशपुरुषादिसम्बन्धाङ्गीकारेण हेयोपादेयतानापत्तेः । तस्माद्यत्किञ्चित्पुरुषस्वामिदेशादिसम्बन्धत्वेनाऽसत्त्वमप्यवश्यं स्वीकरणीयम् । एवं निरस्ते वैशेषिकेऽनिर्वाच्यत्वनियमविवक्षया पुनः 'घटोऽनिर्वाच्यः सदसद्भ्यां निरूपयितुमशक्यत्वात्'। न च हेत्वसिद्धिः । यदि सत्स्यात्तर्हि न बाध्येत, यद्यसत्स्यात्तर्हि नो परोक्षीभूयादित्यादितर्केण तन्निश्चयात् । इत्येवं प्रयोगे चतुर्थभङ्गप्रवृत्तिः । नचैवं 'युगपत्तद्विवक्षायाम्'(पृ० १६५ पं० २८) इति श्लोकविरोधः । वाचः क्रमिकतया युगपत्तद्विवक्षाया असम्भवे ऽनिर्वाच्यत्वविवक्षायामेव तस्य तात्पर्यात् । 'अशक्तितः'(पृ० १६५ पं० २८) इत्यस्य तादृशतात्पर्यग्राहकत्वेन न वैयर्थ्यम् ।

'अनिर्वाच्योऽनैकान्त्यावस्तुत्वात्' इत्यादिना निरस्ते पुनः साङ्ख्येनास्तित्वाऽनिर्वाच्यत्वनियमोद्भावने पञ्चमभङ्गप्रवृत्तिः । अस्तित्वानिर्वाच्यत्वनियमोद्भावनं तद्भङ्गप्रवृत्तिश्च चतुर्थनियमोद्भावन-

तद्भङ्गवद्द्रष्टव्यम् । एवमग्रेऽपि ।

बौद्धेन नास्तित्वानिर्वाच्यत्वनियमोद्भावने षष्ठभङ्गावतारः ।

वैशेषिकेन सदसदनिर्वाच्यत्वनियमोद्भावने सप्तमभङ्गप्रवृत्तिः ।

ननु तदीयकारिकानुरोधेन (पृ० १६५ पं० २५) स्यादस्ति १ स्यान्नास्ति २ स्यादस्ति नास्ति च ३ स्यादवक्तव्यः ४ स्यादस्ति चावक्तव्यश्च ५ स्यान्नास्ति चावक्तव्यश्च ६ स्यादस्ति नास्ति चाऽवक्तव्यश्च ७ इति क्रमोऽपेक्षितः । स च भाष्यकारैः—स्यादस्ति, स्यान्नास्ति, स्यादवक्तव्यः, स्यादस्ति नास्ति च, स्यादस्ति चावक्तव्यश्च, स्यान्नास्ति चावक्तव्यश्च, स्यादस्ति नास्तिचावक्तव्यश्चेति भाष्ये 'स्यादस्ति नास्ति च' इत्यस्माद धस्तात्—'स्यादवक्तव्यः' इत्यंकथनेन त्यक्तः । तत्त्यागे बीजं न पश्यामः । न च लेखकप्रमादाद्व्यत्यास इति वाच्यम् । बहुषु पुस्तकेषु तथैव दर्शनात् । भामतीनिबन्धेष्वपि तथैव दर्शनात् । कल्पतरुकृद्भिरपि 'स्यादस्ति नास्ति च' इत्येतत्—'अवक्तव्यः' इत्यस्याधस्तात्सम्बन्धनीयमित्युक्त्या तथैव पाठक्रमस्याङ्गीकृतत्वाच्च । न च कारिकास्वेव लेखकप्रमादः कल्पनीय इति वाच्यम् । उत्तरोत्तराणां पूर्वपूर्वसापेक्षत्वेन तादृशक्रमस्यैवाकाङ्क्षितत्वात् । इति चेन्न । तन्मते यदि क्रमनियमः तर्हि तत्रैव व्यभिचारो यदि नास्ति तर्हिसप्तसङ्ख्यादिवत्क्रमोपि न सिद्ध्येदितितन्मतखण्डनयुक्तिसूचनस्यैव बीजत्वात् । न चैवमपि स्यादस्तिचावक्तव्यश्चेत्यादिभाष्ये मध्यस्थचकाराणां वैयर्थ्यमिति वाच्यम् । पूर्ववादिनां पक्षेषु पूर्वपक्षोत्थानसम्भवेन पूर्ववादिनां पुनरुक्त्यानसूत्रकत्वेन सार्थक्यात् ।

भाष्यविरोधपरिहारार्थं कारिकास्थं 'स्यादस्ति नास्तिच' इति तृतीयस्थलस्थं चतुर्थस्थले सम्बन्धनीयमिति कल्पतर्वाशय इति परिमलकारादयः । तन्न । कारिकाक्रमस्यैवाकाङ्क्षितत्वादिति ।

'तु' शब्देनानुमानाद्व्यवच्छिनत्ति । वाक्यार्थो हि प्रमेयो न तु तद्धर्मः; येन वाक्यं तत्र लिङ्गं भवेत् । न च वाक्यं वाक्यार्थं बोधयत् सम्बन्धग्रहणमपेक्षते,

---

सूत्रं तु (अ० अ० २ पा० २ सू० ३३) एकस्मिन्–धर्मिणि युगपत्सदसत्त्वादिविरुद्धधर्मादिसमावेशासम्भवात्तन्मतं न चारु इत्येवं व्याख्येयम् ।

यद्वा एकस्मिन्–तयाभिमतसप्तपदार्थमध्ये स्वर्गापवर्गादौ, असम्भवात्–पक्षे भावः, पक्षे अभावः, पक्षे नित्यता, पक्षेऽनित्यतेत्यनवधारणायां प्रवृत्त्यसम्भवात् । प्रमाणकत्वासम्भवाद्वेत्येवं व्याख्येयम् ।

शब्दमनुमानेऽभावयन्तं वैशेषिकं प्रत्याह । तुशब्देनेति । तत्र वाक्यलिङ्गकानुमानासम्भवरूपं हेतुमाह । वाक्यार्थो हीति । तथा च हि–यतो वाक्यार्थः प्रमेयोऽतस्तद्धर्मो–वाक्यस्य धर्मो न भवति । 'यत् यत्प्रमेयं तत् तद्धर्मो न भवति' इति नियमस्य रूपादौ दर्शनात् । 'अयं वृक्षः शिंशपायाः' इत्यादिवत् 'इदं वाक्यार्थवद्वाक्यात्' इत्येवं रीत्या वाक्यार्थे वाक्यं लिङ्गं न भवतीत्यर्थः ।

कचित्–'वाक्यार्थो हि प्रमेयो न तु तद्धर्मो वाक्यं येन तत्र लिङ्गं भवेत्' इति पाठः । स च 'यतो वाक्यार्थः प्रमेयोऽतस्तद्धर्मो वाक्यार्थस्य धर्मो वाक्यं न भवति' इत्येवं व्याख्येयः । तथाऽसति 'वाक्यार्थो हि प्रमेयः' इत्यस्य वाक्यस्य तद्धर्मत्वाभावे हेतुत्वासम्भवेन वैयर्थ्यापत्तिः । पदसमूहरूपवाक्यस्य श्रावणत्वेन प्रमेयावृत्तितया तद्धर्मत्वाभावसाधनेपि पूर्वोक्तवैयर्थ्यं तदवस्थमेवेति ।

ननु वाक्यस्य प्रमाणत्वेन वाक्यार्थधर्मित्वाभावेपि यथा धूमस्य संयोगेन वन्ह्यव्यभिचारितया वह्निलिङ्गत्वं तथा वाक्यस्य शक्त्यादिसम्बन्धेन शक्यार्थलिङ्गत्वं स्यात् इत्याशङ्क्याह । न चेति । तथा च शक्त्यादिसम्बन्धग्रहणं विनापि जायमाना वाक्यार्थावगतिर्न

अभिनवकविरचितस्य वाक्यस्यादृष्टपूर्वस्याननुभूतचरवाक्यार्थबोधकत्वादिति ।

---

स्यादित्यर्थः । व्याप्तिग्रहं विनापि शब्दानुभवसूचनाय सम्बन्धसामान्यग्रहणम्(पृ० १६९ पं० ४) ।

"ननु शब्दस्य प्रमाणान्तरत्वभिया क्षणविलम्बेनैव तत्र बोधोऽभ्युपेयः । न च वाक्यार्थे वाक्यस्य शक्त्यभावेन लिङ्गत्वमेव न सम्भवतीति वाच्यम् । पदश्रवणानन्तरं पदार्थोपस्थितिवतः–पदानि पक्षीकृत्य तद्गतधर्मेणानुमितिसम्भवात् । तथाहि "दण्डेन गामानय–इति पदानि तात्पर्यविषयस्मारितपदार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षादिमत्पदकदम्बत्वात् 'घटमानय' इति पदवत्" । न च तात्पर्यविषयीभूतो यः संसर्गस्तज्ज्ञानपूर्वकाणीत्येव सम्यगिति वाच्यम् । 'दण्डेन गामानय' इति वाक्यप्रयोगानन्तरं गोपदार्थाऽमूपदार्थविषयकं ज्ञानमनुभवसिद्धमनुमानेनापि तादृशं ज्ञानं करणीयम्, अन्यथा तद्विषयकज्ञानार्थं शब्दस्य प्रमाणान्तरतापत्तिरतस्तदुपादानावश्यकत्वात् । स्मारितेत्यस्य प्रयोजनं तूह्नीयम्" इत्याशङ्क्याह । अभिनवेत्यादि । तथा च तादृशसंसर्गस्य पूर्वमननुभवाद्व्याप्तिग्रहो न सम्भवतीत्यर्थः । तत्सम्भवेपि 'इदं रजतम्'इत्यादिवाक्यस्थले रजतज्ञानस्य सम्भवेपि इदन्त्वावच्छिन्नविशेष्यकतादात्म्यसम्बन्धेन रजतप्रकारकप्रवृत्तिस्वरूपयोग्यत्वासम्भवेन तत्स्वरूपयोग्यमिदन्त्वावच्छिन्नविशेष्यकतादात्म्यसम्बन्धेन रजतप्रकारकं ज्ञानमवश्यं वाच्यम् । तच्चानुमानान्न सम्भवति, तदर्थं शब्दस्य प्रमाणान्तरत्वमवश्यमभ्युपेयम् । यदि चार्थप्रकारकत्वेन ज्ञानं न प्रवर्त्तकम्, किन्तु अर्थविषयकत्वेन; तदा भ्रान्तिज्ञस्यापि प्रवृत्त्यापत्तिः । न च भ्रान्तिज्ञानस्यापि रजतप्रकारकत्वमस्त्येवेति वाच्यम् । तथा सति भ्रान्तितज्ज्ञानयोर्व्यधिकरणप्रकारकत्वात्–भ्रमत्वापत्तेरभेदापत्तेर्वा । वाक्यार्थस्याऽनुमेयत्वाङ्गीकारे 'आत्मा वा अरे श्रोतव्यो

एवं प्रमाणसामान्यलक्षणेषु तद्विशेषलक्षणेषु च सत्सु, यानि प्रमाणान्तराण्युपमानादीनि प्रतिवादिभिरभ्युपेयन्ते तान्युक्तलक्षणेष्वेव प्रमाणेष्वन्तर्भवन्ति ।

तथा हि–उपमानं तावद्यथा गौस्तथा गवय इति वाक्यम् । तज्जनिता धीरागम एव । यो ऽप्ययं गवयशब्दो गोसदृशस्य वाचक इति प्रत्ययः, सो ऽप्यनुमानमेव ।

मन्तव्यः' इत्यत्र पृथक् मननग्रहणानुपपत्तिः । नाऽनुमितं न साक्षात्कृतं, किन्तु श्रुतमित्यनुभवानुपपत्तिश्च ।

उक्तार्थमुपसंहरन्सर्वप्रमाणासिद्धत्वादित्युक्तमुपपादयति । एवमित्यादिना । कस्य कुत्रान्तर्भाव इत्याकाङ्क्षायामादौ 'प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम्'इति अक्षपादेनोक्तम्(न्या० अ० १ आ० १ सू० ६)–कीदृशो गवयः ? इत्येवं नागरिकेण पृष्टो वन्यः प्रसिद्धेन गवा साधर्म्यादप्रसिद्धं गवयं येन वाक्येन साधयति–यथा गौस्तथा गवय इति, तद्वाक्यमुपमानमिति । तच्च प्रत्यक्षादिभ्यः प्रमाणान्तरम्, तज्जन्यप्रमाविलक्षणप्रमाजनकत्वात् । यदि न तेभ्यो विलक्षणमभविष्यत् तर्हि न तद्विलक्षणां प्रमामकरिष्यत्, यथा तान्येव, नचैतत्तथा, तस्मान्न तथेति । तत् शब्देऽन्तर्भावयति । उपमानं तावदिति । हेत्वसिद्धिमाह । तज्जनितेति । आगम एव–शाब्दबोध एव ।

वात्स्यायनाचार्यादयस्तु–प्रसिद्धसाधर्म्यात्–प्रसिद्धसाधर्म्यज्ञानात् साध्यसाधनं–समाख्यासंबन्धप्रतिपत्तिर्यतस्तदुपमानम् । तच्चाऽऽगमाहितसंस्कारस्मृत्यपेक्षं सारूप्यज्ञानमित्याहुः । तन्न सम्भवति । गोसदृशो गवयपदवाच्यः, गवयशब्दो गोसदृशस्य वाचक इत्यादिस्मरणाभावात् । स्मरणकल्पने च स प्रत्ययोऽनुमितिरेव स्यान्नोपमितिरित्यभिप्रायेणाह । योपीति । अनुमानमेव–अनुमितिरेव ।

यो हि शब्दो यत्र वृद्धैः प्रयुज्यते, सोऽसति वृत्त्यन्तरे तस्य वाचकः, यथा गोशब्दो गोत्वस्य, प्रयुज्यते चैवं गवयशब्दो गोसदृशे, इति तस्यैव वाचकः,

---

प्रयोगस्तु–"गवयपदं गोसदृशस्य वाचकं गवयत्वविशिष्टवाचकं वा, असति वृत्त्यन्तरे तत्र प्रयुज्यमानत्वात् । यो यत्रासति वृत्त्यन्तरे प्रयुज्यते स तस्य वाचको यथा गोशब्दो गोजातीयस्य, प्रयुज्यते चायं गोसदृशे"। न च "द्वितीयसाध्ये वृत्त्यन्तरं विना प्रयोगः शक्तिज्ञानं विना ज्ञातुमशक्य इति विशेषणासिद्धिः, 'गोसदृशो गवयः' इत्याप्तवाक्यात्सादृश्यविशिष्टे गवयशब्दवाच्यत्वावगमात्" इति वाच्यम् । आवरकस्थं बिल्वादिपदवाच्यं, चत्वरस्थं गोपदवाच्यमित्यादिवत्सादृश्यस्योपाधित्वेन गवयत्वजातेरखण्डत्वेन शक्यतावच्छेदकत्वात् । अप्रतीतसादृश्यानामपि वनेचराणां बहुशः प्रयोगदर्शनाच्च ।

अन्ये तु–सामान्यतो गवयपदवाच्यं किञ्चिदस्तीति जानन् विशिष्य परिचिन्वानः कीदृशो गवयपदवाच्यः? इति किञ्चित्पृच्छति । तेन च गोसदृशो गवयपदवाच्य इति उक्तः सन् विपिनमनुसरन् यदा गोसदृशपिण्डमनुभवति; तदाऽयमतिदेशवाक्यार्थं स्मरन् परिच्छिनत्ति–अयं गवय इति, सेयमुपमितिः । अत्र–"अयम्–" इति शब्दो गवयसामान्यपरो न तु पुरोवृत्तिव्यक्तिपरः, तथा सति अन्यत्र शक्तिग्रहाभावेऽन्यत्रशाब्दबोधेऽपूर्वव्यक्तिभानानापत्तेः । तथा च गवयो गवयपदवाच्य इत्येवोपमितिः सा नानुमितिः, व्याप्तिज्ञानाभावेप्युत्पत्तेः। नापि शाब्दम् । गवयत्वविशिष्टोपस्थापकपदाभावादित्याहुः । तन्न । आप्तवाक्याद्यो गोसदृशः स गवयपदवाच्य इति जायमानस्य प्रत्ययस्य व्याप्तिविषयकत्वात् । गोसदृशव्यक्त्यज्ञानेपि यथा गोसदृशो गोसदृशपदवाच्यस्तथा सामान्यतो गवयो गवयपदवाच्य इति प्रत्ययसम्भवेन तत्समानाकारोपमिते-

इति तत् ज्ञानमनुमानमेव । यत्तु गवयस्य चक्षुःसन्नि-

एतेन "नापि शाब्दं,गवयत्वविशिष्टोपस्थापकपदाभावात्" इत्यपि परास्तम् । गवयपदस्यैव सामान्यतस्तदुपस्थापकत्वात् । सामान्यतः शक्तिग्रहाभावे आप्तवाक्यादपि शाब्दबोधानुपपत्तेः । गोसदृशो गवयपदवाच्य इत्युपमितिरङ्गीकर्तुमनेपि यथा गौस्तथा गवय इत्येतस्मादपि गोसदृशस्य गवयशब्दः समाख्या गवयो गवयशब्दवाच्य इति वाऽवगमसम्भवाच्च । यद्यप्ययं पिण्डो गवयशब्दवाच्यो गवयशब्द एतस्य पिण्डस्य समाख्येति वा केवलवाक्यात् सादृश्यज्ञानमात्राद्वा ज्ञातुं न शक्यते, तथापि उक्तरीत्या परामर्शेणानुमितिसम्भवादिति । अत एवायं पिण्डो गवयशब्दवाच्यो गोसारूप्यादित्येवमनुभवः सर्वशास्त्रार्थज्ञानवतामपक्षपातिना-

एवं हि करभमतिदीर्घवक्रग्रीवं लम्बोष्ठं कठोरतीक्ष्णकण्टकाशिनं कुत्सितावयवसन्निवेशमपसदं पशूनामित्यादावतिदीर्घग्रीवत्वादिपश्वन्तरवैधर्म्यज्ञानात्करभपदवाच्यताग्रहोपि व्याख्येयः ।

अत्र आप्तवाक्याज्जायमान आगम एव । योप्ययं गवयशब्दो गोसदृशस्य वाचक इति प्रत्ययः—वाक्यार्थागमोत्तरं; मानसः स इत्यर्थः । यद्गवयस्य चक्षुस्सन्निकृष्टस्य गोसादृश्यज्ञानं—वाक्यार्थस्मरणोत्तरं ज्ञानमित्यर्थ इति यथा श्रुतग्रन्थार्थवादिनः ।

यथा गौर्गवयस्तथेत्यतिदेशवाक्यं श्रुत्वा वनङ्गतानामयं गोसदृशो गवय इति यत् ज्ञानम्; तत्रातिदेशवाक्यावगतं यद्गृह्यते, तत्तावन्नोपमानप्रमेयं, किन्त्वनवगतं गवयस्वरूपे गोसादृश्यमिति जरन्नैयायिकमतमपाकरोति । यत्तु गवयस्येति ।

एवं प्रत्यक्षे गवये उपमानस्य प्रमेयाभावेन नैयायिकमतं दूषयित्वायं गवयपिण्डो गोसदृश इति ज्ञानानन्तरमनेन सदृशी मदी-

कृष्टस्य गोसादृश्यज्ञानं तत् प्रत्यक्षमेव । अत एव स्मर्यमाणायां गवि गवयसादृश्यज्ञानं प्रत्यक्षम् । न ह्यन्यद्गवि सादृश्यमन्यच्च गवये । भूयोऽवयवसामान्ययोगो हि जात्यन्तरवर्त्ती जात्यन्तरे सादृश्यमुच्यते । सामान्ययोगश्चैकः ।—

---

या गौरिति गोनिष्ठगवयसादृश्यनिश्चय उपमितिः । इयं च न प्रत्यक्षेण, गोपिण्डस्यासन्निकर्षत्वात् । नाप्यनुमानेन, गवयनिष्ठगोसादृश्यस्यातल्लिङ्गत्वात्, इत्यर्थपरम्—"उपमानमपि सादृश्यम्—असन्निकृष्टेऽर्थे बुद्धिमुत्पादयति । यथा गवयदर्शनं गोस्मरणस्य"इति भाष्यं (मी० अ० १ पा० १ सू० ५) दूषयति । अत एवेति । यतश्चक्षुस्संनिकृष्टे गवये गोसादृश्यज्ञानं प्रत्यक्षमत इत्यर्थः । ननु गोसदृशो गवय इत्यत्राऽवयववतः सादृश्यम्, तच्च गोऽवयवसजातीयावयवसम्बन्धित्वरूपं गवये वक्तव्यम् । गवि चैतदवयवसजातीयावयवसम्बन्धित्वम्, तच्च गवयसादृश्याद्भिन्नम् । तथा चैतस्य प्रत्यक्षत्वेपि गोसादृश्यस्य प्रत्यक्षत्वं न सम्भवतीत्याशङ्क्याह । नह्यन्यदिति । तदेव सादृश्यलक्षणकथनेनोपपादयति । भूयोऽवयवेति । भूयांसि यानि अवयवानां सामान्यानि—असाधारणधर्माः, तेषां योगः—सम्बन्धः जात्यन्तरवर्त्ती—प्रधानावयविरूपवस्त्वन्तरवर्त्ती जात्यन्तरे—पूर्वप्रधानाभिन्नप्रधानावयविनि वस्त्वन्तरे सादृश्यमुच्यते । सम्प्रदायविद्भिरिति शेषः । इदञ्चप्रकृताभिप्रायेण । अन्यथा सिंहसदृशो देवदत्तः, श्येनसदृशो याग इत्यादावव्याप्तिः । तथा च वस्त्वन्तरस्य स्वावयवेषु गुणेषु कर्मसु वा समवेतैः सामान्यैर्येन प्रकारेण स्वस्य योगस्तेनैव प्रकारेण स्वभिन्ने तैर्योगः सादृश्यम् । तच्चैकमेवोभयत्रेत्यर्थः । नच यानि धर्माख्यान्यवयवादिसामान्यानि तद्भूयस्त्वं वा सादृश्यमित्येतावद्वक्तव्यं, किं योगग्रहणेनेति-

**स चेद्गवये प्रत्यक्षो गव्यपि तथेति नोपमानस्य प्रमेयान्तरमस्ति, यत्र प्रमाणान्तरमुपमानं भवेत्, इति न प्रमाणान्तरमुपमानम् ।**

वाच्यम् । सामान्यादेर्गवयत्वादिनिष्ठत्वे गवये सादृश्यप्रत्ययानुपपत्तेः ।

ननु तद्भिन्ने तद्गतभूयोधर्मवत्त्वं सादृश्यं वाच्यम्, न च धर्मस्य निष्प्रतियोगिकत्वात्सप्रतियोगिकसादृश्यरूपत्वं न सम्भवतीति वाच्यम् । तद्भिन्नवृत्तित्वरूपविशेषणस्य सप्रतियोगिकत्वेन तद्विशिष्टस्यापि सप्रतियोगिकत्वात्, इति चेन्न । गवये गोत्वादिधर्माभावेनाव्याप्त्यापत्तेः । अत एव—"सामान्यान्येव भूयांसि गुणावयवकर्मणाम् । भिन्नप्रधानसामान्यं व्यक्तं सादृश्यमुच्यते ॥" इत्यभियुक्तोक्तमपि सङ्गच्छते । इदं तु–यद्यपि गुणावयवकर्मणां भूयांसि सामान्यानि सन्ति; तथापि भिन्नप्रधानगोरवयावेनोर्यद्व्यक्तं–सदृशबुद्धिजनकं तेषां सामान्यानां मध्ये सामान्यं, तदेवसादृश्यमुच्यते न तु सदृशबुद्ध्यजनकमित्येव व्याख्येयम् । न चैवमपि जन्मतः सादृश्यं 'अग्निर्वै ब्राह्मणः'इत्यत्र, द्रव्यतः—समानालङ्कारधारिणोर्गवादिधनवतोरित्यादिसादृश्येऽव्याप्तिरिति वाच्यम् । गुणादेस्तदुपलक्षकत्वात् । न च 'मनुष्यचित्रादौ सादृश्यलक्षणाव्याप्तिः, मनुष्यावयवगतहस्तत्वानां चित्रावयवे सत्त्वात्'इति वाच्यम् । तत्रापि संस्थानपरिमाणवर्णसामान्यानां सत्त्वात् ।

ननु सादृश्यसामान्यसम्बन्धरूपस्यैकत्वेपि गोसन्निकर्षाभावेनागृहीते गवि गवयप्रतियोगिकसादृश्यप्रकारकगोविशेष्यकज्ञानासम्भव इत्याशङ्क्याह । गव्यपीति । तथा च गोसन्निकर्षाभावेपि गोः—स्मर्यमाणे गवि विशिष्टज्ञानं सम्भवतीत्यर्थः । यद्वा सादृश्यस्यैकत्वं, प्रत्यक्षेण गवये गोसदृश्ये गृह्यमाणे गव्यपि गवयसादृश्यं समानवित्तिवेद्यतया गृहीतमेव, अन्यथैकत्र सादृश्यज्ञाने सत्यप्यपरत्र संशयापत्तेः । 'मदीया गौरेतद्गवयसदृशी एतन्निष्ठसादृ-

एवमर्थापत्तिरपि न प्रमाणान्तरम् । तथा हि—जीवतश्चैत्रस्य गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पनमर्थापत्तिरभिमता वृद्धानाम् । सा ऽप्यनुमानमेव । यदा खल्वव्यापकः सन्नेकत्र नास्ति तदा ऽन्यत्रास्ति । यदा ऽव्यापक एकत्रास्ति तदा ऽन्यत्र नास्तीति सुकरः स्वशरीरे व्याप्तिग्रहः । तथा च सतो गृहाभावदर्शनेन

श्यप्रतियोगित्वात्, यो यद्गतसादृश्यप्रतियोगी स तत्सदृशः, यथा दर्पणस्थमुखावभासो मुखसदृशः' इत्यनुमानेनापि तत्सम्भवः । इदं न साक्षात्कृतं, नानुमितं, किन्तूपमितमित्यनुभवस्तु नास्त्येवेति तु ध्येयम् ।

अर्थापत्तिरपीति । अर्थस्यापत्तिः कल्पना यस्मात् अर्थस्यापत्तिरर्थापत्तिरित्येवमर्थापत्तिशब्द उभयत्र प्रयुज्यते, तथा च उपपाद्यज्ञानजन्योपपादकज्ञानमर्थापत्तिः, तत्करणमर्थापत्ति-प्रमाणं, तच्चोपपाद्यज्ञानम् । तत्र यस्याभावे यस्यानुपपत्तिस्तत्तत्रोपपादकं,येन विना यदनुपपन्नं तदुपपाद्यमित्यर्थः । तस्याः स्वरूपमाह । जीवतइति । जीवतश्चैत्रस्य गृहाभाव उपपाद्यः, बहिः सत्त्वं विनाऽनुपपाद्यमानत्वात् । तज्ज्ञानेनाऽदृष्टस्य सत्त्वस्योपपादकस्य कल्पनमर्थापत्तिरित्यर्थः । वृद्धानां मीमांसकानाम् । अनुमानमेव—अनुमितिरेव । उपपाद्यस्य तद्विनानुपपन्नत्वं च—तदभावव्यापकाभावप्रतियोगित्वम्, अन्यस्यासम्भवात् । तज्ज्ञानं च व्यतिरेक्यनुमानमेवेति नैयायिकघण्टाघोषसत्त्वेपि, विद्यमानत्वे सति यत्र यन्नास्ति तदन्यत्र तदस्ति यथा गृहकोणेऽतिष्ठन्नहं गृहमध्ये तिष्ठामीत्याद्यन्वय्यनुमानमपि सम्भवतीत्याह । यदा खल्विति । अव्यापकः—परिच्छिन्नपरिमाणवान् । गृहाभावेन बहिःसत्त्वकल्पनावद्बहिःसत्वेन गृहासत्त्वकल्पनापि सम्भवतीत्यभिप्रायेणाह । एकत्रास्तीति । अनुमानप्रकारमाह । तथेति । 'जीवंश्चैत्रो गृहे न'इति

लिङ्गेन बहिर्भावदर्शनमनुमानमेव । न च चैत्रस्य क्वचित्सत्त्वेन गृहाभावः शक्यो ऽपह्नोतुम्, येनासिद्धो गृहाभावो बहिर्भावे न हेतुः स्यात् । न च गृहाभावेन वा सत्त्वमपह्नूयते, येन सत्त्वमेवानुपपद्यमानमात्मानं न

---

वाक्यश्रवणानन्तरं जीवतो गृहेऽसत्त्वमवधार्य 'चैत्रो बहिरस्ति विद्यमानत्वे सति गृहनिष्ठात्यन्ताभावप्रतियोगित्वान्मद्वत्' इति निश्चिनोतीत्यर्थः । न चाऽसन्निकृष्टे चैत्रे गृहनिष्ठाभावप्रतियोगित्वधर्मस्याऽवगतिर्न सम्भवतीति वाच्यम् । गृहे चैत्रस्याभाव इति प्रत्यक्षस्य तत्प्रतियोगित्वरूप-सम्बन्धावगाहिनः सत्त्वात् । न चैवमपि सतो गृहाभावदर्शनेन' इति मिश्रोक्त-(पृ० १६७ पं० ७) विरोध इति वाच्यम् । तस्यास्मदुक्तेऽर्थे एव तात्पर्यात् । अन्यथा 'जीवंश्चैत्रो बहिरस्ति विद्यमानत्वे सति गृहेऽभावान्मद्वत्'इत्यत्र गृहगताभावस्य पक्षधर्मत्वानुपपत्तेः ।

अन्ये तु न साक्षात्सम्बन्धेनैव पक्षधर्मत्वमावश्यकं,किं तु साक्षात्परम्परया वा यस्य येन सम्बन्धो नियतस्तेन तत्प्रतीतिः, अभानमेवाभावस्य चैत्रसम्बन्धः, चैत्राभाव इति नियत एव प्रतीयते । नच चैत्रस्य गृहीतत्वादननुमेयत्वं, स्मृतौ विपरिवर्त्तमानस्य बहिर्देशविशिष्टतयाऽनुमानापत्तेः । तथा च विद्यमानत्वसंसृष्टगृहाभाव एव लिङ्गमित्याहुः ।

ननु 'विद्यमानत्वे सति'इतिहेतुप्रविष्ट-विद्यमानत्वरूपं गृहबहिर्देशसाधारण्येनावगम्यमानं सत्त्वं न हि गृहगतेनासत्त्वेन संसृज्यते, विरोधात्, इत्याशङ्क्याह । न च चैत्रस्येति । तथा चाव्यापकस्य सर्वत्र सत्त्वासम्भवेन क्वाचित्क-सत्त्वस्य देशविशेषाद्यविशिष्टस्यैव वा निवेशान्न विरोध इत्यर्थः । यथा सत्त्वेन गृहाभावो न विरुध्यते तथा गृहभावेन सत्त्वमपीत्याह । गृहाभावेनेति । यद्वा सत्त्वाभावप्रतियोगित्वयोः परस्परविरोधादसिद्धोयं हेतुरित्याशङ्क्याह ।

---

बहिरवस्थापयेत् । तथा हि—चैत्रस्य गृहासत्त्वेन सत्त्वमात्रं विरुध्यते, गृहसत्त्वं वा ? न तावदत्र क्वचन सत्त्वस्यास्ति विरोधो गृहासत्त्वेन, भिन्नविषयत्वात् । "देशसामान्येन गृहविशेषाक्षेपोऽपि पाक्षिक इति समानविषयतया विरोधः" इति चेत् न । प्रमाणविनिश्चितस्य गृहेऽसत्त्वस्य पाक्षिकतया सांशयिकेन गृहसत्त्वेन प्रतिक्षेपायोगात् । नापि प्रमाणनिश्चितो गृहाभावः पाक्षिकमस्य गृहसत्त्वं प्रतिक्षिपन् सत्त्वमपि प्रतिक्षेप्तुं सांशयिकत्वं च व्यपनेतुमर्हतीति युक्तम् । गृहावच्छिन्नेन चैत्राभावेन गृहसत्त्वं विरुद्धत्वात् प्रतिक्षिप्यते, न तु सत्त्वमात्रम्, तस्य तत्रौदासीन्यात् । तस्माद्गृहाभावेन लिङ्गेन सिद्धेन सतो बहिर्भावोऽनुमीयत इति युक्तम् । एतेन 'विरुद्धयोः प्रमाणयोर्विषयव्यवस्थयाऽविरोधापा-

---

न च चैत्रस्येत्यादि । तथा च जीवतोऽव्यापकस्योभयोर्दर्शनाच्च विरोधइत्यर्थः । तत्रोपपत्तिमाह । तथा हीति । ननु जीवंश्चैत्रो गृहेऽस्ति बहिर्वेति ज्ञानस्य गृहादिकमादाय समानविषयत्वमस्त्येवेति द्वितीयपक्षमाशङ्कते । देशसामान्येनेति । प्रतिक्षेपायोगात्—संशयस्य तदपेक्षया दुर्बलत्वेन प्रमाणसिद्धस्याऽसत्त्वस्य प्रत्याख्यानाभावात् । अन्यथा संशयोत्तरं मेयनिश्चयः कुत्रापि न स्यात् । तुल्ययुक्त्या प्रमाणनिश्चितोऽप्यभावस्तादृशं सत्त्वं न प्रतिक्षेप्तुं समर्थ इत्याह । नापीति । पाक्षिकं—सांशयिकम् । अस्य—चैत्रस्य । प्रतिक्षिपन्—निरस्यन् । सत्त्वं—सत्त्वमात्रम् । तत्र हेतुमाह । गृहावच्छिन्नेति । तत्र सत्त्वमात्रप्रतिक्षेपे उपसंहरति । तस्मादिति । ननु विरुद्धयोः सत्त्वासत्त्वसाधकप्रमाणयोर्विषयव्यवस्थया ऽविरोधापादनमर्थापत्तेः प्रमेयान्तरमस्ति, तच्च नानुमानफलमित आह । एतेनेति । 'विवादा-

दनमर्थापत्तेर्विषयः' इति निरस्तम् । अवच्छिन्नानवच्छिन्नयोर्विरोधाभावात् । उदाहरणान्तराणि चार्थापत्तेरेवमेवानुमाने ऽन्तर्भावणीयानि । तस्मान्नानुमानात्प्रमाणान्तरमर्थापत्तिरिति सिद्धम् ।

एवमभावो ऽपि प्रत्यक्षमेव । न हि भूतलस्य परिणा

स्पदानि न परस्परविरुद्धानि (अविरुद्धानि) अविरुद्धार्थतात्पर्यकत्वात्संमतवत्'इत्याद्यनुमानमत्रापि सम्भवतीत्यर्थः। तच्छङ्कार्थमाह। अवच्छिन्नेति । मीमांसकैः-बृहद्दीपिकायां दिवा भुञ्जानस्य चैत्रस्य पीनत्वेन रात्रिभोजनकल्पनं, सर्पनकुलयोरेकस्य जयेनान्यस्य पराजयेन वोत्तरत्र जयपराजयकल्पनं, बीजे सत्यङ्कुरोत्पत्तेर्मूषकाघ्राते ऽङ्कुरानुत्पत्तेर्दर्शनात् तत्र कारणत्वाकारणत्वव्याघातपरिजिहीर्षया शक्तिकल्पनमित्याद्युदाहरणान्तराण्युक्तानि; तान्यप्यनुमाने ऽन्तर्भावणीयानीत्याह । उदाहरणान्तराणि चेति । तथा च 'पीनश्चैत्रो रात्रौ भुङ्क्ते दिवाऽभुञ्जानत्वे सति पीनत्वात् व्यतिरेके निराहारवत्'इति । एवमन्यान्यपि स्वयमन्तर्भावणीयानीति ।

"अभावनिष्ठविषयतानिरूपित-विषयतासम्बन्धेन तदधिकरणविषयक-तदिन्द्रियजन्य-तत्संसर्गावच्छिन्नतदभावलौकिकप्रत्यक्षत्वावच्छिन्नं प्रति तत्सम्बन्धावच्छिन्नप्रतियोगिनिष्ठव्याप्यतानिरूपितव्यापकताश्रयीभूत-तदिन्द्रियजन्य-तत्संसर्गक-तद्विषयकानुभवस्य विषयतासम्बन्धावच्छिन्नप्रतियोगिताकाभावरूप-योग्यानुपलब्धिः कारणं; सा च-जलपरमाणौ पृथिवीत्वाद्यभावप्रत्यक्षवारणायाऽऽलोकवदिन्द्रियसहकारिणी"इति नैय्यायिकाः ।

भट्टानुयायिनस्तु "इन्द्रियस्याभावप्रत्यक्षकरणत्वे चासन्निकृष्टस्य तस्य प्रमाजनकत्वाभावेन विशेषणताप्रत्यासत्तेस्तत्कारणत्वान्तरस्य च कल्पने गौरवापत्तेः, तथा च सर्वसिद्धायास्तस्याः प्रमाणान्तरत्वं कल्प्यते"इत्याहुः। तद्दूषयति। एवमभावोपीति । नन्वेवं जलप-

मविशेषात् कैवल्यलक्षणादन्यो घटाभावो नाम । प्रतिक्षणं परिणामिनो हि सर्वे एव भावाः—ऋते चितिशक्तेः ।

रमाणौ पृथिवीत्वाद्यभावप्रत्यक्षं स्यादित्यत आह । न हीति । तथा च परमाणोरयोग्यत्वेन तत्परिणामविशेषस्यापि न प्रत्यक्षत्वमिति भावः । प्रतिक्षणमिति । धर्मधर्म्यभेदे, धर्माणां कालभेदेन व्यावृत्तिदर्शनाद्धर्मिणोऽपि प्रतिक्षणं भेद आवश्यक इति भावः । ननु भूतले घटो नास्ति, घटो ध्वस्तः, घटो न पट इत्यादिप्रतीतीनामनन्तानामधिकरणविषयत्वे गौरवाल्लाघवेनातिरिक्ताभावसिद्धिः । अन्यथा घटवत्यपि भूतले घटो नास्तीति प्रतीत्यापत्तेः, इति चेन्न । निरधिकरणकाभावप्रतीत्यभावेन यदधिकरणमन्तर्भाव्य यदभावप्रतीतिः; तस्यास्तदधिकरणात्मकतदभावविषयकत्वोपगमे गौरवानवकाशात् । अतिरिक्तत्वमतेऽप्युत्तरदोषवारणाय तत्तत्कालविशेषावच्छिन्नतत्तद्भूतलादिस्वरूपस्य सम्बन्धत्वाङ्गीकारे मयापि तदङ्गीकारे क्षत्यभावात् । अतिरिक्ताभावाननुभवाच्च ।

तदुक्तम्—'दृष्टस्तावदयं घटोऽत्र च पतन् दृष्टस्तथा मुद्गरो दृष्टा खर्परसंहतिः परिमितोऽभावो न दृष्टः परः ।

तेनाभाव इति श्रुतिः क निहिता किं चात्र तत्कारणं स्वाधीना कलशस्य केवलमियं दृष्टा कपालावली' ॥ इति ।

न च घटो नास्तीत्याद्यनुभवोऽस्तीति वाच्यम् । तस्य विचार्यमाणत्वात् । तथा हि—किं घटाभावस्य घटेन सम्बन्धोऽस्ति न वा । नान्त्यः । सम्बन्धावगाहिनो भ्रमत्वापत्त्या वस्तुत्वासिद्ध्यापत्तेः । न प्रथमः । सम्बन्धस्य सम्बन्ध्यधीनत्वेन सम्बन्धिनोऽपि सत्त्वापत्तेः । एतदभिप्रायेणैव प्रागभावध्वंसयोरवस्थाविशेषरूपत्वं सत्कार्यवादे वक्ष्यते । एतेन तत्तत्परिणामानां तत्तदिन्द्रियाग्राह्यत्वात् स प्रत्यक्षो न स्यादिति परास्तम् । तत्तत्परिणामानां तत्तदिन्द्रियग्राह्यत्वनियमकल्पनात् । यथा चैतत्तथोक्तं प्राक् । अधिकं तु खण्डनादावनुस-

स च परिणामभेद ऐन्द्रियकः, इति नास्ति प्रत्यक्षानवरुद्धो विषयो यत्राभावाह्वयं प्रमाणान्तरमभ्युपेयेति।

सम्भवस्तु, यथा खार्यां द्रोणाढकप्रस्थाद्यवगमः। स चानुमानमेव। खारीत्वं हि द्रोणाद्यविनाभूतं प्रतीतं खार्यां द्रोणादिसत्त्वमवगमयति।

न्धेयम्। प्रत्यक्षानवरुद्धः—प्रत्यक्षप्रमाणाविषयः।

सम्भवमप्यनुमानेऽन्तर्भावयति। स चेति। खार्यां मितद्रव्ये द्रोणादिपरिमाणानामपि सत्त्वादिरर्थः। प्रयोगस्तु 'खारी द्रोणवती तद्घटितत्वात् यद्येन घटितं तत्तद्वद्यथा यववान् घटः'इति। एवं द्रोणे आढकं, सहस्रे शतमित्यादावप्यूह्यम्। यत्तु—सम्भवति ब्राह्मणे विद्या, क्षत्रिये शौर्य्यमित्यादि, तत्प्रमाणमेव न भवति, अनिश्चायकत्वादिति।

एवं चेष्टापि न प्रमाणान्तरम्। चेष्टा हि द्विविधा—कृतसमयाऽकृतसमया च। तत्र कृतसमया—अभिप्रायविषयशब्दं स्मारयति, ततः शाब्दबोधः। न च शब्दस्मरणं चेष्टाया अवान्तरव्यापारः,—चेष्टामन्तरेणापि शब्दज्ञानादर्थप्रत्ययात्, व्यापारत्वे तु चेष्टानैयत्यापत्तेः। अकृतसमया च द्विधा—कृत्यन्वयिनी ज्ञप्त्यन्वयिनी च। आद्या हि प्रयोजकाभिप्रायं स्मारयति प्रयोज्यं प्रवर्त्तयति, यथा 'शङ्खध्वनौ त्वयाऽऽगन्तव्यम्'इति श्रुतशङ्खध्वनिः प्रतिष्ठते। यथा वा 'यदा तर्जन्यूर्द्ध्वा क्रियते तदा त्वयासौ ताडनीयः'इति तदा ताडयति परं न तु किञ्चित्प्रमिणोति। ज्ञाप्त्यन्वयिनी पुनर्द्विधा—कारकप्रधाना क्रियाप्रधाना च। आद्या यथा 'दशानामङ्गुलीनामूर्द्धकरणेनेदशसङ्ख्या मुद्राणामन्येषां वा त्वया ज्ञातव्या' इति। द्वितीया यथा 'हस्ताकुञ्चनदर्शनात्त्वया समागमनं ज्ञातव्यम्'इति। तथा च तया चेष्टया पदार्था एव स्वतन्त्राः प्रकृते स्मर्य्यन्ते न तु तेषां परस्परमन्वयोपि बोध्यते, तद्बोधक—कर्तृकर्मादिविभक्तिमचेष्टैकदेशानां

यच्च–"अनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमात्रम्–" इति होतुर्वृद्धैः,–इत्यैतिह्यम् । यथा 'इह वटे यक्षः प्रतिवसति' इति, न तत् प्रामाणान्तरम् । अनिर्दिष्टप्रवक्तृकत्वेन सांशयिकत्वात् । आप्तवक्तृकत्वनिश्चये त्वागम एव । इत्युपपन्नम् "त्रिविधप्रमाणम्" इति ॥ ५ ॥

एवं तावद्व्यक्ताव्यक्तज्ञलक्षणप्रमेयसिद्ध्यर्थं प्रमाणानि लक्षितानि । तत्र व्यक्तं पृथिव्यादि स्वरूपतः पांसुलपादको हालिको ऽपि प्रत्यक्षतः प्रतिपद्यते, पूर्ववता चानुमानेन धूमादिदर्शनात् वह्न्यादीनि चेति, तद्व्युत्पादनाय मन्दप्रयोजनं शास्त्रम्, इति दुरधिगमम्–अनेन व्युत्पाद्यम् । तत्र यत्प्रमाणं यत्र शक्तम् तदुक्तलक्षणेभ्यः प्रमाणेभ्यो निष्कृष्य दर्शयति—

सामान्यतस्तु दृष्टात् अतीन्द्रियाणां प्रतीतिरनुमानात् ।
तस्मादपि चासिद्धं परोक्षमाप्तागमात् सिद्धम् ॥ ६ ॥

"सामान्यतः" इति । 'तु' शब्द प्रत्यक्षपूर्ववद्भ्यां वि-

नियतानामभावादित्यर्थः ।

ऐतिह्यमाह । यच्चेति । अप्रमाणत्वे हेतुमाह । सांशयिकत्वादिति ॥ ५ ॥

वृत्तवर्तिष्यमाणयोः सम्बन्धं वक्तुं वृत्तं कीर्तयति । एवमिति । ननु व्यक्ताव्यक्तज्ञप्रमेयसिध्यर्थं प्रमाणानि लक्षितानि, पृथिव्यादिव्यक्तबोधकप्रत्यक्षस्य वन्ह्यादिबोधकानुमानस्याप्रदर्शनान्न्यूनतेति शङ्कां दूरीकुर्वन्नार्य्यामवतारयति । तत्रेत्यादिना ।

यत्तु 'सामान्यतः'इति षष्ठ्यन्तात्तसिः । तथाचेन्द्रिययोग्यस्य सर्वस्यापेक्षितस्यानपेक्षितस्य च दृष्टात्–प्रत्यक्षादेव'इति ।

शिनष्टि। सामान्यतोदृष्टादध्यवसायादतीन्द्रियाणां प्रधानपुरुषादीनां प्रतीतिः-चितिच्छायापत्तिर्बुद्धेरध्यवसाय इत्यर्थः। उपलक्षणं चैतत्, शेषवदित्यपि द्रष्टव्यम्।

तत्किं सर्वेष्वतीन्द्रियेषु सामान्यतोदृष्टमेव प्रवर्त्तते? तथा च यत्र तन्नास्ति-महदाद्यारम्भक्रमे स्वर्गापूर्वदेवतादौ च, तत्र तेषामभावः प्राप्त इत्यत आह-"तस्मादपि" इति। तस्मादित्येतावतैव सिद्धे

---

तत्र। क्लिष्टकल्पनापत्तेः, पूर्ववद्व्यावृत्त्यर्थमनुमानपदस्य सामान्यतोदृष्टानुमानपरत्वकल्पनापत्तेश्च, शास्त्रस्य मन्दप्रयोजनतापत्तेश्च, पूर्ववदनुमानस्य विषयाप्रदर्शनेन न्यूनतापत्तेश्च। विशिनष्टि-व्यावर्त्तयतीत्यर्थः। सामान्यतोदृष्टात्-अदृष्टस्वलक्षणसामान्यविषयाद्वीतात्। गृहीतव्याप्तिकेन हेतुना साध्यविषया वृत्तिरनुमानमिति स्वमतसूचनायाह। अध्यवसायादिति। आदिना(१) (पं० ३) संयोगसङ्ग्रहः। प्रकृतिपुरुषतत्संयोगा नित्यानुमेया इत्युक्तेः। जडायाः प्रतीतेर्घटादेरिव प्रमेयव्यवहारहेतुत्वाभावादाह। चितीति। चितिच्छाया-चैतन्यप्रतिबिम्बः, तस्यापत्तिर्यत्र-चैतन्यप्रतिबिम्बाश्रयेत्यर्थः। सा च बुद्धेः अन्तःकरणस्याध्यवसायः-वृत्तिरूपपरिणामः। अचेतनोपि चेतन इव भवतीत्यर्थः। नन्वतीन्द्रियादौ व्यतिरेकिणोपि सम्भवात्कथं सामान्यतोदृष्टादेव तत्प्रतीतिरित्यत आह। उपलक्षणमिति। शेषवतः अवीतस्य—व्यतिरेकिण इत्यर्थः। आगमस्य वैफल्यमाशङ्कते। तत्किमिति। तत्रेष्टापत्तिमाशङ्क्य निराकरोति। तथा चेति। पदार्थक्रमेऽनुमानद्वयं न सम्भवति, कार्यलिङ्गेन कारणानुमानात्। तथा च परोक्षे प्रत्यक्षानुमानयोरविषये श्रुतिरेव मानं-स्वर्गबोधकं-यन्नदुःखेनेत्यादि। स्वर्गकामो यजेतेत्यादि—अपूर्वे, अपूर्वं विनाऽऽशुविनाशिनो यागस्य स्वर्गसा-

---

(१) सामान्यतो दृष्टादनुमानादित्यपि पाठः।

'च' कारेण 'शेषवत्'इत्यपि समुच्चितम् ॥ ६ ॥

स्यादेतत् , यथा गगनकुसुमकूर्मरोमशशविषाणादिषु प्रत्यक्षमप्रवर्त्तमानम्–तदभावमवगमयति, एवं प्रधानादिष्वपि । तत्कथं तेषां सामान्यतो दृष्टादिभ्यः सिद्धिरित्यत आह—

अतिदूरात् सामीप्यात् इन्द्रियघातान्मनोऽनवस्थानात् ।
सौक्ष्म्याद्व्यवधानात् अभिभवात् समानाभिहाराच्च ॥ ७ ॥

"अतिदूरात्"इति अनुपलब्धिरिति वक्ष्यमाणं(का०८)-सिंहावलोकनन्यायेनानुषञ्जनीयम् । यथा उत्पतन् वियति

घनत्वासम्भावात् । देवतायां–अग्नीषोमाविदं हविरजुषेताम्, ऐन्द्रं दध्यमावास्यायाम्, इत्यादि ।

सामान्यतोदृष्टाद्यथा प्रधानादीनां सिद्धिस्तथा प्रकृतेर्महानित्यादौ स्पष्टमभिधास्यते(का०२२)। शब्दाधिक्यादर्थाधिक्यमिति न्यायेनाह। चकारेणेति । शेषवदुदाहरणं तु पूर्वमुक्तमेव-न विस्मर्त्तव्यम् ॥६॥

विमतं नास्ति अनुपलभ्यमानत्वाद्गगनकुसुमादिवदिति शङ्का-निराकरणपरत्वेनार्यामवतरति । स्यादेतदिति ।

केचित्तु ननु प्रकृत्यादौ प्रत्यक्षमेव कथं न प्रवर्त्तते ? इत्याशङ्कायां प्रत्यक्षविघटकान् हेतूनाह–' 'अतिदूरादित्यादि'इत्याहुः । तन्न । दृष्टस्वलक्षणसामान्यविषयं वीतं कुतो न प्रवर्त्तेत आप्तवचनं वेति, तादृशशङ्कानिराकरणपरत्वे शास्त्रस्य मन्दप्रयोजनत्वापत्तेः, प्रत्यक्षं न प्रवर्त्तते इत्याद्यध्याहारापत्तेश्च ।

प्रधानादिष्वपीति । तद्वदत्राप्यभावं गमयेदित्यर्थः । सिंहावलोकितन्यायेनेति(१) । एकमेवास्यं पञ्चसु दिक्षु भ्रामयतीति तदीयस्वभावः । अत एव पञ्चास्य इत्युच्यते सिंहः । दूरत्वदोषश्च क्वचित्क्वचिदेव । अन्यथा सूर्यादिमण्डलादर्शनम् ।

(१) सिंहावलोकनन्यायेनेत्यपि पाठः ।

*पतत्रीं अतिदूरतया सन्तमपि प्रत्यक्षेण नोपलभ्यते । सामीप्यादित्यत्राप्यतिरनुवर्तनीयः, यथा लोचनस्थमञ्जनमतिसामीप्यान्न दृश्यते । इन्द्रियघातो ऽन्धत्वबधिरत्वादिः । "मनोऽनवस्थानात्," यथा कामाद्युपहतमनाः स्फीतालोकमध्यवर्तिनमिन्द्रियसन्निकृष्टमर्थं न पश्यति । "सौक्ष्म्यात्", यथेन्द्रियसन्निकृष्टं परमाण्वादि प्रणिहितमना अपि न पश्यति । "व्यवधानात्",यथा कुड्यादिव्यवहितं राजदारादि न पश्यति । "अभिभवात्", यथा ऽह्नि सौरीभिर्भाभिरभिभूतं ग्रहनक्षत्रमण्डलं न पश्यति । "समानाभिहारात्", यथा तोयदविमुक्तानुदबिन्दून् जलाशये न पश्यति ।

'च' कारो ऽनुक्तसमुच्चयार्थः । तेनानुद्भवो ऽपि सङ्गृहीतः । तद्यथा क्षीराद्यवस्थायां दध्याद्यनुद्भवान्न पश्यति ।

एतदुक्तं भवति । न प्रत्यक्षनिवृत्तिमात्रादवस्त्वभावो भवति, अतिप्रसङ्गात् । तथा हि गृहाद्विनिर्गतो गृहजनमपश्यंस्तदभावं विनिश्चिनुयात्, न त्वेवम् । अपि तु योग्यप्रत्यक्षनिवृत्तेरयमभावं विनिश्चिनोति । न च प्रधानपुरुषादीनामस्ति प्रत्यक्षयोग्यता, इति न तन्निवृत्तिमात्रात्तदभावनिश्चयो युक्तः प्रामाणिकानामिति ॥ ७ ॥

---

समाधानग्रन्थस्य तात्पर्यमाह । एतदुक्तं भवतीति । न हि प्रत्यक्षनिवृत्तिमात्रमभावसाधकमतिदूरस्थादौ व्यभिचारात्, किन्त्वतिदूरत्वादिदोषाभावविशिष्टे इत्यर्थः । गृहजनपर्यन्तानुधावनं तु तदभावनिश्चये दुःखोत्पादप्रदर्शनाय । इष्टापत्तिं धुनीते । अपित्विति । तथा च कारणाभावान्न तदभावोपलम्भ इत्यर्थः ॥७॥

कतमत्पुनरेषु कारणं प्रधानादीनामनुपलब्धावित्यत आह—

**सौक्ष्म्यात्तदनुपलब्धिर्नाभावात्, कार्यतस्तदुपलब्धेः ।**
**महदादि तच्च कार्यं प्रकृतिसरूपं विरूपं च ॥ ८ ॥**

"सौक्ष्म्यात्" इति । अथाभावादेव सप्तमरसवदेतेषामनुपलब्धिः कस्मान्न भवतीत्यत आह—"नाभावात्" इति । कुतः ! "कार्यतस्तदुपलब्धेः । 'तत्' इति प्रधानं परामृशति । पुरुषोपलब्धौ तु प्रमाणं वक्ष्यति, "सङ्घातपरार्थत्वात्" ( कारिका १७ ) इति । दृढतरप्रमाणावधारिते हि प्रत्यक्षमप्रवर्तमानमयोग्यत्वान्न प्रवर्तते इति कल्प्यते । सप्तमस्तु रसो न प्रमाणेनाऽवधारित इति न तत्र प्रत्यक्षस्य योग्यता शक्या ऽध्यवसितुमित्यभिप्रायः ।

अतिदूरत्वादिदोषेषु प्रकृत्याद्युपलम्भे प्रतिबन्धकं दर्शयितुं पृच्छति । कतमदिति । एषु दूरत्वादिदोषेषु । उत्तरयति । सौक्ष्म्यादिति । सूक्ष्मत्वं चात्र नाणुत्वं प्रधानपुरुषयोर्व्यापकत्वात् । किं तु निरवयवद्रव्यत्वमेव । न च सौक्ष्म्यमनुपलब्धौ न तन्त्रं योगिप्रत्यक्षे व्यभिचारादिति वाच्यम् । योगजधर्मस्योत्तेजकत्वादिति । ननु दूरस्थानां पुनर्दर्शनेनोपलभ्यत्वसामान्याभावरूपहेतोर्न तत्र व्यभिचारः । शशशृङ्गादेरपि सौक्ष्म्यादनुपलब्धिसम्भवे शशशृङ्गादेस्सत्त्वापत्तिश्चात्राऽनुमानेऽनुकूलतर्क इत्याशङ्क्यते । अथेति । समाधानमाह । दृढतरेत्यादि । व्यभिचारादर्शनप्रयुक्तं दृढत्वं, योगजप्रत्यक्षविषयकत्वेन दृढतरत्वं च बोध्यम् । तथा च प्रमाणेनोपलभ्यमानत्वात्तत्समानाभावो ऽसिद्ध इत्यर्थः । दृष्टान्तस्य वैषम्यमाह । सप्तम इति । तत्र प्रत्यक्षस्य दुर्बलत्वे ऽपि अत्र दृढतरप्रमाण-

किं पुनस्तत्कार्यं यतः प्रधानानुमानमित्यत आह--

"महदादि तच्च कार्यम्" इति । एतच्च यथा गमकं तथोपरिष्टादुपपादयिष्यते । तस्य च कार्यस्य विवेकज्ञानोपयोगिनी सारूप्यवैरूप्ये आह—"प्रकृतिसरूपं विरूपं च" इति । एते तूपरिष्टाद्विभजनीय इति ॥८॥

कार्यात् कारणमात्रं गम्यते । सन्ति चात्र वादिनां विप्रतिपत्तयः । तथा हि केचिदाहुः, 'असतः सज्जायत' इति, 'एकस्य सतो विवर्तः कार्यजातं न वस्तु सत्' इत्यपरं, अन्ये तु 'सतः असज् जायते' इति, 'सतः सज् जायते' इति वृद्धाः ।

तत्र पूर्वस्मिन् कल्पत्रये प्रधानं न सिध्यति । सुखदुःखमोहभेदवत्स्वरूपपरिणामशब्दाद्यात्मकं हि जगत् कारणस्य प्रधानस्य प्रधानत्वं सत्त्वरजस्तमस्स्वभावत्व-

विरोधाभावान्न प्रत्यक्षं दुर्बलमित्यर्थः । यत्कार्यान्यथानुपपत्त्या प्रधानमङ्गीकृतं तत्पृच्छति । किं पुनरिति । तथोपरिष्टादिति ।

कारणगुणात्मकत्वात्कार्यस्याव्यक्तमपि सिद्धम् ।

भेदानां परिमाणादित्यादौ

उपरिष्टात्—हेतुमदनित्यमित्यादौ ॥ ८ ॥

ननु कार्यं चेदुत्पत्तेः प्राक् सिद्धं स्यात्तदा तदाधारतया नित्या प्रकृतिः सेत्स्यति, तच्च न सम्भवति, वादिविप्रतिपत्तेरित्याशङ्कायां सत्कार्योपपादिकामार्यामवतारयति । कार्यात्कारणमात्रमिति । बौद्धमतमाह । असत इति । वेदान्तमतमाह । एकस्य सत इति । सतो ब्रह्मण इत्यर्थः । नैय्यायिकमतमाह । अन्येत्विति । साङ्ख्यमतमाह । सतः सदिति । मतत्रये प्रकृतिर्न सिद्ध्यतीत्याह । तत्र पूर्वस्मिन्निति । प्रधानशब्दार्थमाह । सुखेत्यादि ।

मवगमयति। यदि पुनरसतः सज्जायते असन्निरुपाख्यं कारणं सुखादिरूपशब्दाद्यात्मकं कथं स्यात्, सदसतो-स्तादात्म्यानुपपत्तेः? अथैकस्य सतो विवर्तः शब्दादि-प्रपञ्चः, तथाऽपि सतः सज्जायत इति न स्यात्। न चा-स्याद्वयस्य प्रपञ्चात्मकत्वम्, अपि त्वप्रपञ्चस्य प्रपञ्चात्म-कतया प्रतीतिर्भ्रम एव। येषामपि कणभक्षाक्षचरणा-दीनां सत एव कारणादसतो जन्म तेषामपि सदसतो-रेकत्वानुपपत्तेर्न कार्यात्मकं कारणमिति न तन्मते प्र-धानसिद्धिः।

अतः प्रधानसिद्ध्यर्थं प्रथमं तावत्सत्कार्यं प्रतिजानीते।

असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्।
शक्तस्य शक्यकरणात्, कारणभावाच्च सत् कार्यम्॥९।

"असदकरणात्" इति। "सत् कार्यम्"—कारण-व्यापारात् प्रागपीति शेषः। तथा च न सिद्धसाधनं नै-यायिकतनयैरुद्भावनीयम्। यद्यपि बीजमृत्पिण्डादिप्र-ध्वंसानन्तरमङ्कुरघटाद्युत्पत्तिरुपलभ्यते, तथा ऽपि न

---

सुखादिरूपत्वे सति प्रकृतित्वं प्रधानत्वम्। कणभक्षः—कणादमु-निर्दशाध्यायी-वैशेषिकशास्त्रप्रणेता। अक्षचरणस्तु गौतममुनिः पञ्चाध्यायी—न्यायशास्त्रप्रणेता, ते एव नैय्यायिकाः। बहुवचनं पूजार्थम्। सिद्धसाधनं धुनीते। कारणव्यापारादिति। प्राग-पीति। उत्पादनाशसामग्र्युत्तरमपि। नैय्यायिकतनयैः—तदनुया-यिभिः। तन्मताभिमानसूचनाय तनयग्रहणं, तेन तदुपपादनसमर्था इति सूचितम्। "अनुपमृद्य प्रादुर्भावादर्शनादसतः सदुत्पत्तिः" इति बौद्धमतमाशङ्क्य निराचष्टे। यद्यपीति। तर्हि कस्योपादा-

प्रध्वंसस्य कारणत्वम्, अपि तु भावस्यैव बीजाद्यवयवस्य। अभावात्तु भावोत्पत्तौ, तस्य सर्वत्र सुलभत्वात् सर्वदा सर्वकार्योत्पादप्रसङ्ग इत्यादि न्यायवार्तिकतात्पर्यटीकायामस्माभिः प्रतिपादितम्।

प्रपञ्चप्रत्ययश्चासति बाधके न शक्यो मिथ्येति वदितुम् इति।

कणभक्षाक्षचरणमतमवशिष्यते। तदिदं प्रतिज्ञातम्—"सत् कार्यम्" इति। अत्र हेतुमाह "असदकरणात्"

नतेत्याशङ्कायामाह। अपि त्विति। अभावोपादानकत्वे बाधकं तर्कमाह। अभावात्त्विति। सर्वदेत्यत्र सर्वत्रेत्यनुषज्यते। आदिपदेन कार्यं मृदानुविद्धघटवदभावानुविद्धं स्यादिति ग्राह्यम्। न्यायवार्त्तिकतात्पर्यटीकायामिति कथनं तु एतस्य सत्तर्कत्वसूचनाय। वेदान्तमतस्य सत्तर्कोपबृंहितस्य बहुषु स्वेनोपपादितस्य पुनर्दोषोद्भावने स्वस्य प्रतारकत्वापत्तिः, अनुद्भावने साङ्ख्यमताज्ञानापत्तिरित्युभयथा पाशारज्जुरिति साक्षात्स्वेन तन्निरसनेऽवसराभावादन्यमुखेनैव तन्निरसितुमाह। असति बाधक इति। तथा चासति बाधके न मिथ्येति वदितुं शक्यः, सति तु बाधके मिथ्येति वदितुं शक्य इत्यर्थः। बाधकाभावे इति विहायाऽसतीति बाधकसत्त्वसूचनाय। बाधकं—नेह नानास्ति किञ्चन, तरति शोकमात्मविदित्यादि। मूलस्य न्यूनतां परिहृत्य कणभक्षादिमतदूषणपरत्वमाह। कणभक्षेत्यादि। तत्—यस्मात्तन्मतमेवावशिष्यते तस्मादित्यर्थः। प्रतिज्ञातं—साध्यत्वेनेति शेषः। अत्र—सत्कार्यप्रतिज्ञायाम्। हेतुमाहेति।

नचासदकरणस्य कार्यरूपपक्षेऽवृत्तित्वान्न तत्साधकत्वमिति वाच्यम्। ईश्वरोस्ति नवेति मध्यस्थोक्ते ईश्वरोस्ति, कुत इति पृष्टे

इति । असत् चेत् कारणव्यापारात् पूर्वं कार्यम्, नास्य सत्त्वं कर्तुं केनापि शक्यम्, नहि नीलं शिल्पिसहस्रेणापि पीतं कर्तुं शक्यते । 'सदसत्त्वे घटस्य धर्मौ' इति चेत्, तथा ऽप्यसति धर्मिणि न तस्य धर्म इति सत्त्वं तदवस्थमेव । तथा च नासत्त्वम्, असम्बद्धेना-

कार्यस्य कर्तृजन्यत्वादित्यादिवदेतस्य हेतोः प्रकृतन्यायानवयवत्वेपि हेतुपदस्य व्यतिरेकव्याप्तिपरत्वेन तत्साधकत्वात् । तथा हि विमतं कालत्रये सत् जन्यत्वात्, यन्न कालत्रये सत् न तत् जन्यं; यथा शशशृङ्गादि, न च तथेदं, तस्मान्न तथेति । असदकरणादित्यस्य विषयसाधकतर्कपरत्वं चाह । असच्चेत्यादिना । तथा चासत्त्वाविशेषाच्छशशृङ्गादेरपि सत्त्वापत्तिरित्यर्थः । असतस्सत्त्वं न सम्भवतीतिसूचनायान्यस्य स्थितस्यान्यभावानुपपत्तौ दृष्टान्तमाह । न हीति ।

एतेन नीलवस्त्रादेः क्षारादिना नीलरूपपरावृत्त्या हरिद्रादिना पीततासम्भवान्नहीत्याद्यसङ्गतमिति परास्तम् । तत्राप्यन्यस्यान्यभावानुपपत्तेः ।

ननु सदसतोर्विरोधेपि उत्पत्तेः प्राग्घटो नास्ति, तदनन्तरं च घटोस्ति, नाशानन्तरं च घटोनास्तीति सर्वानुभवसिद्धौ–तत्तदधिकरणवृत्तित्वरूप–सत्त्व–तद्भिन्नकालनिभावप्रतियोगित्वरूपाऽसत्त्वे घटस्य धर्मौ, शशशृङ्गादेस्तादृशधर्माभावान्नोत्पत्त्यापत्तिरिति शङ्कते । सदिति । सत्त्वं तदवस्थम् । धर्मिण इति शेषः ।

नन्विदमसङ्गतं घटादेर्वर्तमानकाले एव तादृशसत्त्वाङ्गीकारादिति चेन्न, अभिप्रायानवबोधादित्याह । असम्बद्धेनेति । घटोत्पत्तेः प्राक् तदुत्तरस्मिंश्च यो घटाभावस्तस्मिन् घटसम्बन्धाङ्गीकारे सम्बन्धस्योभयसम्बन्ध्यधीनत्वरूपत्वेन सम्बन्धिसत्त्वं तदवस्थमेव, सम्ब-

ऽतदात्मना चासत्त्वेन कथमसन् घटः ? तस्मात् कारणव्यापारादूर्ध्वमिव ततः प्रागपि सदेव कार्यमिति । कारणाच्चास्य सतोऽभिव्यक्तिरेवावशिष्यते । सतश्चाभिव्यक्तिरुपपन्ना, यथा पीडनेन तिलेषु तैलस्य, अवघातेन धान्येषु तण्डुलानाम्, दोहनेन सौरभेयीषु पयसः । असतः करणे तु न निदर्शनं किञ्चिदस्ति । न खल्वभिव्यज्यमानं चोत्पद्यमानं वा क्वचिदसद्दृष्टम् ।

न्धानङ्गीकारे शशशृङ्गाद्यभावोपि स स्यादसम्बन्धाविशेषात् । अभावेपि प्रतियोगिनं विना स्वरूपतोविशेषाङ्गीकारे ऽभावत्वस्य परिभाषामात्रत्वप्रसङ्गः, प्रतियोगिनो विशेषकत्वाङ्गीकारे असतः प्रतियोगिनः प्रागभावादिषु निरूपकत्वरूप-विशेषकत्वासम्भवः । न च कालादिरेवाधिकरणम् । प्रागभावादेः क्रियाविरहेण कपालादौ वृत्तित्वाभावप्रसङ्गाच्च । किं च घटोध्वस्तो घटाभावः घटोऽत्र नास्तीत्यादिप्रत्ययनियामकतया किञ्चिद्वस्त्वाकाङ्क्षायां नित्यस्य कार्यस्यातीतानागतवर्त्तमानावस्था-भावरूपं नियामकं कल्प्यते, लाघवात्, अभावस्यादृष्टस्य कल्पने गौरवादित्यभिप्रायः ।

ननु घटादेः सम्बन्धाभावेनासत्त्वासम्भवेप्युत्पत्तेः प्राक् कारणतादात्म्याभावेनाऽसत्त्वमस्त्वित्याशङ्क्याह । **अतदात्मनेति** । कार्यस्य घटादेः पिण्डात्मत्वाभावेपि मृदात्मत्वसम्भवादित्यर्थः । अपरोक्षत्वाच्च शशविषाणवदसत्त्वं न सम्भवतीति सूचयन्नुपसंहरति । **तस्मादिति** । ननु तर्हि कार्यस्य नित्यत्वप्रसक्त्या सामग्रीवैयर्थ्यप्रसङ्ग इत्याशङ्क्याह । **कारणाच्चेति** । तथा च सामग्र्या वर्त्तमानावस्था-लक्षणपरिणामरूपाभिव्यक्त्यर्थत्वान्न वैयर्थ्यमित्यर्थः । इदं च दृष्टचरमित्याह । **यथा पीडनेनेत्यादि** । **न खल्विति** । तथा चाऽसतो ऽभिव्यक्त्याद्यङ्गीकारे सर्वत्राऽसत्त्वाविशेषात्सर्वत्राऽभि-

इतश्च कारणव्यापारात् प्राक् सदेव कार्यम्—"उपादानग्रहणात्" उपादानानि कारणानि, तेषां ग्रहणं—कार्येण सम्बन्धः । उपादानैः कार्यस्य सम्बन्धादिति यावत् एतदुक्तं भवति—कार्येण सम्बद्धं कारणं कार्यस्य जनकम्, सम्बन्धश्च कार्यस्यासतो न सम्भवति, तस्मादिति ॥

स्यादेतत्—असम्बद्धमेव कार्यं कारणैः कस्मान्न जन्यते ? तथा चासदेवोत्पत्स्यत इत्यत आह—"सर्वसम्भ-

व्यक्त्यादिप्रसङ्गः । यत्र यस्य प्रागभावोऽस्ति स एव तत्र जायत इत्यस्य पूर्वं दूषितत्वादित्यर्थः । कारणे कार्यसत्त्वमुक्तं वासिष्ठे ।

प्रसुप्तावस्थया चक्रपद्मशङ्खाः शिलोदरे ।
यथा स्थितास्थितेरन्तस्तथेयं जगदावली ॥ इति ।

कारणानि—स्थानाभिषिक्तपरिणामकारणानीत्यर्थः । गृह्यतेऽनेनेतिग्रहणं—सम्बन्धस्तस्य प्रतियोगिनिरूप्यतया कार्यपदाध्याहारेण मूलं योजयति । कार्येणेति । उपादानानि कारणानि समवायिकारणानि । उपादीयन्त इत्युपादानानीति योगेन कार्यादिसाधारणपरस्योपादानपदस्य विशेषपरत्वमाह । कारणानीति । नन्वेवमपि दध्यर्थी क्षीरमुपादत्ते नान्यत्, यदि चाऽसत्कार्यस्यात् तर्हि दध्यर्थी उदकस्याप्युदानं कदाचित्कुर्यात्, न च कुरुते, तस्मादुपादानग्रहणादपि ज्ञायते—कारणे उत्पत्तेः प्रागपि कार्यमस्तीति सम्भवेपि उपादानग्रहणस्य पक्षवृत्तित्वासम्भवेन हेतुत्वं न सम्भवतीत्याशङ्क्याह । उपादानैरिति । तथा च कर्ये कारणसम्बन्धस्य लाभान्न पूर्वोक्तदोष इत्यर्थः । ननु कार्यमुत्पत्तेः प्राक् सत् सदा तत्सम्बन्धादित्यस्यापि हेतोरसिद्धिमाशङ्क्याह । एतदुक्तं भवतीति ।

अत्र वेदमनुमानम् । मृदादयः स्वसम्बद्धकार्यजनकाः उपादानकारणत्वात् व्यतिरेके शशशृङ्गवदिति । नचाप्रयोजकत्वम् । असम्बद्धत्वाविशेषात्सर्वकार्योत्पत्त्यापत्तेः ।

याभावात्'' इति। असम्बद्धस्य जन्यत्वे, असम्बद्धत्वाविशेषेण सर्वं कार्यजातं सर्वस्माद्भवेत्। न चैतदस्ति, तस्मान्नासम्बद्धमसम्बद्धेन जन्यते अपि तु सम्बद्धं सम्बद्धेन जन्यते इति। यथाहुः साङ्ख्यवृद्धाः

"असत्त्वे नास्ति सम्बन्धः कारणैः सत्त्वसङ्गिभिः।
असम्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः" इति।

स्यादेतत्—असम्बद्धमपि सत् तदेव करोति यत्र यत्कारणं शक्तम्। शक्तिश्च कार्यदर्शनादवगम्यते। तेन नाव्यवस्थेत्यत आह—"शक्तस्य शक्यकरणात्" इति। सा शक्तिः शक्तकारणाश्रया सर्वत्र वा स्यात्, शक्ये एव वा? सर्वत्र चेत्तदवस्थैवाव्यवस्था, शक्ये चेत्, कथमसति

असम्बद्धस्य जन्यत्वे दोषमाह। असम्बद्धस्येति। असतस्सम्बन्धाभावे विद्वत्संमतिमाह। यथाऽऽहुरिति। न व्यवस्थितिः—क्षीरादेरिव दध्यादिरिति। शक्त्या व्यवस्थामुपपादयितुं शङ्कते। स्यादेतदिति। इतश्च नासदुत्पाद इत्याह। शक्तस्य शक्यकरणादिति।

अन्ये शक्तिर्हि शक्यरूप—कार्यनिरूपिता, तदसत्त्वे कथं स्यादित्याशयेन समादधते। सा शक्तिरिति। "शक्तकरणाश्रया" इत्यत्र 'अपि' इति शेषः। सर्वत्रेति। निरूपकतासम्बन्धेनेति शेषः। असतीति। असतो निरूपकत्वासम्भवादित्यर्थः।

शक्तिर्हि कार्यस्यानागतावस्था, तदसत्त्वे कथं स्यादित्यन्ये।
तां शक्तिं त्रिधा विकल्प्य निराचष्टे—साशक्तिरितीत्यपरे।

शक्तिश्च शक्तिमत्सम्बन्धरूपा संयोगवदुभयत्र, या शक्याभावे न सम्भवतीति शक्यभावोऽभ्युपेय इति न्यायकणिकाचार्याः।

शक्ये तत्र, इति वक्तव्यम् । शक्तिभेद एव एतादृशो यतः किञ्चिदेव कार्यं जनयेत् न सर्वमिति चेत्, हन्त भोः शक्तिविशेषः कार्यसम्बद्धो वा ऽसम्बद्धो वा ? सम्बद्धत्वे नासता सम्बन्धः इति सत् कार्यम् । असम्बद्धत्वे सैवाव्यवस्था, इति सुष्टूक्तं "शक्तस्य शक्यकरणात्" इति ।

इतश्च सत् कार्यमित्याह—"कारणभावाच्च" कार्यस्य कारणात्मकत्वात् । नहि कारणाद्भिन्नं कार्यम्, कारणं च सत्, इति कथं तदभिन्नं कार्यमसत् भवेत् ।

कार्यस्य कारणाभेदसाधनानि च प्रमाणानि—(१) न पटस्तन्तुभ्यो भिद्यते, तन्तुधर्मत्वात् । इह यद्यतो भिद्यते तत् तस्य धर्मो न भवति यथा गौरश्वस्य । धर्मश्च पटस्तन्तूनां, तस्मान्नार्थान्तरम् । (२) उपादानोपादेयभावाच्च नार्थान्तरत्वं तन्तुपटयोः । ययोरर्थान्तर-

ननु शक्तेः शक्यानिरूप्यस्वरूपविशेषो नाङ्गीक्रियते, यन शक्यसत्त्वं स्यात्; किं तु स्वरूपविशेष एव स तादृशो येन यत्किञ्चिदेव कार्यं जनयतीत्याशङ्कते । शक्तिभेद एवेति । अनिरूपितशक्तौ मानाभाव इत्याशयेन समाधत्ते । हन्त भोरित्यादिना । दोषमाह । असम्बद्धत्वे सैवेति ।

उत्पत्तेः प्राक् कार्यसत्त्वं भावयन्नस्याभिन्नत्वरूपधर्मपरत्वमाह । कार्यस्य कारणात्मकत्वादिति । अत्रानुमानम्—कार्यमुत्पत्तेः प्रागपि सत् कारणात्मकत्वात् उभयमतसिद्धकारणवदिति । विपक्षे स्वर्णजकुण्डलस्य मृदात्मकत्वापत्तिर्बाधिका ।

हेत्वासिद्धिपरिहर्तुमाह । कार्यस्य कारणाभेदसाधनानीति प्रत्यक्षानुमानागमा इत्यर्थः । प्रत्यक्षं तु—मृद्घटः, स्वर्णं कुण्डलमित्यादि । अनुमानं तु न पट इत्यादि । आगमास्तु—तद्धीदं तर्ह्य-

त्वम् न तयोरुपादानोपादेयभावः, यथा घटपटयोः । उपादानोपादेयभावश्च तन्तुपटयोः । तस्मान्नार्थान्तरत्वम् । ( ३ ) इतश्च नार्थान्तरत्वं तन्तुपटयोः संयोगाप्राप्त्यभावात् । अर्थान्तरत्वे हि संयोगो दृष्टो यथा कुण्डबदरयोः, अप्राप्तिर्वा यथा हिमवद्विन्ध्ययोः । न चेह संयोगप्राप्ती, तस्मान्नार्थान्तरत्वमिति । ( ४ ) इतश्च पटस्तन्तुभ्यो न भिद्यते, गुरुत्वान्तरकार्याग्रहणात् । इह यद्यस्माद्भिन्नम्, तस्मात् तस्य गुरुत्वान्तरं कार्यं गृह्यते, यथैकपलिकस्य स्वस्तिकस्य यो गुरुत्वकार्योऽवनतिविशेषस्तस्माद्द्विपलिकस्य स्वस्तिकस्य गुरुत्वकार्योऽवनतिभेदोऽधिकः । न च तन्तुगुरुत्वकार्यात् पटगुरुत्वकार्यान्तरं दृश्यते । तस्मादभिन्नस्तन्तुभ्यः पट इति । तान्येतान्यभेदसाधनान्यवीतानि ।

---

व्याकृतमासीत् , सदेव सोम्येदमग्र आसीत्, तम एवेदमग्र आसीत्, असदेवेदमग्र आसीदित्याद्याः ।

यत्तु–धर्मत्वात्—धर्मपरिणामत्वात् । परिणामस्त्रिविधः–धर्मलक्षणावस्थाभेदात् । तत्र धर्मपरिणामो मृदो घटाद्याकारः, लक्षणपरिणामोऽतीतत्वादि, अवस्थापरिणामो नूतनतमत्वादीति, तन्न । उपादानेत्यादिना पौनरुक्त्यात् । अर्थान्तरम्–अत्यन्ताभिन्नत्वम् । अनुमानान्तराण्याह । उपादानेत्यादि । उपादानं–समवायिकारणं परिणामि वेति । उपादेयं—समवेतं परिणामो वेति ।

पलिकस्य–पलरूप–मानविशेषावच्छिन्नस्य स्वस्तिकस्य स्त्रीकण्ठाभरणविशेषस्य । गुरुत्वकार्य्यो गुरुत्वस्य कार्य्यम् । अवनतिविशेषः–तुलाद्यो नमनाविशेषः ।

यदुक्तं अवीतस्य व्यतिरेकिण उदाहरणमग्रेऽभिधास्य इति तदाह । तान्येतानीति ।

एवभेदे सिद्धे, तन्तव एव तेन तेन संस्थानभेदेन परिणताः पटो, न तन्तुभ्यो ऽर्थान्तरं पटः। स्वात्मनि-क्रियाविरोधबुद्धिव्यपदेशार्थक्रियाभेदाश्च नैकान्तिकं भेदं साधयितुमर्हन्ति, एकस्मिन्नपि तत्तद्विशेषाविर्भावतिरोभावाभ्यामेतेषामविरोधात्। यथा हि कूर्मस्याङ्गानि कूर्मशरीरे निविशमानानि तिरोभवन्ति, निःसरन्ति चाविर्भवन्ति। न तु कूर्मतस्तदङ्गान्युत्पद्यन्ते प्रध्वंसन्ते वा। एवमेकस्या मृदः सुवर्णस्य वा घटमुकुटादयो विशेषा निःसरन्त आविर्भवन्त उत्पद्यन्त इत्युच्यन्ते, निविशमानास्तिरोभवन्तः विनश्यन्तीत्युच्यन्ते। न पुनरसतामुत्पादः सतां वा निरोधः। यथाह भगवान् कृष्णद्वैपायनः—

"नासतो विद्यते भावो नाभावो विद्यते सतः"
इति। (भवद्गीता २। १६)

---

ननु पटस्तन्तुभ्यो भिद्यते तत उत्पद्यमानत्वात्, व्यतिरेके तन्तुवत्, तन्तुषु पट इति विलक्षणबुद्धिविषयत्वात्, प्रावरणादिविलक्षणकार्यकारित्वाच्च घटवदित्याशङ्कायामाह। स्वात्मनीत्यादि। स्वात्मनि—स्वाभिन्नेपीत्यर्थः। क्रियाविरोधः—उत्पत्तिनाशाख्यक्रियारूपयोरित्यर्थः। अविरोधे संमतिमाह। यथाहेति। कृष्णद्वैपायनो वेदव्यासः।

कृष्णेन सह द्वैपायनः। अन्यथा "षट्शतानि सविंशानि श्लोकानां प्राह केशवः" इति विरोधः। तं धर्मं भगवता यथोपदिष्टं भगवान्वेदव्यासः सर्वज्ञो गीताख्यैः सप्तभिः श्लोकशतैरुपनिबद्ध इति श्रीशङ्करभाष्यविरोधश्चेत्यन्ये। भाव—उत्पत्तिः। अभावो—विनाशः।

यथा कूर्मः स्वावयवेभ्यः सङ्कोचविकासिभ्यो न भिन्नः, एवं घटमुकुटादयोऽपि मृत्सुवर्णादिभ्यो न भिन्नाः। एवञ्चेह तन्तुषु पट इति व्यपदेशो, यथेह वने तिलका इत्युपपन्नः। न चार्थक्रियाभेदोऽपि भेदमापादयति, एकस्यापि नानार्थक्रियादर्शनात्, यथैक एव वह्निर्दाहकः पाचकः प्रकाशकश्चेति। नाप्यर्थक्रियाव्यवस्था वस्तुभेदे हेतुः, तेषामेव समस्तव्यस्तानामर्थक्रियाव्यवस्थादर्शनात्। यथा प्रत्येकं विष्टयो वर्त्मदर्शनलक्षणामर्थक्रियां कुर्वन्ति, न तु शिबिकावहनम्, मिलितास्तु शिबिकामुद्वहन्ति, एवं तन्तवः प्रत्येकं प्रावरणमकुर्वाणा अपि मिलिता आविर्भूतपटभावाः प्रावरिष्यन्ति।

स्यादेतत्—आविर्भावः पटस्य कारणव्यापारात् प्राक् सन् असन् वा? असंश्चेत् प्राप्तं तर्ह्यसदुत्पादनम्। अथ सन्, कृतं तर्हि कारणव्यापारेण। नहि सति कार्ये कारणव्यापारप्रयोजनं पश्यामः। आविर्भावे चाविर्भावान्तरकल्पनेऽनवस्थाप्रसङ्गः। तस्मादाविर्भूतपटभावास्तन्तवः क्रियन्त इति रिक्तं वचः।

---

प्रत्ययप्रयोगविरोधं निरस्यति। एवं चेहेति।

अर्थक्रियाभेदविरोधं दूरीकरोति। एकस्यापीति। विष्टयो—वेतनं विना कर्मकराः। दर्शनलक्षणामिति। वर्त्मनीति शेषः।

कणभक्षाक्षचरणावाशङ्कते। स्यादेतदित्यादिना। कारणव्यापारेणेति। अत्र कारणव्यापारात्प्रागपि कार्यस्याभिव्यक्त्या स्वकार्यजनकत्वापत्तिरिति पूर्वं पक्षमुपसंहरति। तस्मादिति।

रिक्तं–बाधितार्थकम्।

युक्तिशून्यमित्यन्ये।

मैवम् । अथासदुत्पद्यत इति मतं केयमसदुत्पत्तिः ? सती, असती वा ? सती चेत्, कृतं तर्हि कारणैः । असती चेत्, तस्या अप्युत्पत्त्यन्तरमित्यनवस्था ।

अथ—"उत्पत्तिः पटान्नार्थान्तरम्, अपि तु पट एवासौ" तथाऽपि यावदुक्तं भवति 'पट' इति तावदुक्तं भवति 'उत्पद्यते' इति । ततश्च 'पट' इत्युक्ते, 'उत्पद्यते' इति न वाच्यम्, पौनरुक्त्यात् । 'विनश्यति' इत्यपि न वाच्यम्, उत्पत्तिविनाशयोर्युगपदेकत्र विरोधात् ।

प्रमाणशून्यमित्यपरे ।

स्वीयमतं दृष्टचरत्वेनावधारयितुं तन्मते उक्तदोषानिवृत्तिमाह । अथेति ।

प्रतिबन्दिमुखेन तद्दोषं निराकरोति । अथेतीत्यन्ये ।

अनवस्थेति । यथा पटोत्पत्तिरसती कारणव्यापारजन्या तथा तदीयाऽप्युत्पत्तिरेवं रीत्या बोध्या । अनवस्थां परिहर्तुमाशङ्कते । अथोत्पत्तिरिति । तथापीति । पौनरुक्त्यादिति । पट उत्पद्यते इत्यत्र पटपदेनैवोत्पत्तेरप्यभिधानादित्यर्थः । अन्यथा पटोत्पत्त्यनन्तरं पट उत्पद्यते इत्यपि स्यात् पटस्याग्रिमक्षणेपि विद्यमानत्वादिति ।

तुल्ययुक्त्या पटध्वंसोपि पट एव, तथा च पटो विनश्यतीति न वाच्यम्, स्वाभावस्य स्वात्मकत्वविरोधादित्याह । विनश्यतीति । पौनरुक्त्यदोषोऽत्रापि बोध्यः ।

यद्वा पटोत्पत्त्योरैक्ये पट इत्युक्तेरुत्पत्तेरपि लभ्यमानत्वादुत्पत्तिविनाशयोश्च विरोधात्पटो विनश्यतीत्यपि न वाच्यमित्याह । **विनश्यतीति** ।

उत्पत्तिर्न पटादर्थान्तरमितिमतदूषणमुपसंहरन् कणभक्षाक्षचर-

तस्मादियं पटोत्पत्तिः स्वकारणसमवायो वा, स्वसत्तासमवायो वा, उभयथा ऽपि नोत्पद्यते, अथ च तदर्थानि कारणानि व्यापार्यन्ते। एवं मत एव पटादेराविर्भावाय कारणापेक्षेत्युपपन्नम्। न च पटरूपेण कारणानां सम्बन्धः, तद्रूपस्याक्रियात्वात्, क्रियासम्बन्धित्वाच्च कारकाणाम्, अन्यथा कारकत्वाभावात्।

तस्मात् सत् कार्यमिति पुष्कलम् ॥ ९ ॥

णमतसिद्धोत्पत्तिरपि न सम्भवतीत्याह। तस्मादिति। स्वकारणेन समवायः स्वकारणे समवायो वा स्वोत्पत्तिरित्यर्थः। स्वसत्तया समवायः स्वस्मिन्सत्तासमवायो वा स्वोत्पत्तिरित्यर्थः। कारणवैयर्थ्ये इष्टापत्तिं निरस्यति। अथ चेति। न चाद्यक्षणसम्बन्धरूपोत्पत्तिर्वाच्या, तत्रापि सतीत्यादिविकल्पदोषग्रासत्रासानपायात्। सम्बन्धस्य सम्बन्ध्यधीनत्वेनोक्तव्याघाताच्च। तस्मात् तवोत्पत्ताविव ममापि सत एव पटादेरसदाविर्भावे कारणापेक्षोपपन्नेत्याह। एवं सत इति।

"यत्रावयोः समो दोषः परिहारोपि वा समः" इति न्यायेनाह। एवं सत इतीत्यन्ये।

ननु सत आविर्भावलक्षणक्रियाया उत्पादनाय कारणव्यापाराङ्गीकारे विनिगमनाविरहेणाऽसत्कार्योत्पत्त्यापत्तिरिति चेन्न, कारकाणां मिथो जन्यजनकभावसम्बन्धाभावादित्याह। न चेति।

कार्याणां कारणे सर्वदा सम्बन्धसत्त्वात्सर्वदा तद्व्यवहारापत्तिरित्यन्ये। तन्न। तद्रूपस्येत्याद्यग्रन्थविरोधात्।

तत्र हेतुमाह। तद्रूपस्येति। क्रियानिमित्तं कारकमिति न्यायेन विपक्षे दोषमाह। अन्यथेति। उपसंहरति। तस्मादिति। पुष्कलं–निर्दोषम्।

प्रचुरमित्यन्ये।

ननु अर्थाभिव्यक्तेः कारणव्यापारात् प्रागसत्त्वाङ्गीकार सत्कार्यवादक्षतिरिति ।

अत्रोक्तं भाष्यकारैः(१)—अस्मिन्पक्षे सत एवाभिव्यक्तिरित्येव सत्कार्यसिद्धान्त इत्याशयात् अभिव्यक्तेश्चाभिव्यक्त्यभावेन तस्याः प्रागसत्त्वेपि नाऽसत्कार्यवादापत्तिः ।

नन्वेवं महदादीनामेव प्रागसत्त्वमिष्यतां; किमभिव्यक्त्याख्या व्यवस्थाकल्पनेनेति चेन्न । "तर्ह्यव्याकृतमासीत्"इत्यादिश्रुतिभिरव्यक्तावस्थया सतामेव कार्याणामभिव्यक्तिसिद्धेः । न च प्रागभावादिस्वीकारापत्तिः, तिसृणामनागताद्यवस्थानामन्योन्याभावरूपतयोक्तत्वात् । तादृशाभावनिवृत्त्यैव च कारण व्यापारसाफल्यसम्भवात् । अत्रायमेव हि सत्कार्यवादिनामसत्कार्यवादिभ्यो विशेषः, यत्तैरुच्यमानौ प्रागभावप्रध्वंसौ सत्कार्यवादिभिः कार्यस्यानागतातीतावस्थे भावरूपे प्रोच्येते, वर्त्तमानताख्या चाभिव्यक्त्यावस्था घटात् व्यतिरिक्तेष्यते, घटादेरवस्थावत्त्वानुभवादिति । न च लीनव्यक्तेः पुनरुत्पादापत्तिः, नचेष्टापत्तिः प्रत्यभिज्ञाद्यापत्तेरिति वाच्यम् । परेषामिवास्माकमप्यनागतावस्थायाः प्रागभावाख्याया अभिव्यक्तिहेतुत्वात् ।

वस्तुतस्तु मूर्खाणां प्रत्यभिज्ञाऽभावेपि विवेकिनां तु प्रत्यभिज्ञादि भवत्येव । तथा हि— तन्तौ नष्टे मृद्रूपेण परिणामः, मृदश्च कार्पास-वृक्षरूपेण परिणामः, तस्य फलतन्तुरूपेण परिणामः, एवं सर्वे भावा ज्ञातव्या इति ।

वेदान्तिनस्तु—अभिव्यक्तिर्जन्या ऽजन्या वा । आद्ये अभिव्यक्त्यन्तरानङ्गीकारक्षतिः, इष्टापत्तौ अनवस्थापत्तिः । तत्र च यथा नेष्टापत्तिस्तथोक्तं प्राक् । अन्ते कारणवैयर्थ्यं, तस्मादनिर्वचनीया उत्पत्तिरित्याहुः ॥ ९ ॥

तदेवं प्रधानसाधनानुगुणं सत् कार्यमुपपाद्य यादृशं तत् प्रधानं साधनीयं तादृशमादर्शयितुं विवेकज्ञानोपयोगिनी व्यक्ताव्यक्तसारूप्यवैरूप्ये तावदाह—

हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ।
सावयवं परतन्त्रं व्यक्तं, विपरीतमव्यक्तम् ॥ १० ॥

"हेतुमत्" इति । व्यक्तं हेतुमत्, हेतुः कारणम्, तद्वत्, यस्य च यो हेतुस्तमुपरिष्टाद्वक्ष्यति ॥

"अनित्यम्," विनाशि, तिरोभावीति यावत् ॥

"अव्यापि," सर्वं परिणामिनं न व्याप्नोति । कारणेन हि कार्यमाविष्टम्, न कार्येण कारणम् । न च बुद्ध्यादयः प्रधानं व्याप्नुवन्तीत्यव्यापकाः ॥

---

ननु सत्कार्यनिरूपणस्य साधर्म्येण प्रधानानुगुणत्वेऽपि कार्यस्य प्रधानवैधर्म्यनिरूपणं व्यर्थमित्याशंकायामाह । यादृशमिति । तथा च वैधर्म्यनिरूपणं विना हेतुमदादिविलक्षणा प्रकृतिर्न सिद्ध्येदित्यर्थः ।

हेतुमदित्यादौ उद्देश्यमुत्तरार्द्धस्थं व्यक्तपदं सम्बन्धनीयम् । कारणम् । आविर्भावे इति शेषः । उपरिष्टात्—प्रकृतेर्महानित्यादौ ।

ध्वंसस्य स्वमतेऽभावादाह । तिरोभावीति । कदाचित्तिरोभावशीलमित्यर्थः ।

ननु महत्तत्त्वादेर्जगद्व्यापित्वाङ्गीकारात्कुतो ऽव्यापित्वमित्याशङ्क्याह । सर्वमिति । तथा च महदादेः स्वस्वकारणाव्यापकत्वादुपचरितव्यापकत्वमित्यर्थः ।

तदेवाभिनयेनाह । कारणेनेति । कार्यं व्याप्तं, उपादानकारणं विहायान्यत्र स्वातन्त्र्येणानुपलब्धेः ।

व्यतिरेकमाह । न कार्येणेति । परिणामात्मकक्रियायाः प्रधानेऽपि सत्त्वादाह । परिस्पन्दवदिति । शरीरादीनां परिस्पन्दसत्त्वेऽपि

"सक्रियम्," परिस्पन्दवत् । यथा हि बुद्ध्यादयः

बुद्ध्यादावभावादव्याप्तमिसत आह । यथा हीति । हि हेतौ ।

बुद्ध्यादयः परिस्पन्दवतः पुरुषभिन्नत्वे सति संयोगविभागाश्रयत्वाद्धस्तादिवत्, न च हेत्वसिद्धिः, "सविज्ञानो भवति सविज्ञानमेवान्वाक्रामती"ति श्रुतेर्हेतोः पक्षधर्मत्वावगमात् ।

परिणामस्य क्रियाजन्यत्वनियमात्तत्रापि क्रियावत्त्वमित्यपरे ।

वेदान्तिनस्तु—यथाऽसदशक्यक्रियं तथा सदपि, न हि जातु चितिशक्तिरपरिणामिन्यनन्ता क्रियागोचरा किं चेदं कुतः इदं मन्त्रौषधमिन्द्रजालमार्येण शिक्षितं, यदिदं जाताविनष्टरूपातिशयमव्यवधानमनतिदूरस्थानं तस्यैव तदवस्थेन्द्रियादेरेव पुंसः कदाचित्परोक्षमपरोक्षं चेति । यदि मन्येत नानातिशयमेकातिशयोत्पत्त्या परातिशयनिवृत्त्याऽत्र व्यवहारभेदोपलब्धेः । तिस्रः खल्विमा भावपरिणतयः सांख्यानां धर्मलक्षणावस्थाभेदात् तद्यथा—सुवर्णमेकं धर्मी तस्य परिणामाः स्वस्तिकरुचकादयो धर्मा उपजनापायधर्माणः, तेषां च लक्षणपरिणामः तथा हि स्वर्णकारोऽयं स्वस्तिकं रुचकं रचयति तदा स्वतिको वर्त्तमानतालक्षणं हित्वा अतीततालक्षणमापद्यते, रुचकस्त्वनागततालक्षणं हित्वा वर्त्तमानतां प्रतिपद्यते, तथा ऽवस्थापरिणामो लक्षणगतः प्रतिक्षणमुत्पत्तिनिरोधधर्माभिनवाभिनवतराभिनवतमपुराणपुराणतरपुराणतमत्वादिः, प्रयत्नसंरक्षितस्यापि वस्त्रादेः प्रान्ते पुराणतमत्वोपलम्भात् । सोऽयं त्रिविधः परिणामातिशय इति । अथायमतिशयस्त्रिविधोऽपि धर्मिणि यदा यदा ततस्तदा स्वस्तिकादयश्च त्रैकल्पं च नवपुराणत्वादयश्चापर्यायं धर्मिणि एकस्मिन्सुवर्णे उपलभ्येरन् । कादाचित्कत्वे तु कथं नासतामुत्पादः ? तेषां शक्त्यात्मना सत्त्वाददोष इति चेन्न । शक्त्यातिशयश्च किमेकमेव तत्त्वं नाना वा ? तत्रैकत्वे जन्माजन्मनिवृत्तिरनिवृत्तिः,प्रत्यक्षतापरोक्षतार्थक्रियासूपयोगोऽनुपयोगश्चेति कथमेकत्र निष्पर्यायं परस्परपराहतं योज्येत,

उपात्तमुपात्तं देहं त्यजन्ति देहान्तरं चोपाददत, इति तेषां परिस्पन्दः । शरीरपृथिव्यादीनां च परिस्पन्दः प्रसिद्ध एव ।

नानात्वे वा सत्त्वेऽपि शक्तेरनतिशयः कादाचित्क इति कथं नासत उत्पत्तिः ? सर्वदाऽतिशयस्य सत्त्वे वा कथं न पूर्वोक्तदोषप्रसङ्गः ? अतिशयस्य व्यक्त्यव्यक्तिभ्यामाविरोध इति चेत् ? व्यक्त्यव्यक्ती अप्यतिशयस्य सदातन्यौ न वा ? तत्र सदातनत्वे तदवस्थैव विरोधप्रसक्तिः । कादाचित्कत्वे वा कथं नासत उत्पादः ? कथमिति असत्कार्यवत्सत्कार्यमतेऽपि नियमानुपपत्तिः तथाहि प्रधानोपादानत्वाद्विश्वस्य प्रधानस्य चान्वयितया सर्वत्रैकरूपत्वादुपादानात्मकत्वादुपादेयस्य कार्यजातस्य सर्वत्र सर्वदा सर्वथा सारदपतिना(?) इदमिह नेदमिदानीं नेदमिदमेव नेदमिति नियमो न स्यात् । कस्य चिदपि रूपस्य कथञ्चित्कदाचिद्विवेकहेतोरभावात् । सर्वत्र सत्त्वाविशेषेऽपि हेतुसामर्थ्यनियमादभिव्यक्तिनियम इति चेत् ? हन्ताऽसत उत्पत्त्या किमपराद्धं येन तस्यामपि नियमो न स्यात् । भवतां तु सर्वेषां सर्वात्मकत्वादभिव्यक्तिभेदानुपपत्तेश्च दुरधिगमो नियम इति उक्तप्रायम् । न चैवमसत एवोत्पत्तिर्भवत्विति वाच्यम् । असत्त्वाविशेषात्तन्त्वादिभ्य एव पटादयो न तु वीरणादिभ्य इति नियमानुपपत्तेः । न च कारणनियमादेव कार्यनियम इति वाच्यम् । कारणनियमे हेतोरभावात् । न च प्रागभाव एव नियामकः । एतस्यैव प्रागभावो नान्यस्येत्यत्र नियामकाभावात् । न च तदुत्पत्त्या निर्णीयत एतस्यैव प्रागभावो नान्यस्येति वाच्यम् । असत्त्वाविशेषेण सर्वप्रागभावावस्थानापत्त्या सर्वस्योत्पत्त्यापत्त्या तस्यैवोत्पत्तिः कथमित्येवं विचार्यमाणत्वात् । शक्तिरपि शक्ताश्रया शक्यविषयापि न शक्यसद्भावमपेक्षते ज्ञानमिव ज्ञेयमिति ।

"अनेकम्," प्रतिपुरुषं बुद्ध्यादीनां भेदात्। पृथिव्या-द्यपि शरीरघटादिभेदेनानेकमेव।

"आश्रितम्", स्वकारणमाश्रितम्। बुद्ध्यादिकार्याणामभेदे ऽपि कथञ्चिद्भेदविवक्षया ऽऽश्रयाश्रयिभावः, यथेह वने तिलका इत्युक्तम्॥

---

बुद्ध्यादीनां भेदादिति। अन्यथा एकमत्यापत्त्या विरुद्ध-प्रवृत्तिनिवृत्त्यादिकं न स्यादित्यर्थः। नन्वनेकत्वं सजातीयानेक-व्यक्तिकत्वम्। साजात्यं च तत्त्वविभाजकतावच्छेदकरूपेण। ता-दृशानेकत्वं च प्रकृतावतिव्याप्तम्। प्रकृतेः प्रकृतिविभाजककार्य्य-भिन्नगुणत्रयत्वेन सत्त्वाद्यनेकगुणव्यक्तिकत्वात्। न च गुणाना-मनन्तत्वे मानाभावः। "महान्तं च समावृत्य प्रधानं समवस्थितम्। अनन्तस्य न तस्यान्तः संख्या वाऽपि न विद्यते" इति असंख्ये-यतापरपर्यायानेकव्यक्तिकत्वप्रतिपादकविष्णुपुराणस्य मानत्वात्। मन्दतारादिभेदेन वृद्धिह्रासादिना चानन्त्यावश्यकत्वाच्चेति चेन्न। प्रतिसर्गभेदेन भिन्नत्वरूपस्यानेकत्वस्य विवक्षितत्वात्।

यत्तु अनेकत्वं स्वाश्रयप्रतियोगिकान्योन्याभावसमानाधिकर-णतत्त्वविभाजकोपाधिमत्त्वं, यथा चेदं महदादिषु, महदादिप्रतियो-गिकान्योन्याभावेन महदन्तरादौ महत्त्वादेः समानाधिकरणत्वात्। प्रकृतौ तु न, प्रकृत्यन्योन्याभावस्य प्रकृतावसत्त्वात्। पुरुषे सत्त्वे-पि नातिव्याप्तिः। त्रिगुणत्वे सतीति विशेषणीयत्वादिति तन्न। उक्तरीत्या प्रधानेऽतिव्याप्तेः।

पुरुषः कालत्रयेऽप्यस्ति प्रधानं चेत्यादिप्रतीत्याऽऽश्रयत्वं तत्रा-तिव्याप्तमित्यत आह। स्वकारणमाश्रितमिति। स्वावयवेषु स-म्बद्धमित्यर्थः। नन्वाश्रयाश्रयिभावस्य भेद एव दृष्टत्वात्तव मते चावयवावयविनोरभेदात्कथमाश्रितत्वमित्यत आह। अभेदेऽपीति। कथञ्चिद्भेदविवक्षयेति। गुणजातिक्रियारूपवैधर्म्यविवक्षयेत्यर्थः।

"लिङ्गम्", प्रधानस्य । यथा चैते बुद्ध्यादयः प्रधानस्य लिङ्गम् तथोपरिष्टाद्वक्ष्यति । प्रधानं तु न प्रधानस्य लिङ्गम् पुरुषस्य लिङ्गमभवदपीति भावः ॥

"सावयवम्" (अवयवावयविसंयोगसंयोगि) अथवा अवयवनम् अवयवः, अवयवानामवयविनां मिथः संश्लेषो मिश्रणम् संयोग इति यावत् । अप्राप्तिपूर्विका प्राप्तिः संयोगः । तेन सह वर्तत इति सावयवम् । तथा हि पृथिव्यादयः परस्परं संयुज्यन्ते, एवमन्ये ऽपि, न तु प्रधानस्य बुद्ध्यादिभिः संयोगः, तादात्म्यात् । नापि

---

यथा स्थौल्यादिना तन्त्वादिभ्यः पटानाम् । क्वचिचाऽध्यवसायादिगुणात्मकत्वरूपेण कारणवैधर्म्येण महदादीनाम्, यथा वा पृथिवीत्वसामान्यात्मकत्वरूपेण तन्मात्रवैधर्म्येण पृथिव्यादीनाम् । यथा वा कर्मात्मकतावैधर्म्येण स्थिरावयवेभ्यश्चलावयविनः । न च पूर्वोक्ताभेदानुपपत्तिः । अत्यन्ताभेदे स्वस्याधारत्वासम्भवेनाभेदसमानाधिकरणभेदस्यैव स्वीकारात् । जातिभेदकोदाहरणमाह । यथेह वन इति । वनं वृक्षसमुदायः । तथा च वृक्षत्वेनाभेदेऽपि तिलकत्वेन भेद इत्यर्थः । ननु प्रधानस्य भोग्यत्वेन भोक्तृपुरुषलिङ्गत्वात् लिङ्गत्वं प्रधानेऽतिप्रसक्तमित्यतो लिङ्गपदं प्रधानलिङ्गपरमित्याह । लिङ्गं प्रधानस्येति । उपरिष्टादिति । भेदानां परिमाणादित्यादाविर्त्यर्थः ।

लिङ्गं कार्यत्वे सति गमकं, तेन प्रधाने नातिव्याप्तिरित्यन्ये । हेतुमदित्यनेन पौनरुक्त्यमाशङ्क्याह । अवयवनमित्यादि । तथा चावयवोऽवपूर्वस्य यु मिश्रणे इत्यस्य रूपमित्यर्थः । संयोगस्य लक्षणमाह । अप्राप्तिपूर्वेति । समवायनिरासायाऽप्राप्तिपूर्वेति । ननु कार्यकारणयोस्तादात्म्यात्संयोगाभावेऽपि प्रधानस्वरूपगुणानां कार्यकारणभावाभावात्संयोगसम्भवे सावयवत्वमप्रसङ्ग इत्यत आह । नापी-

सत्त्वरजस्तमसां परस्परं संयोगः, अप्राप्तेरभावात् ॥

"परतन्त्रम्" बुद्ध्यादि । बुद्ध्या हि स्वकार्ये ऽहङ्कारे जनयितव्ये प्रकृत्यापूरो ऽपेक्ष्यते, अन्यथा क्षीणा सती नालमहङ्कारं जनयितुमिति स्थितिः । एवमहङ्कारादिभिरपि स्वकार्यजनने, इति सर्वं स्वकार्येषु प्रकृत्यापूरमपेक्षते । तेन परां प्रकृतिमपेक्षमाणं कारणमपि स्वकार्यजनने परतन्त्रं व्यक्तम् ॥

"विपरीतमव्यक्तम्"—व्यक्तात् । अहेतुमन्नित्यं, व्यापि निष्क्रियम्, यद्यप्यव्यक्तस्यास्ति परिणामलक्षणा क्रिया तथा ऽपि परिस्पन्दो नास्ति ॥ एकमनाश्रितम-

---

ति । अभावात् । विभुत्वेनेति शेषः । बुद्ध्यादीनां पुरुषपारतन्त्र्यं निराकरोति । बुद्ध्या हीति । महतेत्यर्थः । प्रकृत्यापूरः । प्रकृतेरापूरः स्वस्वकारणीभूतावयवप्रचयः ।

परतन्त्रं साक्षात्परम्परया वा प्रकृत्यधीनस्वरूपपरिणामकं भवतीत्यपरे । तत्र युक्तिमाह । अन्यथेति । यथा नैयायिकमते उभाभ्यां परमाणुभ्यां द्व्यणुकं त्रिभिर्द्व्यणुकैस्त्र्यणुकमित्यादिक्रमेण महापृथिव्याद्युत्पत्तिर्न तु त्रिभिर्द्व्यणुकैरेव तथाऽत्राऽपि कारणप्रचयोऽपेक्षित इत्यभिप्रायः । स्थितिः । स्वसिद्धान्तः । एवमन्त्यावयविघटादिपर्यन्तं ज्ञेयमित्याह । एवमिति । उपसंहरति । तेनेति । हेतुमदादेर्विशेष्यं दर्शयति । व्यक्तमिति । विपरीतपदस्य ससम्बन्धिकत्वात्सम्बन्धिनं दर्शयति । व्यक्तादिति । विपरीतं सन्दर्शयति । अहेतुमदित्यादिना । अहेतुमत् । कारणत्वविश्रान्तेस्तत्रैवाङ्गीकारात् । नित्यम् । अनुत्पत्तिमत्, धर्मलक्षणपरिणामसत्त्वेऽपि धर्मिणो नित्यत्वात । व्यापि । सर्वगतत्वात् । निष्क्रियम् । शान्तादिक्रियाशून्यत्वात् । एकं सजातीयभेदशून्यम्, निराश्रितम् कारणशून्यत्वात् । अलिङ्गम्, कारणाननुमापकं स्वाननुमापकं वा । तेनास्य पुरुषानु-

लिङ्गमनवयवम् स्वतन्त्रमव्यक्तम् ॥ १० ॥

तदनेन प्रबन्धेन व्यक्ताव्यक्तयोर्वैधर्म्यमुक्तम् । सम्प्रति तयोः साधर्म्यम्, पुरुषाच्च वैधर्म्यमाह—

त्रिगुणमविवेकि विषयः सामान्यमचेतनम्प्रसवधर्मि।
व्यक्तं, तथा प्रधानम्, तद्विपरीतस्तथा च पुमान् ॥ ११ ॥

"त्रिगुणम्" इति त्रयो गुणाः सुखदुःखमोहा अ-

---

मापकत्वेऽपि न हानिः। निरवयवम्, अकारणत्वात् । स्वतन्त्रम् । कार्यजनने स्वयं समर्थत्वात् । अदृष्टादेरपेक्षणेऽपि स्वोपादानानपेक्षणादित्यर्थः। यद्यप्येते धर्माः पुरुषस्यापि तथापि गुणवत्त्वे सतीति विशेषणीयं तेन तत्र नातिव्याप्तिरित्यर्थः ॥ १० ॥

इदानीं कारणानुमानोपयोगि कार्यकारणसाधर्म्यनिरूपणे ऽवसरसङ्गतिं दर्शयितुं पूर्वोक्तमनुवदति । तदनेनेति । पुरुषस्य स्वकारणतया सिद्धिवारणायाह । पुरुषाच्चेति । तथा च न पुरुषस्य व्यक्ताव्यक्तयोर्मध्ये प्रवेश इत्यभिप्रायः। ननु त्रिगुणमित्यस्य त्रयस्सत्वादिद्रव्यरूपा गुणाः यत्रास्येति वा त्रिगुणं तत्र महदादिषु कारणरूपेण सत्त्वादीनामवस्थानं गुणत्रयसमूहरूपेण तु प्रधाने वने वृक्षा इतिवत् । अथ वा प्रकृतिकार्यत्वेन गुणसम्बन्धात् महदादेः प्रकृतेश्च गुणसाम्यावस्थारूपत्वादित्यर्थसम्भवेऽपि तादृशरूपेण व्यक्तस्याग्रहणादसम्भव इत्यत आह । सुखेति । न च व्यक्तस्य सुखाद्यात्मकत्वमप्रमाणकम् । सत्त्वं नाम प्रसादलाघवाभिषङ्गप्रीतितितिक्षासन्तोषादिरूपानन्तभेदं, समासतः सुखात्मकम्, एवं रजोऽपि शोकादिनानाभेदं, समासतो दुःखात्मकम्, एवं तमोऽपि निद्रादिनानाभेदं, समासतो मोहात्मकमिति पञ्चशिखाचार्योक्तेरेव मानत्वात् युक्तिस्त्वग्रे वक्ष्यते ।

ननु न्यायवैशेषिकाभ्यामहं सुखीत्याद्यनुभवादिना सुखादी-

स्येति त्रिगुणम् । तदनेन सुखादीनामात्मगुणत्वम् पराभिमतमपाकृतम् ।

"अविवेकि" । यथा प्रधानं न स्वतो विविच्यते, एवम्महदादयोऽपि न प्रधानाद् विविच्यन्ते, तदात्मकत्वात् । अथ वा सम्भूयकारिता ऽत्राविवेकिता । न हि किञ्चिदेकं पर्याप्तं स्वकार्ये, अपि तु सम्भूय । तत्र नैकस्मात् यस्य कस्यचित् केनचित्सम्भव इति ॥

---

नामात्मधर्मत्वाङ्गीकारादसम्भवोऽतिव्याप्तिर्वेत्यत आह । तदनेनेति । "कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव," "तीर्णो हि तदा भवति हृदयस्य शोकात् कामादिकं मन एवमन्यमानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव स यदत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवती"त्यादिश्रुतिविरोधादिति तात्पर्यार्थः । युक्तिस्तु वक्ष्यते । "अविवेकिविषयः" इति यदेकं पदं तदा ऽविवेकिभिरज्ञैर्विषयो दृश्यं भोग्यो वेति तदर्थः । तत्र चाविवेकिपदवैयर्थ्याद्विच्छेदमाह । अविवेकीति । अविवेकिपदस्य यत्किञ्चित्परत्वे पौनरुक्त्यं यत्किञ्चिदभिन्नत्वपरत्वे च पुरुषेष्वतिव्याप्तिः । सकलाभेदपरत्वे चासम्भव इत्यत आह । यथा प्रधानमिति । साधारणाविवेकपदस्य प्रधानाभिन्नत्वपरत्वे लक्षणापत्तेः । तद्भिन्नत्वस्य च सजातीयकारणसाधनानुपयोगात्सङ्घातपरार्थत्वादिरयत्रानुपयोगाच्चाह । अथ वेति ।

अचेतनत्वाद्विवेकाभावः सिद्ध इत्यपरितोषात्पक्षान्तरमाह । अथ वेत्यन्ये । तत् । तस्मात् ।

ननु अन्तःकरणवृत्त्याश्रयत्वरूपविषयत्वसाधर्म्यं विज्ञानस्कन्धमात्रं तत्त्वमिति वदतां योगाचाराणां मतेऽसम्भवीत्याशङ्क्याह । ये त्विति ।

तेषामयमाशयः । भित्त्यादिव्यवहितस्य दूरस्थस्य वा विषयस्य प्रत्यक्षानुदयादन्वयव्यतिरेकाभ्यां प्रत्यक्षकरणत्वेन चक्षुरादिसन्निकर्षस्य प्रत्यक्षात्पूर्वं वक्तव्यत्वात्तदाधारत्वेन प्रत्यक्षात्पूर्वं चक्षुरादिवदर्थोऽपि वक्तव्यः । घटज्ञानं पटज्ञानमित्यादिज्ञानानां ज्ञानत्वाविशेषेऽपि वैलक्षण्यनिर्वाहाय ज्ञानेषु विषयविशेष एवावश्यमभ्युपेय इति वा । आद्ये किं चक्षुरादेर्जन्यप्रमितिमात्रे कारणता किं वा भ्रमप्रमासाधारणज्ञानमात्रे भ्रममात्रे वा ? नाद्यः । विषयविप्रतिपत्त्या विषयघटितप्रमाया एवासम्भवात् ।

एतेन भ्रमाभिन्नत्वं प्रमात्वमित्यपि परास्तम् । न च प्रमात्वं जातिः, प्रत्यक्षत्वादिना साङ्कर्यात् । प्रमाया दुर्निरूप्यत्वान्न द्वितीयोऽपि । तृतीये बहिर्विषयासिद्धेः । अत एव न चरमोऽपि । न च बहिर्विषयाभावे ज्ञाने वैरूप्यानुपपत्तिः । बहिर्विषयसत्त्वेऽपि ज्ञाने तत्सम्बन्धानिरूपणात् । निरूपणे तु तादात्म्यं समवायो वा विषयाविषयिभावो वा भवेत् ? तत्र नाद्यो भेदे तु गवाश्ववत् व्याघातात् । न द्वितीयस्तस्य वैशेषिकाधिकरणे निरस्तत्वात्, त्वयाऽनभ्युपगमाच्च । न तृतीयः, अतीतानागतेषु तदसम्भवात्, सम्बन्धस्योभयनिरूप्यत्वेनैकस्याभावे तदसम्भवात । तस्माज्ज्ञाने ज्ञानाकार एव कश्चिद्विषयोऽभ्युपेयः । किं च विमतं ज्ञानान्न भिद्यते तेन नियतं सहोपलम्भात्, यो येन नियतं सहोपलभ्यते स ततो नातिरिच्यते, यथैकस्माच्चन्द्रमसो द्वितीयश्चन्द्रमाः, नियतं सहोपलभ्यते चार्थो ज्ञानेनेति । न चात्रानुकूलतर्काभावः । एवमयं तद्व्यभिचारी स्यात्तर्हि तदभावरूपभेदव्यापकसहोपलम्भानियमप्रतियोगी न स्यात ।

एतदेवोक्तमुत्तरमीमांसायां वाचस्पतिमिश्रैः(१)–निषेध्यो हि

(१) 'नाभाव उपलब्धेः, (२-२-२८) इति वेदान्तसूत्रे बाह्यार्थभङ्गवादिमतोपन्यासावसरे श्रीवाचस्पतिमिश्रैरुक्तमेतत् ॥

ये त्वाहुः—'विज्ञानमेव हर्षविषादमोहशब्दाद्यात्मकम्, न पुनरितो ऽन्यस्तद्धर्मा' इति-तान् प्रत्याह—''विषय'' इति । 'विषयो' ग्राह्यः, विज्ञानाद्बहिरिति यावत् ।

---

भेदः सहोपलम्भानियमेन व्याप्तो यथा भिन्नावश्विनौ नावश्यं सहोपलभ्येते कदाचिदभ्रापिधाने अन्यतरस्यैकस्योपलब्धेः । सोऽयमिह भेदव्यापकानियमविरुद्धो नियम उपलभ्यमानस्तद्व्याप्यं भेदं निवर्त्तयतीति । विवादाध्यासितं ज्ञानं न बाह्यालम्बनं ज्ञानत्वात् स्वाप्नमायादिज्ञानवत् । ननु तव मते इन्द्रियार्थसन्निकर्षस्य नियामकत्वाभावात्कदाचित् घटज्ञानं कदाचित्पटज्ञानमित्यादौ किं नियामकमिति चेत् ? इन्द्रियार्थसन्निकर्षे एव किं नियामकमिति पृष्टे त्वयाऽप्यन्ततो मम मतसिद्धानादिवासनापरपर्यायापूर्वविशेष एव वाच्यस्तस्यैव मया ज्ञानभेदे हेतुत्वाङ्गीकारादिति ।

इतः । विज्ञानात् । तद्धर्मः, विज्ञानधर्मः ।

ग्राह्य इति । एतेषामयमाशयः, यदि विज्ञानमेव ग्राह्यग्राहकरूपं तदैकस्य ग्राह्यग्राहकभावानुपपत्तिः । नीलमहं जानामीति ध्याकारग्रहणापत्तिश्च । यदि आकारयोः परस्परभेदवद्विज्ञानादपि भेदश्चेत्स एव तात्त्विको ग्राहकविज्ञानाद्भिन्नं वस्तु आक्षिपेत् । ग्राह्यग्राहकयोरनन्यत्वे च ग्राह्यमेव ग्राहकमेव वा स्यात् । मिश्रितयोरेकत्वात् समूहालम्बने नीलाकारं पीताकारं च स्यात् तदभिन्नाभिन्नस्य तदभिन्नत्वनियमात् । दृष्टं हि नीलाभिन्नज्ञानाभिन्ननीलस्य नीलाभिन्नत्वं परस्परभिन्नाभ्यामाकाराभ्यां विज्ञानस्य भेदाङ्गीकारे सिद्धं नः समीहितम् ।

यदपि विषयाणां ज्ञानविग्रहत्वे सहोपलंभनियमः । तन्नाभिद्ध्महे, द्वयोरेकदेशकालस्य सहशब्दार्थत्वे प्रत्युत भेदसाधकत्वेन विरुद्धत्वात् । न चासहानुपलभ्यमानत्वमेव सहशब्दार्थः । तर्हि रूपप्रकाशयोर्व्यभिचारः । घटादिप्रकाशस्य सावित्रादिप्रकाशैक्या-

अत एव "सामान्यम्" साधारणम्, घटादिवत् । अनेकैः पुरुषैर्गृहीतमित्यर्थः । विज्ञानाकारत्वे तु असाधारण्याद्विज्ञानानां वृत्तिरूपाणां, ते ऽप्यसाधारणाः स्युः, [विज्ञानं परेण न गृह्यते परबुद्धेरप्रत्यक्षत्वादित्यभिप्रायः।](१) तथा च नर्त्तकीभ्रूलताभङ्गे एकस्मिन् बहूनां प्रतिसन्धानं युक्तम् । अन्यथा तन्न स्यादिति भावः ॥

भावात् । अहमित्यालयविज्ञानसन्ताने सत्यपि कदाचिद्भवन्तो नीलादिप्रत्ययास्तद्व्यतिरिक्तहेतुका भवितुमर्हन्ति, ये यस्मिन्सत्यपि कादाचित्कास्ते तदतिरिक्तहेतुसापेक्षा यथा एकस्मिन्नकुर्वत्यपि विवक्षां जिगमिषां वा (सत्यप्यसति) विवक्षुजिगमिषुपुरुषान्तरसन्तानाश्रितवचनगमनविषयप्रतिभासरूपप्रत्ययाः (?) कादाचित्कास्तद्व्यतिरिक्तपुरुषान्तरसन्तानसापेक्षास्तथा विवादाध्यासिनीलपीतादिप्रत्ययाः परिशेषादालयविज्ञानातिरिक्तबाह्यार्थहेतुसापेक्षा इत्यनुमानविरोधश्च । अनादिवासनयाऽपि नीलाद्याकाराणां कादाचित्कत्वं न सम्भवति । सर्वस्य क्षणिकत्वेन स्वस्य परस्य वा संस्कारस्यान्यकालेऽसत्वात् । न च शक्तिभेदात्केषांचिदेव नीलाकारता नान्येषामिति वाच्यम् । तादृशशक्तिमतोऽग्रे जायमानस्यापि तादृशत्वावश्यकत्वे विजातीयप्रवाहानुदयप्रसङ्गात् ।

साधर्म्यान्तरस्यापि तन्मतखण्डनपरत्वं दर्शयति । अत एवेति । यतो विज्ञानभिन्नस्यैव विषयत्वमत एवेत्यर्थः । साधारणमिति । सर्वपुरुषसाधारणम् । आलयविज्ञानरूपपुरुषभेदेऽप्यभिन्नमिति यावत् । विपक्षपर्यवसायितर्कमाह । विज्ञानाकारत्व इति ॥

उपसंहरति । तथा चेति । साधारणत्वे इत्यर्थः । साधर्म्या-

(१) [ ] एतदन्तर्गतः पाठः पु० नास्ति ।

"अचेतनम्"। सर्व एव प्रधानबुद्ध्यादयो ऽचेतनाः, न तु वैनाशिकवत् चैतन्यम्बुद्धेरित्यर्थः॥

"प्रसवधर्मि"। प्रसवरूपो धर्मो यः सो ऽस्यास्तीति प्रसवधर्मि। प्रसवधर्मेति वक्तव्ये मत्वर्थीयः प्रसवधर्मस्य नित्ययोगमाख्यातुम्(१)। सरूपविरूपपरिणा-

---

न्तरमाह। अचेतनमिति। अत्राचेतनत्वं परप्रकाशत्वं प्रकाशभिन्नत्वं वा न तु परप्रकाश्यत्वम्। एतन्मते चेतनेऽपि बुद्धिगतस्वप्रतिबिम्बेन प्रकाश्यत्वाङ्गीकारेणैतस्य पुरुषवैधर्म्यानुपपत्तेः। न चैवमङ्गीकरणमप्रसिद्धम्, "प्रकाशतः तत्सिद्धौ कर्तृकर्मविरोध"इति सूत्रे प्रकाशकसम्बन्धे हि प्रकाशनमालोकादिषु दृष्टं स्वस्य साक्षात्सम्बन्धश्च स्वस्मिन् विरुद्ध इति। अस्मिन्मते तु बुद्धिवृत्त्याख्यप्रमाणाङ्गीकारात्तद्द्वारा प्रतिबिम्बरूपस्य स्वस्य बिम्बरूपे स्वस्मिन्सम्बन्धो घटते यथा सूर्ये जलद्वारा प्रतिबिम्बरूपस्य स्वस्य सम्बन्ध इति भाव इति भाष्ये चाङ्गीकारदर्शनात्।

ननु चैतन्यस्य प्रकाशकत्वं बुद्धिद्वारैव, अन्यथा तस्य व्यापकत्वेन सर्वदा प्रकाशापत्तेस्तथा चावश्यकत्वेन बुद्धेरेव चैतन्यमभ्युपेयमिति वैनाशिकमतदूषणेन बुद्धौ साधर्म्यव्याप्तिं परिहरति। न तु वैनाशिकवदिति। तन्मतनिरासे हेतुः प्रकृतिकार्यत्वेन बुद्धेरचेतनत्वानुमानम्।

प्रसवधर्मीत्यत्र प्रसवोऽन्याविर्भावहेतुत्वं परिणामो वा तद्रूपो धर्मो यस्येत्येवंरीत्या सामञ्जस्ये मत्वर्थीयप्रत्ययवैयर्थ्यमित्याशङ्क्याह। प्रसवधर्मेतीत्यादि। सरूपं सुखदुःखमोहाकारता, विरूपं महत्त्वाद्याकारता ताभ्याम्, क्षणमप्यपरिणम्य गुणा न तिष्ठन्तीत्यर्थः। न चैवं धर्मिणः क्षणिकत्वापत्तिः। आभिव्यक्तितिरोभावावस्थावि-

(१) भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने॥ सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुपादयः' इति शाब्दिकस्मृतेरिति भावः॥

माभ्यां न कदाचिदपि वियुज्यते इत्यर्थः ॥

व्यक्तवृत्तमव्यक्ते ऽतिदिशति, "तथा प्रधानम्" इति। यथा व्यक्तं तथा ऽव्यक्तमित्यर्थः ॥

ताभ्यां वैधर्म्यं पुरुषस्याऽऽह—"तद्विपरीतस्तथा च पुमान्" इति ॥

स्यादेतत्—अहेतुमत्त्वनित्यत्वादि प्रधानसाधर्म्यमस्ति पुरुषस्य, एवमनेकत्वं व्यक्तसाधर्म्यम्, तत्कथमुच्यते 'तद्विपरीतः पुमान्' इति ? अत आह—"तथा च" इति । चकारोऽप्यर्थः यद्यप्यहेतुमत्त्वादिकं साधर्म्यम्, तथाऽप्यत्रैगुण्यादि वैपरीत्यमस्त्येवेत्यर्थः ॥ ११ ॥

त्रिगुणमित्युक्तम्, तत्र के ते त्रयो गुणाः, किं च

---

शेषस्यैव क्षणिकत्वाङ्गीकारात् । व्यक्तवृत्तम् । कार्यधर्मम् । अतिदिशतीति । तत्प्रयोजनं तु प्रधानानुमानम् । तद्विपरीतः । व्यक्ताव्यक्ताभ्यां विलक्षणः चितिशक्तेरपरिणामित्वात् ।

ननु अहेतुमत्त्वानेकत्वादिसाधर्म्यसत्त्वे तद्विरुद्धरूपवैधर्म्यं तत्र न सम्भवतीत्याशङ्कते । स्यादेतदिति । अहेतुमत्त्वानेकत्वादिसाधर्म्याविरोधिनोऽपि त्रैगुण्यविरोधितदभावस्य सत्त्वेन तद्विपरीतत्वमपि सम्भवतीत्यभिप्रायेण समाधत्ते । चकार इति । तथा चेत्यस्य तत्सदृशोऽपीत्यर्थः ॥ ११ ॥

गुणत्रयनिरूपणे सङ्गतिं दर्शयितुं पूर्वोक्तमनुवदति । त्रिगुणमित्युक्तमिति । गुणत्रयस्य तद्घटकत्वरूपानुकूलत्वसत्त्वेनोपोद्घातसङ्गतिरिति सूचितम् । तल्लक्षणं तूक्तं वृद्धैः—

"चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुद्धाः" इति ।

अस्यार्थस्तु प्रकृतसिद्ध्यर्थां प्रकृतोपपादकविषयिणीं किमस्योपपादकमिति चिन्तां जिज्ञासामुपोद्घातमुपोद्घातसङ्गतिनिर्वाहिकां विदुरित्यर्थः । तथा च तादृशजिज्ञासामादायोपपादकत्वे आन-

लक्षणमित्यत आह—

प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ॥
अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥१२॥

"गुणाः" परार्थाः "सत्त्वं लघु प्रकाशकम्"(कारि-

न्तर्याभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयत्वरूपसङ्गतिलक्षणस-
मन्वय इति भावः। अनुकूलत्वं च क्वचिद्घटकत्वं क्वचित् ज्ञानसम्पा-
दकत्वम्, तत्र क्वचिद्घटकोपस्थापकतया क्वचिच्च प्रमाणसहकारितया।
एतच्चान्यत्र प्रसिद्धम्। तन्त्रेत्यत्र घटकत्वं सप्तम्यर्थस्तथा च तद्घटकी-
भूता गुणाः के ते इत्यर्थः। (त्रय इत्यत्रत्वंराशित्रये(?)ऽन्वेति। एतेन
महान्तं च समावृत्त्येत्यादिविष्णुपुराणविरोधोद्भावनं परास्तम्।)

ननु प्रधानाख्यानां गुणानां जगत्कारणत्वे एव व्यक्तस्य
त्रिगुणत्वं सम्भवति, तच्च न सम्भवति तथा हि गुणानामन्योन्यवै-
धर्म्यानङ्गीकारे ऐक्यरूप्याद्विचित्रकार्यानुपपत्तिस्तदङ्गीकारे चान्यो-
न्यक्रियां विना मिलनाभावेन पूर्वोक्तदोषानुद्धारः। मिलनेऽपि
परस्परविरोधे कार्यानुत्पत्तिरविरोधे कार्यवैचित्र्यानुपपत्तिस्तदव-
स्थैवेत्याशङ्कापहारपरत्वं मूलस्याऽऽह। किञ्च तदुपलक्षणमिति।

ननु गुणानां परतन्त्रप्रसिद्धानां रूपादीनां जगदुपादानत्वा-
भावादाह। परार्था इति। सत्त्वादिद्रव्यत्रयेषु पुरुषोपकारक-
त्वाद्गुणप्रयोगो न तु मुख्य इत्युक्तं प्राक्।

ननु गुणानामेकपदोपात्तत्वा"न्मात्रास्पर्शास्तु कौन्तेय शीतोष्ण-
सुखदुःखदाः" इत्यादिवत्प्रीत्यादीनां गुणत्वावच्छेदेनान्वयः स्यात्स
च न सम्भवति प्रीत्यप्रीतिविषादाद्यैर्गुणानामन्योन्यवैधर्म्यमिति
गुणव्यापकत्वविरोधितद्व्याप्यत्वरूपवैधर्म्यप्रतिपादकसूत्रविरोधात्।
सूत्रे आदिपदग्राह्यास्तु पञ्चशिखाचार्योक्ताः पूर्वं प्रदर्शिताः।
न च निर्युक्तिकत्वात्सूत्रविरोधो न दोषायेति वाच्यम्। भगव-

का १३) इत्यत्र च सत्त्वादयः क्रमेण निर्दिश्यन्ते । तदनागतावेक्षणेन तन्त्रयुक्त्या वा प्रीत्यादीनां यथासंख्यं वेदितव्यम् ॥

एतदुक्तं भवति—प्रीतिः सुखम्, प्रीत्यात्मकः सत्त्वगुणः, अप्रीतिर्दुःखम्, अप्रीत्यात्मको रजोगुणः, विषादो मोहः, विषादात्मकस्तमोगुण इत्यर्थः ।

ये तु मन्यन्ते न प्रीतिर्दुःखाभावादतिरिच्यते, एवं दुःखमपि न प्रीत्यभावादन्यदिति, तान् प्रति आत्मग्रहणम् । नेतरेतराभावाः सुखादयः, अपि तु भावाः, आत्मशब्दस्य भाववचनत्वात् । प्रीतिरात्मा भावो येषां ते प्रीत्यात्मानः । एवमन्यदपि व्याख्येयम् । भावरूपता

---

द्गीतायामन्योन्यवैधर्म्यस्य दर्शनात् सांख्यीयभाष्ये च युक्तेर्दर्शनादित्याशङ्कायां सत्त्वं लघुप्रकाशकमित्यत्र भिन्नपदोपात्तानामनागतानामनुसन्धानेन शास्त्रयुक्त्या चात्रापि प्रत्येकमन्वयः सम्भवतीत्याह । सत्त्वमित्यादिना तत् सत्त्वं गुण इत्यादि एतच्च यथासंख्यमित्यत्रान्वेति ।

एतेन प्रीत्यादीनामन्वयापत्त्या यथासंख्यमिति पाठं कल्पयन्तीति परास्तम् ।

ननु प्रीतिः सुखमप्रीतिः सुखाभावः, प्रीतिर्दुःखाभावोऽप्रीतिर्दुःखमित्यभ्युपगमेऽपसिद्धान्तः इत्यतस्तदर्थमाह । एतदुक्तं भवतीति । मोहत्वं नाम मिथ्याप्रतिपत्तित्वम् । 'तेषां मोहः पापीयान्नामूढस्येतरोत्पत्ते' रिति गौतमसूत्रभाष्ये मोहो मिथ्याप्रतिपत्तिलक्षण इति दर्शनात् । सूत्रं तु पूर्वं व्याख्यातम् । लघुत्वे सति प्रकाशकत्वं सत्त्वस्य लक्षणमिति बोध्यम् । तत्र हेतुमाह । आत्मशब्दस्येति । द्वन्द्वान्ते श्रूयमाणो यः स प्रत्येकं सम्बध्यते इति व्युत्पत्तिमाश्रित्याह । प्रीतिरात्मेत्येवंरीत्येत्यर्थः । आत्मे-

चैषामनुभवसिद्धा । परस्पराभावात्मकत्वे तु परस्पराश्रयापत्तेरेकस्याप्यसिद्धेरुभयासिद्धिरिति भावः ॥

स्वरूपमेषामुक्त्वा प्रयोजनमाह—"प्रकाशप्रवृत्तिनियमार्थाः" इति । अत्रापि यथासंख्यमेव । रजः प्रवर्तकत्वात् सर्वत्र लघु सत्त्वं प्रवर्तयेत्, यदि तमसा गुरुणा न नियम्येत । तमोनियतन्तु क्वचिदेव प्रवर्तयतीति भवति तमो नियमार्थम् ॥

प्रयोजनमुक्त्वा क्रियामाह—"अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च" इति । वृत्तिः क्रिया, सा च प्रत्येक-

---

ति ग्रहणस्य भावरूपसूचकत्वेऽपि तत्र युक्तेरभावात्तन्न सम्भवतीत्यत आह । अनुभवसिद्धेति । अन्योन्यानिरूप्यत्वेनानुभवादित्यर्थः । परस्पराभावात्मकत्वे दोषमाह । परस्परेति । परस्पराश्रयस्य दूषकताबीजमाह । एकस्येत्यादिना । परस्परसिद्ध्यधीनसिद्धिकत्वेनोभयासिद्धिप्रसङ्ग इति भावः ।

ननु बुद्धावनाकलितस्योत्पत्त्यदर्शनात् चेतनानधिष्ठितस्य कार्यविशेषजनकक्रियाविशेषाश्रयत्वस्यादर्शनात् । गुरुत्वाभावे च कार्यद्रव्यस्य वाय्वादिवत्सर्वत्र प्रसङ्गः स्यात् प्रधानस्य तन्मते चेतनानधिष्ठितत्वांगीकारात् । प्रकाशमानचेतनस्य निःसङ्गत्वेन प्रकाशकत्वासम्भवाच्चेत्याशङ्कावारणपरत्वं मूलस्याऽऽह । रजः प्रवर्त्तकत्वादित्यादि तमो नियमार्थमित्यन्तेन । तथा च बुद्धावनाकलितस्यांकुरादेश्चेतनानाधिष्ठितस्य पयसः सूर्याग्न्यादेश्चोत्पत्तिक्रियाप्रकाशकत्वदर्शनेन प्रधानात्मकगुणैरेव सर्वव्यवहारनिर्वाहे तादृशकल्पनायां मानाभाव इत्यर्थः । तमोनियतम् । तमसा प्रतिबद्धम् । क्रिया । परिणामः, येनान्योन्यमिति समुच्चीयते तेनान्योन्याभिभववृत्तय इत्यादि सङ्गच्छते । अत्र वृत्तिलाभे बीजमाह । एषामन्यतमेनेति । तथा चोद्भूतानुद्भूतत्वं कार्याभिमु-

मभिसम्बध्यते ।

'अन्योन्याभिभववृत्तयः'। एषामन्यतमेनार्थवशादुद्भूतेनान्यदभिभूयते । तथा हि सत्त्वं रजस्तमसी अभिभूय शान्तामात्मनो वृत्तिं प्रतिलभते, एवं रजः सत्त्वतमसी अभिभूय घोराम्, एवं तमः सत्त्वरजसी अभिभूय मूढामिति ।

---

स्त्वम्, तयोरभिभवत्वं च स्वस्वकार्यानभिमुखत्वे सति तत्कार्यजनने तत्सहकारित्वम्। तदेवोपपादयति । तथा हीति । सत्त्वं कर्त्तृ। नन्वेवं प्रलये सदृशपरिणामो न स्यादित्याशङ्क्य वृत्तिपदस्य शान्तादिपरत्वान्नैवमित्याह–शान्तामिति । शान्तां सत्त्वस्य मुख्यपरिणामभूताम्, यतः प्रवृत्तिपरिणामाद् बुद्धिमनइन्द्रियाणि स्युः। रजः कर्त्तृ, घोराम्, यत इन्द्रियादिभूतभौतिकान्तानामुत्पत्तिः। मूढाम्, यतः पञ्चतन्मात्राणि पञ्चमहाभूतानि । तथा च वक्ष्यति "सात्त्विक एकादशक" इत्यादिना ।

एतेनान्योन्याभिभववृत्तय इत्यस्योन्योन्येनाभिभवो यासां तादृश्यो वृत्तयो येषामन्योन्यमभिभूय वृत्तयो येषामिति वाऽर्थे परस्परप्रतिबन्धेन कार्यसामान्याभावप्रतीत्या शान्तामात्मनो वृत्तिं लभते इत्यसङ्गतमिति परास्तम्। पुरुषार्थप्रयोजकादृष्टप्रयोज्योद्भूतत्वविशिष्टस्यैव प्रतिबन्धकत्वांगीकारात् । अत एवान्यतमो गुणः स्वकार्यार्थमन्यावाश्रित्य सहकारिणौ कृत्वा प्रवर्त्तत इत्यर्थपरमन्योन्याश्रयवृत्तय इत्यपि सङ्गच्छते ।

'रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।

रजः सत्त्वन्तमश्चैव तमः सत्त्वं रजस्तथेति'। भारतवचनं च ॥

नन्वेकस्मात्कार्यासम्भवस्तत्र सामग्र्या हेतुत्वादत आह–अन्योन्याश्रयवृत्तय इति । अन्योन्यं परस्परमाश्रित्याधाराधेयभावं प्राप्य स्वस्वं वृत्तिः परिणामो येषां तेऽन्योन्याश्रयवृत्तय

'अन्योन्याश्रयवृत्तयः' । यद्यप्याधाराधेयभावेन नायमर्थो घटते, तथाऽपि यदपेक्षया यस्य क्रिया स तस्याऽऽश्रयः । तथा हि सत्त्वं प्रवृत्तिनियमावाश्रित्य रजस्तमसोः प्रकाशेनोपकरोति, रजः प्रकाशनियमावाश्रित्य प्रवृत्त्येतरयोः, तमः प्रकाशप्रवृत्ती आश्रित्य नियमेनेतरयोरिति ।

'अन्योन्यजननवृत्तयः' । अन्यतमोऽन्यतममाश्रित्य जनयति । जननं च परिणामः, स च गुणानां सदृशरूपः । अत एव न हेतुमत्त्वम्, तत्त्वान्तरस्य हेतोरसम्भवात्, नाप्यनित्यत्वम्, तत्त्वान्तरे लयाभावात् ।

---

इति सत्वरजस्तमसामाधाराधेयत्वासम्भवादन्योन्याश्रयत्वं नास्तीत्याह-यद्यपीति । कथं तर्ह्यर्थो घटते इत्यत्र आह-तथाऽपीति । यदपेक्षया, सत्त्वाद्यपेक्षया, सत्त्वसहकारिणो यस्य रजआदेः क्रिया परिणामः । स सत्त्वादिः । तस्य रजआदेराश्रय इत्यर्थः ॥

नन्वेवं वृत्तिपदं व्यर्थमिति चेन्न । तद्विनाऽन्योन्याश्रयत्वासम्भवादित्याह-तथा हीति । सत्त्वं स्वस्वपरिणामद्वारा रजस्तमोभ्यामुपकृतमेव तौ स्वपरिणामद्वारोपकरोतीत्याह-सत्त्वमिति । सत्त्वं कर्तृ । आश्रित्य । सहायीकृत्य । स्वयं प्रकाशेनोपकरोति । सहकारीभवतीत्यर्थः ॥

ननु अन्यतमेन स्वकार्यजननेऽन्यतमस्य सहकारित्वेऽपि कार्ये वैचित्र्यानुपपत्तिः । कपालेन घटजनने दण्डादेः सहकारित्वेऽपि कपालगतवैचित्र्यं विना घटादौ नीलपीतादिवैचित्र्याभाववदित्याशयेन चाह । अन्योन्यजननवृत्तय इति । तथा च प्रतिसर्गे मुख्यशान्तादिपरिणामाभावेऽपि प्रीत्यादिसदृशत्रिपरिणामाङ्गीकारेण वैचित्र्योपपत्त्या दृष्टान्तवैषम्यमित्यभिप्रायः ॥

ननु नित्यानां गुणानां कुतोऽन्योन्यजननमित्याशङ्क्याह-जन-

'अन्योन्यमिथुनवृत्तयः'। अन्योन्यसहचराः, अविनाभाववृत्तय इति यावत् । चः समुच्चये । भवति चात्रागमः—

"अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्रगामिनः ।
रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः ॥
तमसाऽपि मिथुने ते सत्त्वरजसी उभे ।
उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते ॥
नैषामादिः सम्प्रयोगो वियोगो वोपलभ्यते" ॥
(इति देवीभागवतम्-३।८) ॥ १२ ॥

---

नं चेति । यथा दुग्धपरिणामस्वभावमपि दध्याद्याकारार्थमातंचनमपेक्षते तथा प्रलयकालेऽपि गुणान्तरमपेक्ष्यैव स्वस्वरूपेण परिणमते सृष्टिकाले तु शान्तादिरूपेणेत्यर्थः । किञ्च तदुपलक्षितमित्युक्तं तत्राह–सदृशा इति । तथा च सदृशपरिणामवन्तस्ते एव प्रधानमित्यर्थः । अत एव । यत एवान्योन्यं न परिणमन्ते अत एवेत्यर्थः । एवन्तत्त्वान्तरस्याप्युत्पत्तिं वारयति । तत्त्वान्तरस्येति । अन्यथाऽनवस्थापत्तिरित्यर्थः ।

नन्वेवमपि विभिन्नकार्यत्रयं प्रतीयेतेत्यत आह–अन्योन्यमिथुनवृत्तय इति । तथा च परस्परसहचरत्वान्न कार्यविभिन्नताप्रतिपत्तिरित्यर्थः ॥

नन्वेवमपि स्त्रीपुरुषवत्सहचरत्वेऽपि विभक्तप्रतीतिः स्यादित्यत आह । अविनाभावेति । विभुत्वात्परस्परपरिहारेणाप्रवर्त्तमाना इत्यर्थः ॥ तथा च नीलपीतादिकपालजन्यघटादिवत्तत्तत्कार्यस्याप्यविभक्तत्वमित्यभिप्रायः । उक्तार्थे संमतिमाह-भवति चेति । मिथुनाः विभुत्वादवियुक्ताः । अत एव–सर्वत्र । सर्वकार्येषु । गामिनः । कारणरूपेणानुगताः । तदेवाह–रजस इत्यादिना । अत एव । नैषामादिः । अत्रत्यनञ्पदं वियोग इत्यत्रा-

'प्रकाशप्रवृत्तिनियमार्थाः' इत्युक्तम्, तत्र के ते इत्थम्भूताः कुतश्चेत्यत आह—

**सत्त्वं लघु प्रकाशकमिष्टम्, उपष्टम्भकं चलं च रजः ।**
**गुरु वरणकमेव तमः, प्रदीपवच्चार्थतो वृत्तिः ॥ १३ ॥**

"सत्त्वम्" इति । सत्त्वमेव लघु प्रकाशकमिष्टं सांख्याचार्यैः । तत्र कार्योद्गमने हेतुर्धर्मो लाघवं गौरवप्रतिद्वन्द्वि, यतोऽग्नेरूर्ध्वज्वलनं भवति, तदेव लाघवम् कस्यचित्तिर्यग्गमने हेतुर्भवति, यथा वायोः । एवं करणानां वृत्तिपटुत्वहेतुर्लाघवम्, गुरुत्वे हि मन्दानि स्युरिति सत्त्वस्य प्रकाशात्मकत्वमुक्तम् ॥

ष्यन्वेति । अन्यथोपलम्भाभावेऽपि संयोगवद्वियोगोऽपि स्यात् ।

न चाजसंयोगे मानाभावः । मानस्य पूर्वमुपपादितत्वात् ॥१२॥

सङ्गतिं प्रदर्शयितुं पूर्वोक्तमनुवदति । प्रकाशेति । अत्रापि पूर्वोक्तसङ्गतिरेव बोध्या । सत्त्वमेवेति । एवकारेणान्यस्मिन् लघुत्वप्रकाशकत्वव्यवच्छेदः । तथा च लघुत्वादिधर्मेण सर्वासां सत्त्वव्यक्तीनां साधर्म्यं पृथिवीव्यक्तीनां पृथिवीत्वेनेव सत्त्वव्यक्तीनामेकजातीयोपष्टंभादिना वृद्धिह्रासादिकं युक्तमित्याशयः । एवं च गुरुत्वादिधर्मेण सर्वासां तमोव्यक्तीनां साधर्म्यम् ।

न च मूलकारणस्यानन्तव्यक्तिकत्वे वैशेषिकमताविशेषापत्तिरिति वाच्यम् । शब्दस्पर्शादिराहित्येन विशेषात् । तदुक्तं विष्णुपुराणे—

'शब्दस्पर्शविहीनं तु रूपादिभिरसंयुतम् ।
त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम्' । इति । लघु । लघुत्ववत् । कुत इत्यस्योत्तरं वदन् लघुत्वशब्दार्थमाह-तत्रेति । तथा

सत्त्वतमसी स्वयमक्रियतया स्वकार्यप्रवृत्तिं प्रत्यवसीदन्ती रजसोपष्टभ्येते अवसादात् प्रच्याव्य स्वकार्ये उत्साहं प्रयत्नं कार्येते। तदिदमुक्तम्—"उपष्टम्भकं रजः" इति। कस्मादित्यत उक्तम्—"चलम्" इति। तदनेन रजसः प्रवृत्त्यर्थत्वं दर्शितम्॥

रजस्तु चलतया परितस्त्रैगुण्यं चालयेत्, गुरुणाऽऽवृण्वता च तमसा तत्र तत्र प्रवृत्तिप्रतिबन्धकेन क्वचिदेव प्रवर्त्यते इति ततस्ततो व्यावृत्त्या तमो नियामकमुक्तम्—"गुरु वरणकमेव तमः" इति। एवकारः प्रत्येकं भिन्नक्रमः सम्बध्यते, सत्त्वमेव, रज एव, तम एवेति॥

ननु एते परस्परविरोधशीला गुणाः सुन्दोपसुन्दवत् परस्परं ध्वंसन्त इत्येव युक्तम्, प्रागेव त्वेतेषामेकक्रियाकर्तृता इत्यत आह—"प्रदीपवच्चार्थतो वृत्तिः" इ-

च लघुत्वं कार्योद्गमनहेतुभूतो धर्मः। इष्टम्। सांख्याचार्यैरित्यर्थः। इन्द्रियाणां विषयग्रहणसामर्थ्यदर्शनाल्लघुत्वं प्रकाशकत्वं चेत्याह। एवं करणानामित्यादि। उपष्टम्भकं संश्लेषजनकम्। प्रेरकत्वे सति सक्रियत्वं रजसो लक्षणम्। गुरु। गुरुत्ववत्। वरणकम्। आवरकम्। तमसैवाङ्गगुरुत्वविषयावभासप्रतिबन्धयोर्दर्शनात् गुरुत्वे सति तदिन्द्रियकार्यप्रतिबन्धकत्वं तमसो लक्षणम्।

ननु वरणकमेव तम इत्यत्र विशेषणासङ्गतिः, एवकारेण शंखः पाण्डुर एवेत्यादिवत् विशेषणायोगव्यवच्छेदलाभेऽपीतरस्मिन् वरणकत्वव्यवच्छेदलाभासम्भवः सत्त्वादिस्थले चैवकाराभावात्तदितरस्मिँल्लघुत्वादिव्यवच्छेदालाभश्चेत्याशङ्क्याह—एवकार इति। भिन्नक्रमं स्वयमेव दर्शयति सत्त्वमेवेति। सुन्दोपसुन्दवदिति। सुन्दोपसुन्दावसुरविशेषौ परस्परमरणानुकूलसमकालीनव्यापारोत्पादनेन यथा नष्टौ तद्वदित्यर्थः। इदमुपलक्षणम् अन्त्योपान्त्यसुन्दा-

ति । दृष्टमेवैतत्, यथा वर्त्तितैले ऽनलविरोधिनी, अथ मिलिते सहानलेन रूपप्रकाशलक्षणं कार्यं कुरुतः, यथा च वातपित्तश्लेष्माणः परस्परविरोधिनः शरीरधारणलक्षणकार्यकारिणः, एवं सत्त्वरजस्तमांसि मिथोविरुद्धान्यप्यनुवर्त्स्यन्ति स्वकार्यं करिष्यन्ति च। "अर्थत" इति पुरुषार्थत इति यावत्, यथा च वक्ष्यति--

"पुरुषार्थ एव हेतुर्न केनचित् कार्यते करणम्"

इति ॥ ( कारिका ३१ )

अत्र च सुखदुःखमोहाः परस्परविरोधिनः स्वस्वानुरूपाणि सुखदुःखमोहात्मकान्येव निमित्तानि कल्पयन्ति। तेषां च परस्परमभिभाव्याभिभावकभावान्नानात्वम्। तद्यथा एकैव स्त्री रूपयौवनकुलशीलसम्पन्ना

---

दीनाम्। प्रागेव। दूरापास्तैव। तत्र दृष्टान्तमाह—दृष्टमेतदित्यादिना। तथा च परस्परप्रधानगौणभावेन दृष्टानुसारात्तथा कल्पने न किञ्चिद्बाधकमित्यर्थः। पुरुषार्थत इति। व्याख्यातं पूर्वम् ॥

अर्थपदस्य पुरुषार्थपरत्ववर्णनं स्वकपोलकल्पितमित्यत आह—यथा वक्ष्यतीति। गुणानां प्रीत्याद्यात्मकत्वे युक्तिमाह—अत्र चेति। स्वानुरूपाणीति। तथा च विवादास्पदानि बाह्यानि सुखदुःखमोहात्मकसामान्यपूर्वकाणि सुखाद्यात्मकतयाऽन्वीयमानत्वात्प्रमीयमाणत्वाद्वा यद्यदात्मकत्वेनान्वीयमानं प्रमीयमाणं वा तत्तदुपादानकं भवति यथा मृदात्मकत्वेनान्वीयमानं प्रमीयमाणं वा घटादि मृदुपादानकं दृष्टम्। यदीदं तदुपादानकं न स्यात्तर्हि तदात्मनाऽन्वीयमानं न स्यादित्याद्यनुकूलतर्को विपक्षे बाधकः।

हेत्वसिद्धिं परिहरति। एकैवेति। तथा च विमतानि बाह्या-

नि सुखाद्यात्मकानि तद्धेतुत्वात् बुद्ध्यादिवत्। न चानुकूलतर्काभावः। यस्यान्वयव्यतिरेकौ सुखादिना दृश्येते तस्यैव सुखाद्युपादानत्वं कल्प्यते, तस्य निमित्तत्वं परिकल्प्यान्यस्योपादानत्वकल्पने कारणद्वयकल्पनागौरवात्। तथा च लाघवमेवानुकूलतर्कः।

'तत्सन्तु चेतस्यथवाऽपि देहे। सुखानि दुःखानि च किं ममात्र' इति मार्कण्डेयपुराणवचनाच्च।

'याज्ञवल्क्येति होवाच शाकल्यो यदिदं कुरुपाञ्चालानां ब्राह्मणानत्यवादीः किं ब्रह्म विद्वानिति दिशो वेद सदेवाः सप्रतिष्ठा इति यद्दिशो वेत्थ सदेवाः सप्रतिष्ठाः(बृह० ३-९-१९)॥' किं देवतोऽस्यां प्राच्यां दिश्यसीत्यादित्यदेवत इति'स आदित्यः कस्मिन्प्रतिष्ठित इति चक्षुषीति, कस्मिन्नु चक्षुः प्रतिष्ठितमिति रूपेष्विति, चक्षुषा हि रूपाणि पश्यति कस्मिन्नु रूपाणि प्रतिष्ठितानीति हृदये इति होवाच, हृदयेन हि रूपाणि जानाति हृदये ह्येव रूपाणि प्रतिष्ठितानि भवन्तीत्येवमेवैतद्याज्ञवल्क्य, (बृह० ३-९-२०) इत्यादिबृहदारण्यश्रुत्या सर्वेषां बाह्यानां बुद्धिकार्यत्वावधारणेन सुखाद्यात्मकत्वस्य सूचनाच्च। न चायं श्रुत्यर्थो न भवतीति तु न शङ्कनीयम्। तथा हि जनकः सम्राट् बहुदक्षिणेनायजत तत्र च निमन्त्रिता कुरुपाञ्चालानां ब्राह्मणा समवेता बभूवुस्तं समुदायं दृष्ट्वा एतेषां ब्रह्मिष्ठः क इति या जिज्ञासा बभूव तन्निर्णयार्थं पञ्चपञ्चपादवद्दैकैकशृंगगोसहस्रं गोष्ठे स्थाप्य ब्राह्मणानुवाच भवंतो यो युष्माकं ब्रह्मिष्ठः स एता गाः स्वगृहं नयतु इत्युक्ते ते ब्राह्मणाः ब्रह्मिष्ठतामात्मनः प्रतिज्ञातुं न संवृत्तास्ततो याज्ञवल्क्यः स्वशिष्यमुवाच हे सामश्रवः एता गा उदृगमयास्मद्गृहानित्युक्तः उत्कान्तवान् ततः एकैकप्रधानानामस्माकं मध्ये कथमयं ब्रह्मिष्ठपणस्वीकरणेनात्मनो बह्मिष्ठतां प्रतिज्ञातवानिति चक्रुधुस्ततोऽश्वलादिप्रश्नानन्तरं शाकल्यः पप्रच्छ। किं ब्रह्म विद्वान् सन्नेवमभिक्षिपासि ब्राह्मणानिति पृष्टे ततो याज्ञवल्क्य उवा-

च ब्रह्मविज्ञानन्तावदिदं मम सदेवाः सप्रतिष्ठा दिशोविषयं विज्ञानम् । न चदं न निरुपाधिब्रह्मविषयं विज्ञानमिति वाच्यम् । सप्रतिष्ठा दिशोऽहं वेदेति वचनात्सर्वमपि हृदयद्वारा जगदात्मत्वेनावगम्य स्थितो मुनिरिति प्रतिभानात् । प्रतिज्ञानुसारित्वाच्च किंदेवतोऽस्यामिति ब्रूयात् । अत एव "स यस्तान्पुरुषान्निरुह्य प्रत्युह्यात्यक्रामत्तन्त्वौपनिषदं पुरुषं पृच्छामि तञ्चेन्मे न विवक्ष्यसि मूर्धा ते विपतिष्यतीति तं ऽह न मेने शाकल्यस्तस्य ह मूर्द्धा विपपातापि हास्य परिमोषिणोऽस्थीन्यपजह्रुरन्यन्मन्यमानाः"(बृह० ३-९-२६)इत्यादि श्रवणमपि सङ्गच्छते । इदं तु शारीरः पुरुष इत्यादीन् पुरुषान् निरुह्य पूर्वोक्ताष्टचतुष्कभेदेन लोकस्थितिमुपपाद्य पुनः प्राच्यादिद्वारेण प्रत्युह्य हृदये संहृत्यात्यक्रामत् हृदयाद्यात्मत्वमुपाधिधर्मं त्यक्त्वा स्वेन रूपेण व्यवस्थितो यस्तं त्वां विद्याभिमानिनमित्येव व्याख्येयम् । तथा च सर्वोपाधिविनिर्मुक्तमात्मस्वरूपं ब्रह्म स प्रतिष्ठा इत्यत्र विवक्षितं तच्च तेन शाकल्येन न विज्ञातमित्यभिप्रायः । अस्यां प्राच्यां का देवता दिगात्मनस्तवाविष्टाऽस्ति कया च देवतया प्राचीदिग्रूपेण सम्पन्नस्त्वमित्यर्थः । सदेवा इत्युक्तं सप्रतिष्ठा इत्यस्योत्तरमाह—आदित्य इत्यादिना ।

ननु सूर्यस्य चक्षुषि प्रतिष्ठितत्वं कथमिति चेत् ? शृणु, 'चक्षोः सूर्योऽजायत चक्षुष आदित्य' इत्यादिमन्त्रब्राह्मणेभ्यश्चक्षोस्तत्कारणत्वश्रवणात् । रूपेषु चक्षुषोऽधिष्ठितत्वे स्वयमेव हेतुमाह । चक्षुषा हीति । तथा च यद्व्यञ्जकं तद्व्यङ्ग्यजातीयारब्धं दृष्टं लोके यथा रूपव्यंजकः प्रदीपो रूपसजातीयारब्धः । साजात्यं तैजसत्वादिनानारूपम् । वेदान्तिनां मते चात्र रूपशब्देन भौतिकस्वरूपस्य ग्रहणाद् भूतत्वेनैव साजात्यम् । एवं हृदयेन हि रूपाणि जानातीत्यत्रापि बोध्यम् । न च सर्वव्यञ्जके आत्मनि व्यभिचारः । तस्य व्यञ्जकत्वानङ्गीकारात् । व्यञ्जकत्वं च तदाकारता तस्या

आत्मन्यसम्भवात् ।

न च 'रचनानुपपत्तेश्च नानुमान'मिति ब्रह्ममीमांसासूत्रे घटशरावादयो मृदात्मनाऽन्वीयमाना मृदात्मकसामान्यपूर्वका भवितुमर्हन्तीति सांख्यमतमुपन्यस्य न हि बाह्याध्यात्मिकानां भेदानां सुखदुःखमोहात्मकतयाऽन्वय उपपद्यते सुखदुःखादीनामान्तरत्वप्रतीतेः, शब्दादीनां चातद्रूपत्वप्रतीतेस्तन्निमित्तत्वप्रतीतेश्च । शब्दाद्यविशेषेऽपि च भावनाविशेषात्सुखादिविशेषोपलब्धेरिति श्रीमद्भगवच्छङ्कराचार्योक्तविरोध इति वाच्यम् । उक्तश्रुतिविरोधात् । विषयसम्पर्कजन्यबुद्धिपरिणामरूपसुखादेश्चैतन्ये प्रतिबिम्बितस्य बुद्धिगतचैतन्यप्रतिबिम्बेन चैतन्यविशेषणतया गृह्यमाणस्य कल्पतरुकारोक्तबुद्ध्यैकयाध्यस्तचैतन्यधर्मत्वरूपान्तरत्वोपपत्तेः ।

न चाध्यात्मिकानां सुखाद्यात्मकत्वेऽपि बाह्यानां सुखाद्यात्मतयाऽप्रतीतेर्न तेषां सुखाद्यात्मकत्वमिति वाच्यम् । अविवेकिनां तथा प्रतीत्यभावेऽपि सुखाद्यात्मकबुद्धिकार्यतया विवेकिनां तथा प्रतीतिसम्भवात् 'सर्वं दुःखमेव विविकिन' इत्युक्तेश्च । पितृसुखहेतुपुत्रसुखादौ निमित्तत्वस्य व्यभिचाराच्च ।

यदपि शब्दाद्यविशेषेऽपि भावनाविशेषात्सुखादिविशेषोपलब्धेरिति तन्न । भावना वासना संस्कारः तस्या अदृष्टवशादभिव्यक्ताया मनुष्यशरीरोचिताया अस्मै मानुषी एव रोचते न शुनी इति निर्वाहकत्वेऽपि मानुषी एव कदाचिन्न रोचते कस्यचित्सर्वदैवेति निर्वाहकत्वाभावात् ।

यत्तु यदि पुनरेताः सुखादिस्वभावाः भवेयुस्ततस्स्वभावत्वाद्धेमन्तेऽपि चन्दनः सुखः स्यात्, न हि चन्दनः कदाचिदचन्दनः । तथा निदाघेऽपि कुङ्कमपङ्कः सुखो भवेत् । न ह्यसौ कदाचिदकुङ्कुमपङ्क इति । एवं कण्टकः क्रमेलकस्य सुख इति मनुष्यादीनामपि प्राणभृतां सुखः स्यात् । न ह्यसौ कांश्चित्प्रत्यकण्टक इति । तस्मात्

स्वामिनं सुखाकरोति, तत्कस्य हेतोः ? स्वामिनं प्रति तस्याः सुखरूपसमुद्भवात् । सैव स्त्री सपत्नीर्दुःखाकरोति, तत् कस्य हेतोः ? ताः प्रति तस्या दुःखरूपसमुद्भवात् । एवं पुरुषान्तरं तामविन्दमानं सैव मोहयति, तत् कस्य हेतोः ? तम्प्रति तस्या मोहरूपसमुद्भवात् । अनया च स्त्रिया सर्वे भावा व्याख्याताः । तत्र यत् सुखहेतुः तत् सुखात्मकम् सत्त्वम्, यद् दुःखहेतुस्तद् दुःखात्मकं रजः, यन्मोहहेतुस्तन्मोहात्मकं तमः । सुखप्रकाशलाघवानां त्वेकस्मिन् युगपदुद्भूतावविरोधः, सहदर्शनात् । तस्मात् सुखदुःखमोहैरिव विरोधिभिरविरोधिभिरेकैकगुणवृत्तिभिः सुखप्रकाशलाघवैर्न निमित्त-

---

सुखादिस्वभावा अपि चन्दनकुङ्कुमादयो जातिकालावस्थाद्यपेक्षया सुखदुःखादिहेतवो न तु स्वयं सुखादिस्वभावा इति रमणीयम् । तस्मात्सुखादिरूपसमन्वयो भावानामसिद्ध इति तन्न । जातिकालावस्थादेरस्माभिरपि सहकारिताङ्गीकारादिति ।

ननु सुखदुःखमोहैरिव सुखप्रकाशलाघवाद्यैरपि निमित्तभेदा अनुमीयेरन्न तु केवलं सत्त्वं इत्याशङ्क्य सुखप्रकाशलाघवादीनां सह दर्शनेन निमित्तभेदोन्नयनासंभव इति समाधत्ते–सुखप्रकाशलाघवानामित्यादिना ॥ एकस्मिन् बुद्धितत्त्वोपादानसत्त्वांशे अविरोधिभिरेकैकगुणवृत्तिभिः । नातिरिक्तनिमित्तभेदाः–प्रकृत्यतिरिक्तधर्मादिनिमित्तभेदाः ।

ननु सुखप्रकाशलाघवानां नैमित्तिकानामेकस्मिन् बुद्धितत्त्वे एककाले समुद्भवदर्शनाद्विरोधाभावेऽपि निमित्तभेदः किं न स्यादित्याशंक्योपसंहारद्वारा निमित्तभेदमपाकरोति--तस्मादिति ॥ विमताः सुखप्रकाशलाघवा न भिन्ननिमित्तका अविरोधित्वाद्यन्नैवं तन्नैवं यथा सुखदुःखमोहाः न च तथेमे तस्मान्न तथेत्यर्थः ॥

भेदा उन्नीयन्ते । एवं दुःखोपष्टम्भकत्वप्रवर्तकत्वैः, एवं मोहगुरुत्वावरणैः-इति सिद्धं त्रैगुण्यमिति ॥ १३ ॥

स्यादेतत्-अनुभूयमानेषु पृथिव्यादिष्वनुभवसिद्धा भवन्त्वविवेकित्वादयः । ये पुनः सत्त्वादयो नानुभवपथमधिरोहन्ति तेषां कुतस्त्यमविवेकित्वं विषयत्वमचेतनत्वं प्रसवधर्मित्वं च ! इत्यत आह—

अविवेक्यादेः सिद्धिस्त्रैगुण्यात्तद्विपर्ययाभावात् ।
कारणगुणात्मकत्वात्कार्यस्याव्यक्तमपि सिद्धम् ॥ १४ ॥

" अविवेक्यादेः " इति अविवेकित्वमविवेकि-यथा 'द्व्येकयोर्द्विवचनैकवचने ' ( पाणिनिसूत्र. १।४।२२ ) इत्यत्र द्वित्वैकत्वयोरिति अन्यथा द्व्येकेष्विति स्यात् । कुतः पुनरविवेकित्वादेः सिद्धिरित्यत आह—"त्रैगुण्यात्" इति । यद्यत् सुखदुःखमोहात्मकं तत्तदविवेकित्वादियोगि यथेदमनुभूयमानं व्यक्तम्-इति स्फुटत्वादन्वयो नोक्तः । व्यतिरेकमाह—"तद्विपर्ययाभा-

उक्तन्यायेन निमित्तभेदाभावमन्यत्रातिदिशति--एवमिति ॥ उपसंहरति--इतिसिद्धमिति ॥ त्रिगुणात्मिका प्रकृतिः सर्वोपादानतया सिद्धेत्यर्थः ॥ १३ ॥

संगतिं सूचयन्नविवेकीत्यादिसाधर्म्यस्य सत्वादावव्याप्तिनिरासपरत्वं मूलस्याऽऽह--स्यादेतदित्यादिना--तथा चाविवेकित्वाद्युपपादकनिरूपणेनोपोद्घातसंगतिरिति सूचितमित्यर्थः । आश्रयस्य सत्वादेरग्रेसाधनीयत्वात्पौनरुक्त्यमाशंक्याविवेकिपदस्य भावपरत्वमाह-अविवेकित्वमिति ॥ तत्रदृष्टांतमाह--यथेति ॥ दृष्टांतेभावप्रधानत्वाभावे दोषमाह अन्यथेति ॥ प्रकृतिनिष्ठबहुत्वसत्वाद्बहुवच-

वात्" इति । अविवेक्यादिविपर्यये पुरुषे त्रैगुण्याभावा-त् । अथ वा व्यक्ताव्यक्ते पक्षीकृत्यान्वयाभावेनावीत एव हेतुस्त्रैगुण्यादिति वक्तव्यः ॥

स्यादेतत्-अव्यक्तसिद्धौ सत्यां तस्याविवेकित्वाद-यो धर्माः सिध्यन्ति । अव्यक्तमेव त्वद्यापि न सिध्य-ति, तत्कथमविवेकित्वादिसिद्धिरत आह—"कारणगु-णात्मकत्वात्" इति । अयमभिसन्धिः-कार्यं हि कारण-गुणात्मकं दृष्टम, यथा तन्त्वादिगुणात्मकं पटादि । त-था महदादिलक्षणेनापि कार्येण सुखदुःखमोहरूपेण स्व-कारणगतसुखदुःखमोहात्मना भवितव्यम् । तथा च

नापात्तिरित्यर्थः । विमतमव्यक्तमविवेकि त्रिगुणत्वात्पृथिव्यादिवदि-त्यत्रेन्द्रियविषयत्वमुपाधिरतोजडमात्रं पक्षीकृत्याह-अथवेति ॥ पू-र्वस्मिन्नर्थे संभवन्नप्यन्वयः स्फुटत्वादुपेक्षित अस्मिन्नर्थेत्वन्वयासंभव एव । त्रैगुण्यादिति हेतुस्तद्विपर्ययाभावादिति तु व्यतिरेकव्याप्तिप्रद-र्शनपर इत्यभिप्रायः । स च तस्याविवेकित्वादेर्विपर्ययो यत्र स त-द्विपर्ययो, यत्र स तद्विपर्ययस्तत्र त्रैगुण्याभावादित्येवं व्याख्येयः ॥ प्रथमानुमाने आश्रयासिद्धिमाशंक्य निरस्यति स्यादेतदित्यादिना ॥ सामान्यरूपेण व्याप्तिमुक्त्वालिङ्गस्य पक्षधर्मतामाह—तथा महदादि-लक्षणेनेति ॥ तथा चायं प्रयोगः—महदादि सुखदुःखमोहव-द्द्रव्योपादानकं कार्यत्वे सति तद्विशेषगुणवत्वादिति ॥

ननु महदाद्यारभ्य पञ्चतन्मात्र मद्यापि न सिद्धम् । तत्पक्षीकृत्या-व्यक्तसाधनं मिश्राणा मज्ञानविजृम्भितम् । ये पुनः सत्वादयो नानुभव-पथमवरोहंति तेषां कुतस्त्यमविवेकित्वमिति पूर्वोक्ताविस्मरणं च ॥ म-हदादीनामद्यापि कार्यत्वासिद्ध्या महदादिलक्षणेन कार्येणेतिसिद्ध-वन्निर्देशश्चासङ्गतः ॥ स्वकारणगतसुखदुःखमोहात्मना भवितव्यमि-

तत्कारणं सुखदुःखमोहात्मकं प्रधानमव्यक्तं सिद्धं भवति ॥ १४ ॥

स्यादेतत्—'व्यक्तात् व्यक्तमुत्पद्यते' इति कणभक्षाक्षचरणतनयाः, परमाणवो हि व्यक्ताः, तैर्द्व्यणुकादिक्रमेण पृथिव्यादिलक्षणं कार्यं व्यक्तमारभ्यते। पृथिव्यादिषु च कारणगुणक्रमेण रूपाद्युत्पत्तिः। तस्मात् व्यक्तात् व्यक्तस्य तद्गुणस्य चोत्पत्तेः कृतमदृष्टचरेणाव्यक्तेनेत्यत आह—

त्यत्र वृत्तित्वबोधकगतपदं च विरुद्धं तदात्मकत्वादव्यक्तस्य, तदुक्तं कापिलाचार्यैः—सत्वादीनामतद्धर्मत्वं तद्रूपत्वा'दितीति चेन्न ॥ सत्वादेरग्रे साधनीयत्वेनाऽऽद्यदोषद्वयाभावात्। महदादि कार्यं प्रकृति पुरुषभिन्नत्वात् परिच्छिन्नत्वाद्वा घटादिवदित्यादिप्रमाणसिद्धत्वेन तृतीयदोषाभावात्। न च हेत्वसिद्धिः पुरुषरूपत्वे भोग्यत्वानुपपत्तेः। प्रकृत्यात्मकत्वे तु विनाशित्वाभावेन मोक्षानुपपत्तेः॥ नीलो घटो घटे रूपमित्यादिप्रतीतिनिर्वाहायाभेदेऽपि कथंचिद्भेदविवक्षया भेदसत्वान्न चरमदोषोऽपि। अत एव स्वकारणगतसुखदुःखमोहात्मना भवितव्यमित्यत्राऽऽत्मग्रहणम् ॥ १४ ॥

ननु सुखात्मककार्येण कारणस्याव्यक्तस्य पूर्वार्यायां साधितत्वात् परिमाणादिना पुनः साधने पौनरुक्त्यापत्तिरित्याशङ्कायां कणभक्षादिमतविरोधेन साधितमप्यसाधितमिव भवतीति न्यायेन पुनः प्रसङ्गसङ्गत्या परमतनिराकरणं विना प्रकृत्यर्थो न सिध्यतीत्युपोद्घातसङ्गत्या बहुसाधनहेतुकामार्यामवतारयति। स्यादेतदिति। विरोधं दर्शयति। व्यक्ताद्व्यक्तमुत्पद्यते इतीति। 'सदकारणवन्नित्यं तस्य कार्यं लिङ्गं कारणाभावात्कार्याभाव' इति कणादाचार्याः ॥ सूत्रार्थस्तु सद् सत्तायोगि, न का-

रणवदित्यकारणवत् अकारणवद्व्यक्तमित्यम् । तथा चानेन नित्यसामान्यमुक्तमतः परमाणुमधिकृत्याऽऽह—तस्येति । तस्य परमाणोः कार्यं घटादि लिङ्गम्, अनुमापकम् । एवं च कार्यलिङ्गेन कारणत्वं परमाणौ सिद्ध्येन्न रूपादिषु सिद्ध्यं इत आह—कारणेति ॥ रूपादीनां कारणे सद्भावात्कार्ये सद्भावः । कारणगुणपूर्वका हि कार्ये गुणा भवन्ति घटपटादौ तथा दर्शनात् । तथा रूपादिगुणयुक्तेभ्यो मृत्प्रकृतिभ्यस्तथाभूतस्य घटादिद्रव्यस्योत्पत्तिं दृष्ट्वा एतज्जातीयकार्यमेतज्जातीयककारणप्रभवमिति सामान्यतो रूपवत्कार्यं रूपवदुपादानकमित्यादिविशेषतो वा व्याप्तिं गृहीत्वा रूपादिमदेव कारणमनुमिनोति । यच्च यदवधिभूतं रूपादिमच्च तदेव परमाणुर्निरवयश्च निरवधित्वाङ्गीकारे अनन्तावयवारब्धत्वाविशेषात् मेरुसर्षपयोः परिमाणभेदो न स्यादित्यर्थः ।

न च परमाणोरूपादिमत्त्वेऽपीन्द्रियग्राह्यत्वरूपव्यक्तत्वानुपपत्तेः कथं व्यक्ताव्यक्त मुत्पद्यते इति वाच्यम् । कारणस्य व्यक्तत्वोपयोगिरूपादिमत्त्वप्रतिपादनेन स्वाभिमततन्त्रान्तरसिद्धव्यक्तत्वसूचनात् । व्यक्ताव्यक्तानां प्रत्यक्षप्रामाण्यादिनि । गौतमीयसूत्रस्थव्यक्तपदेन भाष्ये रूपवतामेव नित्यानामतीन्द्रियाणामेव ग्रहणात् ।

न च व्यक्तात् घटात् व्यक्तो घट उत्पद्यमानो न दृश्यते तथा च व्यक्ताव्यक्तस्यानुत्पत्तिदर्शनान्न व्यक्तं कारणमिति वाच्यम् । सर्वं सर्वस्य कारणमित्यनुक्तेः, किं तु यदुत्पद्यते व्यक्तं तत्तथाभूतादित्येवाङ्गीकारात् कृतमदृष्टचरेणाव्यक्तेनेति । तथा च ।

शब्दस्पर्शविहीनं तु रूपादिभिरसंयुतम् ।

त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम् ॥ इति विष्णुपुराणानुसारेण रूपादिविहीनस्यैव प्रधानस्य स्वीकारे पूर्वोक्तानुमानविरोधः, रूपादिमत्कार्यस्य रूपादिविहीनद्रव्यादुत्पाददर्शनेन व्याप्त्यग्रहे-

भेदानां परिमाणात् समन्वयात् शक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥ १५ ॥
कारणमस्त्यव्यक्तम्, प्रवर्तते त्रिगुणतः समुदयाच्च ।
परिणामतः सलिलवत् प्रतिप्रतिगुणाश्रयविशेषात् ॥ १६ ॥

ऽनुमानासम्भवश्चेत्यर्थः ॥ कर्तृत्वभोक्तृत्वयोर्विशेषानुपपत्त्या प्रधानं कर्त्रैव पुरुषः भोक्तैवेति विभागानुपपत्तिः ॥

न च पुरुषस्य चिद्रूपेणैव परिणामान्न रूपान्तरापत्तिः अशुद्ध्यादिकं वा । प्रधानस्य तु तत्वान्तराकारेण परिणामात् पूर्वरूपपरित्यागाच्चाशुद्ध्यादिकं स्यादिति विशेष इति वाच्यम् । परिणामस्यागन्तुकत्वपक्षेऽनित्यत्वादिदोषापत्त्याऽर्थतो विशेषाभावात् । अनागन्तुकत्वपक्षे तु भोगस्य कर्मजन्यत्वासम्भवेन कादाचित्कत्वानुपपत्तेः ।

न च सत्वगुणपरिणामरूपभोगवति चेतसि चेतनस्य पुरुषस्य प्रतिबिम्बितत्वे भोक्तृत्वं तच्च न प्रधानस्येति वाच्यम् । चेतसि प्रतिबिम्बितत्वेन पुरुषे विशेषाङ्गीकारे ऽनित्यत्वादिदोषानिवृत्तेः । अनङ्गीकारे तु तादृशकल्पनानर्थक्यात् । पुरुषस्य सदा निर्विशेषत्वेन किञ्चिद्दोषापनयासम्भवेन स्वीयशास्त्रप्रणयनवैयर्थ्यापत्तेश्च ।

न चाविद्ययाऽध्यारोपितानर्थापनयार्थं शास्त्रप्रणयनमिति वाच्यम् । पुरुषो भोक्तैव न कर्त्ता प्रधानं कर्त्रेव न भोक्तृ परमार्थसद्वस्त्वन्तरं पुरुषाच्चेति स्वीयमतपरित्यागापत्तेरिति ॥

ननु भेदानां परस्परान्योन्याभावानां स्वमते ऽधिकरणात्मकतया प्रधानपुरुषयोरपि महदादिभेदसत्त्वेन तयोरपि भेदपदेन ग्रहणापत्तिः । तथा च भेदानां कारणमस्त्यव्यक्तमिति प्रतिज्ञायां पक्षैकदेशे बाधः । परिमितत्वरूपपरिमाणादिहेतोरसिद्धिश्चेत्यत आह ।

"भेदानाम्" इति । भेदानाम् विशेषाणां महदादीनां भूतान्तानां कार्याणां कारणं मूलकारणमस्त्यव्यक्तम्। कुतः ? "कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य" । कारणे सत् कार्यमिति स्थितम् । तथा च यथा कूर्मशरीरे सन्त्येवाङ्गानि निःसरन्ति विभज्यन्ते—'इदं कूर्मशरीरं, एतान्येतस्याङ्गानि' इति । एवं निविशमानानि तस्मिन् अव्यक्तीभवन्ति । एवं कारणान्मृत्पिण्डाद्धेमपिण्डाद्वा कार्याणि घटमुकुटादीनि सन्त्येवाविर्भवन्ति विभज्यन्ते । सन्त्येव पृथिव्यादीनि कारणात्तन्मात्रादाविर्भवन्ति विभज्यन्ते, सन्त्येव च तन्मात्राण्यहङ्कारात् कारणात्, सन्नेवाहङ्कारः कारणान्महतः, सन्नेव च महान् परमाव्यक्तात् । सो ऽयं कारणात् परमाव्यक्तात् साक्षात् पारम्पर्येणान्वितस्य विश्वस्य कार्यस्य विभागः ।

प्रतिसर्गे तु मृत्पिण्डं सुवर्णपिण्डं वा घटमुकुटादयो विशन्तो ऽव्यक्तीभवन्ति । तत्कारणरूपमेवानभिव्यक्तं

---

विशेषाणामिति ॥ 'महदाद्यं विशेषान्तं प्रसूतेऽखिलं जगादित्यादौ विशेषपदस्य भूतपरत्वेन महदादिग्रहणं नस्यादत आह–महदादीनामिति ॥ वक्ष्यमाणानुमाने सिद्धसाधनतावारणायाह । अव्यक्तमिति । अव्यक्तपदार्थस्यातीन्द्रियस्य रूपादिविहीनस्य वा कारणत्वादर्शनेन दृष्टान्तासिद्धिरतो आर्यापाठक्रमं परित्यज्याव्यक्तपदार्थघटिताग्रिमतनहेतुद्वयं व्याचष्टे–कारणेत्यादि ॥ विविभागाविभागपदार्थं व्युत्पादयितुं दृष्टान्तमाह–तथा चेति । दार्ष्टान्तिके योजयति–एवमिति ।

विभागपदार्थमुक्त्वाऽविभागपदार्थमाह–प्रतिसर्गेति ॥ प्रतिसर्गः प्रलयः ॥ कुटमुकुटादीनां कथमव्यक्तकारणकत्वं तत्कारणानां मृद्धेमपिण्डानां व्यक्तत्वादित्यत आह–तत्कारणरूप-

कार्यमपेक्ष्याऽव्यक्तं भवति । एवं पृथिव्यादयस्तन्मात्राणि विशन्तः स्वापेक्षया तन्मात्राण्यव्यक्तयन्ति' एवं तन्मात्राण्यहङ्कारं विशन्त्यहङ्कारमव्यक्तयन्ति, एवमहङ्कारो महान्तमाविशन् महान्तमव्यक्तयति, महान् प्रकृतिं स्वकारणं विशन् प्रकृतिमव्यक्तयति । प्रकृतेस्तु न क्वचिन्निवेश इति सा सर्वकार्याणामव्यक्तमेव । सोऽयमविभागः प्रकृतौ वैश्वरूप्यस्य नानारूपस्य कार्यस्य, स्वार्थिकः ष्यञ् । तस्मात् कारणे कार्यस्य सत एव विभागाविभागाभ्यामव्यक्तं कारणमस्ति ॥

मिति ॥ यथा न दोषस्तथाऽनुपदमेव वक्ष्यते ॥

ननु तुल्यन्यायेन प्रकृतेरपि कारणं स्यादत आह-प्रकृतेस्तु न क्वचिदिति । अन्यथा ऽनवस्था स्यात्, सा च न प्रामाणिकी । 'अजामेकाम्'अनादिमध्यनिधनं कारणं जगतः पर'मित्यादिश्रुतिपुराणविरोधात् ।

कस्य कुत्राविभाग इत्यत आह । प्रकृतौ वैश्वरूपस्येति । स्वार्थिकप्रत्ययोपादानं तु कारणात्मना ऽविभागलाभाय । तेन दुग्धे प्रक्षिप्तजलविन्द्वाद्यविभागनिरासः ॥

अयं प्रघट्टकार्थः-कारणात्कार्यस्याभिव्यक्तिः सा कारणकार्यविभागः । कार्यस्य लक्षणाख्यपरिणामः अतीतलक्षणः तिरोभावापरपर्यायो ऽविभागः ॥ अव्यक्तत्वं च तत्र कारणस्य स्वस्वकार्यरूपधर्मपरिणामान्यपरिणामवत्त्वम् ॥ भवति घटोत्पत्तेः प्राक् तन्नाशानन्तरं च घटस्वरूपधर्मपरिणामान्यः पिण्डखर्परादिपरिणामस्तद्वत्त्वं मृदादेरिति । अत एव तत्कारणरूपमेवानभिव्यक्तं कार्यमपेक्ष्याऽव्यक्तं भवतीत्युक्तिरपि सङ्गच्छते ॥

भाष्यकारस्तु अव्यक्तत्वं सूक्ष्मत्वमित्याहुः । तन्न । सूक्ष्मत्वं यदि स्वकार्यापेक्षयाल्पपरिमाणवत्त्वं तदा परमकारणे परमसूक्ष्मम-

णुपरिमाणं भवेत्, तथा च परिमाणस्य स्वसजातीयोत्कृष्टपरिमाणारम्भकत्वनियमेन तज्जन्यस्याणुतरत्वप्रसङ्गेन कार्याप्रत्यक्षत्वप्रसङ्गात् । नैयायिकं प्रति सिद्धसाधनतापत्तेश्च । संयोगविशेषस्यैव परिमाणहेतुत्वे उक्तदोषाभावेऽपि प्रत्यक्षत्वप्रतिबन्धकतावच्छेदकधर्मवत्त्वमेव सूक्ष्मत्वमिति निरुक्त्यावश्यकत्वे दृष्टान्ताप्रसिद्ध्यापत्तेः । अत एव मिश्रैस्तथा नाभिहितम् । इत्थं च विवादाध्यासिता भेदा अव्यक्तकारणकारणकाः अभिव्यक्तकार्यत्वात् कूर्माङ्गादिवत् घटादिवद्वा ।

न च भेदशब्दस्य महदादिभूतान्तपरत्वे भूतानां प्रसिद्धत्वेऽपि महत्तत्वाहङ्कारपञ्चतन्मात्राणामप्रसिद्ध्याऽप्रसिद्धिरिति वाच्यम् । प्रकृतेर्महानित्यादौ तेषां साधनीयत्वात् । तथा च महत्त्वपर्यन्तपक्षे हेतूनां साध्यं सिद्ध्यत् परमाव्यक्तं मूलकारणं सिद्ध्यतीत्यभिप्रायः । एवमविभागादनभिव्यक्तकार्यत्वापरपर्यायात् ।

ननु अव्यक्तपदस्य रूपवत्त्वादितरसाधारणपरत्वेन (१) रूपादिचतुष्टयवत्कार्यं तद्वदुपादनकमिति नियमेन च तत्र रूपचतुष्टयसिद्ध्यापत्त्या नैयायिकं प्रति सिद्धसाधनतापत्तिरिति चेन्न । वाय्वादौ रूपोत्पत्तिवारणायापाकजरूपवत्कार्यद्रव्यत्वावच्छिन्नं प्रति रूपवद्द्रव्यस्य कारणत्वापेक्षया लाघवात्कारणगतरूपमपाकजतत्कार्यगतरूपमारभते इत्येव नियमो वाच्यः, स च न सम्भवति हरिद्राचूर्णादिरूपद्रव्यारब्धद्रव्ये रक्तरूपोत्पत्त्या हरिद्रादिगतरूपयो रूपानुत्पादकत्वेन व्यभिचारात् ।

न च हरिद्रादिगतरूपेणैव तद्गतरूपोत्पत्तिरिति वाच्यम् । रूपाणां शुक्लादिसजातीयरूपजनकत्वनियमेनतथा ऽसम्भवात् ॥ चित्ररूपोत्पत्त्यङ्गीकारोऽपि न सम्भवति । अत्र तथाऽनुपलब्धेः । प्रधा-

(१) इन्द्रियग्राह्यतदितरसाधारणपरत्वेनेत्यधिकः क्वचित्पुस्तके

इतश्चाव्यक्तमस्तीत्यत आह–"शक्तितः प्रवृत्तेश्च" इति । कारणशक्तितः कार्यं प्रवर्तत इति सिद्धम्, अशक्तात् कारणात् कार्यस्यानुत्पत्तेः, शक्तिश्च कारणगता न कार्यस्याव्यक्तत्वादन्या । न हि सत्कार्यपक्षे कार्यस्या-

---

नबुद्ध्यहङ्काराणां रूपादिमत्वाङ्गीकारे बाह्येन्द्रियग्राह्यजातीयविशेषगुणवत्त्वस्यैव भूतलक्षणत्वेन तेषामपि भूतत्वापत्त्या स्वस्य स्वकारणत्वानुपपत्तेः ।

नन्वेवं कारणद्रव्येषु रूपाद्यभावेन तन्मात्रारूपादेः किङ्कारणमिति चेत्, शृणु, स्वकारणद्रव्याणां न्यूनाधिकभावेनान्योन्यसंयोग एव । न च कारणगुणाः स्वसजातीयकार्यगुणानारम्भते इति नियमः । त्रसरेणुमहत्वादाववयवबहुत्वादेरेव त्वयापि हेतुत्वाभ्युपगमेन नियमभङ्गावश्यकत्वात् । नच रूपादिचतुष्टयस्यैव नियम इति वाच्यम् । परस्परविरुद्धरूपवतां द्रव्याणां मेलनेऽपि नीलपीतादिरूपदर्शनेन तत्र व्यभिचारस्योक्तत्वात् ।शक्तेः (कस्य कुत्रेति) शक्तशक्यनिरूपणाधीननिरूपणत्वात्—

कस्य कुत शक्तिरित्याशङ्कायां हेतुं व्याचष्टे–कारणशक्तित इति । ननु कारणतः कार्यं प्रवर्ततां किं शक्तत्वविशेषणेनेत्यत आह–अशक्तादिति । तथा चाशक्तात्सिकतातस्तैलोत्पत्त्यदर्शनेन तथैव कल्पनादित्यर्थः । शक्तिः पदार्थान्तरमिति मीमांसकमतं दूषयितुमाह–शक्तिश्चेति । नचाव्यक्तत्वस्य कार्यगतत्वात्कथं कारणगततेतिवाच्यम् । धर्मधर्मिणोरभेदेनानभिव्यक्तकार्यस्यैव शक्तिपदार्थत्वेन सत्कार्यवादे तस्याःकारणनिष्ठत्वोपपत्तेः । तथात्रानभिव्यक्तकार्येणैव निर्वाहेऽतिरिक्तशक्तिकल्पने मानाभावो गौरवं चेति भावः ।

ननु कार्यप्रागभावाभावेनैवाशक्तकारणात्कार्यानुत्पत्तिनिर्वाहे

व्यक्ततायां अन्यस्यां शक्तौ प्रमाणमस्ति । अयमेव हि सिकताभ्यस्तिलानां तैलोपादानानां भेदो यदेतेष्वेव तैलमस्त्यनागतावस्थं न सिकतास्विति ॥

सत्कार्यवादो निरर्थक इत्यत आह–अयमेवहीति। भेदः–शक्तिमत्त्वरूपोपादानत्वरूपः साधारणकारणादिव्यावर्तको विशेषः। तथाचाभावापेक्षया लाघवाद्भाव एव कल्प्यते इति भावः। न च 'ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढा'मिति श्रुतिरेवातिरिक्तशक्तौ मानमिति वाच्यम्। प्रकृतिकारणापेक्षयाऽतिरिक्तशक्तेरप्रतिपादनात् तथाहि ये ध्यानलक्षणयोगमनुगतास्ते देवस्य चेतनस्यात्मशक्तिं स्वात्मभूतां यथा राज्ञः प्रधानो महाकार्यकारित्वादात्मभूतस्तथा भोगादिसम्पादकत्वादियमपि। पुनः कीदृशीं स्वगुणैः स्वस्य गुणैस्सत्वरजस्तमोलक्षणैर्महदादिभिर्निगूढां नितरां गूढामव्यक्ततां प्राप्तां। अभिव्यक्तिगुणविधुरप्रकृतिस्वरूपस्य द्रष्टुमशक्यत्वान्निगूढामित्युक्तं तथाच कार्यकारणयोरभेदादनभिव्यक्तकार्यमेवशक्तिरिति ॥

यदपि 'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'। तदपि न। तथाहि यदि सर्वकार्यकारित्वादुत्कृष्टा काचित्तन्निष्ठा शक्तिरङ्गीकृता चेतर्हि 'न तस्य कार्य'मित्यादिविरोधापत्तिः। तदविरोधाय तद्भोगसम्पादकत्वात्तदीयेति वक्तव्यं। एवं सति परा व्यापिका विविधानेककार्यकर्त्री देवात्मशक्तिमित्यत्र या कारणत्वेनोक्ता सैवेयं। शक्तिमतः कारणत्वकल्पनाऽपेक्षया शक्तेः कारणत्वकल्पने लाघवाच्च शक्तिरेव कारणम्। तस्मात् कारणातिरिक्तशक्तिर्नास्त्येवेति सिद्धम्। ज्ञानपदसमभिव्याहारात् बलक्रियापदाभ्यां कृतीच्छे गृह्येते तथाचैतत्त्रितयं स्वाभाविकं स्वप्रयत्नानधीनं बुद्ध्याश्रितमपि स्वस्मिन् प्रतिबिम्बितमित्यर्थः ॥

चित्सुखाचार्यास्तु । वह्निरदृष्टातीन्द्रियस्थितिस्थापकेतरभावाश्रयः। गुणवत्त्वात् गुरुत्वाश्रयकुम्भवत् । विवादाध्यासितः स्फोटः उभयवादिसम्मतिपन्नस्फोटकारणातिरिक्तकारणजन्यः कार्यत्वात् घटवदिति विपक्षे वह्निस्वरूपस्यैव कारणत्वात्प्रतिबन्धकाभावकारणत्वस्य च पुरस्तान्निरस्तत्वात् मन्त्रादिसमवधानासमवधानयोरविशेषेण कार्यजनिप्रसंगो बाधः । द्वितीयानुमाने मायावादिनं प्रति नेश्वरकारणत्वेन सिद्धसाधनं तस्योभयवादिसम्मतकारणतातिरिक्तत्वाभावात् ईश्वरकारणत्वस्य वेदान्तिभिरभ्युपगमात् जन्यभावजन्य इतिविशेषणप्रक्षेपेण भाट्टस्यापि सिद्धसाधनत्वपरिहारसंभवात् । अनित्येषु शक्तिसिद्धौ तद्दृष्टांतावष्टम्भत एव नित्येष्वपि सिद्धिरित्याहुः

तन्न । आद्ये क्षेत्रज्ञसमवाय्यदृष्टानभिव्यक्तकार्याभ्यामर्थांतरतापत्तेः । द्वितीये विवादाध्यासितः स्फोटः उभयवादिसंप्रतिपन्नस्फोटकारणातिरिक्तकारणजन्यो न भवति तथानुपलभ्यमानत्वात् । यत् प्रमाणेन यथा नोपलभ्यते न तत्तथा मतं, यथा न नीलं रूपं पीतरूपमिति प्रतिपक्षसंभवः । नच मणिमन्त्रादिसमवधानासमवधानयोरविशेषेण कार्यजननप्रसंगो बाधः । अतिरिक्तशक्तिवादिमतेऽपि प्रसंगस्य संभवात् । नच वाच्यं मणिमन्त्रादिना शक्तिर्नाश्यते उत्तेजकादिना च पुनर्जन्यत इत्यंगीकारान्न दोष इति । तथासति शक्तेरपि कार्यत्वेन कारणांतरापेक्षायामनवस्थापत्तेः । अन्यथा तव मतेऽपि अविशेषेण कार्यजननापत्तेः । मणिमन्त्रादिना दाहप्रतिपक्षभूतस्य क्षेत्रज्ञसमवायिनोऽदृष्टस्योत्पत्त्यङ्गीकारेण तदा दाहजनकादृष्टाभावान्मन्मते तादृशकार्यजननप्रसङ्गासम्भवाच्च । एवमौषधलिप्तकाष्ठादिष्वपि न दाहस्तत्राप्यौषधलेपकारिपुरुषसमवेतादृष्टस्य दाहप्रतिपक्षभूतस्योत्पत्त्या दाहजनकादृष्टाभावात् । एवमन्यत्रापि बोध्यम् ।

स्यादेतत्-शक्तितः प्रवृत्तिः कारणकार्यविभागाविभागौ च महत एव परमाव्यक्तत्वं साधयिष्यतः, कृतं ततः परेणाव्यक्तेनेत्यत आह—"परिमाणात्" इति । परिमितत्वात्, अव्यापित्वादिति यावत् । विवादाध्यासिता महदादिभेदा अव्यक्तकारणवन्तः, परिमितत्वात्, घटादिवत् । घटादयो हि परिमिताः मृदाद्यव्यक्तकारणका दृष्टाः । उक्तमेतद्यथा कार्यस्याव्यक्तावस्था कारणमेवेति, यन्महतः कारणं तत् परमाव्यक्तम्, ततः

---

प्रयोगश्च—विवादाध्यासिता भेदाः शक्तिमत्कारणकाः कार्यत्वात् घटवत् । शक्तिमत्त्वञ्च कारणस्यानभिव्यक्तकार्याश्रयत्वं तदेवाव्यक्तत्वं । तेन व्यक्ताद्व्यक्तोत्पत्तिमादाय नार्थान्तरता । विपक्षे सिक्तातस्तैलोत्पत्त्यापत्तिर्बाधः ।

ननु पारिभाषिकाव्यक्तत्वस्य परमाणुषु महत्तत्वाहङ्कारपञ्चतन्मात्रान्यतमेषु वा सम्भवे कृतं ततः परेणाव्यक्तेनेत्याशङ्कानिरासाय परिमाणादिति मूलमवतारयति—स्यादेतदिति ।

अन्ये तु व्यक्तोपादानकं विश्वं कार्यत्वात् घटवदिति शङ्कते—स्यादेतदिति । परिच्छिन्नत्वमुपाधिमाह—परिमाणादिति । सत्प्रतिपक्षमाह-विवादेत्यादीत्याहुः ।

तन्न । व्यक्ताद्व्यक्तमुत्पद्यत इत्यादिना पौनरुक्त्यापत्तेः । शक्तितः प्रवृत्तिरित्यादित्रयाणां हेतुत्वप्रतिपादकमूलविरोधापत्तेश्च । महत एवेत्यत्र महत्पदमुक्तपरमाण्वादिरूपलक्षकम् । ननु परिमितत्वं संख्येयत्वं तच्च प्रधानेऽप्यस्तीत्यत आह । अव्यापित्वादिति । अव्यापित्वं च दैशिकं कालिकं च बोध्यं ननु वस्तुपरिच्छिन्नत्वरूपं चैतन्यनिष्ठभेदप्रतियोगितावच्छेदकत्वरूपवस्तुपरिच्छिन्नत्वस्य प्रधानेऽपि सत्त्वेनोक्तदोषानुद्धारात् ।

ननुमृदादेर्व्यक्तत्वाद्दृष्टान्तासिद्धिरत आहोक्तमेतदिति ।

शक्तिश्च कारणगतेत्यादावित्यर्थः । नच कारणस्याव्यक्तकार्याश्रयत्वमव्यक्तत्वमिति कार्यस्याव्यक्तावस्था कारणमित्यनेन विरुद्ध्यते इति वाच्यम् । शक्तिशक्तिमतोरभेदेनाविरोधात् । विपक्षे महत्तत्वादीनां कारणाभावे नित्यत्वापत्त्याऽऽत्मनोऽनिर्मोक्षप्रसङ्गो बाधकः । ततः परतया महत्वकारणाव्यक्तकारणतया प्रमाणाभावात् यथैतत्तथोक्तं प्राक् ॥

यत्तु रत्नप्रभायां । किमिदं परिमितत्वं नतावद्देशतः परिच्छेदः पक्षान्तर्गताकाशे तस्याभावेन भागासिद्धेः । नापि कालतः परिच्छेदस्तत् । सांख्यैः कालस्यानङ्गीकारात् । अविद्यागुणसंसर्गेण सिद्धसाधनाच्च । नापि वस्तुतः परिच्छेदः सत्वादीनां परस्परभिन्नत्वे सत्यपि साध्याभावेन व्यभिचारादिति । तन्न । आकाशस्य कार्यतया कारणप्रधानादिव्याप्त्यसम्भवात् यथा कारणेन कार्यं व्याप्तं न तथा कार्येण कारणमपि व्याप्तं । नच गुणव्यक्तीनां परस्परस्मिन् भावसत्त्वेन परिच्छिन्नत्वापत्त्या साध्याभावेन व्यभिचार इति वाच्यम् । दैशिकाभावप्रतियोगितावच्छेदकजातिमत्त्वस्यैवपरिमितत्वपदेन विवक्षितत्वात् । अत एव नैयायिकमतरीत्यापि न भागासिद्धिस्तैराकाशस्यावृत्तित्वाङ्गीकारात् । अतिरिक्तकालानङ्गीकारेऽपि सूर्यस्पन्दरूपकालेऽभिव्यक्तांशस्य सम्बन्धसत्वेऽपि साम्यावस्थारूपसजातीयपरिणामे सम्बन्धाभावेन कालिकाभावप्रतियोगितावच्छेदकजातिमत्वरूपकालिकपरिच्छिन्नत्वरूपपरिमितत्वस्य सत्त्वेन द्वितीयदोषोऽपि न सम्भवति । न तृतीयदोषोऽपि तथा ऽनङ्गीकारात् । अत एव न चतुर्थोऽपि संसर्गपूर्वकत्वस्यासाध्यत्वात् ।

नचाव्यक्तपूर्वकत्वसाधने ब्रह्मणाऽविद्यया वा अर्थान्तरापत्तिस्तद्वारणाय संसर्गपूर्वकत्वं साधनीयं तत्सिद्धौ संसृष्टानेकानि सत्वरजस्तमांसि सिद्ध्यन्ति, नतु ब्रह्माविद्याच एकस्मिन्संसर्गाभावादिति वाच्यम् । ब्रह्मणोऽसङ्गतया सदृशयोरेव प्रकृति-

विकारभावाङ्गीकारेणाविद्यायाश्च मिथ्याज्ञानरूपबुद्धेर्गुणत्वेनोपादानत्वासम्भवेन 'अविद्या पञ्च पूर्वेषां प्रादुर्भूता महात्मन' इत्यविद्याया उत्पत्तिश्रवणेनानवस्थापत्त्या च सिद्ध्यसम्भवात् ॥

ननु 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तमे'त्यादिस्मृत्यामिथ्याज्ञानरूपबुद्धेर्गुणत्वेनोपादानत्वाभावात्प्रधानस्यापि पुरुषादुत्पत्तिश्रवणेन जगत्कारणत्वं न सम्भवति। नच पुरुषस्य नित्यतयाऽनवस्थाभावेनाविद्याद्वारकतया च कौटस्थ्यहान्यभावेन तस्मादज्ञानमूलोऽयं संसारः, 'पुरुषस्य ही'तिस्मृत्या च पुरुषस्यैव जगत्कारणत्वमस्त्विति वाच्यम् । अविद्याया जन्यतया द्वारत्वासम्भवात्, इति चेन्न । मूलकारणत्वनिर्वाहायैकस्या गौणोत्पत्त्यावश्यकत्वे 'संयोगलक्षणोत्पत्तिः कथ्यते कर्मजानयो'रिति कौर्मेप्रकृतिपुरुषयोर्गौणोत्पत्तिस्मरणात् । अविद्यायाः क्वापि गौणोत्पत्त्यश्रवणाच्च । अनादिवाक्यानां प्रवाहरूपेणैव व्याख्येयत्वेन तद्विरोधाभावाच्च ।

ननु न विद्याऽविद्या नञ्ज्ञानमज्ञानमिति विग्रहेण ज्ञानविरोध्यावरणशक्तिमत्यविद्या तदेवाज्ञानं, तदेव विक्षेपशक्तिमन्माया पाचकपाठकपुत्रपौत्रादिपदार्थतावच्छेदकानां भेदेऽपि चैत्रपदार्थवदत्रापि न परस्परभेदः 'मायाचाविद्याचस्वयमेवभवती'तिश्रुतेः। तस्याश्चानादित्वश्रवणान्नानवस्थापि तथा च 'तरत्यविद्यां विततां हृदियस्मिन्निवेशिते' इत्यादिस्मृत्या तस्याः ज्ञाननाश्यत्वावश्यकत्वे सदृशयोरेव प्रकृतिविकारभावनियमेऽपि तयाऽर्थांतरापत्तिस्तदवस्थैवेति चेन्न । तरणपदस्य नाशे शक्त्यभावेन तस्याः ज्ञाननाश्यत्वासंभवे तयाऽर्थान्तरासम्भवात् । किञ्चाविद्याया द्रव्यत्वे शब्दमात्रभेदो गुणत्वेच तदाधारतया प्रकृतिसिद्धिः । तस्याः पुरुष एवाधारोऽस्त्विति तु नशङ्क्यं तस्य निर्गुणत्वात् । नचद्रव्यगुणकर्मविलक्षणैव सा इति वाच्यम् । तादृग्पदार्थस्याप्रतीतेरेव जगदुपादानत्वा-

यदपि 'एतेन सदृशयोरेव प्रकृतिविकारभावादचेतनविकाराणामचेतनमेव प्रकृतिरिति निरस्तम् । चेतनाधिष्ठिताचेतनप्रकृतिकत्वं सादृश्योपपत्ते'रिति तन्न । 'अधिकं तु निविष्टं चेन्नतद्धानि'रिति न्यायेनाधिकस्य सिद्धावपीष्टस्याचेतनप्रकृतिकत्वस्य सिद्ध्याऽर्थान्तरापत्तिरूपदोषाभावात् । न चैवं स्वसिद्धान्तभङ्गापत्त्या न्यायसंकोचावश्यकत्वेऽत्र न्यायाप्रवृत्तावर्थान्तरापत्तिरिति वाच्यम् । चेतने प्रयत्नस्याग्रे निरसनीयत्वेनाचेतने चेतनाधिष्ठितत्वासंभवात् । यत्तु 'न विलक्षणात्वादस्य तथात्वं च शब्दा' दित्यादौ 'किञ्च ययोः प्रकृतिविकारभावस्तयोः सादृश्यं वदता वक्तव्यं किमात्यन्तिकं, यत्किञ्चिद्वेति, आद्ये दोषमाह—अत्यन्तसारूप्ये च प्रकृतिविकारभाव एव प्रलीयेत । द्वितीये आह—अथोच्येतास्ति कश्चित्पार्थिवत्वादिस्वभावः पुरुषादीनां केशनखादिष्वनुवर्त्तमानो गोमयादीनां च वृश्चिकादिष्विति, ब्रह्मणोऽपि तर्हि सत्तालक्षणः स्वभावः आकाशादिष्वनुवर्त्तमानो दृश्यते' इति तन्न । अचेतनत्वेन सुखदुःखाद्यात्मकत्वेन गुणवद्द्रव्यत्वेन वासादृश्यस्य विवक्षितत्वात् । त्वया च ब्रह्मणि अचेतनत्वाद्यनङ्गीकारात् ।

एतेन विलक्षणत्वेन च कारणेन ब्रह्मप्रकृतिकत्वं जगतो दूषयता किमशेषस्य ब्रह्मणः स्वभावस्याननुवर्त्तनं विलक्षणत्वमभिप्रेयते उत यस्य कस्यचिदथ चैतन्यस्येति वक्तव्यम् । प्रथमे विकल्पे समस्तप्रकृतिविकारोच्छेदप्रसङ्गो नह्यसत्यतिशये प्रकृतिर्विकार इति वा संभवति । द्वितीये चासिद्धत्वम् । दृश्यते हि सत्तालक्षणो ब्रह्मणःस्वभाव आकाशादिष्वनुवर्त्तमान इत्युक्तम् । तृतीये तु दृष्टान्ताभावः । किं हि यच्चैतन्येनानन्वितं तदब्रह्मप्रकृतिकं दृष्टमिति ब्रह्मवादिनं प्रत्युदाह्रियेत समस्तस्य वस्तुजातस्य ब्रह्मप्रकृतिताभ्युपगमादिति ब्रह्ममीमांसाभाष्यं निरस्तम् । अभ्युपगमस्य निर्युक्तिकत्वेन भ्रमत्वात् । घटादेर्मृदाद्युपादानकत्वदर्शनात् उपादानातिरिक्तघटसामग्र्यां स-

त्वापपि स्वर्णघटाद्यर्थिना स्वर्णादिग्रहणात् ब्रह्मणोऽग्रहणाच्च ।

नचाभ्युपगमस्य निर्युक्तिकत्वेऽपि 'सर्वं खल्विदं ब्रह्म'त्यादि-श्रुतिप्रमाणकत्वान्न भ्रमत्वमिति वाच्यम् । युक्तिप्रधानावसरे श्रुति-प्रदर्शनस्यावसराभावात् । तस्य 'तज्जलानिति शान्त उपासीते'त्यु-पासनाविधिशेषत्वेन तत्र तात्पर्याभावात् । उभयत्र तात्पर्यकल्पने वाक्यभेदापत्तेः । 'मायां तु प्रकृतिं विद्या'दिति श्रुतिविरोधाच्च ।

यत्तु 'नच जगन्न ब्रह्मप्रकृतिकमचेतनत्वादविद्यावदिति दृष्टा-न्तोऽस्तीति वाच्यम् । अनादित्वस्योपाधित्वात् । नच ध्वंसे साध्या-व्यापकता, तस्यापि कार्यसंस्कारात्मकस्य भावत्वेन ब्रह्मप्रकृति-कत्वात् । अभावत्वाग्रहे चानादिभावत्वस्योपाधित्वादिति । तन्न । तृतीये तु दृष्टान्ताभाव इति भाष्यस्य दत्तजलाञ्जलितापत्तेः' । नचा-त्रैव भाष्यतात्पर्यमिति वाच्यम् तत्र तात्पर्यग्राहकमानाभावात् । नच अविद्याया आध्यासिकसम्बन्धं विना चैतन्यभास्यत्वानुपपत्त्या-ऽध्यस्तत्वावश्यकत्वे चैतन्येनान्वितत्वसम्भवेन दृष्टान्तत्वासम्भवा-द्भाष्यमादेयमेवेति वाच्यम् । एवं सत्यविद्यावदिति तदुक्तेरना-देयतापत्तेः ।

यदपि स्वतन्त्रमचेतनं कारणत्वेन नानुमातव्यं तस्य सृष्ट्य-र्थं प्रवृत्तेरनुपपत्तेः, गुणानां किल साम्यावस्था तत्त्वानां प्रलय-स्तदा न किञ्चित्कार्यं भवति प्रलयाभावप्रसंगात्, किन्त्वादौ सा-म्यच्युतिरूपवैषम्यं भवति ततः कस्यचिद्गुणस्याङ्गित्वमुद्भूतत्वेन प्राधान्यं कस्यचिदङ्गत्वं शेषत्वमित्यङ्गाङ्गीभावो भवति । तस्मिन् सति महदादिकार्योत्पादनात्मिका प्रवृत्तिस्तदनुपपत्तेस्तया विविधकार्य-न्यासरूपरचनानुपपत्तेः 'प्रवृत्तेश्च' इति चकारेणानुपपत्तिपदमनुषज्य सूत्रं योजनीयमयं दोषस्तु कल्पत्रयसाधारण इति तदपि न । जगतोऽव्यक्तोपादानकत्वानुमाने स्वतन्त्रस्याचेतनस्य सृष्ट्यर्थं प्र-वृत्त्यनुपपत्तेर्व्यभिचारादिविधया दोषत्वासम्भवात् । चेतनस्या-

धिष्ठातृत्वं यथा न सम्भवति तथा वक्ष्यते इत्युक्तं पुरस्तात् ।

*एतेनैतदनुमाने दोषाभावेऽपि चेतनं नाचेतनाधिष्ठातृ निर्गुणत्वादित्यनुमाने चेतनं अचेतनाधिष्ठातृ चेतनत्वात्कुलालादिवदिति सत्प्रतिपक्षविधया दोषत्वं सम्भवतीति परास्तम् । चेतनस्याचेतनाधिष्ठातृत्वासम्भवस्य वक्ष्यमाणत्वात् ।

यदपि द्वितीये चासिद्धमिति तन्न । आकाशं सदित्यादिप्रतीतेः कालत्रयाबाध्यत्वरूपसत्ताविषयकत्वासम्भवात् । नहि कार्यं कालत्रयाबाध्यञ्चेति सम्भवति । इदानीमिदं कार्यं न तदानीमित्यादिप्रतीतेः वर्त्तमानमात्रग्राहिणा प्रत्यक्षेण कालत्रयाबाध्यत्वरूपसत्त्वग्रहणासम्भवाच्च ।

नन्वेवं 'प्राणा वै सत्यं तेषामेष सत्य'मिति प्रधानभूतप्राणग्रहणोपलक्षितस्य कृत्स्नप्रपञ्चस्य यत्सत्यत्वं तत्परमात्मन एवेति बोधनपरश्रुतिविरोधः । नच प्राणग्रहणस्योपलक्षणत्वे मानाभाव इति वाच्यम् । ब्रह्मस्वरूपप्रतिपादनपरे वाक्ये प्रपञ्चैकदेशभूतप्राणग्रहणे प्रयोजनाभावेन कृत्स्नप्रपञ्चोपलक्षणे तु सत्यत्वेन प्रसिद्धप्रपञ्चाधिष्ठानतया ब्रह्मैव परमार्थसत्यं नतु प्रपञ्चस्तस्य श्रुतिबाधितत्वेन परमार्थसत्यत्वायोगादिति अद्वितीयब्रह्मप्रमितिरूपप्रयोजनसत्त्वेनोपलक्षणत्वे तात्पर्यावधारणे एतच्छ्रुतेरेव मानत्वात् ।

इति चेन्न । राजराजो मन्मथमन्मथः श्रीराम इत्यादिवत् उत्कर्षापकर्षप्रतीतेः । नच राजत्वं पालकत्वरूपं नियन्तृत्वं तच्च पाल्यदेशसापेक्षं, तथाच भूपे देशविषयकपालनानुकूलकृतिमत्त्वमुत्कर्षः । एवं मन्मथो नारायणपुत्रः सुन्दरस्तदपेक्षयोत्कृष्टरूपादिमत्त्वमेव राम उत्कर्ष इति प्रतीतिसम्भवेऽपि प्राणा वै सत्यमित्यत्र तादृशतात्पर्यग्राहकाभावेनोत्कर्षापकर्षौ च सम्भवत इति वाच्यम् । 'श्रोत्रस्य श्रोत्रं, मनसो मन' इत्यादौ श्रोत्रस्य श्रोत्राप्रसिद्धिवदत्रापि सत्यस्य सत्याप्रसिद्धेस्तद्ग्राहकत्वात् ।

परतराव्यक्तकल्पनायां प्रमाणाभावात् ॥

इतश्च विवादाध्यासिता भेदाः अव्यक्तकारणवन्तः "समन्वयात्" । भिन्नानां समानरूपता समन्वयः । सुखदुःखमोहसमन्विता हि बुद्ध्यादयो ऽध्यवसायादिलक्षणाः प्रतीयन्ते । यानि च यद्रूपसमनुगतानि तानि त-

न च प्राणादेः सत्त्वं प्राणः सन् घटः सन्नित्यनुगतप्रतीत्या सत्ताजातिरूपमभ्युपेयं तस्य सर्वत्रैकरूपतया तत्रोत्कर्षाद्यसम्भव इति वाच्यम् । तत्रासम्भवेऽपीहेदानीं प्राणोऽस्तीत्यादिप्रतीत्या प्राणे प्रतीयमानतत्तद्देशकालसम्बन्धरूपं, प्राणो नास्तीत्यादौ प्राणास्तितानिषेधत्वेन रूपेण प्राणस्वरूपनिषेधस्यैवानुभवेन प्राणादिस्वरूपं वा सत्त्वमभ्युपेयं तयोर्भूयोदेशकालाल्पदेशकालसापेक्षतया तत्रोत्कर्षादिसम्भवात् ।

चेतनस्य सुखाद्युपादानत्वनिराकरणाय परमाव्यक्तस्य सुखाद्यात्मकत्वं साधयति—इतश्चेत्यादिना । अनुमानप्रकारमाह—विवादेति । भिन्नानां विशेषकार्याणां घटशरावादीनां सरूपता कारणमृदाद्यात्मकता । तथाच कार्यत्वे सति तदात्मकत्वादिति हेतुरित्यर्थः । प्रधाने व्यभिचारवारणाय सत्यन्तं । विशेष्यनिवेशाच्च न चैतन्येनार्थान्तरापत्तिः । कारणे सुखाद्यात्मत्वासिद्धये कार्ये सुखादिसमन्वयं दर्शयति—सुखेत्यादि । बुद्ध्यादय इत्यत्रादिपदेन कार्यमात्रं गृह्यते । यथा कार्यमात्रस्य सुखाद्यात्मकत्वं तथोक्तं प्राक् । अत्र सामान्यव्याप्तिमाह—यानिचेति । यद्रूपसमनुगतानि—यत्स्वभावात्मकानि । एतेनयद्यदन्वितं तत्तदुपादानकमिति न व्याप्तिः । जात्यन्वितानामपि तदुपादानत्वाभावात् । येन द्रव्येण यदन्वितं तत्तदुपादानकमित्यपि न, द्रव्यपरिभाषाया अप्रयोजकत्वात् । तत्परिभाषावलम्बनेऽपि सुखादीनामद्रव्यतया तदुपादानत्वा-

त्स्वभावाव्यक्तकारणानि, यथा मृद्धेमपिण्डसमनुगता घटमुकुटादयो मृद्धेमपिण्डाव्यक्तकारणका इति—कारणमस्त्यव्यक्तं भेदानामिति सिद्धम् ॥ १५ ॥

अव्यक्तं साधयित्वा अस्य प्रवृत्तिप्रकारमाह—"प्रवर्तते त्रिगुणतः" इति। प्रतिसर्गावस्थायां सत्त्वं रजस्तमश्च सदृशपरिणामानि भवन्ति। परिणामस्वभावा हि गुणा नापरिणमय्य क्षणमप्यवतिष्ठन्ते। तस्मात् सत्त्वं

---

सिद्धेरिति नवीनानामद्वैतानन्दस्वामिनामुक्तिः परास्ता। 'भिन्नानां सरूपता समन्वय' इति मिश्रोक्तस्य तद्भिन्नत्वे सति तदात्मकत्मकत्वरूपसमन्वयस्याज्ञानात्। सामान्यतस्तदुपदानकत्वसाधने कारणकार्यविभागादित्यादिना पौनरुक्त्यापत्तेश्च। अत एव मिश्रैः 'तत्स्वभावाव्यक्तकारणानी'त्युक्तम्। दृष्टान्तमाह—यथेति। उपसंहरति। कारणमस्तीति ॥ १५ ॥

नह्येकस्मात्कार्योत्पत्तिर्दृश्यते। नहि चेतनानधिष्ठितस्य च प्रवृत्तिः सम्भवति कुलालाद्यनधिष्ठितस्य विचलितमृदादेः घटशरावाद्यभिमुखपिण्डादिप्रवृत्त्यदर्शनात् तदधिष्ठितस्यैव च दर्शनात् अदृष्टसिद्धेर्दृष्टानुसारित्वादित्याशङ्कायामुपजीवकत्वसंगतिसूचनाय पूर्वोक्तमनुवदन् आर्यामवतारयति—अव्यक्तं साधयित्वेति। त्रिगुणात्मके प्रधाने बहुत्वसत्वादाद्यं दोषं परिहरति—प्रतिसर्गावस्थायामिति। प्रतिसर्गः महदादिविशेषकार्यानाधारकालः। महदादिकार्यलक्षणपरिणामापेक्षया वैलक्षण्यमाह—सदृशेति। सदृशं सरूपपरिणाममित्यर्थः। पुरुषनैरपेक्ष्येण द्वितीयदोषं परिहरति। परिणामस्वभावका इति। तत्र तसस्तृतीयार्थत्वं दर्शयन् प्रवर्त्तते इत्यस्य परिणामपरत्वमाह—तस्मादित्यादिना।

यदुक्तकुलालाद्यधिष्ठितस्यैव प्रवृत्तिदर्शनादिति। तत्र किङ्कुलालशब्देन कुलालदेहातिरिक्तश्चेतनोऽभिमतः किंवा देहः किं वोभ-

यम् । नाद्यः । केवलचेतनस्य प्रवृत्त्याश्रयतया तत्प्रयोजकतया वेन्द्रियेणाग्रहणात् । न द्वितीयः । तस्याचेतनत्वात् । मृदादिनिष्ठप्रवृत्ते र्देहाधीनप्रवृत्तिकत्वेऽपि न चेतनाधीनप्रवृत्तित्वसिद्धिः । न तृतीयः । मृतशरीरविशिष्टेन प्रवृत्त्यदर्शनात् ।

एतेन 'रचनानुपपत्तेश्च नानुमान' मित्यधिकरणे (१)मृतशरीरे प्रवृत्त्यदर्शनात् तद्विपर्यये च प्रवृत्तिदर्शनादन्वयव्यतिरेकसहकृतप्रत्यक्षेण प्रवृत्तेश्चेतनहेतुकत्वे निश्चिते मृदादिनिष्ठप्रवृत्तेरपि चेतनहेतुत्वानुमानादिति कल्पतरुकारोक्तं परास्तम् । मृतशरीरेऽपि व्यापकस्य चैतन्यस्य व्यतिरेकासम्भवात् । आत्मनो मध्यमपरिमाणाङ्गीकारेऽनित्यत्वापत्तेरणुपरिमाणाङ्गीकारे च जाह्नवीजलनिमग्नस्य सर्वशरीरावच्छेदेन शैत्यानुपलम्भप्रसङ्गात् । अन्वयमात्रेण तस्य प्रवृत्तिहेतुकत्वाभ्युपगमे आकाशस्यापि तथापत्तेः । अत एव परमाण्वादयो हि चेतनेनाप्रयोजिताः प्रवर्तन्तेऽचेतनत्वाद्वास्यादिवदित्युदयनाचार्योक्तमनुमानं परास्तम् । उक्तविकल्पग्रासात् ।

यत्तु कुसुमाञ्जलिप्रकाशकाराः-सर्गाद्यकालीनद्व्यणुकोत्पादकं कर्म स्वसमानकालीनप्रयत्नजन्यं कर्मत्वाच्चेष्टावदिति । विपक्षे बाधकं चेतनव्यापारस्यान्यत्रोपलब्धस्याभावे क्रियारूपत्वाभाव इति उदयनाचार्योक्तानुमानस्य तात्पर्यमाहुस्तन्न । हिताहितप्राप्तिपरिहारफलकक्रियात्वस्य साध्यव्यापकस्यैश्वरे फलाभावेन पक्षे साधनाव्यापकत्वेन चोपाधित्वात् । नच तस्य विषभक्षणोद्बन्धनक्रियायामहितमरणादिप्रापिकायां साध्याव्यापकत्वमिति वाच्यम् । तत्र कुष्ठादिमहारोगराजदुःखाद्यभावस्यैवोद्देश्यत्वेन तमादायैव साध्यव्यापकत्वनिर्वाहात् । तत्र मरणस्य नान्तरीयकतया मुख्यफलत्वाभावाच्च ।

न च चेतनसापेक्षभ्रमजन्यक्रियायाः हितरज्ज्वप्रापकत्वाद-

(१) ब्रह्मसूत्रे अ० २ पा० २ अधि० १ सू० १ ।

हितसर्पपरिहारकत्वाच्च । तत्र साध्याव्यापकत्वमिति वाच्यम् । भ्रमाजन्यत्वावच्छिन्नसाध्यव्यापकत्वस्य तत्रापि सत्त्वात् । शरीरसमवेतक्रियात्वस्योपाधित्वाच्च । नच शरीरावयवक्रियायां साध्याव्यापकत्वमिति वाच्यम् । अनारब्धशरीरावयवक्रियायां साध्यसत्त्वात् । आरब्धशरीरावयवेषु शरीरनिष्ठक्रियातिरिक्तक्रियायां मानाभावात् । अतएव चलत्सु यत्किञ्चिदङ्गेषु शरीरं चलतीति प्रत्ययः । न च शिरश्चलति, न शरीरमिति बाधकप्रतीतिसत्त्वाच्च शरीरं चलतीति प्रत्ययो भ्रम इति वाच्यम् । विनिगमनाविरहेणोभयोर्भ्रमत्वकल्पनापेक्षया शिरश्चलतीत्यस्य शिरोऽवच्छेदेन शरीरं चलति, न शरीरं चलतीत्यस्य सर्वावयवावच्छेदेन शरीरं न चलतीति कल्पनाया लघीयस्त्वात् ।

वस्तुतस्तु हस्तपादादिक्रियातिरिक्तशरीरक्रिया नास्त्येव । तथा हि निश्चले हस्तपादादौ शरीरचलनादर्शनात् । चलत्सु च चलनदर्शनात् । आरब्धशरीरावयवक्रिययैव निर्वाहेऽतिरिक्तक्रियाकल्पनायां मानाभावः । तथाच तत्क्रियैव शरीरक्रिया तत्र चेनतस्य साध्याव्यापकत्वम् । तथा च परमाणुकर्म न प्रयत्नजन्यं भ्रमाजन्यचेष्टेतरक्रियात्वात् शरीरावृत्तिक्रियात्वाद्वा विरुद्धप्रयत्नवतोऽपि जलादिना वाह्यमानशरीरवृत्तिक्रियावत् ज्वलनादिक्रियावद्वा । विपक्षे परमाणुकर्मणो हिताहितप्राप्तिपरिहारानुकूलत्वापत्तिर्बाधिका शरीरजन्यत्वापत्तिर्वा । भ्रमाजन्यप्रयत्नजन्यक्रियात्वस्य तद्व्याप्यत्वात् । तेन भ्रमजन्यक्रियायां न व्यभिचारः ।

यत्तु । चेष्टात्वस्य भोक्तृप्रयत्नजन्यत्वव्यापकत्वात् शरीरेतरक्रियायाश्च चेष्टात्वाभावाद्भोक्तृप्रयत्नजन्यत्वमेव निवर्त्तते, क्रियामात्रे तु प्रयत्नजन्यत्वं स्यादेवेति । तन्न । भ्रमजन्यक्रियायाश्चेष्टात्वाभावेऽपि भोक्तृप्रयत्नजन्यत्वसत्त्वेन चेष्टात्वस्य भोक्तृप्रयत्नजन्यत्वव्यापकत्वाभावात्तन्निवृत्त्या तन्निवृत्त्यसम्भवाच्चेष्टात्वस्य भ्रमाजन्यभोक्तृ-

प्रयत्नजन्यत्वव्यापकत्वेऽपि प्रयत्नजन्यत्वव्यापकत्वापरिहारेण तद्भावेन प्रयत्नजन्यत्वाभावसाधने दोषाभावात् ।

किञ्च यदीश्वरः कर्त्ता स्यात्तर्हि शरीरी स्यात् रागादिमांश्च स्यात् । यदीश्वरश्चेतनः स्यात्तर्ह्यनित्यज्ञानादिमान् स्यादिति । नचेष्टापत्तिः शरीरस्यापि जन्यतयाऽन्योन्याश्रयाद्यापत्तेः । सर्गाद्यकाले मानुषादिव्यक्तिविशेषाभावान्मानुषादिव्यक्तिविशेषरचनानुपपत्तिः । तादृशनियमानङ्गीकारे इदानीमपि मानुषस्त्र्याद्यभावेऽपि मानुषाद्युत्पत्त्यापत्तेः । पुरुषप्रयत्नं विनैव घटादेरुत्पत्त्यापत्तेश्च । नच कुलालादेरपि तत्कर्तृत्वान्न दोष इति वाच्यम् । भुवनादेरपि तन्निदर्शनेन द्विकर्तृत्वापत्तेः । नचेष्टापत्तिः अनवस्थापत्तेः । यथा प्रत्यक्षपरिदृष्टकुलालादिकर्तृकेऽपि घटादौ तावदेकोपपद्यमानोत्पादे चेतनान्तरमीश्वरस्तत्कर्त्तारं कुलालमधिष्ठातुं कल्पते तथेश्वरमप्यधिष्ठातुमीश्वरान्तरमन्यं तमित्यनवस्थेति ।

किंचेश्वरप्रयत्नस्याजन्यत्वे कृतमीश्वरस्य ज्ञानेन चिकीर्षाप्रयत्नोत्पादानुपयोगिना । कृतं च चिकीर्षया प्रयत्नोत्पादानुपयोगिन्या । नच प्रयत्नवत्ज्ञानचिकीर्षयोः साक्षात्कार्योत्पादनाङ्गत्वम् । अथानित्यौ ततस्तयोरुत्पत्तिकारणं वाच्यम् ।

ननु नित्यं ज्ञानमेवोत्पत्तिमूलकारणमस्ति, तत्किमपरेण कारणेन अहो बत प्रमादो यदयमात्ममनः संयोगविशेषासमवायिकारणाविच्छाप्रयत्नौ तमन्तरेण ज्ञानमात्रादेव भवत इत्यपि वक्तुमध्यवसितः । तथा सत्ययमन्तरेणापि परमाणून्कार्यं जनयेत् । नच सन्त्येवास्य मुक्तात्ममनोभिः संयोगास्तेन तत्सहायस्तत्र चिकीर्षा प्रयत्नप्रपञ्चं युगपत्प्रसूते तत्कार्योपजननायेतिवाच्यम् । तेषामनधिष्ठितानां कार्यजनकत्वे तेष्वेव व्यभिचारात् तेषां चेतनाधिष्ठितत्वस्य च प्रयत्नमन्तरेणासम्भवात् । इन्द्रियजन्यनिदर्शनं निरपेक्ष्य स्वादृष्टचरस्य नित्यज्ञानस्य कल्पनासम्भवश्च । भोक्तुः

सत्त्वरूपतया रजो रजोरूपतया तमस्तमोरूपतया प्रति-
सर्गावस्थायामपि प्रवर्तते। तदिदमुक्तम् "त्रिगुणतः" इति

प्रयत्नासम्भवे तद्दृष्टान्तेन प्रयत्नजन्यत्वसाधनासम्भवाच्च।

तथाहि भोक्तृप्रयत्नो जन्यो, न जन्यो वा। नाद्य स्तत्रैवानभ्यु पगमात्। नान्त्यः। ज्ञानस्यात्ममनःसंयोगद्वारा प्रयत्नजन्यत्वात् प्रयत्नस्य च चिकीर्षाद्वारा ज्ञानजन्यत्वादन्योन्याश्रयचक्रकानवस्थाप-त्तेः। पुरीतद्देशावच्छेदेनात्ममनःसंयोगं सुषुप्तिरिति तत्र सिद्धांत-स्तथाच यदा सुषुप्तिस्तदात्मनि ज्ञानाभावेन जन्यप्रयत्नाद्यसम्भवा-त्। प्रयत्नं विनैव मनसि बहिर्देशावच्छेदेनात्ममनःसंयोगानुकूलां क्रियामभ्युपेत्य यत्नाद्यभ्युपगमे तेनैव क्रियायां हेतोर्व्यभिचारित्वाप-त्तेः। नच जीवनयोनियत्नादेव तत्र क्रियेति वाच्यम्। श्वासप्रश्वा-सान्यथानुपपत्त्या कल्प्यमानस्य श्वासाद्यतिरिक्तफलकल्पने माना-भावात्। तथा कल्पने तेनैव सर्वकार्यनिर्वाहे तदतिरिक्तस्य जी-वप्रयत्नस्येश्वरप्रयत्नस्य च वैयर्थ्यापत्तेश्च।

कल्प्यमानोऽप्यजन्यो जन्यो वा, नाद्यो मरणाभावप्रसंगात्। सु-षुप्तिसमये तदभावेन तदुत्तरमव्युत्थानापत्तेश्च। एवमुदासीनादिदशो-त्तरमपि बोध्यम्। नचेश्वरप्रयत्नात्तत्र क्रियेति वाच्यम्। अन्योन्याश्र-यात्। क्वचित्प्रयत्नं विना क्रियाङ्गीकारे व्यभिचारापत्तेरलमतिजल्प-नेन। नच जीवनयोन्यदृष्टस्य प्रतिबन्धकत्वाद्दोषः। तेनैव सर्वप्रवृत्ति-निर्वाहे तदतिरिक्तप्रयत्नवैयर्थ्यदोषानिवृत्तेः। नान्त्यः। तत्प्रागभा-वादिसमये मरणप्रसंगात्। तदिदमुक्तमिति। तत् तस्मात् यतो गुणाः क्षणमप्यपरिणम्य न तिष्ठन्ति तस्मादित्यर्थः। त्रिपदेन पर-स्परानिरपेक्षतया परस्परविलक्षणपरिणाम इति सूचितम्। अतएवा-ग्रिमसमुदायपरिणामभेदान्न पौनरुक्त्यम्। ननु स्वस्वलक्षणपरिणा-माभ्युपगमेऽपि विरूपो महदाद्येकरूपो धर्माख्यपरिणामो न स्यान्नि-मित्तान्तराभावादित्याशङ्कायां समुदयादिति मूलमवतारयति—प्रवृ-

प्रवृत्त्यन्तरमाह—"समुदयाच्च" इति । समेत्य उदयः 'समुदयः' समवायः । स च गुणानां न गुणप्रधानभावमन्तरेण सम्भवति, न च गुणप्रधानभावौ वैषम्यं विना, न च वैषम्यमुपमर्द्योपमर्दकभावादृते, इति महदादिभावेन प्रवृत्तिर्विनीता ॥

त्यन्तरमिति । प्रवृत्त्यन्तरं–उक्तलक्षणपरिणामं,तथाच मृज्जलसंवलितबीजाद्धङ्कुरपरिणामान्तरितपत्रपुष्पादिविरूपपरिणामान्तरदर्शनेनात्रापि बहुतरपरिणामानामेव निमित्तत्वं कल्प्यते इति भावः ।

ननु 'समुदायः समुदयः समवायश्चयो गण' इति कोशेन समुदयशब्देन बोधितस्य समुदायस्य चैतन्मते सर्वदा सत्त्वेन तस्य विसदृशपरिणामहेतुत्वं न निर्वहत्यतो ऽवयवस्यार्थमाह–समेत्येति । उदयः परिणामः। तथाच पूर्वसंसर्गित्वेऽप्यनागतेन गुणप्रधानभावेन समेत्य संभूय महदाद्यव्यवहितपूर्वक्षणवृत्त्युच्छून्यताख्यपरिणामोत्तरं महदादिरूपेण परिणमते,उच्छून्यताख्यपरिणामोत्तरमेव मृज्जलादिसंवलितबीजादङ्कुरोत्पत्तिदर्शनेन तथैव कल्पनात् । बहुतरपरिणामनिमित्तकोच्छून्यताख्यपरिणामापरपर्यायात्समुदायान्महदुत्पत्तिरिति भावः । समुदयाद्गुणप्रधानभावेन मिलनादित्यन्ये । तदेवदर्शयति–सचेत्यादिना । स परिणामविशेषरूपः । गुणप्रधानभावो नामोपकार्य्योपकारकभावः सोऽपि परिणामविशेष एव । तत्र च बहुतरसदृशपरिणाम एव निमित्तं, तत्र च कालविशेष एव नियामकः । वैषम्यं सदृशपरिणामत्यागरूपपरिणामविशेषः । उपमर्द्योति ।

ननूपमर्द्योपमर्दकभावो नाम प्रतिबन्ध्यप्रतिबन्धकभावः तत्र तत्प्रतिबन्धकत्वं तत्कार्यानुत्पादकतावच्छेदकधर्मवत्त्वं तथाच प्रतिबन्ध्यस्य कार्याक्षमत्वे चलं गुणवृत्तमिति विरोध इति चेन्न तत्रापि प्रधानकार्यानुकूलपरिणामाङ्गीकारात् । अत्र चभावपदमुभयत्र संबध्यते भावश्च परिणामविशेषः । नतु नाश्यनाशकभावो गुणानां नित्यत्वात् । अभि-

स्यादेतत्—कथमेकरूपाणां गुणानामनेकरूपा प्रवृत्तिरि-त्यत आह—" परिणामतः सलिलवत् " इति । यथा हि वारिदविमुक्तमुदकमेकरसमपि तत्तद्भूविकारानासाद्य नारिकेलतालतालीबिल्वचिरबिल्वतिन्दुकामलकप्राचीनामलककपित्थफलरसतया परिणमन्मधुराम्ल-

भूयमानत्वमभिभावकता च स्वपरिणामविशेषं विना न भवेदित्यर्थः। तथाच परिणामविशेषा एवात्यन्तविसदृशपरिणामनिमित्तमित्यर्थः।

भाष्यकारास्तु काल एव निमित्तमित्याहुः । नचैवं—

गुणसाम्यात्ततस्तस्मात्क्षेत्रज्ञाधिष्ठितान्मुने ।
गुणव्यञ्जनसंभूतिः सर्गकाले द्विजोत्तम ॥

इति विष्णुपुराणविरोधः । क्षेत्रज्ञाधिष्ठितत्वस्य पुरुषार्थतत्संयोगवत्त्वस्यैव विवक्षितत्वात् । गुणव्यञ्जनं महत्तत्वं । कारणतया त्रिगुणात्मकप्रधानव्यञ्जकत्वाद्व्यञ्जनं व्यञ्जकमित्यर्थः ।

ननु गुणप्रधानभावेन मिलित्वा महत्त्वजनकत्वेऽपि तत्र सत्त्वस्य प्राधान्यं वाच्यम् । तथाच सत्त्वप्रधानमहत्तत्त्वसमष्टिजनकसामग्रीघटकगुणानां नानासामग्रीष्वपि सत्त्वप्रधानरजस्तमस्त्वेनैकरूपतयैकजातीयसामग्रीत्वापत्तौ एकरूपसामग्री एकरूपमेव कार्यं जनयतीति नियमादेकरूपमेव महत्तत्वसमष्टिकार्यं स्यात् नचेष्टापत्तिः । महत्त्वानां परस्पराविलक्षणाना(१)मनर्थत्वादित्याशङ्कते—स्यादेतदिति । नहि दृष्टेऽनुपपन्नं नामेतिन्यायेन सहकारिभेदेन सामग्रीभेद इति समाधत्ते प्रथमतो दृष्टान्तं विवृणोति—यथाहीति । विपरिणामत इत्यस्य तत्तद्भूपरिणामनारिकेलादिसहकारिभेदादित्यर्थः । एकरसं मधुरसं । ताली तालवृक्षविशेषः चिरबिल्वो नक्तमालः । अत्र तिन्दुकान्तानां प्रत्येकं मधुररसवत्त्वाविशेषेऽपि अवान्तरवैलक्षण्यसूचनाय बहूनां ग्रहणं प्राचीनामलको

(१) अविलक्षणानामनुभवादिति क्वचित्पाठः ।

लवणतिक्तकषायकटुतया विकल्पते, एवमेकैकगुणसमुद्भवात् प्रधानगुणाः(१) परिणामभेदात् प्रवर्तयन्ति। तदिदमुक्तम्-"प्रतिप्रतिगुणाश्रयविशेषात्"। एकैकगुणाश्रयेण यो विशेषस्तस्मादित्यर्थः॥ १५॥ १६॥

किञ्चिकोजीवरफलम्॥

तिक्तकषाय इत्यादि॥ कालभेदेन यथायोग्येष्वन्वयः। विकल्पते विविधाकारेण कल्पते परिणमते इत्यर्थः॥

दार्ष्टान्तिकं विवरीतुमाह-एवमिति। अन्यतमस्य प्राधान्ये हेतुमाह-एकैकगुणसमुद्भवादिति। समुद्भवो नाम स्वस्वमुख्यकार्याव्यवहितपूर्वक्षणवृत्त्युच्छून्यताख्यपरिणामविशेषः। प्रधानगुणं-उद्बुद्धगुणं। अप्रधानगुणत्वे हेतुमाह-आश्रित्येति। तदाश्रयत्वन्तत्तत्कार्यानुकूलपरिणामवत्त्वम्। अप्रधानगुणा अभिभूतगुणाः स्वस्वमुख्यकार्याक्षमा इत्यर्थः। एतेनैकेन प्रधानगुणेन जनितस्य त्रैगुण्यं न स्यादिति परास्तम्। कार्यस्य गुणत्रयपरिणामत्वाङ्गीकारात्। परिणामभेदात्-सत्त्वादिपरिणामविशेषात्। प्रवर्त्तयन्तीति। प्रधानं गुणं प्रवर्त्तते अप्रधानाः प्रवर्त्तयन्ति सहकारिणो भवन्तीत्यर्थः। सहकारित्वं च परिणामद्वारैव नतु ताटस्थ्येन। अत एव परिणामभेदादिति क्वचित्पाठः। उक्तार्थपरत्वं चतुर्थचरणस्याह-तदिदमुक्तमिति। तत्तस्मात् यस्माद् गुणविमर्दविशेषमाश्रित्य प्रधानगुणः प्रवर्त्तते तस्मादित्यर्थः॥ एकैकेति। एकैकगुण आश्रयो यस्य स एकैकगुणाश्रय एतादृशो यो विशेषः गुणविमर्दाख्यपरिणामविशेषस्तस्मादित्यर्थः॥ १६॥

ननु पुरुषोऽस्तीति स्वरूपतः पुरुषसाधनं न सम्भवति चेतनपुरुषलोपे जगदान्ध्यप्रसङ्गेन भोक्तर्यहंपदार्थे सर्वेषामविवादात्। अन्य-

(१) प्रधानगुणमाश्रित्याप्रधानगुणाः परिणामभेदानिति पाठः टीकाकारसंमतोऽत्र बोध्यः।

ये तु तौष्टिका अव्यक्तं वा महान्तं वा ऽहङ्कारं वा इन्द्रियाणि वा भूतानि वा ऽऽत्मानमभिमन्यमानास्तान्येवोपासते तान् प्रत्याह—

संघातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात् ।
पुरुषो ऽस्ति भोक्तृभावात्कैवल्यार्थं प्रवृत्तेश्च ॥ १७ ॥

---

क्ताद्यतिरिक्तत्वसाधने च कणभक्षाक्षचरणादिवादिनः प्रति सिद्धसाधनमित्याशङ्कां दूरीकर्तुमुपोद्घातसङ्गत्या संघातपरार्थत्वादिसार्यामवतारयति—येत्वित्यादिना । तथा च तौष्टिकान्प्रत्येवाव्यक्ताद्यतिरिक्तत्वसाधने न सिद्धसाधनमित्यर्थः ।

ननु आध्यात्मिकबाह्यभेदेन वक्ष्यमाणा नवधा तुष्टिर्येषां ते तौष्टिकाः तेषां मोक्षसाधनज्ञानोपकारिध्यानाभ्यासप्रव्रज्याद्यननुष्ठानेन तप्यमानानां तत्साधनं विनापि प्रकृत्युपादानकालभाग्यसाधनेनात्मज्ञानं भविष्यतीत्यसदुपदेशेन तापनिवृत्तिरूपा सा प्रकृत्याद्यतिरिक्तात्मानमधिकृत्य प्रवृत्तत्वात् आद्या. सुखरूपमोक्षमिच्छतां तदुपायधनोपकार्यजनाद्यननुष्ठानेन तप्यमानानां सुखमुपरमादेव भविष्यतीत्यसदुपदेशेन तापनिवृत्तिरूपा सा द्वितीयापि सम्भवतीति तान्प्रत्यपि प्रकृत्यतिरिक्तत्वसाधने सिद्धसाधनमस्त्येवेति चेन्न ।

पूर्णं शतसहस्रं तत्तिष्ठन्त्यव्यक्तचिन्तकाः ।
दश मन्वतराणीह तिष्ठन्तीन्द्रियचिन्तकाः ।
भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः ।
बौद्धा दशसहस्राणि तिष्ठन्ति विगतज्वराः ।

इत्यादिपुराणमूलकेन शमदमादिसाधनमन्तरेणाव्यक्तादिभूतान्तेषु पुरुषबुद्ध्युपासनयैव गतज्वरत्वरूपमोक्षः सम्भवतीत्यसदुपदेशेनापि तुष्टिसम्भवे अव्यक्तादावात्माभिमानसम्भवादित्यभिप्रेत्याह—अव्यक्तमित्यादि ।

"संघातपरार्थत्वात्" इति । पुरुषो ऽस्ति, अव्यक्तादेर्व्यतिरिक्तः । कुतः ? "संघातपरार्थत्वात्" । अव्यक्तमहदहङ्कारादयः परार्थाः, संघातत्वात्, शयनासनाभ्यङ्गादिवत्, सुखदुःखमोहात्मकतया ऽव्यक्तादयः सर्वे संघाताः ॥

धर्मिणोविवादाभावादाह—अव्यक्तादेर्व्यतिरिक्त इति । ब्राह्मणोऽहं गौरोऽहं काणोऽहं गच्छामि तिष्ठामि सुखी दुखी वाहमित्यभिमानवानात्मनोऽव्यक्ताद्यतिरिक्तत्वमसहमानः पृच्छति—कुत इति । उत्तरमाह-संघातेति । ननु संघातपरार्थत्वस्य पुरुषरूपपक्षेऽवृत्तित्वान्न तत्साधकत्वमिति चेन्न । ईश्वरोऽस्तीति वादिनोक्ते कुत इति प्रतिवादिना पृष्टे कर्तृजन्यत्वनियमादित्यादिवदेतादृशप्रतिज्ञादेः प्रकृतन्यायानवयवत्वात् इत्यभिप्रायेणैव न्यायावयवप्रतिज्ञां दर्शयति—अव्यक्तमहदहंकारादय इति । न चाव्यक्तादय इत्येव वक्तुमुचितमिति वाच्यम् । प्रत्येकमपि पक्षतासम्भवसूचनाय तथोपादानात् ।

परार्थाः । स्वातिरिक्तदृष्टशेषाः । तत्त्वं च सुखदुःखान्यतरसाक्षात्कारभोगरूपप्रयोजनार्थत्वम् । भोगस्य च जडे बाधाच्चेतनस्तद्वान्पुरुषोऽस्तीति भावः । शयनं शय्या । ननुसंघातत्वमारम्भकसंयोगसम्बन्धेन संहन्यमानत्वमारम्भकसंयोगवत्त्वमिति यावत् । तच्चाव्यक्तेऽन्त्यावयविनि चाव्याप्तंसंयोगस्योभयनिरूपणाधीनतया स्वेतरपुरुषादिसत्त्वेऽपि तस्यारम्भकसंयोगानिरूपकत्वात् ।अन्त्यावयविनश्चारम्भकसंयोगाभावादित्याशङ्क्याह—सुखेत्यादि । तथाचगुणत्रयात्मकत्वादव्यक्ते अवयवावयवभेदाच्चान्त्यावयविनि नाव्याप्तिरित्यर्थः । प्रयोगस्तु अव्यक्तादयः संघातास्सुखाद्यात्मकत्वात् सम्प्रतिपन्नवदिति ॥

भाष्यकारास्तु । पातञ्जले च 'परार्थं संहत्यकारित्वा'दितिसूत्रं

स्यादेतत्–शयनासनादयः संघाताः संहतशरीराद्य-

तत्तु यथाश्रुतमेवान्यावयविसाधारणम् । इतरसाहित्येनार्थक्रियाका-रित्वस्यैव संहत्यकारिताशब्दार्थत्वात् । पुरुषस्तु विषयप्रकाशरूपा-यां स्वार्थक्रियायां नान्यदपेक्षते नित्यप्रकाशरूपत्वात् । पुरुषस्यार्थ-सम्बन्धमात्रे बुद्धिवृत्त्यपेक्षणात् । सम्बन्धस्तु नामाधारणार्थक्रि-येत्याहुः । तथाविधसूत्रस्येदानीमनुपलम्भात्तद्भाष्यादावव्याख्या-तत्वाच्चोक्तरीत्या निर्वाहे साक्षात्कथनस्यानुपयोगाच्चेत्यपरे ।

अत्रच विपक्षे "नवा अरे सर्वस्य कामाय सर्वं प्रियं भवति आत्मनस्तु कामाय सर्वं प्रियं भवति' इत्यादिश्रुते र्बाधोऽनुकूल-तर्कः । अन्यच्च सुखादिमत्प्रधानादिकं यदि स्वस्य सुखादिभोगार्थं स्यात्तदा स्वस्य साक्षात्स्वज्ञेयत्वे कर्मकर्तृविरोधो नहि धर्मिभानं विना सुखादिभानं सम्भवति अहं सुखी दुःखीत्येवं सुखाद्यनु-भवादिति ॥

अपि च संहन्यमानानां बहूनां गुणानां तत्कार्याणां वानेक-विकाराणामनेकचैतन्यगुणकल्पनायां गौरवेण लाघवादेक एव चित्प्रकाशरूपः पुरुषः सर्वसंहतेभ्यः परः कल्पयितुं युज्यते इति । नचैकपुरुषाङ्गीकारे पुरुषबहुत्वं सिद्धमित्युत्तरग्रन्थविरोधः पुरुषब-हुत्वाङ्गीकारे तूक्तलाघवं न सम्भवतीति वाच्यम् । पुरुषाणाम्बहु-त्वेऽपि विषयाणां पुरुषापेक्षया बहुत्वेन लाघवानपायादिति ।

संघातवादी नास्तिकः सिद्धसाधनमाशङ्कते–स्यादेतदिति । नचाचार्योपदिष्टं स्वयं विमृश्य तत्वनिर्णयसम्भवात्तत्त्वजिज्ञासुना विदुषा अन्यैः सह विवादो निरर्थको 'विप्रं निर्जित्य वादत' इत्या-दिनिन्दाश्रवणाच्चेति वाच्यम् । पक्षप्रतिपक्षविमर्शमन्तरा असम्भा-वनादिनिरसनहेतुनिर्णयासम्भवात् । द्वेषादिना ब्राह्मणजये प्रवृत्त-स्यैव दोषात् । अन्यथानादिभवसंचितदुरितेनाखर्वगर्ववतामात्मतत्व-निर्णयाभावान्मोक्षाद्भ्रश्यमानानामात्मतत्त्वनिर्णयेन मोक्षकामस्य

र्था दृष्टाः न त्वात्मानमव्यक्ताद्यतिरिक्तं प्रति परार्थाः । तस्मात् संघातान्तरमेव परं गमयेयुः, न त्वसंहतात्मानम् इत्यत आह—"त्रिगुणादिविपर्ययात्" इति । अयमभिप्रायः—संघातान्तरार्थत्वे हि तस्यापि संघात-

तदर्थं सभां कुर्वतो जनकस्य राज्ञो विदुषश्च जयभाजो याज्ञवल्क्यस्य दोषापत्तेः । न चेष्टापत्तिः परोपकारकत्वेन तेषां दोषासम्भवात् । कथकमध्ये राज्ञो गणनाच्च ।

तदुक्तं वरदराजीये—कथकौ विख्यातः सम्भावितसाम्यौ स्याताम् । अन्यथाविशेषप्रयोजनायाः कथायाः पुनरानर्थक्यप्रसङ्गात् । सदस्यास्तु वादिप्रतिवादिनां सम्मताः सिद्धान्तद्वयरहस्यवेदिनो रागद्वेषविरहिणः पराभिहितग्रहणावधारणप्रतिपादनकुशलास्त्र्यवरा विषमसङ्ख्याकाः स्वीकार्याः । तथा च स्मरन्ति ।

रागद्वेषविनिर्मुक्ताः सप्त पञ्च त्रयोऽपि वा ।
यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभेति ॥

सदस्यानां तु प्रमेयविशेषस्य वादिप्रतिवादिनोश्च नियमनं पर्यनुयोज्योपेक्षणोद्भावनादोषेण कथकगुणदोषावधारणं भग्नप्रतिबोधनं मन्दस्यानुभाष्य प्रतिपादनमिति कर्माणीति । सभापतिर्निग्रहानुग्रहसमर्थः । तस्य निष्पन्नकथाफलप्रदानादिकं कर्मेति । नत्वात्मानं प्रति ॥ नतु भवदभिमतासंहतात्मानं प्रतीत्यर्थः । उपसंहरति तस्मादिति ॥

सिद्धसाधनंदूरीकुर्वन् संघातवादिनं प्रति त्रिगुणादिविपर्ययस्य हेतोः स्वरूपासिद्धिं दूरीकुर्वन्पूर्वहेतोरभिप्रायमाह—अयमभिप्राय इति ॥

केचित्तु नह्यचेतनमचेतनप्रयोजनकं दृष्टमित्याहायमभिप्राय इतीत्याहुस्तन्न । अचेतनशयनासनादेरचेतनसंघातशरीराद्यर्थत्वोक्त्या नुक्तोपालम्भात् असंघातपरस्यैव व्युत्पादना-

त्वात् तत्रापि संघातान्तरार्थेन भवितव्यम्; एवं तेन तेनेत्यनवस्था स्यात्। न च व्यवस्थाया सत्यामनवस्था युक्ता, कल्पनागौरवप्रसङ्गात्। न च 'प्रमाणबलेन कल्पनागौरवमपि मृष्यत' इति युक्तम्, संहतत्वस्य पारार्थ्यमात्रेणान्वयात्। दृष्टान्तदृष्टसर्वधर्मानुरोधेन त्वनुमानमिच्छतः सर्वानुमानोच्छेदप्रसङ्ग इत्युपपादितं न्यायवार्त्तिकतात्पर्यटीकायामस्माभिः।

च ॥ वीजाङ्कुरादिवदन्यथानुपपत्त्या सा स्त्रीकार्येत्याशंक्याह–नच व्यवस्थायामिति ॥ कल्पनागौरवेति ॥ अव्यवस्थाकल्पनमेव गौरवमित्यर्थः ॥

प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि।

अदृष्टशतभागोऽपि न कल्प्यो निष्प्रमाणकः॥ इति न्यायेनाशङ्क्याह–नच प्रमाणबलेनेति। प्रमाणं च संघातस्य स्वेतरसंघातार्थत्वनियमः। अत्र प्रमाणाभावमाह–संहतत्वस्येति। पारार्थ्यमात्रेणेत्यत्रमात्रपदेन संघातव्यवच्छेदः। अन्वयात् व्याप्तत्वात् तथाच न संघातस्य स्वेतरसंघातार्थत्वनियम इत्यर्थः। अत्र दृष्टान्तानुरोधेन तथा नियमकल्पने बाधकमाह–दृष्टान्तेति। दृष्टान्ते निश्चितसाधनवति दृष्टा ज्ञाता ये सर्वे धर्माः साधनसमानाधिकरणत्वेन साधनव्यापकादिसाधारणास्तदनुरोधेन तत्पक्षपातेन दुर्ग्रहेणानुमानं तत्सर्वधर्मविषयकानुमितिस्ततः, सर्वानुमानस्यानुमितिमात्रस्य, पक्षे महानसादिनिष्ठ(१)महामितिनसत्वकरीषवह्निमहानसीयवन्ह्यादिबाधेन लोपप्रसङ्गादिति प्रघट्टकार्थः।

ननु संघातस्य पारार्थ्यमात्रेणान्वयादित्यत्र मात्रपददानमसंगतं संघातपारार्थ्यस्यापि व्यापकत्वसम्भवात्। एतेनानुमानमात्रो-

(१) अत्र महामलिनत्वमिति पाठेन भवितव्यमितिभाति, पुस्तकद्वयदृष्टानुरोधेन तु यथास्थित एव पाठः स्थापितः।

तस्मादनवस्थाभिया ऽस्यासंघातत्वमिच्छता ऽत्रि-
गुणत्वं अविवेकित्वं अविषयत्वं असामान्यत्वं चेतनत्वं
अप्रसवधर्मित्वञ्चाभ्युपेयम् । त्रिगुणत्वादयो हि धर्माः
संहतत्वेन व्याप्ताः । तत्संहतत्वमस्मिन् परे व्यावर्तमानं
त्रैगुण्यादि व्यावर्तयति, ब्राह्मणत्वमिव व्यावर्तमानं क-

च्छेदमसङ्ग इति परास्तम्। अव्यापकस्यानुमित्यनङ्गीकारात् । अत
एव प्रमाणबलादनवस्थापीष्यत इति चेदत्रोच्यते । परो यः सं-
घातः सोऽचेतनश्चेतनो वा नाद्योऽचेतनस्याचेतनार्थत्वादर्शनात् ।
न द्वितीयः संघातस्याचेतनत्वव्याप्यत्वेन चेतनसंघातशरीरादमूर्तेषु
व्यभिचारेण चेतनत्वासम्भवात् ।

उपसंहरन्नार्यागतान्त्रिगुणादिविपर्ययादिहेतुं व्याचष्ट—तस्मा-
दिति । तस्मादनुमानमात्रलोपप्रसङ्गभिया पारार्थ्यमात्रस्यैव
संघातत्वव्यापकत्वात् । सर्वस्य त्रिगुणत्वात् । त्रिगुणादीत्य-
त्रादिपदं व्यर्थमित्याशङ्क्य धर्मपरत्वेन परिहरन् पूर्वहेतुनाऽसंघा-
तत्वसिद्ध्या त्रिगुणादिविपर्ययहेतुं व्युत्पादयति त्रिगुणत्वादय
इति । आदिपदार्थमाह—अविवेकित्वमित्यादि । तत्र दृष्टान्त-
माह—ब्राह्मणत्वमिवेति । कठत्वादि । आदिपदेन तलवकारत्वा-
दिकं ग्राह्यम् । कठत्वादिकञ्च कठादिशाखाध्येतृत्वं । उत्तरहेतुमुपसं-
हरति तस्मादाचार्येणेति । यस्मात्रिगुणत्वादयो धर्माः संहतत्वेन
व्याप्तास्तस्मादित्यर्थः । आत्माऽसंहतस्त्रिगुणत्वादिविपर्ययाद्व्यतिरे-
केऽव्यक्तवादित्यर्थः ।

वस्तुतस्तु । असंघातत्वसिद्धिं विनापि त्रिगुणादिविपर्ययस्स-
म्भवति । तथाहि त्रिगुणत्वादिधर्माः नद्रष्टृधर्मा ग्राह्यत्वात् चक्षु-
रादिग्राह्यरूपादिवत् । एवं परोऽव्यक्तातिरिक्तस्तद्विरुद्धधर्माश्रयत्वा-
दिति पर्यवसितोऽर्थ इति ।

यत्तु रत्नप्रभायामधिष्ठानानुपपत्तेरित्यत्र प्रधानादिकञ्चेतनस्या-

ठत्वादिकम्। तस्मादाचार्येण 'त्रिगुणादिविपर्ययात्' इति वदता ऽसंहतः परो विवक्षितः, स चात्मेति सिद्धम् ॥

नचाधिष्ठेयमप्रत्यक्षत्वादीश्वरव्यतिरेकेण मृदादिवच्च अस्वभोगाहेतुत्वे सतीति विशेषणाच्चक्षुरादौ न व्यभिचारः। नच यद्येनाधिष्ठेयं तत्तदीयभोगहेतुत्वे सति प्रत्यक्षमिति व्यतिरेकव्याप्तौ करणेषु व्यभिचारतादवस्थ्यमिति वाच्यम्। भोगाहेतुत्वविशिष्टाप्रत्यक्षत्वस्य हेतुत्वात्। करणेषु च विशेषणाभावेन विशिष्टस्य हेतोरभावात्। नच विशेष्यवैयर्थ्यं परार्थपाचकाधिष्ठेयकाष्ठादौ व्यभिचारात्। नच प्रधानादेरीश्वरप्रत्यक्षत्वाद्विशेष्यासिद्धिः। अतीन्द्रियत्वरूपाप्रत्यक्षत्वस्य सत्त्वात्। नच हेतोरप्रयोजकत्वम्। अतीन्द्रियस्य प्रेर्यस्य भोगहेतुत्वनियमात्प्रधानादेः प्रेर्यत्वाङ्गीकारे प्रेरकभोगहेतुत्वापत्तेः। नचेष्टापत्तिः। जीवे करणकृतभोगवदीश्वरे प्रधानादिकृतभोगापत्तेरिति।

तन्न। भोगाहेतुत्वपदेन भोगहेतुत्वसामान्याभावविवक्षायां परार्थपाचकाधिष्ठेयकाष्ठादावुक्तसामान्याभावाभावेन व्यभिचारासम्भवे विशेष्यवैयर्थ्यापत्तेः। स्वभोगहेतुत्वसामान्याभावविवक्षणे चक्षुरादौ व्यभिचारतादवस्थ्येन विशेषणवैयर्थ्यापत्तेः। स्वप्रेरकभोगहेतुत्वसामान्याभावविवक्षणेऽपि स्वपदार्थस्याननुगतत्वेन इन्द्रियाणां प्रतिपुरुषभेदेन भेदादेकपुरुषायेन्द्रियोपादाने अन्यपुरुषायेन्द्रियेषु व्यभिचारतादवस्थ्येनोक्तदोषानिवृत्तेः। स्वपदस्यानुगतातीन्द्रियसामान्यपरत्वे पुरुषाणां तत्प्रेरकत्वबाधेनेश्वरे च 'जीवे करणकृतभोगव' दित्यादि वदता त्वयापि तत्प्रेरकत्वानङ्गीकारेण विशेषणासिद्ध्या स्वरूपासिद्ध्यापत्तेः। अत एव स्वपदस्येन्द्रियसामान्यपरत्वमपि न सम्भवतीन्द्रियसामान्यप्रेरकाप्रसिद्ध्या स्वरूपासिद्ध्यापत्तेः।

यदुक्तं नच हेतोरप्रयोजकत्वमतीन्द्रियस्य प्रेर्यस्य भोगहेतुत्व-

इतश्च परः पुरुषोऽस्ति-"अधिष्ठानात्" । त्रिगुणात्मकानामधिष्ठीयमानत्वात् । यद्यत्सुखदुःखमोहात्मकं तत्सर्वं परेणाधिष्ठीयमानं दृष्टम्, यथा रथादिर्यन्त्रादि-

---

नियमात्प्रधानादेः प्रेर्यत्वाङ्गीकारे प्रेरकभोगहेतुत्वापत्तेः । नचेष्टापत्तिः । जीवे करणकृतभोगवदीश्वरे प्रधानादिकृतभोगापत्तेरिति ।

तदप्यसुन्दरं । यद्येन प्रेर्यं तत्तदीयभोगहेतुरिति नियमस्य परार्थपाचकाधिष्ठेयकाष्ठादौ व्यभिचारस्य त्वयैव दर्शितत्वादीश्वरे प्रधानादिकृतभोगापत्त्यसम्भवात् । तथा चाप्रयोजकत्वं तदवस्थमेवेति भावः ।

केचित्तु प्रधानादेश्चेतनानधिष्ठेयत्वाभ्युपगमेन सिद्धसाधनमिति । तन्न । सामान्येन विवादाभावाद्धर्मवन्न साधनम् । शरीरादिव्यतिरिक्तः पुमान् । संघातपरार्थत्वात् । त्रिगुणादिविपर्ययात् । अधिष्ठानाच्चेतीतिसूत्रेषु शरीरादीत्यादिपदग्रहणेन प्रधानादेरपि ग्रहणात् । अन्यथा पुरुषे शरीरव्यतिरिक्तत्वासिद्धावपि प्रधानादिव्यतिरिक्तत्वासिद्ध्यापत्तेः । नचेश्वरप्रतिषेधाज्जीवस्य च प्रधानाद्यधिष्ठातृत्वासम्भवात्प्रधानादेर्न चेतनाधिष्ठेयत्वमिति वाच्यम् । ईश्वरप्रतिषेधस्यान्यार्थत्वात् । जीवस्य च संयोगविशेषेण परिणामहेतुत्वरूपाधिष्ठातृत्वसम्भवाच्च । संयोगविशेषेणेत्यत्र विशेषपदोपादानस्यातीन्द्रियसामान्यपरत्वे पुरुषाणां तत्प्रेरकत्वबाधेनेत्युक्तिविरोधः ।

हेत्वन्तरमाह-इतश्चेति । अव्यक्तादेरन्य इति शेषः । तेन न सिद्धसाधनं । अत एव सच परः त्रैगुण्यादन्य इति वक्ष्यमाणमपि संगच्छते । अधिष्ठानपदस्य प्रकृतोपयोग्यर्थमाह-त्रिगुणात्मकानामिति । अधिष्ठानपदस्याधिष्ठीयमानत्वपरत्वेऽपि पुरुषेऽवृत्तित्वात्प्रकृतिन्यायानवयवत्वमितस्त आह—यद्यदिति । तथा च विवादाध्यासितमव्यक्तादि परेणाधिष्ठितमचेतनत्वात् । यन्त्राद्यधिष्ठितर-

भः । सुखदुःखमोहात्मकं चेदं बुद्ध्यादि, तस्मादेतदपि परेणाधिष्ठातव्यम् । स च परस्त्रैगुण्यादन्य आत्मेति ।

इतश्चास्ति पुरुषो—"भोक्तृभावात्" भोक्तृभावेन भोग्ये सुखदुःखे उपलक्षयति । भोग्ये हि सुखदुःखे अनुकूलप्रतिकूलवेदनीये प्रत्यात्ममनुभूयेते । तेनानयोरनुकूलनीयेन प्रतिकूलनीयेन च केनाचिदप्यन्येन भवित-

---

थादिवत् । अधिष्ठितत्वं च प्रवृत्त्यनुकूलाऽधिष्ठातृसम्बन्धवत्त्वम् । सच सम्बन्धस्तन्निरूपितविलक्षणसंयोग एव । यथाऽजसंयोगस्तथोक्तं प्राग् । कालेन गुणक्षोभे सति परिणामविशेषरूपक्रियया महदादिहेतुसंयोगस्योत्पत्तिसम्भवाच्च । यदि यथा रथादि यन्त्रादिभिरिति दृष्टान्तानुरोधात्परेणाधिष्ठीयमानत्वं परप्रयोज्यप्रवृत्तिमत्त्वं तदापि संयोगद्वारैव, नतु कृतिद्वारा तदसम्भवस्य पूर्वमुक्तप्रायत्वात् ।

यत्तु ब्रह्ममीमांसाभाष्यकारः । अधिष्ठानानुपपत्तेश्च रूपादिहीनं च प्रधानमीश्वरस्याधिष्ठेयं न सम्भवति मृदादिवैलक्षण्यादिति तन्न । आधिष्ठितिरधिष्ठानमितिव्युत्पत्त्याऽधिष्ठानपदस्य सम्बन्धपरत्वे सम्बन्धानुपपत्तेरित्यनेन पौनरुक्त्यापत्तेः । इन्द्रियादेरधिष्ठेयत्वदर्शनेन रूपादेरधिष्ठेयत्वानियामकत्वाभावाच्च ॥ भोक्तृभावो नाम भोक्तृत्वं तच्च स्वबुद्धिवृत्तिसुखादिप्रतिबिम्बाश्रयत्वं तच्चोभयमतेऽप्रसिद्धमतस्तद्घटकीभूतसुखादिकमादायानुमानप्रकारमाह—भोक्तृभावेनेति । सुखदुःखे उपलक्षणीये इत्यनुक्त्वा उपलक्षयतीति कथनेन ग्रन्थकर्त्तुरेवायमभिप्राय इति सूचितम् । लाक्षणिकपदोपादानं च पुरुषसुखादीनां परस्परसम्बन्धलाभाय । सुखदुःखयोर्निरुक्तिमाहानुकूलेत्यादि । अनुकूलत्वं स्वसम्बन्धितयान्यानधीनेच्छाविषयत्वम् । प्रतिकूलत्वं च स्वसम्बन्धितया द्वेषविषयत्वम् । शत्रुसुखादावव्याप्तिनिरासाय स्वसम्बन्धितयेति । अज्ञातसुखादेर्माना-

व्यम् । न चानुकूलनीयाः प्रतिकूलनीया वा बुद्ध्यादयः, तेषां सुखदुःखाद्यात्मकत्वेन स्वात्मनि वृत्तिविरोधात् । तस्मात् यो ऽसुखाद्यात्मा सो ऽनुकूलनीयः प्रतिकूलनीयो वा, स चा ऽऽत्मेति ॥

अन्ये त्वाहुः—भोग्या दृश्या बुद्ध्यादयः । न च द्र-

भावादाह—वेदनीये इति । तादृशानुभवो नास्त्येवेत्याशङ्क्याह—प्रत्यात्ममिति । तथा चाहं सुखी अहं दुःखीति प्रत्यात्ममनुभवादित्यर्थः । अनुमानप्रकारमाह—तेनेति । तथा च सुखदुःखेपरार्थे इच्छाविषयत्वाद्गृहादिवत् । जिहासां शत्रोः दुःखं भवत्वितीच्छां वादाय दुःखेऽपि हेतुसत्वान्न हेत्वसिद्धिः । अनयोः सुखदुःखयोः, अनुकूलनीयेन स्वविषयकेच्छाश्रयेण, प्रतिकूलनीयेन स्वविषयकजिहासाश्रयेण । नचेच्छादेरेतन्मतेऽन्तःकरणनिष्ठत्वात्कथं पुरुषाश्रयत्वमिति वाच्यम् । पुरुषस्य तत्प्रतिबिम्बाश्रयत्वेन तदाश्रयत्वोपचारात् ॥ सुखदुःखे स्वार्थे एव भवेतामित्यत आह नचेति ।

अन्ये तु । सुखदुःखे भोक्तृपूर्वके भोग्यत्वादित्युक्ते बुद्ध्यादीनां भोक्तृत्वात्सिद्धसाधनमित्यत आह—नचेतीत्याहुः । तत्र युक्तिमाह स्वात्मनि वृत्तिविरोधादिति । नहि सुशिक्षितोऽपि नटवरवटुस्स्वस्कन्धमारुह्य गच्छतीति दृष्टचरमिति भावः । नच पर एव सुखादिरूप एव भवत्विति वाच्यम् । अप्रमाणकाऽव्यवस्थापत्तेः । उपसंहरति—तस्मादिति । असुखाद्यात्मा । सुखाद्यात्मत्वात्यन्ताभावाधिकरणः ।

आत्मेन्द्रियमनोयुक्तम्भोक्तेत्याहु र्मनीषिणः ।

इति स्मृतिमनुसृत्याह—सचात्मेति । मतान्तरमाह अन्येत्विति भोक्तृभावेन परम्परया दृश्या बुद्ध्यादयो लक्षणीया इत्याह—भोग्याइति । अनुमानप्रकारमाह नचद्रष्टारमिति । तथा च विवादाध्यासिता बुद्ध्यादयः परप्रकाश्या दृश्यत्वात् घटादिवत् । वि-

ष्टारमन्तरेण दृश्यता युक्ता तेषाम् । तस्मादस्ति द्रष्टा दृश्यबुद्ध्याद्यतिरिक्तः, स चाऽऽत्मेति । भोक्तृभावात् द्रष्टृभावात्, दृश्येन द्रष्टुरनुमानादित्यर्थः । दृश्यत्वं च बुद्ध्यादीनां सुखाद्यात्मकतया पृथिव्यादिवदनुमितम् ॥

इतश्चास्ति पुरुष इत्याह—"कैवल्यार्थं प्रवृत्तेश्च" इति । शास्त्राणां महर्षीणां च दिव्यलोचनानां । कैवल्यमात्यन्तिकदुःखत्रयप्रशमलक्षणं न बुद्ध्यादीनां सम्भवति । ते हि दुःखाद्यात्मकाः कथं स्वभावाद्वियोज-

---

पक्षे कर्मकर्तृविरोधापत्तिर्बाधिका । श्रौतसंज्ञामाह—सचात्मेति ।

केचित्तु भावाभाववदात्मानात्मकोटिद्वयातिरिक्ताभावादित्याह—स चात्मेतीत्याहुः । आहुरित्यनेन कोटिद्वयातिरिक्ताभावेऽपि अन्यतरकोटिनिर्णायकाभावादन्यतरकोटिनिर्णयासम्भव एवास्वरसः सूचितः । स्वत्वं लघुप्रकाशकमिति वदताचार्येण सत्त्वात्संजायते ज्ञानमिति स्मृत्या च सत्त्वपरिणामबुद्ध्यादीनां प्रकाशकत्वकथनाद्दृश्यत्वमनुपपन्नमित्याशङ्क्याह—दृश्यत्वञ्चेति । एतन्मते लक्षितलक्षणाकल्पनागौरवमेवास्वरसः ॥ हेत्वन्तरमाह—इतश्चेति । प्रवृत्तिपदस्य ससम्बन्धिकत्वात्सम्बन्धिनो दर्शयति शास्त्राणां कैवल्यप्रतिपादनार्थं महर्षीणां दिव्यलोचनानां चकैवल्यप्राप्त्यर्थमिति बोध्यम् ।

अनुमानप्रकारस्तु । विवादाध्यासितो वेदः स्वातिरिक्तार्थबोधकः बोधकत्वात् प्रदीपादिवत् । विवादाध्यासितो दुःखनिष्ठविभागः स्वाश्रयातिरिक्तप्रतियोगिकः विभागत्वात् घटनिष्ठविभागवत् । विपक्षे बाधकमाह—ते हीति । कुतो न सम्भवतीत्यतआह—कथमिति । स्वभावो नामात्मा तद्वियोगे कर्मकर्तृविरोधः स्यादित्य-

शून्यतैव स्यादिति केचित् । तन्न विरोधेन तद्वियो-

यितुं शक्यन्ते। तदतिरिक्तस्य त्वतदात्मनस्ततो वियोगः शक्यसम्पादः, तस्मात् कैवल्यार्थं प्रवृत्तेरागमानां महाधियां चास्ति बुद्ध्यादिव्यतिरिक्त आत्मेति सिद्धम् ॥१७॥

तदेवं पुरुषास्तित्वं प्रतिपाद्य, स किं सर्वशरीरेष्वेकः किमनेकः प्रतिक्षेत्रमिति संशये, तस्य प्रतिक्षेत्रमनेकत्वमुपपादयति—जननेत्यादिना ।

**जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च ।**
**पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥ १८ ॥**

"पुरुषबहुत्वं सिद्धम्" । कस्मात् ? "जनमरणकरणानां प्रतिनियमात्" । निकायविशिष्टाभिरपूर्वा-

गस्यैवासम्भवात् । तदतिरिक्तस्य तु सम्भवतीत्याह—तदतिरिक्तस्येति । उपसंहरति—तस्मादिति । महाधियां श्रवणमननादिनात्मतत्वे विपरीतभावनादिनिरासाद्यथार्थनिर्णयवतामित्यर्थः॥१७॥

उपजीवकत्वसङ्गतिसूचनाय पूर्वोक्तमनुवदन्नुत्तरग्रन्थमवतारयति—तदेवमिति । संशयं प्रदर्श्य स्वसिद्धान्तमाह—प्रतिक्षेत्रमित्यादिना । जननमरणयोरुत्पत्तिविनाशयोः पुरुषेऽसत्त्वे हेत्वसिद्धिस्सत्वे चानित्यत्वापत्तिरित्याशङ्क्याह—निकायेति । एतस्यैवार्थमाह—देहेति । अभिसम्बन्धः संयोगः । तथाचापूर्वदेहेन्द्रियादिसंघातविशेषेण संयोगो जन्म, तद्वियोगो मरणमित्यर्थः। पूर्वोक्त एव वा सम्बन्धो ग्राह्यस्तद्वियोगश्च मरणम् । नचापूर्वशरीरसम्बन्धो जन्मेत्येवास्त्विति वाच्यम् । भोगतदभावनियामकयोरेव जन्ममरणयोरत्र विवक्षितत्वात् । अतएव निकायग्रहणम् । नचैवं सुखदुःखान्यतरसाक्षात्कारभोगनियामकसुखस्याग्रहणान्न्यूनतेति वाच्यम् । सुखस्यानित्यतया तन्नाशज्ञानद्वारा दुःखप्रयोजकत्वाद्गौणदुःखत्वसम्भवे दुःखग्रहणेन तद्ग्रहणसम्भवात् । दुःखज-

भिर्देहेन्द्रियमनोऽहङ्कारबुद्धिवेदनाभिः पुरुषस्याभिसम्बन्धो जन्म, न तु पुरुषस्य परिणामः, तस्यापरिणामित्वात्। तेषामेव च देहादीनामुपात्तानां परित्यागो मरणम्, नत्वात्मनो विनाशः, तस्य कूटस्थनित्यत्वात्। करणानि बुद्ध्यादीनि त्रयोदश। तेषां जन्ममरणकरणानां प्रतिनियमो व्यवस्था। सा खल्वियं सर्वशरीरेष्वेकस्मिन् पुरुषे नोपपद्यते। तदा खल्वेकस्मिन् पुरुषे जायमाने सर्वे जायेरन्, म्रियमाणे च म्रियेरन्, अन्धादौ चैकस्मिन् सर्व एव अन्धादयो, विचित्ते चैकस्मिन् सर्वे एव विचित्ताः स्युरित्यव्यवस्था स्यात्। प्रति-

---

न्मेत्यादिसूत्रीयभाष्ये शरीरेन्द्रियबुद्धीनां निकायविशिष्टः प्रादुर्भावो जन्मेति दुःखाघटितं विशिष्टमेव जन्मेत्युक्तं, तदपि जन्मनो दुःखप्रयोजकत्वसूचनाय। अन्यथाप्रमाणशरीरसम्बन्धो जन्मेत्येव सामञ्जस्येऽधिकवैयर्थ्यापत्तेः। प्रधानवन्नित्यत्वव्यावर्त्तनायाह—कूटस्थेति। तत्त्वं च परिणामानाश्रयत्वम्॥ व्यवस्थेति। जन्मादीनां व्यवस्थितत्वं च स्वाभावतद्व्याप्यविरुद्धत्वम्। एतस्यापि प्रकृतन्यायानवयवत्वं बोध्यम्।

अनुमानप्रकारस्तु। विवादपदानि शरीराणि स्वसंख्यासंख्येयात्मभिरात्मवन्ति शरीरत्वात्। सम्प्रतिपन्नशरीरवत्। यद्वा विवादाध्यासिताः पुरुषाः परस्पराभिन्नाः विरुद्धधर्माश्रयत्वादुभयसम्प्रतिपन्नवादिसादि। विपक्षे बाधकमाह—तदा खल्वित्यादिना। विचित्तत्वं विक्षिप्तत्वं सूक्ष्मविषयनिर्णयासमर्थत्वं वा। तथाच यदि चैत्रशरीराधिष्ठाता मैत्रशरीराधिष्ठातुरभिन्नः स्यात्तदा मैत्रशरीरजन्ममरणेन्द्रियतज्जन्यज्ञानादिमान्स्यात्। मैत्रशरीराधिष्ठातृवदिति प्रसंगार्थ इत्यर्थः। विवादास्पदीभूतानि भोगायतनानि। उभयवाद्यविवादास्पदस्यैव भोगायतनानि भोगायतनत्वात्सम्प्रतिवादिभोगा-

क्षेत्रं तु पुरुषभेदे भवति व्यवस्था । न च 'एकस्यापि पुरुषस्य देहोपधानभेदाद्व्यवस्था' इति युक्तम्, पाणिस्तनाद्युपाधिभेदेनापि जन्ममरणादिव्यवस्थाप्रसङ्गात् । न हि पाणौ वृक्णे जाते वा स्तनादौ महत्यवयवे युवतिर्मृता जाता वा भवतीति ॥

इतश्च प्रतिक्षेत्रं पुरुषभेद इत्याह—"अयुगपत्प्रवृत्तेश्च" इति । प्रवृत्तिः प्रयत्नलक्षणा यद्यप्यन्तःकरणवर्तिनी, तथाऽपि पुरुषे उपचर्यते । तथा च तस्मिन्नेकत्र शरीरे प्रयतमाने, स एव सर्वशरीरेष्वेक इति सर्वत्र प्रयतेत,

---

यतमवत् । विपर्यये पुरुषैक्येऽपि देहोपाधिभिर्जन्मादिव्यवस्थोपपत्तावनेकत्वकल्पना गौरवं बाधकमिति ।

प्रतिप्रसङ्गमाशङ्कते नचेति । व्यवस्था जन्ममरणादिव्यवस्था । जातिस्मरादौ देहोपधानभेदस्य व्यवस्थायामप्रयोजकत्वसत्त्वेऽपि अवयवोपचयापचयाभ्यां देहभेदस्याप्यप्रयोजकत्वमित्यभिप्रायेण परिहरति पाणिरित्यादिना । स्तनादीत्यादिपदेनावयवान्तरं ग्राह्यं । तथाच प्रत्यक्षविरोधेन समबलत्वाभावान्न प्रतिप्रसङ्ग इत्यर्थः । वृक्णेछिन्ने । हेत्वन्तरमाह—इतश्चेति । प्रयत्नलक्षणेति । चैत्रचेष्टा प्रयत्नपूर्विका स्वतन्त्रचेष्टात्वात् मदीयचेष्टावत् इत्यनेन प्रयत्नमनुमाय स क्वचिदाश्रितः विशेषगुणत्वादस्मदीयविशेषगुणवदित्याश्रयमनुमायासौ एतत्कालीनाप्रयतमानात्, भिन्नविषये तत्कालीनप्रयतमानाद्वा भिन्नः तद्विरुद्धधर्माश्रयत्वाद्दहनतुहिनवदित्यर्थः । हेत्वसिद्धिं निरस्यति । प्रवृत्तिरिति । विमतः पुरुषः प्रतिक्षेत्रं भिन्नो युगपत्प्रवर्त्तमानत्वात्सम्प्रतिपन्नवदिति हेत्वसिद्धिं निरस्यति प्रवृत्तिरितीत्यन्ये । उपचर्यते—छायाकुड्यप्रतिबिम्बवत्प्रतिबिम्बरूपेण तत्र वृत्तिमादायोपचर्यते इत्यर्थः । विपर्यये बाधकमाह—तथाचेत्यादि । अत्रत्यचकारस्तु अ-

ततश्च सर्वाण्येव शरीराणि युगपच्चालयेत् नानात्वे तु नायं दोष इति ॥

इतश्च पुरुषभेद इत्याह–"त्रैगुण्यविपर्ययाच्चैव" इति । एवकारो भिन्नक्रमः 'सिद्धम्' इत्यस्यानन्तरं द्रष्टव्यः, सिद्धमेव नासिद्धम् । त्रयो गुणास्त्रैगुण्यम् तस्य विपर्ययोऽन्यथात्वम् । काचित्खलु सत्त्वनिकायाः सत्त्वबहुलाः, यथोर्ध्वस्रोतसः; केचिद्रजोबहुलाः, यथा मनुष्याः, के-

---

तुक्तसुखाद्यव्यवस्थासमुच्चायकः । चरमस्तूक्ताव्यवस्थासमुच्चायक इति । स्वपक्षे दोषाभावमाह–नानात्वेति । एतेन यश्चोभयोरित्यादिन्यायोक्तो दोषः परिहृतः ॥ सत्वनिकायाः प्राणिसमूहाः । ऊर्द्ध्वस्रोतसः देवाः । तिर्य्यग्योनयः पशुपक्ष्यादयः । अत्रापि विरुद्धधर्माश्रयत्वमेव हेतुः । अनुमानप्रकारस्तु उक्तप्राय एवेति ध्येयम् । –

वेदान्तवादिनस्तु । अनेकपुरुषाङ्गीकारेऽपि एकस्य पुरुषस्यापूर्वदेहादिसम्बन्धे जायमानेऽन्येषामपि विभुत्वात्तत्सम्बन्धावश्यकत्वेऽव्यवस्था तदवस्थैव । एवङ्करणादानामपि । यदैकेनात्मना मनः संयुज्यते तदाऽऽत्मान्तरैरपि नान्तरीयसंयोगसंभवे हेत्वविशेषादेकात्मनः सुखदुःखयोगे सर्वेषां सुखादियोगापत्तेः । न चादृष्टनिमित्तो नियमः । सर्वात्मसन्निहितैर्हेतुभिर्मनोवाक्कायैर्निर्वर्त्तितस्यादृष्टस्यास्यैवात्मन इदमदृष्टं नान्यस्येति नियमहेत्वभावात् ।

यत्तु इदं फलं प्राप्नवानि इदं परिहराणि इत्थं प्रयते इत्थं करवाणीत्येवंविधा अभिसंध्यादयः प्रत्यात्मं प्रवर्त्तमाना अदृष्टस्यात्मनां च स्वस्वामिभावं नियंस्यन्तीति तदपि न । तेषामपि सर्वात्मसन्निधौ जायमानानां नियमहेत्वभावात् । एतेन स्वभुक्तवृत्तिवासनावत्त्वरूपस्वत्वमेव नियामकं तच्चानादीति परास्तम् । सर्वात्मसन्निधौ जायमाने सुखादावर्थोपरक्तवृत्तिमति आत्मनि प्रति-

विम्बितत्वरूपभुक्तत्वस्य नियमहेत्वभावात् ॥

अप्रमाणिकान्धपरम्पराकल्पनाऽसम्भवाच्च ।

यदप्ययमेतस्माद्भिन्नो विरुद्धधर्माश्रयत्वादिति । तदपि न । विरुद्धत्वासिद्धेः । तथाहि प्रयत्नादीनां विरुद्धत्वं स्वसमानकालीनस्वाभावतद्व्याप्यसहानवस्थितत्वरूपं वाच्यम् । तच्च न सम्भवति स्वचरणलग्नकण्टकोद्धरणप्रयोजकव्यापारवत्स्वपाण्यवच्छेदेन वर्त्तमानस्य प्रयत्नस्यान्यावच्छेदेनाक्तस्वभावेन सहावस्थितत्वात् । एतादृशविरोधस्य चाधिकरणभेदनियमोपलम्भाधीनोपलम्भकत्वेनान्यस्य चाधिकरणभेदग्राहकप्रमाणासिद्ध्या सम्भवाच्च । चैत्रो जातो न मैत्र इत्यादिव्यवस्था न स्यादित्याशङ्कात् देहात्मवादिनां भ्रान्तानामेव चैत्रादिशब्दानां शरीरविशेषपरत्वात् ।

एतेनान्धादौ चैकस्मिन्सर्वे एवान्धादयो विचित्ते चैकस्मिन् सर्वे विचित्ताः स्युः । एकत्र शरीरे प्रयत्ने स एव सर्वशरीरेषु एक इति सर्वः प्रयतेत । ततश्च सर्वाणि युगपच्चालयेत् । त्रैगुण्यविपर्ययस्तेषु तेषु सत्वनिकायेषु न भवेदिति परास्तम् । चक्षुष्मद्गोलकद्वयशून्यत्वं अन्धत्वं, चक्षुष्मद्गोलकद्वयशून्यत्वे सति चक्षुष्मत्त्वं काणत्वं, यथा संस्थानशून्यकर्णशष्कुलीकत्वं बधिरत्वं, पादविकारवत्वं खञ्जत्वमित्यन्धत्वादयो धर्मा आन्तराश्च प्रयत्नादयो धर्माः यद्यच्छरीरावच्छेदेन सम्भवन्ति तत्तच्छरीरावच्छेदेनैवोपलम्भप्रवृत्त्यादिसम्भवात् । नचैवमप्यस्मच्छरीरावच्छेदेन जायमाने सुखादावहं सुखीत्याद्यनुभवादितरशरीरावच्छेदेन जायमानेऽपि सुखादावहं सुखीत्याद्यनुभवप्रसङ्ग इति वाच्यम् । शिरआदिगते जन्मान्तरीयशरीरगते वा सुखादौ पादाद्यवच्छिन्नस्य वैतद्देहावच्छिन्नस्य वोपाधिभेदादभिमानाभावोपपत्तेः ।

नच बालादिशरीरभेदेऽप्यनुसन्धानदर्शनान्न तत्प्रयोजकमिति वाच्यम् । तत्रापि शरीरप्रत्यभिज्ञादर्शनात् । नच सा भ्रम इति

चित्तमोबहुलाः, यथा तिर्यग्योनयः । सोऽयमीदृशस्त्रैगुण्यविपर्ययो ऽन्यथाभावस्तेषु तेषु सत्त्वनिकायेषु न भवेत् यद्येकः पुरुषः स्यात्, पुरुषभेदे त्वयमदोष इति ॥१८॥

---

वाच्यम् । प्रमात्वे बाधकाभावात् । तदारम्भकराज्यादिप्रापकादृष्टे सति तन्नाशायोगात् । क्लृप्ततत्कारणशुक्रशोणिताद्यभावेन तदारम्भानुपपत्तेश्च । अन्यथा पित्रादिव्यवहारस्य गौणत्वापत्तेः । नच जातिस्मृतिमतः शरीरभेदेऽपि स्मरणं दृश्यत इति वाच्यम् । अदृष्टविशेषस्यैव तत्र नियामकत्वान्नत्वात्मैक्यस्य । योगिनामात्मान्तरेऽपि तद्दर्शनात् । आत्मैक्यस्य तत्प्रयोजकत्वे तत्र मते योगीतरोऽपि किन्न स्मरेत् । नच वेदान्तसूत्रेषु क्वापि सर्वात्मतोक्तास्ति, प्रत्युत भेदव्यपदेशाच्चान्यः । अधिकन्तु भेदनिर्देशात् । अंशो नानाव्यपदेशादित्यादिसूत्रैर्भेद उक्त इति वाच्यम् । अथातो ब्रह्मजिज्ञासा । जन्माद्यस्य यतः । तत्तु समन्वयात् । आत्मेति तूपगच्छन्ति ग्राहयन्ति च । इत्यादिसूत्रैरभेदस्य व्युत्पादनात् । तथाहि वक्ष्यमाणरीत्या ब्रह्मशब्दस्याद्वयपरत्वात् ।

लक्षणार्थस्तु अस्य प्रत्यक्षानुमानाद्युपस्थितस्य जगतो जन्मस्थितिभङ्गा यतो भवन्ति तद्ब्रह्म । नन्वत्र ब्रह्मशब्दाभावात्कथं ब्रह्मण एवेदं लक्षणमिति चेच्छृणु । सूत्रेण यस्य वाक्यस्यार्थो निरूप्यते तदेतस्य विषयो मूलभूतं "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्ब्रह्मेति" वाक्यं तत्र ब्रह्मशब्दप्रयोगादत्र ब्रह्मलाभः । तथा चाविधेयब्रह्मतान्वययोग्याद्वैतकारणोपस्थानसमर्थं त्रितयकारणत्वमेव लक्षणमभिमतमन्यथाद्वयब्रह्मलक्षणत्वासम्भवात् । लक्ष्यस्याद्वयत्वं च ब्रह्मशब्दादवगम्यते । तथाहि । बृहिधातुर्हि वृद्धिमभिधत्ते । वृद्धिश्चात्र स्वरूपोपचयः सच सर्वात्मतायोग्यतैव । नच लोके वृद्धिशब्दस्य नदीपूरावयवे आकाशवृत्तिपरिमाणविशेषे वा प्रयोगदर्श-

नात्तदेव प्रकृतेऽप्यस्तु अन्यथा लक्षणापत्तेरिति वाच्यम् । 'निष्कलमस्थूल'मित्यादिस्वरूपपरश्रुतिविरोधेन तदभावस्य सिद्धत्वात् ।

नन्वेवमपि जगत्कारणे लक्षणापत्तिस्तदवस्थैवेति चेन्न । आकाशादौ परिमाणविशेषाश्रयत्वयोग्यघटपर्वतादिव्याप्तस्वरूपोपचयाभावेन परिणामविशेषासंभवेन स्वरूपोपचयस्यत्र तदर्थत्वात् । नचैवमप्याकाशविलक्षणस्वरूपोपचयस्य निर्वक्तुमशक्यतयाऽऽकाशसदृशमेव ब्रह्म स्यात्तथाच ब्रह्मशब्दाभिधेयमद्वितीयं ब्रह्म न स्यादिति वाच्यम् । युगपदनेकदेशनिरूपितयावत्सम्बन्धाश्रययोग्यत्वस्याकाशादिविलक्षणस्य निर्वक्तुं शक्यत्वात् । आकाशादौ तु अनेकदेशनिरूपितयत्किञ्चित्सम्बन्धसत्वेऽपि तद्देशीयघटादिवृत्तिसम्बन्धस्यासम्भवात् । सर्वात्मकत्वे तु तस्यापि सम्भवात् । एवं 'तत्तु समन्वया'दित्यादावपि बोध्यम् ।

नचैवं भेदव्यपदेशाच्चान्यः इत्यादिसूत्रविरोध इति वाच्यम् । तेषामौपाधिकभेदपरत्वात् । अन्यथा 'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा 'रूपं रूपं प्रतिरूपो बभूव' यथैकस्मिन् घटाकाशे वह्निधूमादिभिर्वृते । नच सर्वे प्रयुज्यन्ते एवं जीवो सुखादिभिरित्यादिश्रुतिस्मृतिविरोधापत्तेः । एतेन 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम ।' निरञ्जनः परमं साम्यमुपैति । सामान्यात्तु । इत्यादिश्रुतिब्रह्ममीमांसासूत्राभ्यां मोक्षेऽपि भेदावगतिरिति परास्तम् । भेदकस्यासम्भवेन परमसाम्यशब्दस्य तद्भिन्नत्वे सति तद्गतयावद्धर्मवत्त्वपरत्वकथनासम्भवात् ।

एतेन विशेषाद्भेदसिद्धिरिति परास्तम् । अन्योन्याश्रयाच्च भेदे सिद्धे तत्सिद्धिस्तत्सिद्धौ भेदसिद्धिरिति । सामान्यादित्यस्यान्यपरत्वेन जीवसाम्याप्रतिपादनात् । तथाहि—परमतः सेतू-

एवं पुरुषबहुत्वं प्रसाध्य विवेकज्ञानोपयोगितया तस्य धर्मानाह—

तस्माच्च विपर्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य।
कैवल्यम्माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च ॥ १९ ॥

"तस्माच्च" इति। 'च' शब्दः पुरुषस्य बहुत्वेन सह धर्मान्तराणि समुच्चिनोति। 'विपर्यासादस्मात्' इत्युक्ते

न्मानसम्बन्धभेदव्यपदेशेभ्यः इति सूत्रेण अतो ब्रह्मणोऽप रमन्यत्किञ्चिदस्ति कुतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः। सेतुव्यपदेशः 'अथय आत्मा ससेतु'रिति सेतुशब्दोऽन्यस्य वस्तुनोऽस्तित्वं गमयति। उन्मानव्यपदेशश्च। 'तदेतद् ब्रह्मचतुष्पादष्टशफं षोडशकलम्'। उन्मितं परिच्छिन्नं कार्षापणादि ततोऽन्यद्वस्त्वस्तीति प्रसिद्धं। ततो ब्रह्मणोऽप्युन्मानत्वात्ततोऽन्येन वस्तुना भवितव्यम्। तथा सम्बन्धव्यपदेशोऽपि 'सता सोम्य तदा सम्पन्नो भवती'त्यादि। सम्बन्धोऽप्यन्येनैव दृष्टस्तथात्रापि। भेदव्यपदेशश्च 'यथा एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इत्यादिसाधारणमीश्वरं व्यपदिश्य ततो भेदेनाधारमीश्वरं व्यपदिशति। अथ एषोऽन्तरक्षणि पुरुषो दृश्यते इत्यर्थकेनेश्वरात्परमन्यदस्तीत्याशङ्क्याह—सामान्यात्तु। तुशब्देन तूक्तशङ्कां निराकरोति। विधारकत्वसामान्यात्सेतुशब्द आत्मनि प्रयुक्तस्तत्फलं त्वाद्वितीयत्वसिद्धिः। उन्मानव्यपदेशस्तूपासनार्थं सम्बन्धभेदव्यपदेशौ तूपाध्यपेक्षयेति। अधिकं तु भाष्ये स्पष्टमिति वदन्ति ॥ १८ ॥

अवसरसङ्गतिसूचनाय पूर्वोक्तमनुवदन्नुत्तरग्रन्थमवतारयति। एवमिति। धर्मानिति। त्रिगुणमित्यादिना सूचितान् साक्षित्वादीन् पञ्च धर्मानित्यर्थः। हेत्वन्तरेण समुच्चयासम्भवादाह—पुरुषस्यबहुत्वेनेति। पाठक्रमादार्थक्रमो बलीयानितिन्यायेनाह—तत्रचेतन-

त्रैगुण्यविपर्ययादित्यनन्तरोक्तं सम्बध्येत; अतस्तन्निरासाय 'तस्मात्' इत्युक्तम् । अनन्तरोक्तं हि सन्निधानादिदमो विषयो, विप्रकृष्टं च तदः, इति विप्रकृष्टं त्रिगुणमविवेकीत्यादि सम्बध्यते ॥

तस्मात्त्रिगुणादेर्यो विपर्यासः स पुरुषस्यात्रिगुणत्वं विवेकित्वं अविषयत्वं असाधारणत्वं चेतनत्वं अप्रसवधर्मित्वञ्च । तत्र चेतनत्वेनाविषयत्वेन च साक्षित्वद्रष्टृत्वे दर्शिते । चेतनो हि द्रष्टा भवति, नाचेतनः, साक्षी च दर्शितविषयो भवति, यस्मै प्रदर्श्यते विषयः स साक्षी, तथा हि लोकेऽर्थिप्रत्यर्थिनौ विवादविषयं साक्षिणे दर्शयतः, प्रकृतिरपि स्वचरितं विषयं पुरुषाय दर्शयतीति पुरुषः साक्षी, न चाचेतनो विषयो वा शक्यो विषयं दर्शयितुम्, इति चैतन्यादविषयत्वाच्च भवति साक्षी । अत एव द्रष्टाऽपि भवति ॥

अत्रैगुण्याच्चास्य कैवल्यम् । आत्यन्तिको दुःखत्रया-

---

त्वेनेति । विषयत्वेनचेति । चः चेतनत्वं समुच्चिनोति । साक्षित्वद्रष्टृत्वे इत्यत्र चाग्रहणन्तु प्रत्येकस्य समुच्चितहेत्वन्वयसूचनाय। सामान्यनिरूपणाधीनत्वाद्विशेषनिरूपणस्येतिन्यायमाश्रित्योद्देश्यक्रमं विहाय प्रथमं द्रष्टृत्वमुपपादयति–चेतनो हीति। नाचेतन इति अत्र विषय इति शेषः । साक्षित्वमाह–साक्षी चेति । साक्षित्वं च साक्षाद्द्रष्टृत्वं । अव्यवधानेन द्रष्टृत्वमिति यावत् । साक्षात्सम्बन्धश्च बुद्धितद्धर्माणामेवान्येषां तु तद्द्वारेति । अतो बुद्धितद्धर्माणां साक्षी पुरुषोऽन्येषान्तु द्रष्टृमात्रमिति शास्त्रीयविभागः । तत्सम्बन्धश्च प्रतिबिम्बरूप एव नतु संयोगमात्रमतिप्रसङ्गादिति ॥

अर्थिप्रत्यर्थिनौ उत्तमर्णाधमर्णौ । स्वचरितंस्वकार्यं। अत एवेति। यतः साक्षिरूपविशेषधर्मवानित्यर्थः। दुःखादेर्बुद्धिपरिणामत्वे-

भावः कैवल्यम्। तच्च तस्य स्वाभाविकादेवात्रैगुण्यात् सुखदुःखमोहरहितत्वात्सिद्धम्॥

अत एवात्रैगुण्यान्माध्यस्थ्यम्। सुखी हि सुखेन तृप्यन् दुःखी हि दुःखं द्विषन् मध्यस्थो न भवति। तदुभयरहितस्तु मध्यस्थ इत्युदासीन इति चाख्यायते। विवेकित्वादप्रसवधर्मित्वाच्चाकर्तेति सिद्धम्॥ १९॥

स्यादेतत्—प्रमाणेन कर्तव्यमर्थमवगम्य 'चेतनोऽहं चिकीर्षन् करोमि' इति कृतिचैतन्ययोः सामानाधिकरण्यमनुभवसिद्धम्; तदेतस्मिन्मते नावकल्पते, चेतनस्याकर्तृत्वात् कर्तुश्चाचैतन्यात् इत्यत आह—

---

नात्यन्तिकदुःखनिवृत्तिरूपकैवल्यमपि सदैव पुरुषस्येत्याह–तच्चेति। ननु सर्वदा कैवल्यसत्त्वे कथं तस्य पुरुषार्थत्वं,अत्रभाष्यकाराः–पुरुषार्थस्तु दुःखभोगनिवृत्तिः, प्रतिबिम्बरूपदुःखनिवृत्तिर्वेति। अधिकं तूक्तं पुरस्तात्। माध्यस्थ्यं चापक्षपातित्वम्। उपकारापकाररहितमित्यन्ये। तत्र हेतुमाह–सुखीति। ननु सूत्रे माध्यस्थ्यस्यागणनात् औदासीन्यस्य च गणनाद्विरोध इत्याशङ्क्याहोदासीन इति। औदासीन्यपदेन निष्कामत्वादयोऽप्युपलक्षणीयाः। 'कामः सङ्कल्प' इत्यादिश्रुत्या कामादेर्मनोधर्मत्वावधारणात्। उपरागात्कर्तृत्वमिति सूत्रसूचितमकर्तृत्वमप्याह–अकर्त्तेति। नचैवमौदासीन्यपदस्याकर्तृपरत्वकथनं भाष्यकृतां विरुध्येत। प्रमाणेन तत्त्वं निर्निनीषतां ग्रन्थविरोधस्यादोषत्वात्। रागद्वेषविनिर्मुक्तेषु यदृच्छोपपन्नेषु शरीरयात्रां कुर्वत्स्वपि उदासीनपदप्रयोगेणौदासीन्यस्य कर्त्तृत्वेनाविरोधाच्च॥ १९॥

उपोद्घातसङ्गत्यार्यामवतारयति–स्यादेतदिति। कर्त्तव्यज्ञानं विना चिकीर्षासम्भवादाह–प्रमाणेनेत्यादि। कृतिचैतन्ययोः सामानाधिकरण्यप्रतीतेः प्रमात्वलाभाय प्रमाणेनेति। कर्त्तुः बुद्धेः।

तस्मात्तत्संयोगादचेतनं चेतनावादिव लिङ्गम् ।
गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः ॥ २० ॥

"तस्मात्" इति । यतश्चैतन्यकर्तृत्वे भिन्नाधिकरणे युक्तितः सिद्धे, तस्मात् भ्रान्तिरियमित्यर्थः । 'लिङ्गम्' महदादिसूक्ष्मपर्यन्तं वक्ष्यति । भ्रान्तिबीजं तत्संयोगः तत्सन्निधानम् । अतिरोहितार्थमन्यत् ॥ २० ॥

'तत्संयोगात्' इत्युक्तम्, न च भिन्नयोः संयोगो

---

प्रतीकमधृत्वैवेवशब्दार्थमाह—भ्रान्तिरिति । तथा चात्रेवशब्दो नोपमार्थ इत्यर्थः । संयोगसामान्यस्य परस्परधर्मभ्रान्तिबीजत्वाभावादाह—सन्निधानमिति । तथाच पृथिवीजलयोः संयोगो हरिद्रानिलसंयोगो वा यथा गन्धशीतस्पर्शयोः पीतिमदाहकर्तृत्वयोर्विनिमयप्रयोजकस्तथायमपीत्यर्थः । सन्निधानं प्रतिबिम्बत्वं तस्मादचेतनमपि लिङ्गं बुद्धितत्त्वश्चेतनावदिव जानामीति ज्ञानवदिव भवतीत्यर्थ इत्यन्ये

ननु चेतनसंयोगाच्चेतनवदित्राचेतनसंयोगादचेतनवदिव स्यान्नतु कर्तृत्ववदित्यतो मूले आह—गुणकर्तृत्वे चेति । अत्र सतिसप्तमी तथा च गुणानां कर्तृत्वे सति कर्तृसंयोगात्कर्त्तेव भवतीत्यर्थः । चकारोऽनुक्तकामादिधर्मसमुच्चयार्थः । गुणकर्तृत्वे--गुणः सुखदुःखमोहरूपः, कर्तृत्वं च बुद्धिनिष्ठमात्मनि प्रतिबिम्बितं तेन करोमीति उदासीनोऽपि कर्त्तेव भवतीत्यपरे ॥ २० ॥

उपोद्घातसङ्गतिसूचनाय पूर्वोक्तमनुवदन्नार्य्यामवतारयति—तत्संयोगादित्युक्तमिति ।

ननु 'हेयहाने तयोर्हेतू' इति चतुर्व्यूहात्मकशास्त्रविषयस्य समाप्तत्वादग्रिमग्रन्थानुत्थितिः । नच 'विकारं प्रकृतिं चैव पुरुषं च सनातनं । यो यथाबुद्धि जानाति स वितृष्णो विमुच्यते' इत्यादिमोक्षधर्मादिषु विकाराणामपि ज्ञेयत्वोक्तेस्तन्निरूपणमावश्यकमिति वा-

च्यम् । मूलप्रकृतिरित्यादिना तेषामपि निरूपितत्वात् । नच तत्प्रपञ्चार्थ एवारम्भो वैयर्थ्यात् । अन्यथा प्रत्येकं विशेषरूपेण ज्ञानासम्भवात् । विशेषरूपेण ज्ञानस्य प्रकृतेऽनुपयोगाच्चेति चेन्न ।

तेषां प्रतिज्ञातत्वेऽपि तत्र हेत्वनिरूपणात् । स्वतन्त्रायाः प्रकृतेर्निष्प्रयोजनसृष्टिहेतुत्वे मुक्तस्य पुनर्बन्धापत्तिरित्याद्याशङ्कावारणाच्च । भिन्नयोरिति स्वरूपकथनं । अपेक्षां विनेति । अपेक्षा स्वस्वकार्यजननाय सहकारित्वरूपा नतु परस्पराकाङ्क्षारूपा चेतने तदसम्भवात् ।

दृष्टान्तमाह मूले पङ्ग्वन्धवदिति । यथैकः पङ्गुरेकश्चान्धएतौ द्वावपि गच्छन्तौ महतासार्थेनाटव्यां सार्थस्यतेनं कृतादुपद्रवात्स्वबन्धुभिः परित्यक्तौ दैवात्तौ संयोगमुपागतौ पुनस्तयोः स्ववचनविश्वस्तयोर्गमनार्थो दर्शनार्थश्च संयोगो भवति, ततोऽन्धेन पङ्गुः स्वस्कन्धमारोपितः, एवं शरीरारूढपङ्गुदर्शितेन मार्गेणान्धो याति, पङ्गुश्चान्धस्कन्धारूढो गच्छति । एवं पुरुषे दर्शनशक्तिरस्ति पङ्गुवन्न क्रिया,प्रधाने क्रियाशक्तिरस्ति अन्धवन्न दर्शनशक्तिः। यथाचानयोः पङ्ग्वन्धयोः कृतार्थयोर्विभागो भविष्यतीप्सितस्थानं प्राप्तयोस्तथा प्रधानमपि पुरुषस्य मोक्षं कृत्वा निवर्तते । पुरुषोऽपि प्रधानं दृष्ट्वा कैवल्यं गच्छति । तयोः कृतार्थयोर्विभागो भविष्यति ।

ननु सत्वं लघुप्रकाशकमिति सत्वस्य प्रकाशकत्वोक्त्या प्रकाशानपेक्षणत्वसूचनाद् दृष्टान्तवैषम्यमिति चेन्न । चिच्छायापत्त्या तस्य प्रकाशकत्वाङ्गीकारात् । नचैवमपि प्रधानस्य मोक्षोपयोगिसृष्ट्यादिजनने प्रकाशानपेक्षणाद् दृष्टान्तवैषम्यं तदवस्थमेवेति वाच्यम् । बुद्धिभावापन्नस्य प्रधानस्य मोक्षहेतु—नास्मि—नमे—नाहमितिचेतनावदवभासमानज्ञानरूपपरिणामस्य प्रकाशं विनानुपपत्तेः । अत्र पुरुषस्य प्रधानस्य चोभयोरपि संयोगो दर्शनार्थं कैवल्यार्थं चेत्यन्वयः । दर्शनं भोगः प्रधानस्य पुरुषेण, कैवल्यं मोक्षः सत्वपुरुषान्यताख्यातिनिबन्धनः, पुरुषस्य प्रधानेन विनाऽसम्भवात्तयोः प्रधा-

ऽपेक्षां विना, न चेयमुपकार्योपकारकभावं विनेत्यपेक्षा-हेतुमुपकारमाह—

पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥ २१ ॥

पुरुषस्य इति । प्रधानस्येति कर्मणि षष्ठी । प्रधानस्य सर्वकारणस्य यद्दर्शनं पुरुषेण । तदर्थम् । तदनेन भोग्यता प्रधानस्य दर्शिता । ततश्च भोग्यं प्रधानं भोक्तारमन्तरेण

नपुरुषयोर्द्वयोः संयोगो भोक्तृभोग्यभावकरं सन्निधानं भवतीत्यर्थः। भोगापवर्गयोर्द्वारभूतः सर्गोऽपि संयोगादेवेत्याह–तत्कृत इति । यत्तु महदादिलक्षणः सर्गः संयोगजन्य एवेत्यर्थ इति । तन्न । पुरुषस्य प्रधानस्य च संयोग इत्येव निर्वाहे उभयोरित्यस्य वैयर्थ्यापत्तेः । विरुद्धविभक्तिकयोः सामानाधिकरण्येनान्वयासम्भवाच्च । अन्वय-सम्भवेऽपि दर्शनार्थमित्यादेः साकाङ्क्षतयात्र प्रधानादेरन्वयावश्य-कत्वेन त्वयापि पुनरन्वयाङ्गीकारेण चान्यत्रान्वयस्य वैयर्थ्यापत्तेः।

यदपि संयोगो भोक्तृभोग्यभावकरं संनिधानमिति, तदप्यसु-न्दरम् । संयोगे विशेषेणैव भोक्तृभोग्यभावनिर्वाहे संयोग इत्यस्य संयुक्तसंयोगादिरूपसन्निधानपरत्वकथनासङ्गतेः ।

टीकायां कर्मणि षष्ठीति । ननूभयप्राप्तौ कर्मणीति सूत्रेण क-र्मणि षष्ठी सिद्धैवेति तत्कथनं व्यर्थं, नच स्वस्य व्याकरणाध्ययनज्ञा-पनार्थमिति वाच्यम् । सकृत्कथनेन तज्ज्ञापनासम्भवादिति चेन्न । प्रयोजनान्तरसद्भावात् । तथाहि कर्मणि षष्ठीत्यनुक्तौ सामान्य-तः षष्ठीदर्शनात्कर्त्तरि कर्मणि वेति सन्देहे प्रधानकर्तृकदर्शनमिति शङ्का स्यात्तन्निरासाय तथाभिधानम् । एतेन प्रधानदर्शनार्थं पुरुष-कैवल्यार्थं चेत्येव कुतो नोक्तमिति परास्तम् । उक्तशङ्कासम्भवात् ।

जगत्सर्जनप्रधानस्य प्रकाशानपेक्षणादाह—सर्वकारणस्ये-ति । तथाच बुद्धिभावापन्नस्य प्रकाशापेक्षास्तीति भावः । कचि-त्सर्वप्रकारस्येति पाठः । सच सुखाद्यात्मकानेकविकारसहितस्येत्ये-

न सम्भवतीति युक्ता ऽस्य भोक्त्रपेक्षा।

पुरुषस्यापेक्षां दर्शयति—पुरुषस्य कैवल्यार्थम् इति। तथा भोग्येन हि प्रधानेन संभिन्नः पुरुषस्तद्गतं दुःखत्रयं

वं व्याख्येयः। उक्तरूपप्रधानस्य यद्दर्शनं तत्केनेत्याकाङ्क्षायामाह–पुरुषेणेति। एतेन दर्शनार्थमित्यस्य प्रधानस्येत्यत्रान्वये प्रधानस्य दर्शनार्थमित्येव वक्तुमुचितं, नतु पुरुषस्य दर्शनार्थमिति परास्तम्। पुरुषस्यापि कर्तृत्वेनान्वयात्। एवं प्रधानस्यापि कैवल्येऽन्वयसम्भवात्। नच कर्तृत्वं कृतिमत्त्वं, तच्च पुरुषे सांख्यमते नास्तीत्यतः पुरुषेणेत्यसङ्गतमिति वाच्यम्। दर्शनमत्र भोगः, स च सुखादिसाक्षात्कारो बुद्धिगतचेतनप्रतिबिम्बस्तत्प्रयोजकतया पुरुषे कर्तृत्वोपचारात्।

ननु प्रधानदर्शनस्य द्रष्टृसापेक्षत्वेऽपि प्रधानस्य तदपेक्षत्वाभावात्कथं तत्सापेक्षत्वाभिधानमित्याशङ्क्य विवक्षितविवेकेन तत्सापेक्षत्वमुपपादयति–तदनेनेति। तदनेन प्रधानस्य दर्शनकर्मत्वकथनेन। तथाच सुखाद्यात्मकप्रधानस्य पुरुषनिष्ठत्वेन ज्ञायमानतारूपभोग्यतापि दर्शितेत्यर्थः॥ पुरुषस्य कैवल्यार्थं प्रधानापेक्षां दर्शयितुं धर्म्यध्यासमाह भोग्येनेति। प्रधानेन सर्वकारणेन महत्तत्त्वादिस्वरूपेण। सम्भिन्नो–संसर्गाग्रहनिबन्धनाऽहं कर्त्तेति तादात्म्याभिमानवान्। धर्माध्यासमाह–तद्गतमिति। अभिमन्यमानः–सदा दुःखाद्यसंसृष्टेऽपि स्वात्मनि विपर्यस्तः। अतएव तन्निवृत्त्यर्थं प्रार्थयते इत्याह–कैवल्यमिति। तथाच स्वभावतो दुःखसम्बन्धाद्विमुक्तस्यापि पुरुषस्य प्रतिबिम्बरूपदुःखनिवृत्त्यर्थं प्रतिबिम्बसम्बन्धेन दुःखविमोक्षार्थं वा प्रार्थना सम्भवतीत्यर्थः।

ननु चेतनस्य बुद्धितादात्म्याभिमानो नाम बुद्धितादात्म्यज्ञानं तच्च बुद्धिवृत्तिप्रतिबिम्बरूपं वक्तव्यमन्यथा कर्मकर्तृविरोधापत्तिः

स्वात्मन्यभिमन्यमानः कैवल्यं प्रार्थयेत । तच्च सत्त्वपुरुषान्यताख्यातिनिबन्धनम् । न च सत्त्वपुरुषान्यताख्यातिः प्रधानमन्तरेणेति कैवल्यार्थं पुरुषः प्रधानमपेक्षते । अनादित्वाच्च संयोगपरम्परायाः भोगाय संयुक्तो ऽपि कैवल्याय पुनः संयुज्यत इति युक्तम् ।

ननु भवत्वनयोः संयोगो महदादिसर्गस्तु कुत इ-

वेदान्तमतप्रवेशो वा। तथा च कथमुक्तमभिमन्यमान इति। किंच तादात्म्यं सद्वाऽसद्वा सदसद्वा तद्विलक्षणं वा । नाद्यः । अनिवृत्त्यापत्तेः । द्वितीयेऽपरोक्षत्वानुपपत्तेः । तृतीयस्तु विरोधपराहतः । चतुर्थस्तु स्वसिद्धान्तविरुद्ध इति चेन्न । प्रधानस्य स्वदर्शनार्थं स्वकैवल्यार्थं च पुरुषापेक्षेत्येवान्वयाभ्युपगमात् । नच तथाशब्दविरोधः । यथा काचन स्त्री स्वभोगार्थं यतमाना पुनः दुःखिता स्वकैवल्यार्थं यतते तथेयमित्येवमुपपत्तेः । पङ्ग्वन्धवदित्यत्रापि अन्धकर्तृक एव पङ्गुबन्धस्तत्त्यागश्च । अत एव 'विमुक्तविमोक्षार्थं स्वार्थं वा प्रधानस्ये'ति सूत्रे मोक्षबन्धयोः प्रधाने एव व्युत्पादनं सङ्गच्छते। पारमार्थिकदुःखनिवृत्त्यर्थं प्रधानप्रवृत्तेर्नकिंचेत्युक्तदोषोऽपि। नच टीकाविरोधः । टीकाया अत्रैव तात्पर्यात् ।

ननु भोगप्रयोजकानादिसंयोगपरंपरायाः सत्त्वे कथं कैवल्यार्थं पुनस्तद्विरोधिसंयोगोत्पत्तिरित्यत आह—अनादित्वाच्चेति । तथाच बहुलकृतपुण्यपुञ्जैः कृतश्रवणस्य मिथ्यावासनाशैथिल्ये इहामुत्रार्थफलभोगविरक्तस्य कैवल्यार्थं प्रवृत्तस्य तत्प्रयोजकसंयोगसम्भव इत्यर्थः । नच पूर्वसंयोगादेव सृष्टिद्वारा कैवल्यं भवत्विति वाच्यम् । एकस्य विरोधिप्रयोजकत्वासम्भवात् । ननु तादृशसंयोगसत्त्वेऽपि मोक्षानुपपत्तिः, सर्गाभावे तत्प्रयोजकज्ञानासम्भवादित्याशङ्कते—नन्विति । नच मोक्षवद्भोगोऽपि सृष्टेः प्रयोजनं तद्-

स्यत आह—तत्कृतः सर्ग इति। संयोगो हि न महदादिसर्गमन्तरेण भोगाय कैवल्याय च पर्याप्त इति संयोग एव भोगापवर्गार्थं सर्गं करोतीत्यर्थः ॥ २१ ॥

सर्गक्रममाह—

प्रकृतेर्महांस्ततो ऽहङ्कारस्तस्माद्गणश्च षोडशकः।
तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि ॥ २२ ॥

---

कथने न्यूनतापत्तिरिति वाच्यम्। कैवल्यपदस्य तदुपलक्षकत्वात्। नच सृष्टिपदमेव कुतो न निबद्धमिति वाच्यम्। मोक्षस्य मुख्यत्वात्। नचैवं सकृत्सृष्ट्यैव मोक्षसम्भवे पुनः पुनः सृष्टिर्न स्यादिति वाच्यम्। अनेकजन्मकृतपुण्यपुञ्जैः शुद्धान्तः करणस्य शमदमादिसाधनवतः श्रवणादिद्वारा साक्षात्कारवत एव मोक्षसम्भवात्। कियतां मोक्षेऽपि अन्येषां मोक्षार्थं सृष्टिप्रवाहसम्भवाच्च। तदुक्तं पातञ्जले 'कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वा'दिति ॥ २१ ॥

वक्ष्यमाणसर्गस्य क्रमघटितत्वादुपोद्घातसङ्गतिसूचनायार्यामवतारयति—सर्गक्रममिति। प्रकृतिशब्दस्य कारणसामान्यपरत्वादेतस्मादात्मन आकाशः सम्भूत इत्यादिश्रुतिसिद्धजगत्कारणपुरुषपरत्वभ्रमं वारयितुमाह—प्रकृतिरव्यक्तमिति। तथाच 'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः'। 'मायां तु प्रकृतिं विद्यात्'।

चतुर्विंशकमव्यक्तं प्रधानङ्गुणलक्षणम्।
अनादिमध्यनिधनं कारणं जगतः परम्।

इत्यादिश्रुतिस्मृतिभिः प्रकृतेस्स्रष्टृत्वसिद्धेः। 'तदेतद्ब्रह्मापूर्वमनपरमबाह्यं'। 'न तस्य कार्यं करणं च विद्यते'। 'अस्थूलमन'णित्यादिकूटस्थप्रतिपादकश्रुतिविरोधाच्च। स्रष्टृत्वाध्यासद्वाराऽभेदोपासनायामेवोक्तश्रुतेस्तात्पर्यं। अतएवा'त्मैवेदं सर्व'मित्याद्यभेदबोधकश्रुत्यु-

पपत्तिः । अध्यासस्तु उपचाररूपो लोके प्रसिद्धः । यथास्वशक्तिषु योधेषु वर्त्तमानौ जयपराजयौ राज्ञि उपचर्य्येते शक्तिमदभेदात्तथा स्व शक्तौ प्रकृतौ वर्तमानं स्रष्टृत्वादिकं शक्तिमत्पुरुषे उपचर्यत इत्यर्थः।

नचै'तस्मादात्मन आकाशः सम्भूत' इत्यादिभूतोत्पत्तिक्रमश्रुतिविरोध इति वाच्यम । 'तत्तेजोऽसृजत'इत्यादिसृष्टिश्रुतौ गगनवायुसृष्टिपूरणवत्त्वदुक्तश्रुतावपि महदादेः सृष्टेः पूरणीयत्वात्। नच परश्रुत्यविरोधाय तत्र पूरणेऽपि दुर्बलस्मृतेर्बाध एवेति वाच्यम्।'स ईक्षाञ्चक्रे' 'तदैक्षत बहु स्या'मित्यादिश्रुत्युपोद्वलितं'महत्तत्वातिरिक्तं सर्वं कार्यं बुद्धिपूर्वकं विचित्रकार्य्यत्वात्प्रासादादिव'दित्यनुमानसहकृत—

'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी'—

'सप्राणमसृजत प्राणाच्छ्रद्धां खं वायु'मित्यादिप्राणादिसृष्टिपूर्वकभूतसृष्टिश्रुतेरपि सत्त्वात् । सामान्यकरणवृत्तिमतोरभेदात् । 'अन्तरा विज्ञानमनसी तल्लिङ्गा'दितिवेदान्तसूत्रमपि महदादिक्रमेण सृष्टिं वदति । तथा हि । विज्ञानशब्देन भावकरणव्युत्पत्त्या बुद्धिरिन्द्रियाणि चोच्यन्ते, तथाचान्तरा आत्माकाशयोर्मध्ये बुद्धीन्द्रियमनांसि क्रमेण मुण्डकादिश्रुत्युक्तेन पूरणीयानीति शेषः । तत्र हेतुमाह—'तल्लिङ्गात्' उक्तक्रमेण सृष्टेः गमकवाक्यात् ।

यदि क्वचि'दिति चेन्नाविशेषा'दित्यन्तं सूत्रमुपलभ्यते तदान्त रा कस्मिंश्चिदन्तराले बुद्ध्यादीनि क्रमेणोत्पाद्यानि । उत्पादस्य क्रमिकत्वाद्येन केनापि क्रमेणोत्पाद्यानि । तथाच तदुत्पादक्रमेण भूतोत्पत्तिक्रमो विरुध्येत । नच तेषामुत्पाद एवासिद्ध इत्याशङ्क्याम् । सर्वस्य प्रधानजातीयत्वाभ्युपगमात् 'एतस्माज्जायते प्राण' इत्यादिलिङ्गाच्चेत्याह 'तल्लिङ्गात्' तेषामुत्पत्तिवाक्यादितिचेन्नाविशेषात् । यथाऽऽकाशवाय्वोरुपसंहारेण तेजसः प्राथम्यबाधेऽपि न विरोधस्तथात्रापि । तथाचाथर्वणश्रुत्यनुग्रहाय भूतादौ बुद्ध्यादीन्युपसं-

हरणीयानीत्यर्थः ।

अत्र केचित् । उपक्रमोपसंहारादिनाऽद्वितीयब्रह्मणि सर्वासामुपनिषदां तात्पर्ये निर्णीते 'न तस्य कार्यंकरणं चविद्यते' इत्यादिश्रुत्याऽकारणत्वे चावगते कार्यं सकारणकमिति न्यायानुगृहीतप्रत्यक्षादिना कार्यसजातीयब्रह्मातिरिक्तकारणसम्भावनानिरासद्वारा ब्रह्मकारणत्वप्रतिपादकोपनिषदामद्वितीये ब्रह्मणि तात्पर्यावश्यकत्वे 'द्वा सुपर्णा सयुजा सखाया'वित्यादिभेदप्रतिपादकश्रुतीनां लोकावगतभेदानुवादत्वेन भेदे तात्पर्याभावे 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते'इत्यादिश्रुत्योपास्यान्यत्वे चावगतेऽप्यत्र तात्पर्यकल्पनाऽसम्भवेनोपासनाया अन्यत्र कारणत्वकल्पनायाश्चासम्भवः।

ननूपक्रमादेः कथं सर्वासामुपनिषदामद्वितीये ब्रह्मणि तात्पर्यनिर्णायकत्वमिति चेच्छृणु । उपक्रमादि तावत्—

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलं ।
अर्थवादोपपत्ती च लिङ्गन्तात्पर्यनिर्णये ॥

इति ॥ तत्रोपक्रमोपसंहारित्वं—विचार्यवाक्याद्यन्तभागयोरेकार्थपर्यवसानत्वम् । अभ्यासत्वमनन्यपरपुनःपुनःश्रूयमाणपदत्वम् । अर्थवादत्वं स्तुतिनिन्दान्यतरबोधकवाक्यत्वम् । तत्रयं शब्दघटितत्वाच्छब्दनिष्ठम् । तत्राद्यस्यैकार्थनिर्णायकत्वे लिङ्गत्वं तात्पर्यविषयत्वेन सन्दिग्धानां बहूनां मध्ये यस्मिन्नर्थे आद्यन्तयोः पर्यवसानं तस्मिन्नेव तात्पर्यनिर्णयात् । अन्यथा तस्य वैयर्थ्यात् । क्वचिदनुवादित्वादिशङ्कापसारकतयापि तस्य लिङ्गत्वं, यदि हि तस्मिन्नर्थे वाक्यमनुवादः स्यात्तदोक्तपर्यवसानं व्यर्थं स्यादिति युक्तेः । द्वितीयं तु समिदादिवाक्यवत्सिद्धार्थकत्वेन (ना)कर्मविधानाऽयोगादेकार्थतात्पर्यज्ञापकम् । अन्यथा पुनःपुनः श्रवणवैयर्थ्यापत्तेः । तस्यादरज्ञापनद्वारा तात्पर्यज्ञापकत्वम् । यथाऽहो दर्शनीया अहो दर्शनीयेतिवत् । आदरश्च यद्यपि प्राशस्त्यरूपोऽभ्यस्यमानस्यार्थस्य विधेयत्वा-

नुमानद्वारा तात्पर्यविषयत्वं ज्ञापयति, अर्थवादोऽपि प्राशस्त्यज्ञापनद्वारा तथैव ज्ञापकस्तथाप्यर्थवादबोध्यं प्राशस्त्यं बलवदनिष्टाजनकत्वरूपं, अभ्यासबोध्यं त्वर्थान्तरादुत्कृष्टत्वरूपमिति नाभ्यासार्थवादयोरैक्यं । अपूर्वत्वं प्रकृतवाक्यात्पूर्वमज्ञातत्वं, फलत्वमुक्तधियः प्रयोजनवत्त्वं ॥ उपपत्तित्वं तद्धीविषयस्याबाधितत्वम् ॥

एतस्य तु त्रयस्यार्थनिष्ठस्य प्रमात्वघटकतया तात्पर्यं प्रति व्यापकतया। यथा यज्ञोपवीतादिकं ब्राह्मण्यं प्रति ॥ तत्राद्यमनुवादवाक्यस्य स्वार्थे प्रामाण्यवारणाय, द्वितीयं 'उत्ताना वै देवगवा' इत्यादेस्तद्वारणाय । तृतीयं 'ग्रावाणः प्लवन्ते' इत्यादेरित्येवं रूपम् ॥ तच्च सर्वत्रोपनिषत्सु दृश्यते ।

तथाहि ॥ ईशावास्ये–'ईशावास्यमिदꣳ सर्वं' मित्युपक्रमः 'सपर्यगाच्छुक्रमकायमव्रण' मित्युपसंहारः ॥ 'अनेजदेकं मनसो जवीयः' 'तदन्तरस्य सर्वस्य तदु सर्वस्य बाह्य'। इत्यभ्यासः ॥ 'नैनदेवा आप्नुवन्पूर्वमर्शं' दित्यपूर्वता ॥ 'को मोहः कः शोक एकत्वमनुपश्यत' इति फलम् ॥ 'कुर्वन्नेवेह कर्माणि जिजीविषे'दिति जिजीविषोर्भेददर्शनः कर्मकरणानुवादेन—

असुर्या नाम ते लोका अन्धेन तमसा वृताः ॥

तांस्ते प्रेत्यापिगच्छन्ति ये के चात्महनो जनाः ॥ इति निन्दात्मक ऐकात्म्यदर्शनस्तुतिपरोऽर्थवादः ॥ 'तस्मिन्नपो मातरिश्वा दधाती'ति युक्तिरूपोपपत्तिरिति ॥ तस्मिन्नित्यादेरयमर्थः—तस्मिन्न् अनेजदेकमित्याद्युक्ते आत्मतत्त्वे सति मातरि अन्तरिक्षे श्वयतीति वायुः क्रियात्मको हिरण्यगर्भः । अपः कर्माणि ज्वलनदहनप्रकाशाभिवर्षणचेष्टालक्षणानि। अपशब्दस्य वैदिकनिघण्टौ कर्मनामसु पाठात् ॥ दधाति विभजति धारयतीति वा । तथाच नित्यात्मचैतन्ये एकस्मिन्सत्येव नियमेन ज्वलनादिक्रिया भवन्ति । क्रियासु एकेश्वरानधीनत्वे नियमो न स्यादित्यर्थः ॥

केनोपनिषदि । 'केनेषित'मित्युपक्रमः ॥ 'श्रोत्रस्य श्रोत्र'मित्युपसंहारः ॥ 'न तत्र चक्षुर्गच्छति 'यद्वाचानभ्युदितं,यन्मनसा न मनुते'इत्यभ्यासः ॥ नचात्रापूर्वतापि प्रतीयत इति वाच्यं । तत्सत्वेऽपि अभ्यासस्याक्षतेः । 'अन्यदेव तद्विदितादथो अविदिता'दित्याद्यपूर्वता । 'प्रेत्यास्माल्लोकादमृता भवन्ती'तिफलं । 'इह चेदवेदीदथ सत्यमस्ति नचेदवेदीन्महती विनष्टि'रित्यर्थवादः। 'ब्रह्महा देवेभ्यो विजज्ञे'इत्यारभ्य 'ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्व'-मित्यर्थवाद उपपत्तिश्चेति । अत एव भाष्ये एतस्यार्थवादत्वोपवर्णनं न विरुध्यते ।

कठोपनिषदि 'अन्यत्र धर्मादन्यत्राधर्मा' दित्युपक्रमः । 'ब्रवीम्योमित्येत'दित्युपसंहारः । 'न विजुगुप्सते एतद्वैतत् । विपश्यत एतद्वैतत् । व्यजायत एतद्वैतत्' । इत्यादिसप्तधाऽभ्यासः । 'श्रवणायापि बहुभिर्यो न लभ्य'इत्यपूर्वता । 'ब्रह्मप्राप्तो विरजोऽभूद्विमृत्युरितिफलम् । 'विद्याभीप्सितत्वान्नचिकेतसंमन्ये'इत्यर्थवादः । 'तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन । यदिदङ्किञ्चजगत्सर्वं प्राण एजति निः सृतं । महद्भयं वज्रमुद्यत'मित्यादूयुपपत्तिः ।

प्रश्नोपनिषदि । 'तं त्वा पृच्छामि क्वासौ पुरुष' इत्युपक्रमः । 'इहैवान्तः शरीरे सोम्य स पुरुषो यस्मिन्नेताः षोडशकलाः प्रभवन्ती'त्युपसंहारः । 'सएषोऽकलोऽमृतो भवती'त्यभ्यासः । 'अथहैनं सुकेशा भारद्वाजः पप्रच्छ भगवन् हिरण्यनाभः कौशल्यो राजपुत्रो मामुपेत्यैनं प्रश्नमपृच्छत षोडशकलं भारद्वाज पुरुषं वेत्थ तमहं कुमारमब्रुवं नाहमिमं वेद'त्यपूर्वताऽर्थवादश्च। 'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसी'ति फलं। 'स प्राणमसृजत प्राणाच्छ्रद्धां खंवायुर्ज्योतिरापः पृथिवींन्द्रियंमनोऽन्नं अन्नाद्वीर्य्यन्तपोमन्त्राः कर्मलोका लोकेषु च नामचे'त्युपपत्तिः । तमित्यादेरयमर्थः । विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठति(मन्त्र) तदक्षरं वेदयते ।

यत्तु ससर्वज्ञः सर्वमाविवेशेतीति मन्त्रेण सर्वज्ञगत्कार्यैकारणलक्षणं परेऽक्षरे सुषुप्तिकाले सम्प्रतिष्ठते इत्युक्तं तत्सामर्थ्यात्प्रलयेऽपि तस्मिन्नेव सम्प्रतिष्ठतेऽकारणे कार्यलयाभावात्तस्यैव कारणत्वमुक्तप्रायं तद्विज्ञानात्सर्वभावापत्तिश्चोक्तैव ।

यद्यपि एकमेवाद्वितीयं ब्रह्मेत्युपक्रम्याहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवादित्यादिषु अद्वितीयात्मज्ञानादेव मुक्तिर्नतु निखिलजगत्कारणज्ञानात्तथापि तस्य कारणत्वे तद्व्यतिरेकेण कार्याभावात्तदद्वितीयत्वज्ञानं भविष्यत्येव । तस्माद्यद्विज्ञानात् मुक्तिः सकिं यथात्र तथैवान्यत्र, अन्यथावेति सन्दिहानस्य प्रश्नः । तं षोडशकलं पुरुषं यं राजकुमारः पृष्टवान् । षोडशसंख्याकाः श्रद्धाख्याःकलाअवयवा इवात्मन्यविद्याध्यारोपितरूपा यस्मिन्पुरुषे तं क्वासौ विज्ञेय इति शेषः । अन्तः शरीरे जीव एव वान्यो वेति प्रश्नाभिप्रायः । अन्यत्स्पष्टम् ॥

मुण्डकोपनिषदि । 'अथ परा यया तदक्षरमधिगम्यते यत्तद्द्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुः श्रोत्रं तदपाणिपादं नित्यं विभु सर्वगतं सुसूक्ष्मं तदव्ययं भूतियोनि परिपश्यन्ति धीरा'इत्युपक्रमः । 'पुरुष एवेदं विश्वंकर्म तपो ब्रह्म परामृत'मित्युपसंहारः । 'अप्राणो ह्यमनाः शुभ्रोऽक्षरात्परतः परः । आविः संनिहितं गुहाचरं नाम महत्पदं । अत्रैतत्समर्पितमेजत्प्राणं निमिषच्च यत् । तदेतत्सत्यं तदमृत' मित्याद्यभ्यासः । 'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वे'त्याद्यपूर्वता । 'एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकरतीह सोम्य सयो ह वैतत्परमं ब्रह्म वेद ब्रह्मैव भवती'ति फलं । 'प्लवा ह्येते अदृढा यज्ञरूपा अष्टदशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनदन्ति मूढा.जरा मृत्युन्ते पुनरेवापियन्ती'त्याद्यास्तदर्थवादाः । 'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयो भवन्ति । यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्स-

म्भवन्तीह विश्व' मित्याद्युपपत्तिः । अथ परा 'ब्रह्मैव वेदामृतं पुरस्तात्' ।
'येनाक्षरं पुरुषं वेदसत्यन्तदक्षरं ब्रह्म' तमेवैकञ्जानथा आत्मान'-मित्यादि । नचक्षुषा गृह्यते नापि वाचेत्यादि । 'निरंजनः परमं साम्यमुपैति' 'ब्रह्म वेद ब्रह्मैव' 'भवति । यथा सुदीप्तात्पावकाद्विस्फुलिङ्गात्' 'कस्मिन्भगवो विज्ञाते'इत्यादिक्रमेणोपक्रमादिकं बोध्यम् ।

माण्डूकोपनिषदि । 'सर्वं ह्येतद्ब्रह्मा यमात्मा ब्रह्मे'त्युपक्रमः । 'स आत्मा विज्ञेय' इत्युपसंहारः । 'एकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिव'मित्याद्यभ्यासः । 'अदृष्टमव्यवहार्यमग्राह्य'मित्याद्यपूर्वता । 'संविशत्यात्मनात्मानं य एवं वेद' इतिफलं । 'उत्कर्षति हवै ज्ञानसन्ततिं समानश्च भवति नास्याब्रह्मवित्कुले भवती'त्याद्यर्थवादः ।'सोऽयमात्मा चतुष्पा'दित्याद्युपपत्तिः ।

तैत्तिरीयोपनिषदि । 'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन्सोऽश्नुतेसर्वान्कामान्ब्रह्मणा सह विपश्चिते'त्युपक्रमः । 'सयश्चायं पुरुषे यश्चासावादित्ये स एकः' । इत्युपसंहारः । अत्र यद्यपि यश्चायं पुरुषे यश्चासावादित्ये स एक इत्येतावन्मात्रेणै वाखण्डार्थविवरणसम्भवाज्जीवपरे प्रथमवाक्ये स इत्यधिकं किञ्च जीवस्यापरोक्षत्वेन योऽयमिति निर्देशयात्रस्यैवौचित्येन परोक्षपरेण स इतिशब्देन निर्देशोऽनुचित एव । नच य इति पदस्यापि परोक्षपरत्वेन जीववाक्ये निर्देशोऽनुचित इति वाच्यम् । गत्यन्तराभावेन तदुपादानात् । तथाहि स एक इत्यनुवादवाक्ये निर्देशस्य-विना यत्पदघटितवाक्यं कर्तुमशक्यतया यत्तदोर्नित्यसम्बन्ध इति न्यायस्य जागरूकत्वेन चापरोक्षपदानिर्देशासम्भवात् । तथाच स इत्यधिकमिति । तथाप्यधिकार्थविवक्षयार्थवत्त्वात् । तत्त्वमेव, त्वमेव तदिति कैवल्यवाक्यवदत्रापि परोक्षत्वपरिछिन्नत्वादिदोषोन्मूलनरूपाधिकार्थस्य सम्भवात् ।

उपक्रमार्थस्तु भाष्यवार्त्तिकादिष्वनुसन्धेयः । 'तत्सृष्ट्वा तदेवानुप्राविशत् । सच्च त्यच्चाभवत् । तदात्मानं स्वयमकुरुत'इत्यभ्यासः । यतो वाचो निवर्त्तते अप्राप्य मनसा सहे'त्यपूर्वता । 'ब्रह्मविदाप्नोति परं । आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने'ति फलं । अत्र यद्यपि आनन्दं ब्रह्मेति निर्देश उचितः सर्वत्राखण्डानन्दादेव ताद्दशफलोक्तेः । तथाप्येकशतं षष्ठ्यर्था इत्यभियुक्तोक्त्या राहोः शिर इत्यादाविव षष्ठ्युपपत्तेः ।

वस्तुतस्तु । आनन्दो ब्रह्मेत्यादावन्नमयादिषु मध्ये यतो जगज्जन्मादि तदखण्डरूपं ब्रह्मेत्युपक्रमसामर्थ्यादानन्दपदस्य जीवपरत्वनिर्णयसम्भवेऽपि प्रकृते तादृशोपक्रमाभावादानन्दपदं तत्पदार्थपरमिति भ्रमवारणाय षष्ठ्युक्तिरिति । 'असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदु'रिति ब्रह्मासत्ववेदिनो निन्दात्मरूपः, सत्ववेदिनः स्तुतिरूपोऽर्थवाद इति ।

अत्र यद्यपि अस्ति ब्रह्मेति चेद्वेदेत्युत्तरार्द्धे ऽन्वयनिर्देशादन्वयविपरीतत्वेनैव व्यतिरेकेऽपि निर्देशः समुचितः । एवं यथावेदनं व्यतिरेकेऽन्वये च फलदर्शनौचित्यात् । न स्यात्स कश्चिन्नास्ति ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद स्यादेवेति निर्देश एव । पूर्वार्द्धे वेदपदोत्तरश्चेत्पदप्रयोग, उत्तरार्द्धे तु तद्वैपरीत्येन, प्रयोगे नियामकाभावे उपक्रमानुरोधेनैव प्रयोगउचितस्तथा फलनिर्देशोऽपि । एवमेवकारपदानुपादानमपि उत्तरार्द्धेऽनुचितं, चेत्पदानुपादानं पूर्वार्द्धे च तथाप्यर्थविशेषसूचनाय तथोक्तिः ।

तथाहि । असत्पदमविद्यमानं त्रिकालाबाध्यभिन्नं पापानुरतमसाधु इत्यादि बोधयति । सन्तमिति निर्देशाद्विद्यमानत्वात्रिकालाबाध्यरूपत्वादि परिगृहीतं । अस्ति ब्रह्मेति वेद चेदिति निर्देशाभावस्तु । ज्ञायमानब्रह्मसत्तैव मुख्या नतु वृत्तिरूपं ज्ञानमिति ला-

भाय । अस्ति ब्रह्मेति ज्ञानादविद्यानिवृत्तिविलंबकृतः फलस्य प-श्चाद्भाव इतिसूचनायोत्तरार्द्धे पश्चात्फलवचनम् । पूर्वार्द्धे तु अनादि-कालमारभ्यैवाविद्या सम्भवति । असद्वेदनं तु सुतरां पूर्वकालप्रवृ-त्तयविद्याधीनासत्वान्तरमप्यस्तीति सूचनाय प्रथमं फलवचनम् । उत्तरार्द्धे एवकारानुपादानं तु निवर्त्तनीयत्वेनासत्त्वसम्भावनापि नेति लाभाय । पूर्वार्द्धे चेत पदानुपादानं तु पापीयस्त्वेन नामग्रहणा-योग्यतां सूचयति । अत एवासद्वेदनमेव पापहेतुरिति तद्वाक्ये एव चेत् पदञ्चोपात्तम् । फलवाक्ये स इतिपदमुपात्तं सङ्गतं भवति । उत्तरार्द्धे चेत्पदानुपादानं तु वेत्तुमर्हत्वसूचनाय । महतो गुर्वादेः साक्षान्नाम न ग्राह्यमिति मर्य्यादा ।

आत्मनाम गुरोर्नाम नामातिकृपणस्य च ।
श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः ॥

इति वचनात् । 'को ह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्' । 'भीषास्माद्वातः पवते भीषोदेति सूर्यः । भी-षास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम' इत्युपपत्तिः ।'ब्रह्मविदाप्नोति परं । आनन्दं ब्रह्मेति व्यजानात् । सयश्चायं । यो वेद निहितं गु-हायां । अभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवतीति । सो-ऽकामयत असन्नेव स भवति असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः । कोह्येवान्यात्कः प्राण्याद्यदेष आ-काश आनन्दो न स्यादित्यादिक्रमेणोपक्रमादिकं वा बोध्यम् ।

ऐतरेयोपनिषदि । 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्कि-ञ्चन मिष'दित्युपक्रमः । 'स एतमेव पुरुषं ब्रह्म ततमपश्य'दित्युप-संहारः । 'स एतमेव सीमानं विदार्य्यैतया द्वारा प्रापद्यत । येन पश्यति येन शृणोति । एष ब्रह्मैव इन्द्र एष प्रजापतिरेते सर्वे देवा' इत्यभ्यासः । इत्येवापूर्वता सर्वभावापत्तेः प्रमाणान्तरेणानवग-मात् । नच लिङ्गानां साङ्कर्यं । अत्र प्रमाणसम्भवेन तथाङ्गीकारा-

त् । अत एव कुत्रचिदसमुचितानित्युक्तिः सङ्गच्छते । 'सर्वान्कामानाप्त्वामृतः समभव'दिति फलम् । 'ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रापत'न्नित्यर्थवादः । या कर्मसमुच्चयानुष्ठानफलभूता गतिः सापि न संसारदुःखोपशमायेति निन्दा ब्रह्मज्ञानस्तुतिपरा इत्यर्थः । 'ता एतमब्रुवन्नायतनं नः प्रतिजानीहि यस्मिन्प्रतिष्ठिता अन्नमदामे'त्याद्युपपत्तिः ।

छान्दोग्योपनिषदि । 'एकमेवाद्वितीयं ब्रह्मे'त्युपक्रमः । 'ऐतदात्म्यमिदं सर्वमि'त्युपसंहारः । 'तत्त्वमसी'त्यादि नवधाऽभ्यासः । 'आचार्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये' इति फलम् । 'उत तमादेशमप्राक्षो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञात'मित्यादिरर्थवादः । 'सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य'मित्याद्युपपत्तिः ।

बृहदारण्यकोपनिषदि । 'आत्मेत्येवोपासीत तत्र ह्येते सर्वे एकं भवन्ती'त्युपक्रमः । 'पूर्णमद'इत्याद्युपसंहारः । 'स एष नेति नेत्यात्मे'त्याद्यभ्यासः । 'तं त्वौपनिषदं पुरुषं पृच्छामी'त्यपूर्वता । 'अभयं वै जनक प्राप्तोऽसि । ब्रह्मैव सन्ब्रह्माप्येती'त्यादिफलम् । तद्यो यो देवानां प्रत्यबुध्यत स एव तदभव'दित्याद्यर्थवादः ।'स यथा दुंदुभेः' इत्याद्युपपत्तिः।'आत्मनि विज्ञाते सर्वमिदं विज्ञात' मित्युपक्रमः 'सर्वमात्मैवाभू'दित्युपसंहारः। 'इदं सर्वं यदयमात्मे'त्यभ्यासः।'विज्ञातारमरे केन विजानीया'दित्यपूर्वता 'एतावदरे खल्वमृतत्व'मिति फलं 'भूतेभ्यः समुत्थाय तान्येवानुविनश्यती'त्यर्थवादः दुंदुभ्याद्यभिव्यक्तिशब्दत्वसामान्याद्बहिर्भूतशब्दत्वेन तद्विशेषाणामग्रहात्तत्रारोपितत्ववत्तसदनुविद्धविशेषाणां तत्रारोपितत्वप्रतिपादकं 'स यथा दुंदुभे'रित्याद्युपपत्तिरित्यादिकमपि वेदान्तकौमुदीकाराद्युक्तमनुसन्धेयम् ।

ननु कुत्रचिद्भेदतात्पर्यबोधकान्यपि षड्विधानि लिङ्गानि सन्ति । तथाहि आथर्वणे—'द्वा सुपर्णे'त्युपक्रमः । 'परमं साम्यमुपैती'तिभेदघटितसाम्यरूपेणोपसंहारः । 'तयोरन्यः पिप्पलं स्वाद्वत्ति । अनश्नन्नन्यः' । 'जुष्टं यदा पश्यत्यन्यमीश'मित्यभ्यासः । शास्त्रैकगम्येश्वरप्रतियोगिकस्य कालत्रयाबाध्यभेदस्य शास्त्रं विना अप्राप्तेरपूर्वता । 'पुण्यपापे विधूये'ति फलं । 'तस्य महिमान'मिति स्तुतिरूपोऽर्थवादः । 'अत्ति, अनश्न'न्नित्युपपत्तिः ।

एवं अन्तर्यामिब्राह्मणेऽपि तादृशानि षड्विधतात्पर्यलिङ्गानि तथाहि—'वेत्थ तत्त्वङ्काप्य तमन्तर्यामिण'मित्युपक्रमः । 'एष ते आत्मा अन्तर्यामी'त्युपसंहारः । 'एष ते आत्मे'त्याद्येकविंशतिकृत्वोऽभ्यासः । अन्तर्यामित्वस्याप्राप्ततयाऽपूर्वता । 'स वै ब्रह्मवि'दित्यादि फलम् । 'तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वांस्तं चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्द्धा ते विपतिष्यती'ति निन्दारूपोऽर्थवादः । 'यस्य पृथिवी शरीरं यं पृथिवी न वेद' इत्याद्युपपत्तिरिति चेत् ।

मैवम् । आथर्वणे प्रथममुण्डके 'कस्मिन्नभगवो विज्ञाते सर्वमिदं विज्ञातं भवती'तिशौनकप्रश्नानन्तरं'द्वे विद्ये वेदितव्ये' इति विद्याद्वयमवतार्य्य ऋग्वेदादिलक्षणामपरामुक्त्वा । 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमित्यादिना पराविद्याविषयमक्षरं प्रश्नानुसारेण प्रतिपादयता अभेदस्यैवोपक्रान्तत्वात् । अन्यथा तदुत्तरत्वानुपपत्ते. । द्वितीयमुण्डके 'पुरुष एवेदं विश्वं ब्रह्मैवेदं विश्वमिदं वरिष्ठ'मिति मध्ये परामर्शात् । तृतीयमुण्डकान्ते च 'परे ऽव्यये सर्व एकीभवन्ति' इति उपसंहारात् । 'स यो ह वै तत् । परमं ब्रह्म वेद ब्रह्मैव भवती'त्यैक्यलक्षणफलकथनाच्च । परमं साम्यमुपैतीत्यस्य पूर्वोक्तन्यायेन ऐक्यपरतया भेदोपसंहारत्वाभावात् । भेदपरत्वे परमशब्दवैयर्थ्यापत्तेश्च ।

नचैवं साम्यकथनानुपपत्तिः । 'सोऽश्नुते सर्वान् कामा'नि-

त्यादिष्वत्तदुपपत्तेः । अतएव अनश्नन्नित्यादिना न तात्विकभेदाभ्यासः । नापीशस्य शास्त्रगम्यतया तत्प्रतियोगिकस्तद्धर्मिको वा भेदोऽपूर्वः । ईशज्ञानमात्रे तदपेक्षायामपि प्रत्यक्षेण तत्समकक्षमानेन च तयोः प्राप्तत्वात् । तदुक्तफलार्थवादयोरैक्यपक्षेऽपि सम्भवेन न भेदासाधारणलिङ्गता । अनश्नन्नित्यादेः काल्पनिकभेदेनोपपत्त्या तात्विकभेदोपपत्तित्वाभावात् । नचात्र विनिगमनाविरहः । 'य उदरमन्तरं कुरुते, तस्य भयं भवति । द्वितीयाद्वै भयं भवती'त्यादिना भेदनिन्दान्यथानुपपत्तेरेव विनिगमकत्वात् ।

बृहदारण्येऽपि 'आत्मेत्येवोपासीते'तिसूत्रितविद्याविवरणरूपायां चतुरध्याय्यां 'अनेन ह्येतत्सर्वं वेदे'त्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञापूर्वकं 'ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभव'दित्यभेदेनोपक्रम्य षष्ठाध्यायान्ते मैत्रेयीब्राह्मणे निगमनरूपोपपन्नत्वस्य 'सर्वमात्मैवाभूत्तत्केन कं पश्येदि'त्यादिना अभेदेनैवोपसंहारात् ।

अध्यायचतुष्टयस्याभेदपरत्वे स्थिते तदन्तर्गतस्य ब्रह्मलोकान्तरसूत्रात्मप्रतिपादनपरस्य उत्तरब्राह्मणप्रतिपाद्यनिरुपाधिकसर्वान्तरब्रह्मप्रतिपत्त्यनुकूलस्य महाप्रकरणविरोधेन तद्विरोधिभेदपरत्वाभावात् । तदुपन्यस्तलिङ्गानां भेदपरतानिर्णायकत्वे विकल्पितभेदपरतया तात्विकाभेदाविरोधित्वात् । अतएव 'न शारीरश्चोभयेऽपि हि भेदेनैनमधीयत' इतिसूत्रविरोधो, नवा तद्भाष्यव्याहतिः ।

नचैवं मायान्त्वित्यादि किमर्थमिति वाच्यम् । विकारादिरहिताद्वितीयब्रह्मणोऽद्वितीयत्वोपपादककर्तृत्वासम्भावनानिरासेन सार्थकत्वात् । तन्निरासश्चाद्वितीयत्वाविरोधिब्रह्माध्यस्तत्वेन सहकारित्वादुपादानत्वाद्वा । नचाविद्याया बाधापरपर्यायाध्यस्तत्वे मानाभाव इति वाच्यम् । सदसदादिविकल्पग्राहसहकृत-'नासदासीन्नो सदासी'-'तमएवासीत्'-'तरति शोकमात्मवित्'-'नेह नानास्ति-

किञ्चने'त्यादिश्रुतरेव मानत्वात् । चेतनाध्यस्तजडादुपादानजड-प्रकृत्यङ्गीकारे ऐन्द्रजालिकनिर्मिताध्यस्तापरपर्यायमिथ्यावस्तुभूत-मायाया प्रकृतिस्वरूपपरा 'मायां तु प्रकृतिं विद्या'दित्यादिश्रुतिः कदर्थिता स्यात् ।

नच लोके सत्यमन्त्रौषधादावपि मायाशब्दप्रयोगात् तद्विशिष्टे मायाविशब्दप्रयोगाच्चैन्द्रजालिकनिर्मितमिथ्यागजादौ लाक्षणिक एवेति वाच्यम् । मिथ्यागजादिसृष्टत्वाज्ञानदशायां पुरुषे स्वरूपेण मन्त्रौषधादिज्ञानेऽपि तच्छब्दाप्रयोगात्तज्ज्ञानदशायां च तत्प्रयोगादिति अन्वयव्यतिरेकाभ्यां साधारणभ्रमानुकूलशक्तिमत्येव शक्त्यवधारणेन तत्रैव मुख्यत्वात् ।

अतएव 'ब्रह्मवादिनो वदन्ति किं कारणं ब्रह्मे'त्यादिना 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेय' इत्यादिश्रुत्या ऽद्वितीयचेतनजगदुपादानब्रह्मावगत्या ब्रह्मवदनशीलानामद्वितीयस्य चेतनस्य चित्रकारवज्जनकत्वं विचित्रजडसामग्रीं विना न, तदर्थं सा कल्प्यमानाऽद्वैतश्रुत्यविरोधायासती एव स्यात् । असत्याश्च न क्वापि कार्यानुगतकारणापरपर्यायोपादानादिकारणनिर्वाहकत्वं दृष्टमित्याद्यसम्भावनाविपरीतभावनागोचरपरस्परवदनमुपन्यस्य—

ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम् ।

इत्येतेन मननोपजीवकनिदिध्यासनगम्यां उक्तशङ्कानिरासद्वारा ब्रह्मण उपादानकारणत्वोपपादिकां देवात्मशक्तिं दर्शितवती श्रुतिस्सङ्गच्छते । शक्तेः सदसद्विलक्षणत्वानङ्गीकारे तूक्तशङ्काऽनिवृत्तेः । 'नासद्रूपा न सद्रूपा माया नैवोभयात्मिका । सदसभ्यामनिर्वाच्या मिथ्याभूता सनातनी'त्यादिसौरादिवाक्याच्च ।

यत्तु भाष्ये मिथ्याभूता लयाख्या व्यावहारिकासत्त्ववती परिणामिनित्यतारूपव्यावहारिकसत्त्ववती चेति तन्न । तादृशार्थपरत्वे मानाभावात् । नचैवं 'विकारजननीं मायामष्टरूपां मतां ध्रुवां'

'मायान्तु प्रकृति'मित्यादिश्रुतिविरोध इति वाच्यम् । प्रकृतिनिर्वाहकमात्राभिप्रायतया तस्या गौणत्वात् । अतएवेंद्रो मायाभिः पुरुरूप ईयत' इति ब्रह्मणः पुरुरूपतापत्तौ तस्या निमित्तत्वश्रुतिरपि सङ्गच्छते ॥

नच मायाशब्दस्य शक्तौ शक्त्यङ्गीकारे भ्रमानुकूलशक्तिमति शक्तिरित्युक्तिर्विरुध्येतेति वाच्यम् । शक्तिवदीश्वरपरतन्त्रतया तादृशशक्तिमदज्ञानस्यैव लक्षणयाभिधानात् । नच ज्ञानप्रयोजकावरकशक्तिः , शुक्तिरजताद्यसाधारणभ्रमानुकूलशक्तिर्वाऽज्ञानपदस्य शक्यतावच्छेदिका, कार्यानुकूला ऐन्द्रजालिकनिर्मितगजाद्यसाधारणभ्रमानुकूलशक्तिर्वा मायापदस्य शक्यतावच्छेदिका । तथाचावच्छेदकभेदे कथं मायापदेनाज्ञानमुच्यत इति वाच्यम् । पाचकपाठकपुत्रपौत्रादिपदार्थतावच्छेदकानामेकस्मिन्मैत्रे वृत्तित्वेनावच्छेदकभेदस्य व्यक्तिभेदाव्याप्यत्वात् ।

नच तत्र व्यक्त्यभेदस्य प्रत्यक्षत्वाद् दृष्टान्तवैषम्यमिति वाच्यम् । सर्गाद्यकालीनं कार्यं चेतनातिरिक्तसहकार्यन्तरजन्यं कार्यत्वात् । घटवदित्याद्यनुमानस्य लाघवेनैकव्यक्तिविषयकत्वात् । 'जीवेशावाभासेन करोति । माया चाविद्या च स्वयमेव भवति' । 'तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते । योगीमायाममेयाय तस्मैविद्यात्मने नम'इत्यादि मायाविद्याऽभेदगोचरश्रुतिस्मृतिभ्यश्च । योगो निदिध्यासनजन्यब्रह्मसाक्षात्कारो ऽस्यास्तीति योगी । यस्मिन्सर्वाधिष्ठाने ब्रह्मणि च हृदि अन्तः करणं निवेशिते ऽहं ब्रह्मास्मीति साक्षात्कृते सति ज्ञानप्रयोजकेत्यादिनोक्तशक्तिप्राधान्येनाविद्याशब्दवाच्यं, कार्यानुकूलेत्यादिनोक्तशक्तिप्राधान्येन मायाशब्दवाच्यं तरति नाशयति तस्मै नम इति योजना । कथं विद्यात्मने—चैतन्यस्वरूपाय ।

ननु साक्षात्कारविषयस्य घटादिवत्स्वप्रकाशत्वं बाधितमित्या-

शङ्क्याह—अमेयार्थेति। वृत्तिरूपसाक्षात्कारविषयत्वेऽपि स्वव्यवहारे इतरानपेक्षचैतन्यविषयत्वरूपस्वप्रकाशत्वस्य न क्षतिरिति भावः इति स्मृत्यर्थः (इत्याहुः)॥

यद्यपि तस्मात् षोडशकादेतदन्यतरग्रहणेनैव सामञ्जस्ये तदुभयग्रहणं व्यर्थं तथापि तदुभयग्रहणस्य पादपूरणार्थत्वेनादोषात्। अहङ्कारस्य कार्याणि पञ्चतन्मात्राणि तानि शान्तघोरमोहाख्यस्थूलगतशब्दादिविशेषशून्यशब्दादिमद्द्रव्याणि, नतु वैशेषिका गुणाः। अन्यथा ऽकाशादिद्रव्योत्पत्तिर्न स्यात्। गुणाद्द्रव्योत्पत्तेः प्रेक्षावद्भिरनङ्गीकारात्।

तत्र पञ्चीकृतपञ्चतन्मात्रेभ्यः भूतोत्पत्तिं केचन सङ्गिरन्ते। केचन त्रिवृत्कृतेभ्यः। तदुक्तं कल्पतरुकृद्भिः।

सम्प्रदायाध्वना पञ्चीकरणं यद्यपि स्थितम्।
तथापि युक्तिदृष्टत्वाद्वाचस्पतिमतं शुभम्।
पृथिव्यनलात्मत्वं गगने पवनेऽपि चेत्।
रूपवत्त्वमहत्त्वाभ्यां चाक्षुषत्वं प्रसज्यते।
अर्द्धभूयस्त्वतः क्षित्याद्यभिधावनकल्पने।
व्यवहारयथाप्राप्ता मुधा पञ्चीकृतिर्भवेत्।
अनपेक्ष्य फलं वेदसिद्धेत्येवेष्यते यदि।
त्रिवृत्कृतिः श्रुता पञ्चीकृतिर्न क्वचन श्रुता॥

तस्मात्सुष्ठूच्यते तेजोऽबन्नानामेव त्रिवृत्करणस्य विवक्षितत्वादिति।

यत्तु सम्प्रदायविदः। त्रिवृत्कृतिपक्षेऽपि तेजसो गन्धादिमत्वव्यवहाराभावेन दोषसाम्येऽपि व्यवहारप्राप्तपञ्चीकृतिपक्ष इति न ब्रूमः, किन्तु पञ्चीकृतौ अंशसद्भावात् त्रिवृत्कृति श्रुतेः पञ्चीकृतिनिवृत्तिपरत्वे एकस्य वाक्यस्य व्यापारद्वयकल्पने वाक्यभेदापत्त्यापञ्चीकृतिनिवृत्तिपरत्वस्याभावाच्च स पक्षः श्रौत एवेति। तन्न।

आद्यपक्षे पाष्ठकप्रतिनिधिन्यायोपजीवकसन्दंशन्यायविरोधापत्तेः ।

तथाहि । 'श्रुतिप्रमाणत्वाच्छिष्टाभावे नागमोऽन्यस्याशिष्टत्वा'-दित्यत्र दर्शपूर्णमासयोः श्रुतद्रव्यापचारे द्रव्यान्तरं प्रतिनिधाय प्रयोगः कर्त्तव्यो न वेति संशय्य न कर्त्तव्यः प्रमाणाभावात् । प्रमाणं हि कर्मचोदना द्रव्यं प्रयुंक्ते द्रव्यप्रयोजकं हि व्रीहिभिर्यजतेति तद्व्रीहीणां प्रयोजकं नान्यस्येत्याशंक्य व्रीहिशास्त्रं हि न द्रव्यस्य विधायकं किंतु कर्मचोदनाक्षिप्तं द्रव्यं व्रीहिशास्त्रेण नियम्यते—

यदा त्वलाभाद्व्रीहीणामुदास्ते व्रीहिचोदना ।
कर्मशास्त्रं तदा द्रव्यमन्यदाक्षिपति ध्रुवम् ।

तस्मादस्तिप्रतिनिधिः ।

इति सिद्धान्तितम् । तदुपजीव्य 'सामान्ये तच्चिकीर्षा हि'इत्यत्र यत्किंचित्प्रतिनिधातव्यमुत सदृशमेवेति परामर्शे आग्नेयचोदना तावत्किंचिद्द्रव्यमाक्षिपेत । व्रीहिशास्त्रं पुनःव्रीहिविषयं नान्यगोचरमतः प्रमाणाभावान्न सदृशसंग्रह इत्याक्षेपे प्राप्ते ।

व्रीहिचोदनया सत्रं व्रीहिजातिर्विधीयते ।
साच द्रव्यपरिच्छेदद्वारेणाङ्गत्वमृच्छति ।
तच्च द्रव्यं परिच्छिन्नमनेकावयवात्मकम् ।

अवयवा एव ह्येकद्रव्यतामापन्ना अवयविशब्दाभिधेया जात्या परिच्छिद्यन्ते । नत्वत्यंतमर्थांतरमतस्तैरेवात्रयवैर्जात्याश्रयीभूतैः कर्म साधनीयं तत्र यदि सदृशमुपादीयते ततस्तेषामवयवानां कतिपया लभ्यन्ते जातिमात्रं अवयवान्तरमात्रं च परित्यक्तं भवति । विशदृशोपादाने पुनः समस्तपरित्यागः स्यात् । अतो व्रीहिशास्त्रमपि यथासंभवमुपपादयितुं सदृशोपादानमिति सिद्धान्तितत्वम् ॥

तथाच नीवारेष्वपि व्रीह्यवयवानां सत्वात्तदुक्तरीत्या स एव पक्षो मुख्यश्रौतः स्यात् । तथासत्युभयोर्लाभेऽपि नीवारपक्ष एवाश्रयणीयः स्यात्तथाच तत्सिद्धान्तो भज्येतेति भावः । द्वादशकसमु-

च्चयनिषेधकन्यायविरोधापत्तेश्च ।

तथाहि 'तुल्यार्थास्तु विकल्पेरन्समुच्चये ह्यावृत्तिः स्यात्प्रधानस्ये'त्यत्र व्रीहिभिर्यजेतेत्यादिष्वपि समुच्चयो मिश्रणं विकल्पो वा स्यादिति विमर्शे सर्वांगोपसंहारिप्रयोगवचनानुग्रहाय प्राप्तपरित्यागोऽप्राप्तस्वीकारः प्राप्तप्रामाण्यत्यागोऽप्राप्ताप्रामाण्यकल्पनमिति दोषचतुष्टयं प्रथमत्यागपक्षे, द्वितीयत्यागपक्षे च स्वीकृतपरित्यागः त्यक्तस्वीकारः । स्वीकृताप्रामाण्यत्यागः अस्वीकृताप्रामाण्यकल्पनम् इत्यष्टदोषनिदानविकल्पपरिहाराय च समुच्चयः स्यात् सम्भवति च ज्योतिष्टोमवदभ्यासमाश्रित्य समुच्चयसंपादनं, मिश्रैर्वेज्यतामिति प्राप्ते 'एकार्थाना'मेकस्मिन्नुपकारेऽन्योन्यानिरपेक्षया विनियुक्तानां विकल्पः स्यात् ।

ज्योतिष्टोमे हि ऐन्द्रवायवं गृह्णाति मैत्रावरुणं गृह्णातीत्यादिविहितदेवतासंयोगानामदृष्टार्थानामपर्यायविधानात् प्रकरणेना युगपद्ग्रहणात् सर्वसम्पादनाय युक्तं यदभ्यस्यते । व्रीहियवौ तु द्वाभ्यां वाक्याभ्यामन्योन्यनिरपेक्षौ यागद्रव्यपुरोडाशप्रकृतितया विधीयमानौ तद्द्वारेण प्रयोगवचनो गृह्णन्पर्यायेणैव गृह्णाति, न युगपत् येन बलात्प्रधानाभ्यासः स्यात् ज्योतिष्टोमवत् । मिश्रत्वमपि निरपेक्षविधानादयुक्तमेव समुच्चित्य यजतापि वाक्यद्वयमपि बाधितं स्यात् । द्वाभ्यामपि वाक्याभ्यां द्वयोरपि निरपेक्षयोः प्रकृतित्वेन विधानात्तद्बलेन द्रव्यान्तरनिवृत्तिप्रतीतेस्तस्माद्विकल्पः । ततो व्रीहियवप्रयोगे तैरेव कार्यसिद्धेर्यवानामनुपादानमिति सिद्धान्तितम् ।

तथाच समुच्चये मिश्रणे वा यवानां तत्र सत्वात्तदुक्तरीत्या पूर्वपक्ष एव प्रबलः स्यात्तथासति तत्सिद्धान्तो भज्येतेति भावः ।

द्वितीयपक्षे चतुर्थकनियमन्यायविरोधापत्तेः । तथाहि । 'कर्त्तृदेशकालानामचोदनं प्रयोगे नित्यसमवाया'दित्यत्र 'दर्शपूर्णमासयोश्चत्वार ऋत्विजः' 'समे यजेत' 'पौर्णमास्यां पौर्णमास्या यजेत'

'व्रीहिभिर्यजेत' 'सोमेन यजेत' त्यादिकारकमुदाहृत्य विचार्य्यते अनुवादमात्रमुत विधिरिति, तत्राविषमादिस्वरूपं विधीयेत, विषमादिनिवृत्तिर्वा, स्वरूपं तावत् न विधातव्यं प्राप्तत्वात् । विषमादिनिवृत्तिविधौ परिसंख्याप्रसङ्गः, साच त्रिदोषा, तन्न प्रकारान्तरं विधेरुपलभामहे येनैतत्परिसङ्ख्यादोषमनासाद्यैव विधित्वं लभेरन् । तस्मादनुवाद इति प्राप्ते नियमेन नहि प्राप्तिर्ऋत्विजादीनामतो यस्मिन्पक्षे न ऋत्विजादीनां प्राप्तिस्तस्मिन्पक्षे विधिर्भवेत् । अतो नानुवादत्वम् । परिसंख्या च न भवेत् । अप्राप्तपक्षसद्भावात् । नियमार्थो विधिः परिसङ्ख्या स्वार्थिकीति सिद्धान्तितम् । तथाच त्वदुक्तरीत्या पूर्वपक्ष एव प्रबलः स्यात्तथा सति तत्सिद्धान्तो भज्येतेति भावः ।

किञ्च पयोव्रतं ब्राह्मणस्येत्यादावपि पयोमिलितान्नादिभक्षणादिकमपि शास्त्रार्थः स्यात् ।

अथ गुणोपसंहारन्यायेनाकाशवाय्वोरुपसंहारावश्यकत्वे तासामित्यत्र पञ्चानामेव ग्रहणप्रसङ्गेन तेषांच त्रिवृत्करणासम्भवेन त्रिवृत्वमित्यादेः पञ्चीकरणे एव तात्पर्यमवश्यमभ्युपेयम् । अत्रोच्यते पञ्चीकरणप्रकारश्चेत्थं—पञ्चभूतानि प्रथमं प्रत्येकं द्विधा विभज्य ततश्चैकैकमर्द्धं चतुर्द्धा विभज्यते, तेषां चतुर्णां भागानां स्वेतरेषु भागेषु योजनमिति ।

त्रिवृत्करणे त्रीणि भूतानि द्विधा विभज्य ततः प्रतिभूतमेकैकार्द्धं द्विधा विभज्य तयोर्भागयोः स्वेतरभागद्वये योजनमिति । एतादृशत्रिवृत्करणासम्भवेन पञ्चीकरणाभ्युपगमे विनिगमनाविरहेण षडादिकरणापत्तिः । तत्करणप्रकारश्चेत्थं । एकैकं षोढा विभज्यांशद्वयातिरिक्तानामितरांशानां स्वस्वातिरिक्तांशेषु योजनात् एकैकस्य षड् विभागा भवन्तीत्येवंरीत्याऽग्रेऽपि बोध्यम् । नच लाघवं विनिगमकं कणभक्षाद्यभ्युपगतत्रिअणुवत् । स्वस्वजातीयैरेव पञ्चानां त्रिवृत्करणापत्तेः । विजातीयानां मेलने गौ-

प्रकृतेः इति। प्रकृतिरव्यक्तम्। महदहङ्कारौ वक्ष्यमाणलक्षणौ। एकादशेन्द्रियाणि वक्ष्यमाणानि, तन्मात्राणि च पञ्च, सोऽयं षोडशसंख्यापरिमितो गणः षोडशकः। तस्मादपि षोडशकादपकृष्टेभ्यः पञ्चभ्यस्तन्मात्रेभ्यः पञ्च भूतान्याकाशादीनि।

तत्र शब्दतन्मात्रादाकाशं शब्दगुणम्, शब्दतन्मात्रसहितात् स्पर्शतन्मात्राद्वायुः शब्दस्पर्शगुणः, शब्दस्पर्शतन्मात्रसहिताद्रूपतन्मात्रात्तेजः शब्दस्पर्शरूपगुणम्, शब्दस्पर्शरूपतन्मात्रसहिताद्रसतन्मात्रादापः शब्दस्पर्शरूपरसगुणाः, शब्दस्पर्शरूपरसतन्मात्रसहिताद्ग-

रवात्। किञ्चैकैकं त्रिधा विभज्य ततोऽशद्वय एकैकं द्विधा विभज्य स्वस्वेतरांशेषु मेलनमित्यादि रीत्यापि स्वांशद्विकपञ्चविभागसम्भवेन पञ्चीकरणसम्भवे सम्प्रदायरीत्यैव पञ्चीकरणे विनिगमकाभावात्त्रिवृत्करणश्रुतिविरोधाच्च त्रिवृत्करणपक्ष एव मुख्यसिद्धान्तो भाति।

सोऽपि अहंकाराच्छब्दतन्मात्रं ततश्चाहङ्कारसहकृताच्छब्दतन्मात्राच्छब्दस्पर्शगुणकं स्पर्शतन्मात्रमेवं क्रमेणैकैकगुणवृद्ध्या तन्मात्राण्युत्पद्यन्ते इति समानार्थक-शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रमिति एकद्वित्रिचतुःपञ्चलक्षणाः शब्दादयः पञ्चाविशेषा-इति श्रीमद्भगवत्पूज्यपादवेदव्यासाचार्यकृत योगभाष्यविरोधात्तेजसो गन्धादिमत्त्वप्रसक्तिदोषाच्च न मुख्य इति सूचयन् तत्प्रक्रिययैव भूतोत्पत्तिमाह-तत्रेत्यादि। अतएव कियद्भिः विद्यारण्यस्वाम्यादिभिरपीयमेव प्रक्रियाङ्गीकृता।

नचैवंत्रिवृच्छ्रुतिविरोधस्तस्या यथाव्यवहारमात्रानुवादत्वात्। अन्यथा न्यूनाधिकवैचित्र्यानुपपत्तेः। नच न्यूनाधिकव्यवहारसत्त्वेऽपि चन्द्रादिपरिमाणबोधकशास्त्रस्येव नानुवादत्वमिति वाच्यम्।

तत्र दूरत्वादिदोषवदत्र दोषानुपलम्भात् । सर्वत्र दोषकल्पने ऽनाश्वासप्रसङ्गात्

वस्ततस्तु योगभाष्योक्तपक्षेऽपि क्वचिज्जलादौ यावद्द्रव्यभाव्यौष्ण्यस्याल्पवडवानले जलविनाशकत्वस्य क्वचिद्देशविशेषस्थिताल्पतेजसि जलाविरोधित्वस्योपलब्धेर्मतद्वयवत्प्रतिबन्धकत्वं, यथाव्यवहारप्राप्तानुवादकत्वं वाऽवश्यं कल्पनीयम् । तथाच मतद्वयात्किं लाघवम् एकद्वि इत्यादेः को विशेषश्च ।

किंच मतत्रयेऽपि वायुस्पर्शस्यैव सर्वत्राङ्गीकारेण तैजसादौ तद्विरुद्धोष्णस्पर्शाद्यनुपपत्तिः। नचैवं सति कारणगुणाः स्वसजातीयकार्यगुणानारभन्ते इतिनियमवादिनां मतप्रवेश इति वाच्यम् । तादृशनियमस्य पूर्वं दूषितत्वात् ।

यदप्याकाशं द्विधा विभज्य ततश्चैकमर्द्धं चतुर्द्धा विभज्य तेषां चतुर्णां स्वेतरत्र योजनं । वायोः षोडशांशमाकाशे संयोज्य पुनः द्विधा विभज्य पुनरेकमर्द्धं त्रिर्विभज्य तेषां स्वस्मादुत्तरेषु त्रिषु योजनं । एवं तेजसः षोडशांशमाकाशे वायौ च संयोज्य पुनर्द्विधा विभज्य पुनरेकार्द्धं द्विधा विभज्य तत्रैकैकं स्वस्मादुत्तरयोर्योजयेत् । एवं जलस्य षोडशांशं षोडशांशं पूर्ववत् त्रिषु संयोज्य पुनः त्रिधा विभज्यैकांशस्य पृथिव्यां योजनं । पृथिव्यास्तु चतुर्थांशं चतुर्द्धा विभज्यैकैकं स्वेतरत्र चतुर्षु योजयेत्

तदपि न । आकाशादेश्चाक्षुषत्वादिदोषाभावेऽपि पूर्वोक्तविनिगमनाविरहतादवस्थ्यात् । तैजसादौ विरुद्धोष्णस्पर्शाद्यनुपपत्त्यानिवृत्तेः सर्वजनीनरूपरसगन्धादिवैचित्र्यानुपपत्तेश्च

किंच ज्ञानकरणत्वेन क्लृप्तानामिन्द्रियाणामदृश्यत्वात्सूक्ष्मत्वाङ्गीकारेऽपि महद्भूतोत्पत्त्यैव व्यवहारनिर्वाहे किमन्तर्गडुना सूक्ष्मभूतोत्पत्त्यङ्गीकारेण तदङ्गीकारे भूयस्त्रिवृदादिकरणे गौरवं च ।

यदि जालान्तर्गतसूर्यमरीचिषु यत्सूक्ष्मं द्रव्यमुपलभ्यते तत्त्र्यणुकं

तत्षष्ठांशःपरमाणुस्वरूपमतीन्द्रियं पृथिव्यादिसूक्ष्मभूतमेकैकं, तर्हि तेषामतिसूक्ष्मत्वाद्विभजनासंभवः । यद्यनेकात्मकं सूक्ष्मं च तर्हि परमाणुमतप्रवेशः तच्च मतं श्रीमद्भगवदाचार्या दूषयांबभूवुः ।

एतस्माज्जायते प्राणो मनः सर्वेंद्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥

इत्यादौ त्रिवृत्करणादौ प्रयासं सूक्ष्मेन्द्रियाद्युत्पादनप्रयोजनाभावं च श्रुतितात्पर्याभावं च विमृश्य त्रिवृत्करणादिप्रक्रियां विहाय एतानि च शब्दस्पर्शरूपरसगन्धोत्तरगुणानि पूर्वपूर्वगुणसहितानि एतस्मादेव जायन्त इत्यनेन स्थूलप्रक्रियां चाङ्गीचक्रुः । सृष्टौ तात्पर्याभावश्च तत्प्रतिवद्धफलाश्रवणात् । कार्यकारणशून्यमद्वितीयं ब्रह्मेत्युक्ते कार्यजातस्यान्यदेव किञ्चित्कारणं स्यादित्याशङ्कायामद्वितीयत्वमप्रतिपादितं स्यात्तदर्थं ब्रह्मैवोपादानमित्युक्त्वा तच्छङ्कानिरासद्वाराऽद्वितीये तात्पर्यावधारणाच्च । तत एव गुणगुणिभावोऽपि न कणभक्षादिमतवत् । किन्तु राहोः शिर इतिवत् व्यपदेशमात्रमित्यलमतिप्रसङ्गेन ।

स्वमते दिक्कालौ चाकाशमेव । एतेषु पदार्थेषु अष्टौ 'प्रकृतयः । षोडश विकार' इति गर्भोपनिषत्, पृथिवी च पृथिवीमात्रा चेत्यादिप्रश्नोपनिषच्चेत्प्रमाणं । अनुमानं च तथाहि—अपकर्षकाष्ठापन्नानि स्थूलभूतानि स्वविशेषगुणवद्द्रव्योपादानकानि स्थूलत्वात् घटादिवत् । स्थूलत्वं च बाह्येन्द्रियग्राह्यविशेषगुणवत्त्वं । अत्रानवस्थापत्त्या सूक्ष्ममादायैव साध्यं पर्यवस्यति । अनुकूलतर्कश्चात्र कारणगुणप्रक्रमेण कार्यगुणोत्पत्तेर्बाधकव्यतिरेकेणापरिहार्यत्वम् ।

नच प्रकृत्यादिकमादायार्थान्तरं, प्रकृतेः शब्दादिगुणरहितत्वेन सिद्ध्यसम्भवात् । तत्र—

शब्दस्पर्शविहीनं तु रूपादिभिरसंयुतम्
त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम् ॥

इति विष्णुपुराणादिवाक्यजातं मानम्। बुद्ध्यहंकारयोश्च शब्दस्पर्शादिमत्त्वे भूतकारणत्वश्रुतिस्मृतय एव बाधिकाः। बाह्येन्द्रियग्राह्यजातीयविशेषगुणवत्त्वस्यैव भूतलक्षणत्वेन तयोरपि भूतत्वापत्त्या स्वस्य स्वकारणत्वानुपपत्तेरिति। कारणद्रव्येषु रूपाद्यभावेऽपि तन्मात्राद्रूपाद्यनुपपत्तिपरिहारस्तूक्त एव।

नन्वेवं विशेषगुणवद्द्रव्ये सिद्धेऽपि लाघवाच्छब्दादिविशेषगुणवत्सूक्ष्ममेकमेव सिद्ध्येदिति चेन्न। आकाशे स्पर्शादिप्रतीत्यापत्तिविरोधेन लाघवस्याकिञ्चित्करत्वात्। मात्रासंज्ञा तु 'पृथिवीच पृथिवीमात्रा चे'त्यादिना श्रौती। इन्द्रियानुमानं तु 'अत्रहि रूपादिज्ञाना'दित्यादिना टीकायामुक्तम्। तत्वान्तरेण तत्वान्तरानुमानमेव प्रकृतत्वादिदानीमुच्यते बाह्याभ्यन्तरेन्द्रियैः पञ्चतन्मात्रैश्च अभिमानवृत्तिमदन्तः करणरूपाहङ्कारसिद्धिः।

तथाहि—तन्मात्रेन्द्रियाणि अभिमानवद्द्रव्योपादानकानि अभिमानकार्यद्रव्यत्वाद्यन्नैवं तन्नैवं यथा पुरुषादि। नचाभिमानवद्द्रव्यमेवासिद्धमिति वाच्यम्। अहं गौर इत्यादिबुद्ध्युपादानतया तत्सिद्धेः। नच प्रकृत्यादिनार्थान्तरम्।

वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा।
अहंतत्वाद्विकुर्वाणान्मनो वैकारिकाश्च ये।
देवा अर्थाभिव्यञ्जनं यतः सर्वाः प्रवृत्तयः॥
तैजसादिन्द्रियाण्येव ज्ञानकर्ममयानि च।
तामसाद्भूतसूक्ष्मादि यतः खं लिङ्गमात्मनः

इत्यादिस्मृतिविरोधेन प्रकृत्यादिसिद्ध्यसम्भवात्। अत्र विपर्यये 'बहु स्यां प्रजायेय' 'प्रकृतेर्महा'नित्यादि श्रुतिस्मृतयो बाधिकाः। नचात्राभिमानस्यैव हेतुत्वश्रवणाद्बाध इति वाच्यम्। अभिमानस्यैकार्थसमवायप्रत्यासत्त्या हेतुत्वकल्पनापेक्षया लाघवेन कारणस्य वृत्तिलाभे कार्यवृत्तिलाभस्यौत्सर्गिकत्वेन च तदाश्रययोरेव

न्धतन्मात्राच्छब्दस्पर्शरूपरसगन्धगुणा पृथिवी जायत इत्यर्थः ॥ २१ ॥

अव्यक्तं सामान्यतो लक्षितम् "तद्विपरीतमव्यक्तम्" (कारिका१०)इत्यनेन; विशेषतश्च"सत्त्वं लघुप्रकाशकम्" (कारिका १३) इत्यनेन । व्यक्तमपि सामान्यतो लक्षितम् "हेतुमत्" ( कारिका १० ) इत्यादिना । सम्प्रति विवे-

---

कार्यकारणभावकल्पनात् ।

नचैवं कुलालाहङ्कारस्यापि घटोपादानत्वापत्त्या कुलालमुक्तौ तदन्तःकरणनाशे तन्निर्मितघटनाशापत्तिरिति वाच्यम् । घटादिषु हिरण्यगर्भाहङ्कारस्यैव कारणत्वात् । तेन च महत्त्वाख्यबुद्धिसिद्धिः ।

तथाहि—अहङ्कारद्रव्यं निश्चयवृत्तिमद्द्रव्योपादानकं निश्चयकार्यद्रव्यत्वात् । यन्नैवं तन्नैवं यथा पुरुषादि । विपर्यये अयमहं, मयेदं कर्त्तव्यमित्यादिरूपेणादौ पदार्थं स्वरूपतो विनिश्चित्य पश्चादभिमन्यते इति सर्वजनीनं विरुध्येत । सईक्षांचक्रे तदैक्षत बहुस्यामित्यादि श्रुत्युक्तबुद्धिपूर्वकसृष्टिश्रवणं च विरुध्येत । नच कर्त्तृनिष्ठबुद्धिहेतुत्वेऽपि तदाश्रयद्रव्यस्याहेतुत्वं इति वाच्यम् । दत्तोत्तरत्वात् । तेन च महत्तत्वेन प्रधानसिद्धिः ।

तथाहि—सुखदुःखमोहधर्मिणी बुद्धिः सुखदुःखमोहधर्मकद्रव्यजन्या कार्यत्वे सति सुखदुःखमोहात्मकत्वात्कान्तादिवत् । बाधकं विना कारणगुणानुविधायिकार्यगुणौचित्यत्यागो विपर्यये बाधकः । प्रकृतेर्महानित्याद्यागमश्च । नच विषयस्य सुखादिसाधनत्वाद् दृष्टान्तासिद्धिरिति वाच्यम् । सुखाद्यात्मकत्वस्य पूर्वं साधितत्वादिति । प्रकृतेर्महानित्यादावपेक्षितं क्रियापदमध्याहरति जायत इति ॥ २२ ॥

अवसरसङ्गतिसूचनायाप्रतिज्ञातार्थनिरूपणशङ्कावारणाय च पूर्वोक्तमनुवदति—अव्यक्तमिति । विवेकज्ञानोपयोगितयेत्यनेन

कज्ञानोपयोगितया व्यक्तविशेषं बुद्धिं लक्षयति—

अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम् ।
सात्त्विकमेतद्रूपं तामसमस्माद्विपर्यस्तम् ॥ २३ ॥

"अध्यवसाय" इति । 'अध्यवसायो बुद्धिः' क्रिया-क्रियावतोरभेदविवक्षया । सर्वो व्यवहर्ता ऽऽलोच्य म-

---

तच्छङ्का निरस्ता, मूलप्रकृतिरित्यनेन प्रकृतेर्लक्षणं पूर्वमुक्तमत उद्देश्यक्रमेण महत्तत्त्वलक्षणपरत्वमाह—

बुद्धिमिति । नचाभिमानोऽहङ्कार इत्यादिवन्महच्छब्दाभावात्कथं तल्लक्षणनिश्चय इति वाच्यम् ।

यदेतद्विस्तृतं बीजं प्रधानपुरुषात्मकं ।
महत्तत्त्वमिति प्रोक्तं बुद्धितत्त्वं तदुच्यते ॥
मनो महान्मति ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः

इत्यादिना बुद्धिमहत्तत्त्वयोरेकपर्यायत्वावगमात् । बुद्धेर्महत्तत्त्वसञ्ज्ञा च स्वेतरसकलकार्यव्यापकत्वान्महदैश्वर्याच्चान्वितार्था । 'अस्य च महतो भूतस्य निश्वसितमेतद्यदृग्वेद' इत्यादिश्रुतिस्मृतिषु हिरण्यगर्भे चेतनेऽपि महानितिशब्दो बुद्ध्यभिमानादेव । यथा पृथिव्यभिमानिनि चेतने 'यं पृथिवी न वेद'इति पृथिवीशब्दः । एवं रुद्रादिष्वहङ्कारादिशब्दोऽपि बोध्यः ।

ननु निश्चयाख्यस्याध्यवसायस्य महत्तत्त्वासाधारणधर्मत्वात्सामानाधिकरण्यमनुपपन्नमित्यत आह—क्रियेति । तथाच धर्मिधर्मयोरस्मिन्मतेऽभेदान्न सामानाधिकरण्यानुपपत्तिरिति भावः । क्रिया चात्र परिणामविशेषः । महत्तत्त्वस्याद्यकार्यत्वे उक्तागमसत्त्वेऽपि तत्र युक्तिमाह—सर्व इति । शब्दप्रयोगानयनक्रियादिरूपसकलव्यवहारस्य केवलचेतनप्रयोज्यत्वादर्शनेन विशिष्टस्य च दर्शनेन विवादास्सामान्यरूपेण प्रयोजकं दर्शयति—व्यवहर्तेति । बुद्ध्युपा-

त्वा ऽहमत्राधिकृत इत्यभिमत्य कर्तव्यमेतन्मयेत्यध्यव-
धिकः पुरुषः चित्प्रतिबिम्बाश्रया बुद्धिर्वेत्यर्थः । आलोच्य—चक्षु-
र्द्वारा वहिर्निर्गच्छन्त्या चैतन्यप्रतिबिम्बाश्रयया घटाद्याकारान्तः
करणवृत्त्या घटादीन् प्रकाश्य ततो मत्वेष्टानिष्टकृतिसाध्यासाध्य-
वक्तव्यावक्तव्यादिविभागेन विमृश्य । एतेन प्रवृत्तिनिवृत्तिप्रयोजे-
केष्टानिष्टसाधनताज्ञानं सूचितम् ।

एवं सत्यपीदमिष्टसाधनमिदानीन्तनमत्कृतिसाध्यश्चेति ज्ञाना-
भावात्प्रवृत्तिरनुपपन्नेत्यत आह—अत्रेति । तथा चोक्तज्ञानवान् अ-
धिकृत' इत्यनेनोक्त इत्यर्थः । मननानन्तरं चिकीर्षाद्वारा प्रवृत्ति-
साधनमनुव्यवसायं दर्शयति—कर्त्तव्यामिति । नचानुव्यवसायस्य
चक्षुरादिप्रयोज्यालोचनाद्यधीनत्वाभिधानात् कथमाद्यकार्यत्वमिति
वाच्यम् । अन्धबधिरादीनां तत्वज्ञानेनाहङ्कारमनसोर्लयेऽपि स्म-
रणदर्शनात् भाविविषयकज्ञानदर्शनाच्चोक्तरीत्या सर्वकरणव्याप-
कत्वाच्च बुद्धेरेव सर्वत्र कार्ये कारणत्वकल्पनात् ।

ततश्च प्रवर्त्तते इति । उपादित्सादिद्वारेति विशेषः ।

ननु जडबुद्धेः परिणामस्याध्यवसायस्य घटाद्यविशेषात्कथं
विलक्षणव्यवहारप्रयोजकत्वमित्यत आह—तत्रेत्यादि । तथा च
बुद्धेरतिस्वच्छतया चित्प्रतिबिम्बग्राहित्ववत्तत्कार्यस्यापि तद्ग्राहि
त्वान्न घटाद्यविशेष इत्यर्थः । नच नीरूपस्य निरवयवस्य प्रतिबि-
म्बानुपपत्तिरिति वाच्यम् । तादृशरूपादीनां लोके प्रतिबिम्बदर्शनात् ।
नच नीरूपद्रव्यस्यैव तन्नेति नियम इति वाच्यम् । 'अस्थूलमनण्वह्र-
स्वमदीर्घमशब्दमस्पर्शमव्यय' मित्यादिद्रव्यत्वव्यापकपरिमाणादिनि-
षेधेन द्रव्यत्वस्य तत्राभावेऽपि 'रूपं रूपं प्रतिरूपो बभूव' । 'यथा-
ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना
क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा' 'एकधा बहुधा चैव
दृश्यते जलचन्द्रवत्' । 'जीवेशावाभासेन करोति । माया चाविद्या-

च स्वयमेवभवती'त्यादि श्रुत्या तस्य प्रतिबिम्बप्रतिपादनात् ।

नचैवं विषयाकारवृत्तौ प्रतिबिम्बितं सदेव चैतन्यं तत्तदाकारवृत्तिं च प्रकाशयतीत्यायातं तथा सति 'पुरुषनिष्ठ एव बोधः प्रमे'ति पातञ्जलभाष्यं

तस्मिंश्च दर्पणे स्फारे समस्ता वस्तुदृष्टयः ।
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ॥

इति स्मरणं च विरुध्येतेति वाच्यम् । 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानं' इति न्यायविरोधात् । सूत्रं तु विरोधे—प्रत्यक्षश्रुतिविरोधे अनुमानं—स्मृत्यादि यतो मूलभूतश्रुतिकल्पकं दृढवैदिकपरिग्रहान्यथानुपपत्तिरूपमतोऽनुपश्चात्प्रत्यक्षोत्तरं प्रवृत्तत्वादनुमानपदाभिधेयमनपेक्षं स्यादनादरणीयं स्यादप्रमाणं स्यादित्यर्थः । असति-प्रत्यक्षश्रुतिविरोधेऽसति अनुमानं-स्मृत्यादि प्रमाणं स्यादित्यध्याहृत्य व्याख्येयम् ।

भाष्यकारादिमते घटमहं जानामीत्याद्यनुरोधेन विषयप्रकाशे पुरुषस्यापि प्रकाशावश्यकत्वे प्रकाश्यप्रकाशकयोः सम्बन्धो वाच्यः सच विषयाकारवृत्तौ विषयतापरपर्यायस्तद्गतचैतन्यप्रतिबिम्बश्च तद्वत्पुरुषेऽपि स्वप्रकाशार्थमिन्द्रियसन्निकर्षेण लिङ्गज्ञानादिना जायमानाया विषयाकारिण्याः बुद्ध्याश्रिताया चैतन्यप्रतिबिम्बविशिष्टवृत्तेरपि प्रतिबिम्बो वाच्य स्तथाच विनिगमनाविरहेणान्योन्यप्रतिबिम्बसिद्धेश्च ।

एतेन ज्ञानव्यक्तीनामनुगमकधर्माभावेन घटविषयकं पटविषयकं ज्ञानमित्याद्यनुगतव्यवहारानुपपत्त्या विषयतामतिरिक्तपदार्थं वदन्तः परास्ताः, अवश्यक्लृप्तचैतन्यप्रतिबिम्बेनैव निर्वाहेऽतिरिक्तकल्पने गौरवात् ।

एवं चैतन्यप्रतिबिम्ब एव सुखादिसाक्षात्कार इत्यपि सुवचम् । नच विषयसंयुक्तेन्द्रियसंयुक्तमनः संयोगाख्येनासमवायिकारणेन

पुरुषे घटादिविषयकसाक्षात्काररूपकार्यसम्भवे घटाद्याकारवृत्तिचित्प्रतिबिम्बादिकल्पनं निष्प्रमाणकमिति वाच्यम् । श्रुतिस्मृतिसूत्राणाँ प्रमाणत्वात् ।

तथाहि—

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम् ।
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥
आत्मानात्माकारं स्वभावतोऽवस्थितं चित्तम् ।
आत्मैकाकारतया तिरस्कृतानात्मदृष्टि विदधीत ॥
मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धाय विषयासङ्गो मोक्षाय निर्विषयं स्मृतम् ॥
यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥
सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र नचैवायं स्थितश्चलति तत्वतः ॥
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिं स्थितो न दुःखेन गुरुणापि विचाल्यते ॥
तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।
'तदा द्रष्टुः स्वरूपेऽवस्थानं वृत्तिसारूप्यमितरत्रे'ति ॥

काठकश्रुतिस्तु ज्ञानेन्द्रियाणि मनो बुद्धिश्च न विचेष्टते वृत्तिरूपेण न परिणमते । अप्रमत्तः द्वैतभानरूपप्रमादशून्यः ॥ प्रभवाप्ययौ पुण्यहेतुः पापनाशकश्चेति व्याख्येया ।

स्मृतिस्तु आत्मानात्माकारं दृग्दृश्याकारं यथाहं भुञ्जे इत्यादि यत उभयाकारमतं आत्मातिरिक्ताकारवृत्तिशून्यत्वे सति आत्माकारवृत्तिमत्कुर्यादित्युत्तरार्द्धार्थः । उक्तोभयहेतुमुपपादयति—बन्धायेति । विषयासक्ति विषयं व्याप्य तत्तदाकारं भवति विषयाकार-

वृत्तिशून्यत्वे सति स्वात्माकारवृत्तिमदित्यर्थः । योगसेवया संप्रज्ञातसमाधिरूपयोगाभ्यासेन यत्र यस्मिन् मनःपरिणामे जाते सति चित्तं निरुद्धं सर्ववृत्तिशून्यं सदुपरमते कमपि विषयं न गृह्णाति, यत्र च मनः परिणामे सति आत्मना शुद्धसत्वेन मनसैव व्यञ्जकेनात्मानं प्रकृत्यादिभिन्नं सर्वसाक्षिणं पश्यन् पुरुष आत्मन्येव तुष्यति द्वैतभानप्रयुक्तदुःखेन रहितः । अनात्मविमुखीकृतेन मनसैव भातीति व्याख्येया ।

तदा सकलचित्तवृत्तिनिरोधकाले । 'योगश्चित्तवृत्तिनिरोध' इति उपक्रमात् । द्रष्टुः स्वरूपेऽवस्थानं बुद्धिवृत्त्यनवच्छिन्नत्वं । इतरत्र कालान्तरे वृत्तिसारूप्यं बुद्धिवृत्त्यवच्छिन्नत्वमिति सूत्रार्थः ।

यद्यपि बुद्धिरूपमन्तःकरणं शरीरमध्यस्थसुखादिरूपेण परिणम्यमानत्वाच्छरीरमध्यस्थं तथापि हस्तपादाद्यवयवावच्छिन्नसुखदुःखादिरूपेण परिणम्यमानत्वाच्छरीरावयवेषु सर्वेषु व्यापकं स्वीकार्यम् । घटाद्याकारेत्यस्य घटादिसन्निकृष्टेन्द्रियसंयुक्ता सती आकाराख्यविषयतासंबन्धेन घटादिसंबद्धचाक्षुषादिरूपा भवतीत्यर्थः । घटाद्यसंयुक्तभागावच्छेदेनैवेन्द्रिये तत्संयोग इति नैयायिकास्तन्न विनिगमनाविरहादिन्द्रियघटादिसंयोगावच्छेदेनापि मनःसंयोगसम्भवात् ।

यदुक्तं विषयसंयुक्तेन्द्रियमनःसंयोगाख्येनासमवायिकारणेन पुरुषे घटादिविषयकसाक्षात्काररूपकार्यसम्भव इति । तदपि न, निरवयवे संयोगासम्भवात् । नहि स्वात्यन्ताभावसमानाधिकरणरूपाऽव्याप्यवृत्तेर्निर्विभागे वृत्तिः सम्भवति । नचावच्छेदकभेदेन सा न विरुद्धेति वाच्यम् । निरवयववृत्तिधर्मेऽवच्छेद्याभावासमानाधिकरणत्वविशिष्टावच्छेद्याधिकरणसंबद्धत्वरूपावच्छेदकत्वस्यासंभवात् । अवच्छेद्याधिकरणसंबद्धस्यैवावच्छेदकत्वे द्रव्यत्वादेरपि संयोगविशेषावच्छेदकत्वप्रसङ्गात् । नच सावयवेऽपि संयोगो न स्यात् ।

अग्रादेरवच्छेद्याभावाधिकरणवृक्षादिसंबद्धत्वेनासंबद्धत्वरूपावच्छेद्याभावासमानाधिकरणत्वासम्भवादिति वाच्यम् । अवयवभेदोपाधिकस्यावयविन्यप्यवयविभेदस्य सम्भवात् ।

यत्त्वत्र श्रीमहामहोपाध्यायनैयायिकचक्रचूडामणिश्रीमद्गङ्गेश्वराचार्याः—नचान्योन्याभावस्याऽव्याप्यवृत्तित्वम् । अभेदस्याबाधितप्रत्यभिज्ञानादित्याहुः ।

तदापाततः । कपिसंयोगिभेदाभावस्य कापिसंयोगिभिन्नभेदस्य च कपिसंयोगरूपतया तस्याग्रावच्छेदेन कपिसंयोगवति वृक्षे वर्त्तमानस्य मूले वृक्षः कपिसंयोगवद्भिन्न इतिप्रतीतिविषयस्य मूलावच्छेदेन वृक्षे बाधात् उक्तप्रतीतेरबाधितत्वासिद्धेः । यद्युक्तदोषभिया तत्राग्रे वृक्षः कपिसंयोग्यभिन्न इत्यङ्गीकुरुथ, तदा संयोगविषयत्वेनाबाधितत्वेऽपि मूले वृक्षो न कपिसंयोगीत्यबाधितप्रतीत्यविरोधित्वेनान्योन्याभावस्याव्याप्यवृत्तित्वनिरासासम्भवात् ।

नचान्यवान्योन्याभावात्यन्ताभावस्यान्योन्याभाववद्भेदस्य च प्रतियोगितावच्छेदकरूपत्वेऽप्यव्याप्यवृत्तिस्थले तद्वदन्योन्याभावाभावस्य तद्वद्भिन्नभेदस्य चातिरिक्तस्य व्याप्यवृत्तिस्वभावस्योक्तप्रतीत्यन्यथानुपपत्त्याभ्युपगमान्न पूर्वोक्तदोष इति वाच्यम् । युक्त्या भ्रमत्वोपपत्तिभ्यां प्रतीत्यन्यथानुपपत्यभावात्कल्पनागौरवाच्च । कल्प्यमानोऽपि व्याप्यवृत्तिरव्याप्यवृत्तिर्वा । आद्ये मूलस्यानवच्छेदकतया तत्प्रतीतेर्भ्रमत्वापत्तिः । चरमेऽविरोधित्वेनान्योन्याभावस्याव्याप्यवृत्तित्वनिरासासम्भवः । एतेन कपिसंयोगिभेदाभावःकपि संयोगाभिन्नभेदो वा नकपिसंयोगरूपो नाप्यतिरिक्तः किन्तु तत्तद्व्यक्तिस्वरूपस्तादात्म्यसम्बन्धेन तत्तद्व्यक्तिस्वरूपो वेति परास्तम् । तस्य व्याप्यवृत्तेराद्यदोषानिवृत्तेः । नच वृक्षः कपिसंयोगभिन्न इति यथार्थप्रतीतिरेवान्योन्याभावस्याव्याप्यवृत्तित्वे बाधिकेति वाच्यम् । वृक्षे कपिसंयोगिभेदस्याव्याप्यवृत्तित्वे तद्भेदाभावस्य तद्भिन्नभेद-

स्यति' ततश्च प्रवर्तत इति लोकसिद्धम् । तत्र यो ऽयं कर्तव्यमिति विनिश्चयश्चितिसन्निधानादापन्नचैतन्याया बुद्धेः सो ऽध्यवसायः, बुद्धेरसाधारणो व्यापारः; तदभेदा बुद्धिः । स च बुद्धेर्लक्षणं समानासमानजातीयव्यवच्छेदकत्वात् ॥

तदेवं बुद्धिं लक्षयित्वा विवेकज्ञानोपयोगिनस्तस्या धर्मान्सात्त्विकतामसानाह—"धर्मो ज्ञानं विराग ऐश्वर्य-

---

स्य च सुतरां वृत्तेरग्रावच्छेदेन सत्त्वात्तादृशप्रतीत्यनुपपत्तिविरहात् । नच मूले वृक्षः कपिसंयोगी नेतिप्रतीतिर्विशेषणीभूतसंयोगात्यन्ताभावविषयिणीति वाच्यम् । भेदप्रतीतिमात्रोच्छेदापत्तेः । नच गुणादौ संयोगवदन्योन्याभावप्रतीतेरयोगोलकादौ धूमादिमदन्योन्याभावप्रतीतेश्च बाधकाभावात्तद्विषयकत्वमिति वाच्यम् । अत्रापि बाधकाभावस्योक्तत्वात् ।

समानासमानजातीयेति । समानासमानता च परार्थत्वापरार्थत्वाभ्यामित्यर्थः । धर्मनिरूपणे धर्मिनिरूपणोपजीवकतासूचनायार्याशेषमवतारयति ।

तदेवमिति । 'चोदनालक्षणोऽर्थो धर्म' इत्यनेन सूत्रेण धर्मस्वरूपं तत्प्रमाणं श्रुत्यर्थाभ्यां निरूप्यते । यो धर्मः स चोदनालक्षणः, चोदना—प्रवर्त्तकं निवर्त्तकं च वाक्यमेव—लक्षणं यस्येति श्रुत्या प्रमाणविधौ यथा चोदनागम्य एव धर्मो यागादिजन्यो नतु चैत्यवन्दनादिजन्य इति स्वरूपं सिद्ध्यति, तथा यः चोदनालक्षणः स धर्म इति स्वरूपविधावर्थात्प्रमाणमपि सिद्ध्यति । एवं चोदनामात्रलक्षणस्यानर्थहेतुहिंसादिजन्यस्य धर्मत्वं, तद्वाक्यस्य तत्प्रमाणत्वं च माभूदित्यर्थशब्देन विशेष्यते। अर्थश्चाभ्युदयनिःश्रेयसे तत्साधनं च, फले विध्यभावात् तत्साधनमेवार्थपदेन विवक्षि-

सूत्रार्थानुसारेण धर्मलक्षणमाह—धर्म इति । तथाचात्र चो-

म् । सात्त्विकमेतद्रूपम्, तामसमस्माद्विपर्यस्तम्" इति । धर्मो ऽभ्युदयनिः श्रेयसहेतुः, तत्र यागदानाद्यनुष्ठानजनितो धर्मो ऽभ्युदयहेतुः, अष्टाङ्गयागानुष्ठानजनितश्च निः श्रेयसहेतुः । गुणपुरुषान्यताख्यातिर्ज्ञानम् । विरागो वैराग्यम् "रागाभावः ॥

---

दनालक्षण इत्यध्याहृत्य योऽभ्युदयनिः श्रेयसहेतुरूपो धर्मः स चोदनालक्षण इत्येवमिदं व्याख्येयम् । अन्यथा चैत्यवन्दनादिजन्यस्यापि निरासकहेत्वभावेन धर्मत्वापत्तेः । क्रमेण द्वयमुदाहरति—तत्रेत्यादि ।

अवान्तरव्यापारत्वान्नापूर्वमभ्युदयनिः श्रेयसहेतुर्लोकप्रसिद्धिविरहाच्चान्तःकरणवृत्त्यादिरपि नेति पार्थसारथिमिश्रादयो वदन्ति तन्मतं कटाक्षयन्नाह—यागदानाद्यनुष्ठानजनित इति । यथौदनकामः पचेतेत्यादौ धात्वर्थे प्रवृत्त्यर्थं कृतिसाध्यत्वमिष्टसाधनत्वं च विधिप्रत्ययेन बोध्यते । नच विक्लित्तिफलादौ साधनप्रवृत्त्या फलस्य साक्षात्कृत्या साधयितुमशक्यत्वात् साधनकृतित एव तत्सिद्धेश्च । इष्टाकाङ्क्षायां कामपदसमभिव्याहारात्काम्यत्वेन श्रुत ओदन एवेष्टत्वेन सम्बध्यते तथा स्वर्गकामो यजेत इत्यत्रापि लिङा कृतिसाध्यत्वे इष्टसाधनत्वे च बोधिते फलाकाङ्क्षायाङ्काम्यत्वेन श्रुतः स्वर्ग एवेष्टत्वेन सम्बध्यते ।

एवं कृतिसाध्यत्वेष्टसाधनत्वयोरभावस्य कलञ्जभक्षणादौ बाधेन कलञ्जं भक्षयेदित्यादिनिषेधकवाक्यानामप्रामाण्यवारणाय बलवदनिष्टाननुबन्धित्वेनापि साधनं विशेषणीयम् । यागं विनापि गङ्गास्नानादिना स्वर्गोत्पत्त्या यागे स्वर्गसाधनत्वव्यभिचारवारणाय विजातीयस्वर्गसाधनत्वं वक्तव्यम् । एवमप्यन्वक्षविनाशिनो यागस्य स्वाव्यवहितपूर्वक्षणावच्छेदेन स्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकधर्मवत्त्वरूपस्वर्गसाधनत्वबाधवारणाय यागस्य स्वजन्योत्तरावस्था या सूक्ष्मा सैवापूर्वपदाभिधेयाऽवश्यम-

ङ्गीकार्या, तथाच तस्या एव साधनत्त्वेन विधितात्पर्यविषयाया धर्मत्वं ननु तज्जनकमत्यक्षयागादेरित्यर्थः ।

ननु यूपपदार्थोद्देशेन तक्षणादिसंस्कारकर्मविधायकस्य 'यूपं तक्षती'त्यादिवाक्यस्य पर्यालोचनात्तक्षणादिजन्यसंस्कारविशिष्ट-काष्ठं यूपपदवाच्यं । यथा वा 'वसन्ते ब्राह्मणोऽग्नीनादधीत नक्तं गार्हपत्यमादधाति दिवा आहवनीय'मित्यादिवाक्यपर्यालोचनेन-दिवाधानादिसाध्याग्न्यादिराहवनीयादिपदवाच्यस्तथा 'आग्नेयोऽष्टाकपालो भवत्यमावास्यायां, 'ऐन्द्रं दधि भवत्यमावास्यायां ऐन्द्रं पयो भवत्यमावास्यायां' 'आग्नेयोऽष्टाकपालो भवति पौर्णमास्यां' 'ताभ्यामग्नीषोमीयमेकादशकपाल पौर्णमासे प्रायच्छत्' 'उपांशुयाजमन्तरायजती' इत्यादिवाक्यस्य 'सास्य देवते'ति वाक्यस्य च पर्यालोचनात् द्रव्यदेवतासम्बन्धो येन व्यापारेण सम्भवति तादृशव्यापारो यजिपदवाच्य इति निर्णीयते ।

एवं यो यागादिलक्षणं कर्म करोति तं विद आचक्षते धर्मं करोति धार्मिक इत्यादिलोकतश्च । एवं शक्तिग्राहकशास्त्रलोकयोरभावान्नापूर्वयजिपदशक्तिग्रहः । नच यागगोदोहनादेर्धर्मत्वे तस्य प्रत्यक्षत्वेन विध्येकगम्यत्वलक्षणासम्भव इति वाच्यम् । फलसाधनत्वरूपेण धर्मत्वात् फलस्य च जन्मान्तरभावित्वेन तेनरूपेण प्रत्यक्षासम्भवात् । कस्यचिद्वृष्टिपशुपुत्रादिरूपफलस्यैहिकत्वेऽप्यव्यवहितोत्तरोत्पत्त्यभावेन तत्रापि प्रत्यक्षाप्रवृत्तिरेव । अतएव गोदोहनादिद्रव्यं यागादिक्रिया उच्चैस्त्वादिगुणश्च फलसाधनत्वाद्धर्मशब्देनोच्यते नापूर्वादय इति श्रेयस्करभाष्यमपि सङ्गच्छते इति चेद् ।

अत्रोच्यते । सत्कार्यवादिनां स्थूलस्यैव सूक्ष्मरूपेणावस्थानात् । स्थूले तादृशव्यापारे जायमानस्य शक्तिग्रहस्य सूक्ष्मविषयकत्वसम्भवात् । स च व्यापारो देवतोद्देश्यकत्यागविशेषः । अत्रापि देवतोद्देश्यक-

त्वं परिचायकमुपलक्षणं वा विजातीयेच्छैव त्यागो याग इति । परिचायकत्वं च प्रत्याय्यव्यावृत्त्यधिकरणतानवच्छेदकत्वे सति व्यावर्त्तकत्वं । नतु क्रियाऽनन्वयित्वे सति व्यावर्त्तकत्वं क्रियाहीने सुभगोऽयं दण्डी, महाबाहुः, नीलोत्पलमित्यादौ दण्डादावतिव्याप्तेः । तच्च यथा जटाभिस्तापस इत्यादौ जटादेरतापसेऽपि सत्वादतापसव्यावृत्त्यधिकरणतानवच्छेदकत्वाज्जटादेः परिचायकत्वं । तथा यागे देवतानिवेदनादावपि देवतोद्देश्यकत्वसत्त्वेनायागव्यावृत्त्यधिकरणतानवच्छेदकत्वाद्देवतोद्देश्यकत्वस्य परिचायकत्वम् ।

देवतोद्देश्यकत्वं च देवतास्वत्ववद्विशेष्यकत्वमिति नैयायिकाः । यूपाहवनीयादिवद्यागस्याप्यलौकिकत्वेन वेदेनैव तदवगमो वाच्यस्तदुक्तं तन्त्ररत्ने–'वेदवाक्यपौर्वापर्यमात्रात्कल्पसूत्रकारपरिभाषणाद्वा वैदिकपदार्थज्ञानं भवती'ति । सच तव मते न सम्भवति तादृक् वेदानुपलम्भात् । विजातीयत्वानिरुक्तेश्च ।

यदि वेदबोधितदेवतास्वत्ववद्विशेष्यकत्वमेव विजातीयत्वं तस्य च प्रातर्नो यक्ष्यते इत्यादावनन्वयभिया यज्यनन्तर्भावस्तर्हि 'सोऽग्निमीक्षमाणो व्रतमुपैतीत्युपक्रम्य मनो ह वै देवा मनुष्यस्याजानन्ति त एनमेतद्व्रतमुपयन्तं विदुःप्रातर्नो यक्ष्यत इति तस्य विश्वे देवा गृहानागच्छन्ति तस्य गृहेषूपवसन्ती'त्यादिना इज्यमानदेवानां गृहावस्थानमुक्तम् । अग्रे षोडशकपालो भवतीत्यादिना तद्देवत्यं कुर्यादित्युक्तं नह्यव्याप्रियमाणमनुद्दिष्टं चरुपुरोडाशादि तद्दैवत्यं भवत्यतस्तत्कथं कुर्यामित्याकाङ्क्षायां ओश्रावयास्तुश्रौषट् यज येयजामहे वौषट् 'वषट्कारेणाग्नावेव योनौ रेतोभूतं सिञ्चन्ति पर्यग्निकृतं पात्नीवतमुत्सृजती'त्यादिना प्रक्षेपोत्सर्गाद्यनुकूलकृतेरेवावगमात्स एव विजातीया यजिपदार्थो भवतु । अतएव'धातोऽधिकार' इति सूत्रीया—

प्रयत्नरूपो यागोऽयं निष्फलः सच नेष्यते ।

इति कर्काचार्यभाष्यस्थप्राचीनोक्तिरपि सङ्गच्छते इत्यन्ये ।

याज्ञिकास्तु इदमिन्द्राय नममेति मानसी क्रिया एव वेदबोधिता यजिपदार्थः । तत्र च ।

आदौ द्रव्यपरित्यागः पश्चाद्धोमो विधीयते ।
प्रयोग इदमिन्द्राय नममेति यथार्थतः ।
अवत्तं तु त्यजेदन्नं मनसा वाचयापि च ।
ततश्च प्रक्षिपेदग्नाविति धर्मः सनातनः ।
अत्यक्त्वा जुहुयाद्यस्तु मोहेनान्वितमानसः ।
देवा हव्यं न गृह्णन्ति कथञ्च पितरस्तथा ।
यत्किञ्चिज्जुहुयादग्नौ तत्सर्वं त्यागपूर्वकम् ।
अन्यथा जुहुयाद्यस्तु नरकं सतु गच्छति ॥
इति देवयाज्ञिकभाष्यस्थस्मृतिर्मानमित्याहुः ।

यदि स्मृतिः प्रामाणिकी तदापि तया होमस्य त्यागपूर्वकत्वबोधनेऽपि त्यागस्य यागत्वाबोधनात् ।

वस्तुतस्तु 'आदौ द्रव्यपरित्याग' इत्यादेः यत्किञ्चिदित्यादिना पुनरुक्तः । अत्यक्त्वा जुहुयादित्यादेः अध्वर्युकर्तृकहोमसमाख्याविरोधाच्च स्मृतिः काल्पनिकीत्येव प्रतिभातीति ।

बहुषु यागेषु होमस्यापि सम्भवात् । यजतिजुहोतीनां को विशेष इति प्रश्ने'तिष्ठद्धोमा वषट्कारप्रदाना याज्यापुरोनुवाक्यावन्तो यजतयः' । 'उपविष्टहोमा स्वाहाकारप्रदाना जुहोतय'इति कात्यायनसूत्रानुयायिनः । 'नानुयाजेषु' 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ती'त्यादावव्याप्त्या तदपि न चारु । यागत्वहोमत्वादयो मानसप्रत्यक्षगम्या जातिविशेषा एवेत्यपरे । तन्न तादृशजातौ मानाभावात् । पितरो देवतेत्यनेन पितॄणां देवतात्वावगमे श्राद्धस्य पित्रपेक्षया यागत्वेन ब्राह्मणापेक्षया दानत्वेन तत्र साङ्कर्याच्च ।

यत्तु द्रव्यदेवतासम्बन्धसमुदायो यज्यर्थः । तदुक्तं जैमिनि-

ना। 'यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वा'दिति। सूत्रे त्वत्र क्रियापदं सम्बन्धपरं। 'यजतिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां कर्मसम्बन्धा'दिति द्वितीयाध्यायसूत्रानुरोधात्। तथाच यजतिचोदना—आख्यातान्तं यजेतेति पदं द्रव्यदेवतासम्बन्धमभिधत्ते। तत्र हेतुमाह—'समुदाये कृतार्थत्वात्'। तात्पर्येण समुदाये वृत्तित्वात्प्रत्यायनरूपकार्यकृतत्वात्। वेदेन तथैव निर्णयादिति यावत्।

नचायं प्रत्ययविशिष्टयज्यर्थ इति भ्रमितव्यं प्रत्ययार्थस्य कृतिसाध्यत्वादेरत्रादर्शनात्। नचयजतीत्येव सामञ्जस्ये चोदनाग्रहणं व्यर्थमिति वाच्यम्। यो द्रव्यदेवतासम्बन्धं करोति तेन यजिचोदनार्थः सम्पादितो भवत्यत एव धार्मिको भवतीत्येवं निजोक्तार्थे तात्पर्यग्राहकत्वेन तस्य सार्थकत्वात्। नच समुदायवाचकत्वे पुष्पवन्तपदाद्दिवाकरनिशाकरयोरिव द्रव्यादेः स्वातन्त्र्येण प्रतीत्यापत्तिरितिवाच्यम्। प्रातिस्विकरूपेण शक्त्यभावादित्येवं व्याख्यातं पार्थसारथिमिश्रैरिति तन्न। तन्निर्णायकवेदस्यानुपलम्भात्।

ननु प्रक्षेपादेरेव प्रधानत्वे तस्य चाध्वर्युकर्तृकत्वात्स्वामिकर्तृकत्वबोधकन्यायविरोधस्तथाहि—'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्तस्मात्स्वयं प्रयोगे स्या'दित्यत्र स्वर्गकामो यजेतेति सामानाधिकरण्येनात्मनेपदेन च कर्तुरेव फलावगमात्स्वर्गकामविशिष्टो यजमान एव सर्वं कुर्यादित्याशङ्क्य परिक्रयद्रव्यपरिगृहीतानामध्वर्य्वादीनामधिकारः, कुतः? परिक्रयद्रव्यश्रवणात्। तच्च कर्त्रन्तरसद्भावेऽदृष्टार्थं स्यात्। 'तद्ये माजीजनन्त तस्मादृत्विग्भ्य एवे'त्यनेन यज्ञस्वरूपस्यात्मनो निष्पत्तिकर्तृत्वं निमित्तं तेभ्यो दाक्षिणादाने निर्दिष्टं तददृष्टार्थे विरुध्यते। यत्त्वर्थिनः साङ्गे कर्तृत्वं तत्तु प्रयोजकत्वेनापि सम्भवति 'तत्प्रयोजको हेतुश्चे'ति स्मरणात् तथाच ऋत्विग्भिः क्रियमाणेऽपि न विरुध्यते, यथा राजपुरुषैः राज्ञः प्रेरणया कृते राज

कृतमिति व्यवहारस्तथा प्रकृतेऽपि । एवं सर्वत्रर्त्विकप्राप्तौ प्रधानस्य द्रव्योत्सर्गस्यान्येन कर्तुमशक्यत्वाद्यजमान एव कुर्यादिति सिद्धान्तितम् । 'प्रधानं स्वामी फलसंयोगा'दिति कात्यायनसूत्रेऽपि तथैव व्युत्पादितम् । तच्च 'वषट्कृतेऽध्वर्युर्जुहोती'ति श्रुत्या प्रधानस्य प्रक्षेपस्याध्वर्युकर्तृकत्वबोधनाद्विरुद्ध्येतेति चेन्न ।

'वषट्कृतेऽध्वर्युर्जुहोती'ति श्रुत्या प्रधानस्याध्वर्युकर्तृकत्वे बोधितेऽपि यावत्स्वामी न परस्मै प्रयच्छति तावदस्वामिकं मह्यन्दत्तमिति परो न स्वीकुरुते, स्वीकाराभावाच्च तदीयस्वत्वं नोत्पद्यते इत्याशङ्का स्यात्तद्वारणाय सूत्राणामपेक्षितस्वाम्यनुमतिपरत्वादनुमत्यतिरिक्तकल्पनेऽपीच्छाविशेषस्यैव प्रधानत्वकल्पनेन पूर्वोक्तयुक्त्या तत्र शक्तिग्रहाभावप्रसङ्गात् । 'प्रधानद्रव्यव्यापत्तौ साङ्गावृत्ति'रिति सूत्रविरोधाच्च ।

तथाहि–प्रधानं फलं तत्साधनं कर्म प्रधानपदेन विवक्षितं साध्यसाधनयोरभेदात्तस्य साधनं यद् द्रव्यं पुरोडाशाज्यसान्नाय्यचर्वामिक्षाधानामन्थकरम्भसक्तवादिलक्षणं तन्नाशे दुष्टत्वे वा साङ्गावृत्तिरिति तत्तत्प्रक्षेपस्यैव द्रव्यसाध्यत्वान्न तु तादृशसङ्कल्पस्य तद्विनापि सम्भवात् ।

किञ्चानुमत्यतिरिक्तकल्पनेऽपि उक्तयुक्त्या यद्यतिरिक्त एव स्यात् । स च यागरूप उत्सर्गस्तर्हि अग्निमुद्दिश्येदमुत्सृजामि इति स्यात् । परस्वत्वापत्तिश्चेदग्नेरिदमस्त्विति स्यात् । स्वस्वामिभावस्य षष्ठीं विना ऽसम्भवात् । दानं चेत्तच्च सम्प्रदानसाध्यं तत्रेदमग्नये- इत्येव स्यात् । परस्वत्वापत्तेः स्वत्वनिवृत्तिपूर्वकत्वेनार्थादेव नममेति सिद्धेः । यागस्य दानत्वेऽपि नोदकपूर्वकत्वम् । तदुक्तमापस्तम्बेन–'सर्वाण्युदकपूर्वाणि दानानि यथाश्रुति तु विहारे' इति । विहारोऽग्न्यादानु प्रक्षेपः । अन्वाहार्यदानादि इत्यपरे । 'दानवाचनान्वा-

रम्भवरवरणव्रतप्रमाणेषु यजमानं मनीया'दिति कात्यायनसूत्राद् पद्सु यजमानं कर्त्तारं जानीया'दिति याज्ञिकसम्प्रदाय इत्यलमतिप्रसङ्गेन ।

आसेचनाधिको यागो होमः । तदुक्तं जैमिनिना— 'तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकः स्या'दिति । सूत्रन्तु पात्नीवतोत्सर्गापेक्षया आसेचनमधिकं भिन्नं यस्मिन् स आसेचनाधिको यागः । जुहोतिर्होमः स्यात्कुतस्तदुक्ते यजत्यभिहिते यागे श्रवणादर्थाज्जुहोतेरिति व्याख्येयं । अत्रासेचनपदं प्रक्षेपोपलक्षणार्थं अन्यथा 'ारुतं जुहोति' इति कठिनद्रव्ये सप्तकपालकपुरोडाशेऽपि जुहोतिदर्शनेन तत्र सिञ्चनाभावदव्याप्त्यापत्तेः । तथाच कचित्प्रक्षेपसत्त्वेऽपि पात्नीवतादावभावाद्धोमाद्यागो भिन्नः । नच होमो यागादिभिन्नो मा भवत्विति वाच्यम् । इष्टापत्तेः । अतएव यजतिचोदितं जुहोतिरनुवदतीति शावरभाष्यं सङ्गच्छते इत्याहुः ।

उदङ् प्राङ् वा तिष्ठन्नाहुतीः । इदं वा अनुवाक्याथ याज्याथ वषट्कारेणासीन आहुतीर्जुहोतीति भेदवादिनः ।

देवतालाभस्तु 'तद्धितेन चतुर्थ्या वा मन्त्रलिङ्गेन वा पुनः' । परिभाषया वेति । यथा आग्नेयोऽग्नीषोमीय इत्यत्र 'सास्यदेवते'ति देवताधिकारीयतद्धितात् । तथा'अग्नये दात्रे' 'इन्द्राय दात्रे'इत्यत्र चतुर्थ्या । तथा सौम्योपरियागे 'इदंविष्णुर्विचक्रमे'इत्यादिमन्त्रलिङ्गाद्विष्णोर्ग्रहणम् । यथा वा सर्वं गायत्रमाग्नेयमिति परिभाषया । तत्र पूर्वं पूर्वं प्रबलं श्रुत्यनुग्रहात् । इदंच तत्रैवानुसन्धेयम् । हविर्भोक्तृत्वं देवतात्वमिति केचित् । हविर्निष्ठस्वत्वनिरूपकत्वरूपहविर्भोक्तृत्वस्य यजमानेऽतिव्याप्तिः । त्यागात्प्राक् अव्याप्तिश्च । द्रव्यान्तरे देवतात्वाभावापत्तेश्च , हविःपदस्य द्रव्यसामान्यपरत्वं भागित्वस्य च त्यागजन्यकादाचित्कस्वत्वनिरूपकत्वं विवक्षितम् । 'नयोषिद्भ्यः पृथग्दद्या'दित्यादिना पार्वणादौ पत्नी स्वत्वभागितया त्रातिव्याप्तेः।

त्यागजन्यस्वत्वप्रकारकेच्छाविषयत्वरूपोद्देश्यत्वं देवतात्वमित्युक्तेऽपि दानादिरूपद्रव्यत्यागजन्यस्वत्वप्रकारकेच्छाविषयत्वरूपोद्देश्यत्वस्य ब्राह्मणेऽपि सत्वेन तत्रातिव्याप्तेः । अतो मन्त्रकरणकहविस्त्यागभागित्वेनोद्देश्यत्वमिति मणिकृन्महामहोपाध्यायनैयायिकचक्रचूडामणिश्रीमद्गङ्गेश्वराचार्याः ।

मन्त्रकरणकत्यागजन्यद्रव्यनिष्ठस्वत्वभागित्वेनोद्देश्यत्वं देवतात्वमिति वर्त्तुलार्थः । ब्राह्मणेऽतिव्याप्तिवारणाय मन्त्रकरणकेति त्यागजन्यस्वर्गनिष्ठस्वत्वनिरूपकत्वरूपोद्देश्यत्वस्य त्यागकर्तरि सत्वात्तत्रातिव्याप्तिवारणाय द्रव्यनिष्ठेति । तदपरे न क्षमन्ते । त्यागे मन्त्रस्य करणत्वे मानाभावात् । प्रत्यक्षविरोधाच्च । मुक्तपित्रादेः श्राद्धे हविर्भागित्वाभावेन तत्राव्याप्तेश्च । विसंवादीच्छामादाय चरमदोषवारणेऽतिप्रसङ्गात् ।

यत्तु मन्त्रकरणकेत्यादेः मन्त्रोच्चारणपूर्वकविधिबोधितद्रव्यसम्बन्धित्वप्रकारकत्यागविषयत्वमर्थः । दानस्यापि तुभ्यं सम्पददे इत्यादिवाक्योच्चारणपूर्वकत्वेन शास्त्रबोधितत्वान्मन्त्रनिवेशः । द्रव्यस्यापि देवतासम्बन्धितया त्यागविषयत्वात्तत्रातिव्याप्तिवारणाय द्रव्येति । प्रतिग्रहीतुः 'कोऽदा'दित्यादिमन्त्रोच्चारणपूर्वकविधिबोधितद्रव्यसम्बन्धित्वप्रकारकप्रतिग्रहविषयत्वात्तत्रातिव्याप्तिवारणाय त्यागनिवेश इति ।

तन्न । शूद्रकृतश्राद्धे प्रेतश्राद्धे च पित्रादेर्देवतात्वाभावप्रसङ्गात् । नच तज्जातीयद्रव्यसम्बन्धस्य विवक्षितत्वान्न दोष इति वाच्यम् । गौरवात् । तज्जातीयद्रव्यसम्बन्धस्यान्यत्रापि सत्त्वेनातिप्रसङ्गाच्च । नच तत्र देवतात्वानभ्युपगम इति वाच्यं । स्वपितॄणां भिन्नत्वेऽपि विश्वेदेवादीनां सर्वत्रैक्यात् । किन्तु लाघवाद् द्रव्यप्रतिग्रहरहितत्वे सति द्रव्योद्देश्यतया चोदितत्वं देवतात्वमित्येव वाच्यम् । अतएवोपदेशकर्मप्रतिग्रही[illegible]रश्चोदनोपलक्षितं तद्देवतेत्युच्यते इति तन्त्ररत्नमपि

सङ्गच्छते।

दानं मूल्यग्रहणं विना स्वस्वत्वध्वंसपरस्वत्वजनकत्याग इति सम्प्रदाय इति दिनकरभट्टादयः। तन्न सम्भवति। मूल्यस्य तत्तद्व्यक्तिविश्रान्तत्वेन सामान्यलक्षणासम्भवात्। नच मूल्यस्य तत्तद्व्यक्तिविश्रान्तत्वेऽपि तत्तद्ग्रहणाभावेन विशिष्टलक्षणकरणे न दोष इति वाच्यं। तदभावकूटस्य युगसहस्रेणापि ज्ञानाऽसम्भवात्। स्वत्वपरत्वगर्भत्वेनाननुगमाच्च। राज्ञो दण्डं ददाति, चैत्रस्य भोक्तुं स्थालीं ददातीत्यादावतिव्याप्तेः परस्वत्वोत्पत्त्यभावे नोत्सर्गादावव्याप्तेश्च। नच तत्र दानत्वमेव नास्तीति वाच्यम्। 'दूरस्थाभ्यामपि द्वाभ्या'मित्युपक्रम्य 'मनसा पात्रमुद्दिश्य भूमौ तोयं विनिक्षिपेत्। विद्यते सागरस्यान्तो दानस्यान्तो न विद्यते' इति विरोधापत्तेः। केवलत्यागस्य परस्वत्वजनकत्वे मानाभावाच्च।

तस्मात्त्यागविशेष एव दानं। त्यागविशेषश्चेदमेतस्य नममेत्याकारिका निरुपधिरिच्छा, तत्र जातिविशेषो ददातेः प्रवृत्तिनिमित्तम्। नच सम्प्रदानस्य कारकत्वं न स्यात्तादृशत्यागे सम्प्रदानस्याहेतुत्वादिति वाच्यम्। उक्तषडन्यतमत्वरूपस्य कारकत्वस्य तत्राप्यक्षतेरित्यपरे।

तदपि न पेशलं। परकीयद्रव्ये इदमेतस्य नममेतीच्छायामतिव्याप्तेः। स्वीयस्यापि स्वकार्याक्षमस्यातिजीर्णस्य वस्त्रगवादेः सिंहश्वापदादेः पर्युषितोच्छिष्टान्नादेरिदं न ममेतीच्छायां,

यद्ददाति विशिष्टेभ्यो यच्चाश्नाति दिने दिने।
तत्ते वित्तमहं मन्ये शेषं कस्यापि रक्षसि॥ इति।

व्यासवचनं श्रुत्वाऽतिजीर्णस्य महाव्याधिग्रस्तस्य जायमानायामिदं कस्यचिन्नममेतीच्छायां चातिव्याप्तेः।

नचेदं ज्ञानमेव नेच्छेति वाच्यं। तव मतेऽपि तुल्यत्वात्। इच्छायां मूल्यग्रहणाभावातिरिक्तस्य निरुपधित्वस्यानिर्वचनाच्च मू-

त्वग्रहणाभावस्य च त्वयैव निरस्तत्वात् । एतदस्मद्गर्भत्वेनाननुगमस्य जातिविशेषेणानुगमस्य च राज्ञो दण्डं ददातीत्यादावनुपदोक्तसिंहादिस्थले च तादृशजात्यनङ्गीकारेणातिव्याप्तिवारणस्य चोभयतुल्यत्वाच्च । नच वित्तादौ तादृशजात्यभावेन दोषवारणे मूल्यग्रहणं विनेति व्यर्थमिति वाच्यम् । तस्य परिचायकत्वेन लक्षणेऽप्रवेशात् । नच भवन्मते उत्सर्गस्थले प्रतिग्रहपराङ्मुखस्थले चोक्ताव्याप्तिस्तदवस्थैवेति वाच्यम् । तत्रापि जात्यङ्गीकारादिति सम्प्रदायमतमेव स्वत्वमपि पदार्थान्तरमिति दीधितिकारोक्तिं श्रद्दधानाः केचन परिष्कुर्वन्तीति ।

तदपरे न क्षमन्ते । जातिव्यञ्जकविशेषानिरुक्त्या जात्यसम्भवे उभयमतेऽप्युक्तदोषानिवृत्तेः ।

यत्तु पदार्थखण्डने दीधितिकाराः—एवं स्वत्वमपि पदार्थान्तरं । यथेष्टविनियोगयोग्यत्वं तदिति चेत्कोऽसौ विनियोगो भक्षणादिकमिति चेत्परकीयेऽप्यन्नादौ तत्संभवात् । शास्त्रानिषिद्धं तदितिचेत्किंतच्छास्त्रं 'परस्वं नाददीते' त्यादिकमिति चेत् । स्वत्वाप्रतीतौ कथं तस्य प्रवृत्तिस्तस्मात्स्वत्वमतिरिक्तमेव प्रमाणं च 'परस्वं नाददीते'त्यादिकं शास्त्रमेव । तच्च प्रतिग्रहोपादानक्रयपित्रादिमरणैर्जन्यते दानादिभिश्च नाश्यते कारणानामेकशक्तिमत्त्वात्कार्याणां वैजात्याद्वा कार्यकारणभावनिर्वाह इति ।

एतच्च व्याख्यातं रघुदेवभट्टाचार्यैः । नैयायिकानां स्वत्वत्वेन व्यवह्रियमाणं यत्तदपेक्षयातिरिक्तमित्यर्थः । तद्व्यवह्रियमाणं दूषयति तत्संभवादिति । भक्षणादिसम्भवात् । तत्रापि स्वत्वापत्त्या दोषसम्भवापत्तिरित्यर्थः । नाददीतेत्यादिना स्वं दद्यादिति ग्राह्यं । शास्त्रानिषिद्धं भक्षणादिविनियोगमपि दूषयति—स्वत्वाप्रतीताविति । तस्योपदर्शितशास्त्रस्य प्रवृत्तिः परकीयस्वत्वाश्रयादाननिषेधबोधकत्वं । तथाच स्वत्वज्ञाने सति तथाविधशास्त्रादुपदर्शितनिषे-

धबोधः, शास्त्रात्तथाविधनिषेधबोधे च सति शास्त्रबोधिततथाविधनिषेधप्रतियोगिकत्वरूपोपदर्शितनिषिद्धत्वादिघटितोपदर्शितस्वत्वज्ञानमित्यन्योन्याश्रय इति भावः । इदमुपलक्षणं योग्यत्वस्य निर्वचनाशक्यतयापि तद्घटितलक्षणमनुपपन्नमित्यपि द्रष्टव्यम् ।

ननु सर्वमिदं संभवति स्वत्वे प्रमाणसद्भावे, तदेव तु न पश्याम इत्यत आह—प्रमाणं चेत्यादि 'परस्वं नाददीत' 'स्वं दद्या'दिति शास्त्रस्य निषेधप्रतियोगितावच्छेदकघटकत्वेन त्यागविशेष्यतावच्छेदकत्वेन च स्वत्वस्य शाब्दप्रमितिजनकत्वात्सत्वे प्रमाणत्वमित्यर्थः । तस्य च नित्यत्वे प्रतिग्रहादिवैयर्थ्यमत आह—तच्चेति । दत्तद्रव्यस्य वैधः स्वीकारः प्रतिग्रहः । स्वीकारश्च स्वत्वजनकः संकल्पविशेषः । उपादानं—अस्वामिकारण्यस्थकुशकाशादेरानयनं । मूल्यदानपुरस्सरं द्रव्यस्वीकारः क्रयः । दानादिभिश्चेत्यादिना-विक्रयादिः ।

ननु समुदायं विना प्रत्येकस्मात्कार्योत्पत्तेः परस्परव्यभिचाराच्च कथं हेतुताग्रहः । एवं स्वत्वनाशं प्रति दानादीनामपीत्यत आह—कारणानामिति । वस्त्वादिकं प्रति एकशक्तिमत्त्वेन हेतुत्वाभ्युपगमादित्यर्थः । नैयायिकनये शक्तेरतिरिक्ताया अभावात्सम्बन्धभेदेन कारणताभेदादेकशक्तिकल्पनासम्भवाच्चाह—कार्याणामिति । तत्तद्विजातीयस्वत्वं प्रति प्रत्येकं प्रतिग्रहादीनां तत्तद्विजातीयस्वत्वनाशं प्रति प्रत्येकं दानादीनां हेतुत्वाभ्युपगमादित्यर्थ इति ।

तन्न । यदि क्रयत्वादयो न ज्ञाननिष्ठा इच्छानिष्ठा वा जातिविशेषाः किन्तु मूल्यदानपुरस्सरं द्रव्यस्वीकारः क्रयः, दत्तद्रव्यस्य वैधस्वीकारः प्रतिग्रह इत्यादिरूपक्रयादेः स्वत्वघटितत्वात् क्रयाद्यन्यतमत्वेनानुगमासंभवेऽपि शास्त्राविरुद्धविनियोगोपायत्वेन क्रयाद्युपायानामननुगमेऽप्येतादृशोपायविषयत्वरूपस्वत्व-

स्यासत्त्वेऽपि नाव्याप्तिः । द्रव्यान्तरक्रयाद्युत्पत्तिकालीनतद्द्रव्यीयविक्रयाद्यभाववति परकीयेऽतिव्याप्तेस्तद्द्रव्यक्रयादिकालीनद्रव्यान्तरविक्रयादिप्रागभावदशायां स्वीये चाव्याप्तेर्वारणायोभयत्र तत्तादिति । क्रीत्वा दत्तेऽतिव्याप्तिवारणाय विशिष्टान्तं । तत्रैवातिव्याप्तिवारणाय यावदिति । तत्तत्पुरुषीयत्वमुपाये विरोधिनि स्वत्वे च निवेशनीयं । तेन न परकीयेऽतिव्याप्तिः परेण विक्रीते स्वीये चौरोपनीते च नाव्याप्तिरित्याहुः ।

अत्रायमस्वरसः । यत्र क्रीत्वा पुनः विक्रीतं तत्र पुनः क्रये स्वत्वं न स्यात् । प्रथमक्रयकालीनो यो विक्रयप्रागभावस्तद्विशिष्टत्वस्य चरमक्रयेऽभावात् । चरमक्रयात्पूर्वं विक्रीतेऽपि पूर्वोक्तस्थले स्वत्वं च स्यात् । तत्पदे अन्यतमाविशेषणत्वेनोभयत्रोपादीयमाने तु न दोषः । चरमक्रयस्यैव तत्पदेनोपादानात् । तत्कालीनो न विक्रयप्रागभाव एवं द्वितीयस्थलेऽपीति ।

अन्ये तु क्रयादिध्वंस एव स्वत्वं । क्रयादीनां च शास्त्राविरुद्धविनियोगोपायत्वमेवानुगमकं । क्रीत्वा दत्तादावतिव्याप्तिवारणाय तादृशोपायसमानकालीनशास्त्राविरुद्धविरोध्युपायप्रतियोगिकयावदभाववत्त्वेन ध्वंसो विशेषणीयः । नच प्रमीतस्यार्जितेषु स्वत्वानिवृत्तिः । तत्र मरणस्यैव पुत्रादिस्वत्वप्रयोजकस्य शास्त्राविरुद्धविरोध्युपायस्य प्रागभावासत्त्वात् । पितृमरणं च पितृस्वत्वसहकृतं स्वनाश्यस्वत्वाश्रये वा पुत्रादिस्वत्वोत्पादकं तेन पित्रा पूर्वं विक्रीतादौ पितृमरणेन न पुत्रादिस्वत्वोत्पत्तिः । पित्रादिमरणमिव पित्रादिपातित्यमपि तज्जन्मीयपित्रादिव्यापारानाश्यमेव पित्रादिस्वत्वविनाशकं । पातित्यमात्रस्य तथात्वे पुत्राद्यनुमतिमन्तरेण पित्रादेः प्रायश्चित्तोपयोगिधनविनियोगक्षमतापि न स्यात् । न स्याच्च जीर्णप्रायश्चितस्यापि धनाधिकार इत्याहुः ।

ऋतुमवेक्ष्य मृते भर्तरि तदीयधने तत्समये पत्न्या एव स्वत्वं,

न भाविपुत्रस्य तत्समये शरीरानुत्पत्त्या तज्जन्यपुंस्त्वरूपपुत्रत्वाभावात् । भाविशरीरोपलक्षितस्यात्मनः स्वत्वाङ्गीकारे साम्प्रतिकचैत्रपुत्रशरीरावच्छिन्नस्य भाविमैत्रक्षेत्रजशरीरावच्छिन्नस्यात्मनो मैत्रमरणे तद्धनस्वत्वापत्तेः ।

यत्तु स्वत्वम्पदार्थान्तरं । तद्धि न सामान्यादित्रयात्मकं । उत्पत्तिविनाशशालित्वात् । नापि द्रव्यादित्रयात्मकं गुणेऽपि वृत्तित्वात् । नच स्वत्वस्य गुणवृत्तित्वे मानाभावः । अरुणयैकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणातीत्यादावारुण्यादेरपि द्रव्यवत् क्रयसाधनत्वप्रतीतेः । नच स्वत्वानाश्रयस्य साधनत्वं युज्यते परवस्तुस्वत्वप्रयोजकपरस्वत्वापादनार्थकत्यागकर्मत्वाश्रयस्यैव क्रयसाधनत्वात् । तादृशत्यागश्च स्वत्वाश्रयस्यैव सम्भवतीत्यर्थः । अतएव गुणोत्कर्षेण मूल्योत्कर्षः । 'एवं पुण्यदःपुण्यमाप्नोती'ति पुण्येऽपि स्वत्वमन्यथा दानासम्भवादतएव तस्य विक्रयमपि कुर्वन्ति आरुण्यस्य क्रयसाधनत्वं चाश्रयद्वारेति ।

तदपि न उक्तरूपेणैवोपपत्तेः । पुरुषापेक्षया विषयाणां बहुत्वेऽपि तत्स्वं ममस्वं ब्रह्मस्वमित्यादिप्रतीत्या विषयेष्वेव स्वत्वमङ्गीक्रियते । नचैवं विशेषणताविशेषसम्बन्धेन स्वत्वं प्रति इच्छाविशेषादिरूपक्रयादेर्विषयत्वसम्बन्धेन कारणत्वसम्भवेऽपि पितृमरणादेर्निर्विषयतया कारणत्वानुपपत्तिरिति वाच्यम् ।

उक्तक्रयादेः पुरुषनिष्ठसमवायरूपप्रत्यासत्यङ्गीकारेऽपि पितृमरणादेः पुत्रे समवायेनाभावादुक्तदोषानिवृत्तेः । पुत्रीयं पितृस्वत्वसमानाधिकरणपितृमरणसमानकालीनमिदं मदीयं पैतृकं वेति ज्ञानन्तद्विषयत्वरूपसम्बन्धनिवेशे यदा पितृमरणं पुत्रेणाज्ञातं तदा तत्पितृस्वर्णादिकं विनियुञ्जान उदासीनः प्रत्यवेयाद्दासादयेच्च ददतो विधिबोधितं फलमतः पितृस्वत्वसमानाधिकरणपितृमरणसमानकालीनज्ञानविषयत्वमेव निवेश्यं, नतु पुत्रीयत्वमपि ज्ञाने,

तथा तव मते तादृशेश्वरज्ञानस्य पुत्रात्मनि समवायाभावेन दोषसत्त्वेऽपि मम मते तादृशज्ञानविषयत्वसत्त्वेनोक्तदोषाभावाच्च ।

नन्वेवमपि क्रीततन्तुस्वर्णपिण्डजन्यपटकुण्डलादौ वैशेषिकनये पूर्वघटनाशात्पाकरक्ते घटे नैयायिकनये महापटध्वंसजन्यखण्डपटे क्रीतदुग्धजन्ये दध्नि चोभयमतेऽपि दुग्धद्व्यणुकपर्यन्तं नाशाङ्गीकारात्तत्र स्वत्वं न स्यात्क्रयाद्यभावादिति चेन्न । कार्यकारणयोरभेदात् । यथाचाभेदस्तथोक्तं पुरस्तात् । घटादिस्थलोहलेख्यचित्राणां निवृत्त्यापत्त्या घटाद्युपरिस्थितशरावादीनां च पतनापत्त्या पाकादिस्थले धर्मिभेदासम्भवाच्च । तादृशस्वत्वे दोषाभावसहकृतं क्रयादिज्ञानसहकृतं वा प्रत्यक्षं प्रमाणं । तेन क्वचित्स्वत्वाश्रयग्रहेऽपि दोषादिना संशयसत्त्वेऽपि नक्षतिरिति । केचित् तत्स्वं ममस्वं ब्रह्मस्वमित्याद्यनुगतः शब्दप्रयोगोऽनुगतधर्मनिमित्तकोऽनुगतशब्दप्रयोगत्वाद्गोशब्दप्रयोगवदित्याद्यनुमानमेवेत्याहुः । अक्षाद्यनुगतशब्दप्रयोगे व्यभिचारात् । अन्यथाऽक्षादिपदवाच्ये ऽनुगतधर्मस्वीकारापत्तेः । अतोऽनुमानासम्भवात् 'परस्वं नाददीत'' स्वं दद्यादि' त्याद्यागम एव निषेधप्रतियोगितावच्छेदकघटकत्वेन त्यागविशेष्यतावच्छेदकत्वेन च स्वत्वस्य शाब्दप्रमितिजनकत्वात्स्वत्वे प्रमाणमिति दीधितिकारानुयायिनः ।

प्रमाणान्तरेणाप्रतीते शक्तिग्रहासम्भवे तच्छब्दबोधासम्भवेन तज्जनकत्वेन प्रमाणत्वासम्भवात् । 'अतः तरति शोकमात्मवि'-दित्यत्र श्रुतस्य शोकशब्दवाच्यस्य बन्धजातस्यात्मज्ञाननिवर्त्यत्वानुपपत्त्या बन्धजातस्य मिथ्यात्वकल्पने श्रुतार्थापत्तिविषया तच्छ्रुतिवदयमागमः प्रमाणमुत श्रुत्यार्थापत्तिरित्यपरे ।

अलं प्रसङ्गागतेन प्रकृतमनुसरामः । स्वीयस्य वैधीयत्वापादानं दानं । यागदानादीत्यादिपदेन स्नानशौचादिसङ्ग्रहः । अभ्युदयः स्वर्गपशुपुत्रादिः । अष्टाङ्गेति । यमनियमासनप्राणायामप्रत्या-

हारधारणाध्यानसमाध्याख्यानि। तत्राहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः। तत्र यत्किञ्चित्प्राणिमरणानुकूलव्यापारस्य सर्वत्र सुलभत्वेन तत्सामान्याभावो वाच्यः सच न सम्भवति हस्तपादादिना सूक्ष्मप्राणिनां नाशसम्भवात् सुषुप्त्यादौ सामान्याभावसम्भवाच्चातः सर्वकालीनसर्वप्राणिमरणोद्देश्यकव्यापारसामान्याभावोऽहिंसा अत एव योगभाष्ये तत्राहिंसा सर्वथा सर्वदा भूतानामनभिद्रोह इति।

सत्यं च वाक् सा चोच्चार्यमाणवाक्यं। तत्र सत्यत्वं यथादृष्टानुमिताद्यन्यरूपेण बुबोधयिषयानुच्चार्यमाणत्वे सति उच्चार्यमाणवाक्यार्थगोचरभ्रमप्रमादाद्यजन्यत्वे च सति करणापाटवादिदोषाभाववति प्रकृतवाक्यजन्यशाब्दधीमत्त्वप्रकारकतद्वाक्यवक्तिच्छाविषये प्रतिपत्तिजनकत्वं। द्रोणाचार्येणायुष्मन्सत्यधन अश्वत्थामा हत इति स्वतनयाश्वत्थाममरणं पृष्टस्य युधिष्ठिरस्य हस्तिनमनुसंधायार्धसत्यं हतोऽश्वत्थामा इति प्रतिवचनेऽतिव्याप्तिवारणायाद्यं सत्यन्तं। वक्तृभ्रान्तिजेऽतिव्याप्तिवारणाय द्वितीयं। पार्थान्प्रतिम्लेच्छभाषावाक्येऽतिव्याप्तिवारणाय जनकत्वान्तं। करणापाटवादिदोषवत्पुरुषबुबोधयिषयोच्चार्यमाणेऽव्याप्तिवारणायकरणापाटवादिदोषाभाववतीतिसम्बोध्यपुरुषविशेषणं। असम्बोध्यपुरुषबोधजनके उक्तसम्बोध्यपुरुषबोधाजनकेऽतिव्याप्तिवारणाय प्रकृतेच्छारभ्य जनकत्वान्तं। करणापाटवश्चेच्छाविषयीभूतवर्णानुकूलकरणसंयोगानुत्पादकालीनतदनुकूलकरणसंयोगः। करणं कण्ठादि।

योगभाष्ये तु सर्वभूतोपकारार्थमिति प्रतिपत्तिविशेषणमुक्तं। यदि चैवमभिधीयमाना भूतोपघातपरैव स्यान्न सत्यं भवेत्तेन पुण्याभासेन पुण्यप्रतिरूपकेण कष्टं तमः प्राप्नुयात्तस्मात्परीक्ष्य सर्वभूतहितं सत्यं ब्रूयादिति। एवं च तस्करैः सार्थगमनं पृष्टस्य सत्यतया सार्थगमनबुबोधिषयोच्चार्यमाणा वागपि नसत्येत्यर्थः। यथार्थतात्पर्य-

कत्वं यथार्थवाक्यार्थप्रतीतिप्रयोजनकत्वं वा सत्यत्वमित्यपि केचित् ।

वाक्यसत्यत्वस्य मनोऽधीनत्वादुक्तसत्यत्वप्रयोजकयथादृष्टानुमितादिरूपेण बुबोधयिषादिमत्त्वमेव मनःसत्यत्वम् । अतएव सत्यं यथार्थे वाङ्मनसे इत्यत्रभाष्ये यथादृष्टं यथानुमितं यथाश्रुतं तथा वाङ्मनश्चेतिवाङ्मनसयोस्तुल्यसत्यत्वनिर्देशः ।

अस्तेयमवैधीयस्वीकाराभावः । सच वाक्कायिकव्यापारयो र्मानसव्यापारपूर्वकत्वेन वाचनिकप्राधान्यादस्पृहारूपमनोव्यापार एव मुख्य इति ध्येयम् । ब्रह्मचर्यमुपस्थसंयमः । विषयाणामर्जनरक्षणक्षयरागाहिंसादिदोषदर्शनादस्वीकरणमपरिग्रह इत्येते यमाः ।

शौचसन्तोषतपः स्वाध्यायेश्वरप्रणिधाना नियमाः । तत्र शौचं द्विविधं बाह्यमाभ्यन्तरं चाद्यं मृज्जलादिजनितं गोमूत्रादिमेध्याभ्यवहरणादिजनितं च । द्वितीयं मदमानासूयादि चित्तमलापनयः । सन्तोषः स्वपार्श्वेऽविद्यमानत्वे सति प्राणत्राणमात्रहेतोरधिकस्यानुपादित्सा । तपो मौनादयः । स्वाध्यायो मोक्षशास्त्राध्ययनम् । ईश्वरप्रणिधानं तस्मिन् सर्वकर्मार्पणमिति नियमाः । आसनं देहस्य स्थापनविशेषः । तद्भेदाः पद्मादयः शास्त्रे प्रसिद्धाः ।

नच 'स्थिरसुखमासन'मिति सूत्रविरोधः । देहचलनराहित्यावयवव्यथानुत्पत्तिरूपस्थिरत्वादिप्रयोजकत्वकथनेन प्रयत्नशैथिल्याद्युपायसिद्धस्य फलोपधानरूपासनस्य सूत्रे विवक्षितत्वात् एतेनासनस्य साधनदशायां पीडाकरत्वात्सुखमासनमित्यनुपपन्नमितिपरास्तं सिद्धासनस्यैव विवक्षितत्वात् । बाह्यवायोराचमनरूपश्वासस्य कौष्ठ्यवायोर्निःसारणरूपप्रश्वासस्याप्रतिविच्छेदः प्राणायामः । ननु

प्राणायामास्त्रयः प्रोक्ता रेचकपूरककुम्भकाः ।
उत्क्षिप्य वायुमाकाशं शून्यं कृत्वा निरात्मकम् ॥
शून्यभावेन प्रयुञ्जीत रेचकस्येति लक्षणम् ।

वत्क्रनात्पलनालन नायमाकर्षयेश्वर ॥
एवं वायुर्गृहीतव्यः पूरकस्येति लक्षणम् ।
नोच्छ्वसेन्नैव निःश्वसेन्नैव गात्राणि चालयेत् ।
एवं तावन्नियुञ्जीत कुम्भकस्येति लक्षणम् ।

इत्यत्र वायुं शरीरान्तर्गतं प्राणवायुमुत्सार्य बहिर्निस्सार्य्याकाशं शरीरं शून्यं प्राणवायुरहितं कृत्वा ।

ननु शून्यशब्दस्य बौद्धमते प्रतियोग्याद्यनिरूप्याभावपरत्वात्कथमुक्तार्थलाभ इत्याशङ्क्याह—निरात्मकमिति । निर्गतः आत्मा ममत्वाभिमानप्रयोजकः प्राणवायुर्यस्माच्छरीरात्तादृशं शरीरं कृत्वेत्यर्थः । वायोर्बहिर्निस्सरणस्वभावत्वाद्विशेषापत्तिरित्याशङ्क्याह—शून्यभावेनैव नियमेत् । तदिदं रेचकं भवति ।

कुम्भको हि द्विधा । आन्तरो बाह्यश्च । तदुभयं विशिष्टं मुनिराह—

अपानेऽस्तङ्गते प्राणो यावन्नाभ्युदितो हृदि ॥
तावत्सा कुम्भकावस्था योगिभिर्यानुभूयते ।
बहिरस्तङ्गते प्राणे यावन्नापान उद्गतः ॥
तावत्पूर्णां समावस्था बहिस्थं कुम्भकं विदुः ।

इति । तत्रोच्छ्वास आन्तरकुम्भकविरोधी, निःश्वासो बाह्यकुम्भकविरोधी गात्रचालनमुभयविरोधि तस्मिन् सति निःश्वासोच्छ्वासयोरन्यतरस्यावश्यम्भावित्वात् । तथाच कुम्भके गत्यभावेऽपि रेचकपूरकयोरुच्छ्वासनिःश्वासगतिसत्वादव्याप्तिरिति चेत् ।

न । स्वभावसिद्धायाः समप्राणगतेर्विच्छेदस्य विवक्षितत्वात् । 'बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसङ्ख्याभिः परिदृष्टो दीर्घसूक्ष्म' इतिसूत्रे तु वृत्तिशब्दः प्रत्येकं सम्बध्यते प्राणायाम इत्यनुवर्त्तते । प्रश्वासपूर्वकः स्वाभाविकगत्यभावो बाह्यवृत्तिः रेचकः । श्वासपूर्वकः स्वाभाविकगत्यभावआन्तरः । वृत्तिपूर्वकसङ्कुचितवृत्तिपूर्वको गत्यभावस्तम्भवृत्तिः कुम्भकः । एतेन कुम्भके वृत्तिपदं व्यर्थमिति

परास्तम् ।

अवच्छिन्नत्वं तृतीयार्थः । तथाचैकैको देशादिभिः परिच्छिन्नः परिदृष्टः स्वभावसिद्धरेचके नासाग्रसम्मुखे द्वादशाङ्गुलिपरिमितो निर्वातप्रदेशे इषीकातूलादिक्रियानुमितो बाह्यः । एवमान्तरोऽपि नाभ्यादिप्रदेशक्षोभेणापादतलमस्तकं पिपीलिकास्पर्शदर्शनेनानुमितः । प्राणबाह्यवृत्त्यवधानेन मात्रादिरूपकालावच्छिन्नोऽनुमितः । एकद्विसङ्ख्याद्यवच्छिन्नः प्रत्यक्ष एव । यद्यपि कुम्भके देशविशेषः स्पष्टो नावगम्यते तथापि घनीभूततूलपिण्डदेशवदत्रापि घनीभूतप्राणदेशोऽवगन्तव्यः । सोऽयं दिवसमासादिक्रमेणाभ्यस्यमानोऽप्रसार्यमाणस्तूलपिण्ड इव स्वाभाविकदेशादिव्याप्यतामपेक्ष्यषट्त्रिंशदंगुलिपरिमिताधिकदेशकालव्याप्ततया दीर्घः परमनैपुण्यसमधिगमनीयतया सूक्ष्मश्च भवतीति व्याख्येयम् ।

इन्द्रियाणां स्वस्वविषयैः शब्दादिभिरसम्प्रयोगः प्रत्याहारः । ननु 'स्वस्वविषयासम्प्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहार' इतिसूत्रविरोधः । तथाहि–निमित्तत्वं सप्तम्यर्थः शब्दस्पर्शादिविषयासम्प्रयोगनिमित्तको यश्चित्तस्य स्वरूपानुकारश्चित्तस्वरूपस्य विषयाकाररराहित्यरूपनिरोधः सच चित्तमेवात इवेति । तथाच द्वयोर्निरोधहेतुश्च प्रयत्नस्तुल्य इति । तथाचविषयासम्प्रयोगनिमित्तकस्य चित्तनिरोधसदृशनिरोधस्य प्रत्याहारत्वबोधनाद्विरोध इति चेत् ।

न । सप्तम्यर्थस्य चित्तस्वरूपानुकारे एवान्वयात् । ध्यायतो विषयान् चित्तस्य निरोधं विना निरुद्धान्यपीन्द्रियाण्यनिरुद्धानीव सम्भवन्तीत्यतः सादृश्यकथनेन तन्निरोधपूर्वक एव मुख्यनिरोधः सम्भवतीति सूचनेन तत्रैव तात्पर्यात् ।

विद्यारण्यस्वामिनस्तु

शब्दादिविषयान्पञ्च मनश्चैवातिचञ्चलम् ।
चिन्तयेदात्मनो रश्मीन्प्रत्याहारः स उच्यते ॥

इति श्रुतिमुदाहृत्य शब्दादयो विषया येषां श्रोत्रादीनां ते श्रोत्रादयः पञ्च । मनः षष्ठानामेतेषामनात्मरूपेभ्यः शब्दादिभ्यो निवर्त्तमानानामात्मरश्मित्वेन चिन्तनं प्रत्याहारः स इत्याहुः ।

आध्यात्मिके आधारनाभिचक्रहृदयभ्रूमध्यब्रह्मरन्ध्रादिदेशविशेषे बाह्ये च भगवद्रूपादौ चित्तसम्बन्धो धारणा 'देशबन्धश्चित्तस्य धारणे'ति सूत्रणात् । बन्धः सम्बन्धः प्रत्ययान्तरानन्तरितत्वे सति धारणाश्रयदेशाभिन्नैकतत्त्वविषयकप्रत्ययप्रवाहो ध्यानं 'तत्र प्रत्ययैकतानता ध्यान'मिति सूत्रणात् । तत्र तस्मिन्देशे विषयत्वं सप्तम्यर्थः । तथा च तद्विषयक एकतत्त्वविषयकप्रवाहश्चेत्युक्तेऽर्थेऽयद्वाक्यं तत्तत्सावधारणमिति न्यायाच्चोक्तार्थलाभ इति । अत एव 'प्रत्ययान्तरेणापरामृष्टो ध्यान'मिति भाष्यम् । ध्येयाकारस्यैवावभासः समाधिः । नच ध्यानलक्षणमत्रातिव्याप्तम् । तादृशप्रत्ययप्रवाहस्यात्रापि सत्त्वादिति वाच्यम् । ध्यातृध्यानाद्यवभासत्वे सति तादृशप्रत्ययप्रवाहो ध्यानमिति विवक्षितत्वात् । अत्र ध्येयाकारप्रत्ययप्रवाहसत्त्वेऽपि तदवभासाभावात् ध्याने च तृतीयावभाससत्त्वान्नाव्याप्तिः ।

ननु समाधध्येयाकारवृत्त्यसत्त्वे ध्येयावभासासम्भवः । तत्सत्त्वे तदवभासार्थमनवस्थाभिया वृत्त्यन्तरानभ्युपगमेन ध्यात्रवभासं विना ध्येयावभासासम्भवेन च तृतीयावभासावश्यकत्वात्कथं ध्येयाकारस्यैवावभास इति चेन्न । ध्यातृध्यानयोरवभाससत्त्वेऽपि तदा ध्येयस्वभावावेशात् ध्यातृत्वादिनानवभासनात् । अतएव 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधि'रिति सूत्रे शून्यमिवेत्युक्तम् । तत्सत्त्वेऽपि प्रत्ययत्वादिना भातीत्यर्थः ।

ब्रह्माकारमनोवृत्तिप्रवाहोऽहं कृतिं विना ।
सम्प्रज्ञातसमाधिः स्याद्ध्यानाभ्यासप्रकर्षजः ॥ १ ॥
इत्यभियुक्तोक्तेश्च ।

इत्युक्तानि योगाङ्गान्यदृष्टद्वाराऽशुद्ध्या वियोजयन्ति बुद्धिसत्त्वं । ततश्च पञ्चरूपेन्द्रियसंयमादिन्द्रियजयो भवति । तथा हि ग्रहणस्वरूपास्मितान्वयार्थवत्त्वानि पञ्चरूपाणि । ग्रहणमिन्द्रियाणां विषयाकारा परिणतिः । न च ग्रहणं नाम शब्दादिविषयकज्ञानं, तच्च मनःपरिणामः । श्रोत्रादि तु द्वारं । अन्वयव्यतिरेकाभ्यां 'कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्भीर्धीरित्येतत्सर्वं मन एव' 'मनएव मनुष्याणां कारणं बन्धमोक्षयोः । बन्धाय विषयासक्तं मोक्षाय निर्विषयं स्मृत'मित्यादि श्रुतिस्मृतिषु मनसो धीसमानाधिकरणस्य विषयाकारपरिणतिमत्त्वरूपविषयासक्तत्वस्य च दर्शनादिति वाच्यम् । व्यवहितविप्रकृष्टानां ग्रहणवारणाय सन्निकर्षोऽवश्यं वाच्यः । सचान्यतरक्रियां विना न सम्भवति । तत्र विषयाणां तत्र स्थितानामेव दर्शनेनेन्द्रियेष्वेव क्रिया वाच्या साचेद्यदि गोलकादिविभागजनिका तर्ह्यन्धत्वादिप्रसङ्गेन तत्र स्थितानामेव विषयपर्यन्तं परिणतेरवश्यं वाच्यत्वात् । 'प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोती'त्यादि श्रुतेश्च । नच शब्दस्य वीचीतरङ्गन्यायेन श्रोत्रे समवायेनोत्पत्तिरिति शङ्क्यं । समवायस्य पूर्वं दूषितत्वात् । भेरीशब्दो मया श्रुत इत्याद्यनुभवस्य बाधापत्तेश्च गन्धस्याप्याश्रयगमनं विना गमनासम्भवेन आश्रयस्य गमनं वाच्यम् । तच्च न सम्भवति तदतिरिक्ताश्रयस्य सच्छिद्रतापत्तिः । परमाण्वन्तराणामनारम्भकत्वात् आरम्भकत्वे न्यूनाधिकभावापत्तेर्ब्रह्मणापि वारयितुमशक्यत्वात् । छिन्नहस्तादेः परमाण्वन्तरैरारम्भापत्तेश्चालम्प्रसङ्गागतविचारणास्वरूपं पुनः ।

अहङ्कारसत्त्वकार्यं प्रकाशात्मकन्द्रव्यमिन्द्रियं । अस्मिताहङ्कारसामान्यं तद्विशेष इन्द्रियाणि तत्कार्यत्वात्तत्सामान्यमिन्द्रियाणामित्यर्थः । अन्वयत्वं पुरुषशेषत्वं पुरुषार्थवत्त्वमिति यावत् इतिपञ्चस्विन्द्रियरूपेषु यथाक्रमसंयमाद्यथाक्रमरूपजयादिन्द्रियजयः प्रा-

दुर्भवति योगिनः । पञ्चरूपेन्द्रियजयाद्देहस्य मनोजवित्वं, विदेहानामिन्द्रियाणामभिमतविप्रकृष्टदेशसकलसूक्ष्मविषयापेक्षो वृत्तिलाभः, सर्वविकारवशित्वरूपप्रधानजयश्चेत्येतास्तिस्रः सिद्धयः प्रादुर्भवन्ति योगिनः ।

तथाचोक्तं पञ्चरूपेन्द्रियेषु संयमादेव स्वसिद्ध्युपकारसम्पादितश्रद्धाद्वारेण निर्धूतरजस्तमोमलबुद्धिसत्वस्य सत्वपुरुषान्यताख्यातिर्भवति । तस्या अवान्तरफलं सर्वज्ञातृत्वं क्लेशादिराहित्यं तद्वैराग्यात्कैवल्यं । तथाहि—क्लेशकर्मक्षये सति सत्त्वस्यायं विवेकप्रत्ययः । सत्वं हेयपक्षे न्यस्तं । पुरुषश्चापरिणामी शुद्धोऽन्यः सत्वादित्येवं विरज्यते विरजमानस्य क्लेशकर्मबीजानि दग्धशालिबीजकल्पान्यप्रसवसमर्थान्यस्तं गच्छन्ति पुरुषस्तापत्रयं न भुङ्क्ते चरितार्थानामप्रतिप्रसवे पुरुषस्यात्यन्तिको गुणवियोगः कैवल्यं तदा स्वरूपप्रतिष्ठाविति शक्तिरेव पुरुष इति अधिकं योगभाष्ये द्रष्टव्यम् ॥ १ ॥

ज्ञानस्य विषयविषयकस्य निरवधिकसात्विकरूपत्वाभावान्मोक्षेऽनुपयोगाच्च मोक्षोपयोगिज्ञानपरतया ज्ञानपदं व्याचष्टे—गुणपुरुषेति । गुणः प्रधानं तयोरन्यता परस्परस्मिन्परस्परप्रतियोगिको भेदस्तस्य ख्यातिर्विवेकः । ननु यदि प्रधानपुरुषान्यताख्यातिर्मोक्षहेतुस्तर्हि देहाद्यभिमानसत्त्वेऽपि मोक्षः स्यात्सच न सम्भवति ।'नह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति' इत्यादि श्रुतिविरोधादिति चेन्न । कूटस्थत्वादिधर्मज्ञानात्प्रधानकारणाविवेकनाशे तज्जन्यपरिणामादिकार्याविवेकनाशस्यापि सम्भवात् । कारणनाशे कार्यनाशस्यावश्यकत्वात् ।

नच देहाद्यभिमानातिरिक्तप्रधानाभिमाने मानाभावः । अहमज्ञ इत्याद्यभिमानानां प्रधानविषयत्वं विनानुपपत्तिः । प्रधानाभिमाननाशे बुद्ध्याद्यभिमाननाश इत्यस्मिन्नर्थे सूत्रं च—'प्रधानान्या-

तस्य—यतमानसंज्ञा व्यतिरेकसंज्ञा एकेन्द्रियसंज्ञा-

विवेकस्य तद्धाने हान'मिति । यत्र गुणोऽत्र बुद्धिसत्त्वं तद्विवेकान्मोक्ष इति तत्र स्थूलसूक्ष्मबुद्धिग्रहणात्प्रकृतेरपि ग्रहणं बोध्यम् । अन्यथा बुद्धिविवेकेऽपि तत्कारणीभूतप्रधानाभिमानसत्त्वेन पुनस्तदभिमानसम्भवात् । किञ्च बुद्ध्यादिषु पुरुषाणामभिमानोऽनादिर्वक्तुं न शक्यते बुद्ध्यादीनां कार्यत्वात् । अतः कार्येष्वभिमानव्यवस्थानियामकाकाङ्क्षायां कारणाभिमान एव नियामकतया सिध्यति । लोके दृष्टत्वात् । कल्पनायाश्च दृष्टानुसारित्वात् । यथा लोके दृष्टः क्षेत्राभिमानात् क्षेत्रजन्यधान्यादिष्वभिमानस्तन्निवृत्त्या च तज्जन्याभिमाननिवृत्तिः । प्रधानाभिमानतद्वासनयोश्च बीजाङ्कुरवदनादित्वान्न तदभिमाने नियामकान्तरापेक्षेति ॥ २ ॥

ननु वैराग्यं रागसामान्याभावः सचासम्भवी मोक्षे प्रतिकूलश्चेत्याशङ्कानिरासाय यतमानसंज्ञा, व्यतिरेकसंज्ञा, एकेन्द्रियसंज्ञा, वशीकारसंज्ञेति चतस्रः संज्ञा इत्यभियुक्तवचनमाश्रित्य विशेषपरत्वमाह—तस्येत्यादिना ।

ननु रागो नामेच्छाविशेषःसच सुखदुःखाभावान्यतरस्मिन्फले स्वाभाविकः सर्वजनीनस्तत्साधनेषु तदिच्छाधीनस्तथासति आत्यन्तिकदुःखनिवृत्तितत्साधनयोरतिजघन्यानात्यन्तिकदुःखनिवृत्तितत्साधनयोश्च वेदेन ज्ञातत्वेऽप्यसन्तोत्कृष्टफलसाधनयोरेव रागोत्पत्त्या सरसनीरसपदार्थयोस्तथैव ज्ञातयोर्नीरसे मन्दप्रज्ञस्य रागासम्भवान्निकृष्टफलसाधनयोः रागासम्भवेन तन्निरासाय प्रयत्नो व्यर्थ इत्याशङ्क्य श्रवणसमानत्वेऽपि केषांचिज्जनानां नित्यकर्मोपासनाजनितान्तःकरणशुद्धिशमदमादिसामग्र्यभावात्तन्निर्धारणासम्भवात्प्रत्युत भगवता बहिर्मुखानामेवेन्द्रियाणां सर्जनाच्चैर्बहिर्विषये एव निर्धारणज्ञानसम्पादनेनात्युत्कृष्टेऽप्रामाण्यबुद्धेरेवोत्पादनात् ।

वशीकारसंज्ञा—इति चतस्रः संज्ञाः । रागादयः कषायाश्चित्तवर्तिनः, तैरिन्द्रियाणि यथास्वं विषयेषु प्रवर्त्यन्ते । तस्माऽत्र प्रवर्त्तिषत विषयेष्विन्द्रियाणीति तत्परि-

अनेकजन्मपुण्यपरिपाकवशीकृतेन्द्रियग्रामस्य कस्यचित्पुरुषधौरेयस्य विषयेषु जिज्ञासासम्पादनपूर्वकमिन्द्रियैरत्युत्कृष्टे निर्धारणात्मकज्ञानसम्भवेनातिजघन्ये रागासम्भवेऽपि तदितरेषामतिजघन्येऽपि रागसम्भवेन तन्निरासाय प्रयत्नस्यावश्यकत्वान्मैवमित्याह—रागादय इति । आदिनेच्छादिः । भल्लातकषायवदति यत्नं विना दूरीकर्त्तुमशक्यत्वादेतेऽपि कषाया इत्याह—कषाया इति । रागादेरात्मधर्मगुणवत्त्वेन चैतन्यवदनिवृत्तिमाशङ्क्याह—चित्तेति । तेषामिन्द्रियद्वारानर्थहेतुत्वमाह—तैरिति । व्युत्क्रमेणेन्द्रियाणां प्रवृत्तिवारणाय—यथास्वमिति । यथा रूपेषु चक्षुष एव नतु घ्राणादेरित्येवमिन्द्रियान्तरेष्वपि बोध्यम् ।

नच रागादिं विनापीन्द्रियाणामकस्मादुपनतविपञ्चीस्वरवायूपनीतगन्धादिषु प्रवृत्त्या व्यभिचारेण कथं रागादेरिन्द्रियप्रवृत्तिहेतुत्वमिति वाच्यम् । इष्टानिष्टप्राप्तिपरिहारानुकूलप्रवृत्तेर्विवक्षितत्वात् । रागाद्यप्रयोज्यप्रवृत्तिनिरोधस्य योगं विना कर्तुमशक्यत्वात् । जीवनलोपेन सत्त्वपुरुषान्यताख्यातावनुपयोगाच्च ।

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत् तौ ह्यस्य परिपन्थिनौ ॥ १ ॥
इन्द्रियाणीन्द्रियार्थेषु वर्त्तन्ते इति धारयन् ॥

इत्यादिना भगवतापि रागादिप्रयोज्यप्रवृत्तेरेव निषेधात् ।

तस्माऽत्रेति । अत्र तत्पदं लुप्तपञ्चम्यन्तम् । प्रवर्त्तिषत इत्यत्र भूतकालो न विवक्षितः । एवं सति रागादिकषायादिन्द्रियाणि अत्र विषयेषु मा प्रवर्त्तिषत मा प्रवर्त्तन्तामित्यर्थः । इतीति । इति शब्दो हेतुपरः । यतो रागादय इन्द्रियप्रवर्त्तनद्वारानर्थहेतुरतः

पाचनायारम्भः प्रयत्नो यतमानसंज्ञा । परिपाचने चानु-ष्ठीयमाने केचित्कषायाः पक्काः, पक्ष्यन्ते च केचित्, त-त्रैवं पूर्वापरीभावे सति पक्ष्यमाणेभ्यः कषायेभ्यः पक्कानां व्यतिरेकेणावधारणं व्यतिरेकसंज्ञा । इन्द्रियप्रवृत्त्यस-मर्थतया पक्कानामौत्सुक्यमात्रेण मनसि व्यवस्थापनमे-केन्द्रियसंज्ञा । औत्सुक्यमात्रस्यापि निवृत्तिरुपस्थिते-ष्वपि दृष्टानुश्रविकविषयेषु, या संज्ञात्रयात् पराचीना

---

इत्यर्थः । तत्परिपाचनाय रागादिकषायस्य प्रवृत्त्यनुकूलविच्छिन्नो दारावस्थातिरिक्तसुषुप्तावस्थासम्पादनाय । आरम्भः दीर्घकाल-नैरन्तर्याभ्यस्तातिरिक्तः प्रयत्न आरम्भाख्यो यतमानसंज्ञेत्यर्थः । रागादिकषायपाचनार्थं निवृत्तिधर्मारम्भो यतमानमित्यन्ये । अ-पक्कानां परिपाकफलकं द्वितीयं व्याचष्टे–परिपाचनमिति ।

ननु रागादिपाकहेतुप्रयत्नस्यैकरूपत्वात्कथं पक्कापक्कविभागः । कथं वाऽपक्कानां परिपाकाय पक्केभ्यो व्यतिरेकेणावधारणमुचितं विहाय पक्कानां व्यतिरेकेणोक्तिरिति चेन्न । रागादेर्विषयमृदुमध्य-त्वादिभेदेन नानात्वात्। उत्साहार्थं तथाभिधानाच्च । इन्द्रियप्रवृत्त्य-समर्थतया इन्द्रियप्रवर्त्तनासमर्थतया । प्रयत्नं विनापि विच्छिन्नानां कादाचित्केन्द्रियप्रवृत्त्यसमर्थतास्त्येवेत्याशङ्कासमर्थतां पुनर्व्याचष्टे पक्कानामौत्सुक्यमात्रेणेति । पक्कसर्वकषायज्ञानेन चित्तोत्सुक-तेत्यर्थः । मनसीति कथनं तु वास्तवाश्रयप्रदर्शनाय । ननु यतमा-नानां मनआश्रयव्यावर्तनायेति ।

चतुर्थीमाहौत्सुक्येति । सुषुप्त्यादौ पामराणामप्यौत्सुक्यनि-वृत्तिसम्भवात्तां व्याचष्टे उपस्थितेष्वपीत्यादि । प्रत्यक्षादिने-ति शेषः । दृष्टो मानुषशरीरोचितो राज्यादिभोगः । अनुश्रवो वेद-स्ततोऽधिगतः । आनुश्रविक इन्द्रादिशरीरोचितः । यां इत्यनन्तर-मुपेक्षाबुद्धिरिति शेषः । संज्ञात्रयात्पराचीना चतुर्थीत्यर्थः । एत-

सा वशीकारसंज्ञा । यामत्र भगवान् पतञ्जलिर्वर्णयाञ्चकार–
"दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्"
इति(योगसूत्र–१ । १५) सो ऽयं बुद्धिधर्मो विराग इति ।

ऐश्वर्यमपि बुद्धिधर्मो, यतो ऽणिमादिप्रादुर्भावः ।
(१)अत्राणिमा–अणुभावो यतः शिलामपि प्रविशति ।
( २ ) लघिमा–लघुभावः, यतः सूर्यमरीचीनालम्ब्य सूर्यलोकं याति । (३) गरिमा गुरुभावः, यतो गुरुर्भवति ।
( ४ ) महिमा महतो भावः, यतो महान् भवति । ( ५ )
प्राप्तिः, यतो ऽङ्गुल्यग्रेण स्पृशति चन्द्रमसम् : ( ६ ) प्रा-

---

त्कथनं त्वितः परमुत्कृष्टवैराग्यं नास्तीदमेव परमिति सूचनाय ।
अतएव पूर्वोक्तत्रयाणामत्रैवान्तर्भावं मनसि निधायेदमेव पतञ्जलिरपि वर्णयाञ्चकार । सूत्रं पठति दृष्टेति । सूत्रं तु उक्तविषयसम्प्रयोगेऽपि वितृष्णस्य रागद्वेषादिरहितस्य चित्तस्य वशीकारसंज्ञेति व्याख्येयम् । ननु भोगादेवेन्द्रियादिक्षये वैराग्यं भवत्येवेति तु न शङ्क्यं । इन्द्रियाद्यन्तरोत्पत्तौ रागादिसम्भवात् । अत एव

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ १ ॥

'नभोगाद्रागशान्तिर्मुनिव'दित्यादिश्रुतिसूत्रादि सङ्गच्छते ।
किन्तु दोषदर्शनात् । तथा च सूत्रं 'दोषदर्शनादुभयोः' सूत्रं तूभयोः प्रकृतितत्कार्ययोः संयोगात्पुरुषस्य नरकपातगर्भवासाद्य इति व्याख्येयम् ॥ ३ ॥

उक्तामणिमादिसिद्धिं व्याकरोति । अत्रेत्यादिना । अणुभवनफलं तत्र प्रमाणं च दर्शयति–यतः शिलामिति । अणुत्वं विना शिलाप्रवेशानुपपत्त्या तत्कल्प्यते इत्यर्थः । एवमग्रेऽपि । अणिमलघिम्नोर्भेदमाह–लघुभाव इति । तथाच गुरुतदभावकृतो विशेष इत्यर्थः । महानिति । स्वसप्तवितस्तिपरिमितो हस्त्याद्या-

काम्यम्–इच्छानभिघातः, यतो भूमावुन्मज्जति निमज्जति च यथोदके। (७) वशित्वम्–यतो भूतभौतिकं वशीभवत्यवश्यम् । ईशितृत्वम्–यतो भूतभौतिकानां प्रभवस्थितिलयानामीष्टे। (८)यत्र कामावसायित्वम्–सा सत्यसङ्कल्पता, येन यथाऽस्य सङ्कल्पो भवति भूतेषु तथैव भूतानि भवन्ति । अन्येषां मनुष्याणां निश्चयाः निश्चेतव्यमनुविधीयन्ते, योगिनस्तु निश्चेतव्याः पदार्थाः निश्चयम् । इति चत्वारः सात्त्विका बुद्धिधर्माः ।

तामसास्तु तद्विपरीता बुद्धिधर्माः । अधर्माज्ञानावैराग्यानैश्वर्याभिधानाश्चत्वार इत्यर्थः ॥ २३ ॥

अहङ्कारस्य लक्षणमाह—

---

कारो भवतीत्यर्थः । वशित्वापेक्षयेशितृत्वस्य भेदमाह । प्रभवेति । उत्पत्तिस्थितिलयकर्तृत्वमित्यर्थः । व्यूहनमेकत्रकरणमिति केचित् । अर्थाव्यभिचारस्वरूपसत्यत्वं सङ्कल्पस्याह–यथास्येति ।

ननु सङ्कल्पहेतुज्ञानस्यार्थव्यभिचारित्वेन कार्यस्यार्थाव्यभिचारित्वमनुपपन्नमित्याशङ्क्य तज्ज्ञानस्याप्यर्थाव्यभिचारस्वान्मैवमित्याह। न्येषामिति । अन्येषामस्मद्विधानां निश्चया ज्ञानानि निश्चेतव्यं स्वविषयमनुविधीयन्ते विषयव्यापकानि भवन्तीत्यर्थः । योगिनस्तु इति । निश्चयमित्यत्रानुवर्त्तन्ते इतिशेषः । तथा च तेषां ज्ञानान्यर्थाव्यभिचारीण्यस्मदादीनां तु क्वचिदर्थव्यभिचारीणीत्यर्थः ॥ ४ ॥ तद्विपरीतनिरूपणे तज्ज्ञानस्य हेतुत्वादुक्ताननुवदति सात्त्विका इति ॥ २३ ॥

प्रकृतेर्महानित्याद्युक्तोद्देश्यक्रमेणोपजीवकत्वसंगत्याहंकारलक्षणपरतयाप्यार्यामवतारयति–अहंकारस्येति । अभिमानस्याप्रसिद्धतयाहंकारलक्षणत्वासम्भवमाशङ्क्य बुद्धिपूर्वप्रवृत्तिहेतुतया सिद्धस्यास्मत्प्रत्ययस्य सर्वजनप्रसिद्धत्वान्मैवमित्याह–यत्खल्विति ।

अभिमानो ऽहङ्कारः तस्माद् द्विविधः प्रवर्त्तते सर्गः ।
एकादशकश्च गणस्तन्मात्रः पञ्चकश्चैव ॥ २४ ॥

"अभिमान" इति 'अभिमानो ऽहङ्कारः' । यत् खल्वालोचितं मतं च तत्र 'अहमधिकृतः' 'शक्तः खल्वहमत्र' 'मदर्था एवामी विषयाः' 'मत्तो नान्यो ऽत्राधिकृतः कश्चिदस्ति' 'अतो ऽहमस्मि' इति यो ऽभिमानः सो ऽसाधारणव्यापारत्वादहङ्कारः । तमुपजीव्य हि बुद्धिरध्यवस्यति—'कर्तव्यमेतन्मया' इति निश्चयं करोति ।

तस्य कार्यभेदमाह—"तस्माद्विविधः प्रवर्तते सर्गः" इति । प्रकारद्वयमाह—"एकादशकश्च गणः" इन्द्रियाह्वः, तन्मात्रः पञ्चकश्च एवं द्विविध एव सर्गो ऽहङ्कारात्, न त्वन्य इति 'एव' कारेणावधारयति ॥ २४ ॥

आलोचितमिदंत्वेनेन्द्रियादिनाऽवगतं । मतं इदमेवं नैवमिति मनसा विकल्पितं । अधिकृत इत्यस्यार्थमाह—शक्तइति । शक्तत्वं चास्मत्कृतिसाध्योऽयमिति प्रत्ययाश्रयत्वं । मदर्था अस्मच्छेषभूताः । अतोऽहमित्यत्रात्राधिकृत इत्यनुषञ्जनीयं । अध्यवसायो बुद्धिरितिवदत्रापि धर्मधर्म्यभेदाभिमानोऽहंकारः । यत्खल्वालोचितं मतं च तत्राहमधिकृतः शक्तः खल्वहमत्र । मदर्था एवामी विषयाः मत्तो नान्योऽत्राधिकृतः कश्चिदस्ति । अतोऽहमस्मीति योऽभिमानः सोऽसाधारणव्यापारत्वादहंकारस्तमुपजीव्य हि बुद्धिरध्यवस्यति कर्तव्यमेतन्मयेति तस्य कार्यभेदमाह—तस्माद्द्विविधः प्रवर्त्तते सर्गः । प्रकारद्वयमाह—एकादशकश्च गणः । इन्द्रियादयः तन्मात्रपंचकश्चैवं द्विविध एव सर्गोऽहंकारान्नत्वन्य इति एवेत्यनेनावधारयति । भेदोपचार इत्याह सइति । असाधारणव्यापारत्वादिति कथनं तूपचारे निमित्तताद्योतनाय । एतस्याबुद्धि-

पूर्वकप्रवृत्तिव्यतिरिक्तस्य हेतुत्वमाह–तमिति–अहङ्कारं । इन्द्रियाणां वक्ष्यमाणत्वादाह–इन्द्रियाह्वइति । इन्द्रियमित्याह्वा नाम यस्य स इन्द्रियाह्वः ॥

नचेन्द्रियाणामभौतिकत्वे मानाभावः अनुमानादेर्मानत्वात् । तथाहि बहिरिन्द्रियाणि न भौतिकानि इन्द्रियत्वात् मनोवत् । बहिरिन्द्रियत्वं च विशेषगुणवदिन्द्रियत्वं मनोभिन्नेन्द्रियत्वं वा । इन्द्रियत्वं च न जातिः । पृथिवीत्वादिना साङ्कर्यात् । किन्तु स्मृत्यजनकज्ञानकारणमनःसंयोगाश्रयत्वं । आत्मन्यतिव्याप्तिवारणाय स्मृत्यजनकेति । अजनकत्वं स्वरूपयोग्यत्वघटितं ग्राह्यमतो न संयोगव्यक्तिविशेषमादायोक्तातिव्याप्तितादवस्थ्यम् । कालादावतिव्याप्तिवारणाय ज्ञानकारणेति । चक्षुः संयोगादिकमादाय घटादावतिव्याप्तिवारणाय मन इति । मनः संयोगाश्रयत्वं च मनोनिरूपितसंयोगाश्रयत्वमनोविशिष्टसंयोगाश्रयत्वसाधारणमनोविशिष्टसंयोगाश्रयत्वमतो न अव्याप्तिः । ज्ञानपदं च प्रमापरमतो न स्वप्नवहनाड्यामतिव्याप्तिः ।

नचेन्द्रियत्वे ज्ञानेन्द्रियमनोयोगत्वादिना कारणताग्रहो, गृहीतायां च संयोगकारणतायामिन्द्रियत्वग्रह इत्यन्योन्याश्रय इति वाच्यम् । चक्षुर्मनोयोगत्वादिना कारणताग्रहात् । नचाप्रयोजकत्वं निरुपधिसहकारस्यानुकूलत्वात् । मनसो भौतिकत्वापत्तेश्च । नच घ्राणेन्द्रियं पार्थिवं गन्धेतरगुणाव्यञ्जकत्वे सति गन्धव्यंजकद्रव्यत्वात् । वायूपनीतसुरभिभागवदित्यनुमाने सत्प्रतिपक्षतेति वाच्यं। इदं यदि पार्थिवं स्यात्तदोद्भूतरूपरसगन्धस्पर्शान्यतमवत्स्यादित्यादिप्रतिकूलतर्कग्रस्तत्वेन तुल्यबलत्वाभावात् । नचापाद्ये इष्टापत्त्या दुष्टोऽयं तर्क इति । भिन्नदेशावच्छिन्नद्रव्यगन्धग्रहणेन तत्रमहत्त्वसिद्ध्या तस्य प्रत्यक्षत्वापत्तेः । स्थूलावयवावच्छिन्नगन्धोपलब्ध्यापि महत्त्वस्य साधनत्वेन प्रत्यक्षापत्तेर्दुर्वारत्वाच्च । उपाध्यभा-

वेऽपि व्याप्त्यनङ्गीकारे वायावपि पार्थिवस्पर्शस्यैव प्रतीतिप्रसङ्गात् । पार्थिवस्पर्शस्योद्भूतरूपगन्धव्याप्यत्वाङ्गीकारे तु न क्षतिः ।

ननु चक्षुस्तैजसं स्पर्शाऽव्यञ्जकत्वे सति परकीयरूपव्यञ्जकद्रव्यत्वात् । प्रभावत् । अत्र जलेऽम्लद्रव्ये च व्यभिचारवारणाय सत्यन्तं । तत्रत्यत्रसरेणौ व्यभिचारवारणाय विशेष्ये परकीयेति । तथाचेत्यनेन सत्प्रतिपक्षतेति चेन्न । इदं यदि तैजसं स्यात्तदोद्भूतरूपोष्णस्पर्शान्यतरवत्स्यादित्यादिप्रतिकूलतर्कग्रस्तत्वेन तुल्यबलत्वाभावात् । अत्र रूपग्रहणं चान्द्रकरसङ्ग्रहार्थं । नचाऽऽपाद्ये इष्टापत्त्या दुष्टोऽयन्तर्क इति । परस्परभिन्नदेशावच्छिन्नद्रव्ययो रूपग्रहणेन तत्र महत्त्वसिद्ध्या तस्य प्रत्यक्षत्वापत्तेः । उपाध्यभावेऽपि व्याप्त्यनङ्गीकारे चक्षुषो जलजातीयत्वकल्पनापत्तेः । जलस्पर्शस्योद्भूतरूपशीतस्पर्शादिव्याप्यत्वाङ्गीकारे तु न क्षतिः ।

ननु त्वगिन्द्रियं वायवीयं स्पर्शेतरगुणाव्यञ्जकत्वे सति स्पर्शव्यञ्जकद्रव्यत्वात् । स्वेदशैत्यस्पर्शव्यञ्जकव्यजनवायुवत् इति अत्रासिद्धिवारणाय गुणेति । तदेव वारणाय स्पर्शेतरेति । सन्निकर्षे व्यभिचारवारणाय द्रव्यत्वेति । तथाचेत्यनेन सत्प्रतिपक्षतेतिचेत् ।

न । इदं यदि वायवीयं स्यात्तदोद्भूतस्पर्शधृतिकम्पव्यापारवत्स्यात्प्रसिद्धवायुवदित्यादिप्रतिकूलतर्कग्रस्तत्वेन तुल्यबलत्वाभावात् । नचापाद्ये इष्टापत्तिः । परस्परभिन्नदेशावच्छिन्नद्रव्ययोः स्पर्शग्राहकत्वेन महत्त्वसिद्ध्या तत्स्पर्शस्य प्रत्यक्षत्वापत्तेः । नच तत्रानुद्भूतस्पर्शाङ्गीकारात्प्रत्यक्षाभावोपपत्त्या तर्केऽप्रयोजकतापत्तिरिति वाच्यम् । एवं सति श्रोत्रेन्द्रियं यदि घ्राणं स्यात्तदा गन्धोपलम्भकं स्यादिति तर्केऽपि गन्धोपलम्भकलक्षणव्यापकाभावेपन(१)ग्राहकद्रव्यत्वात् । लालावदित्यत्र सत्यन्तेन शर्करामनआदौ न व्यभि-

(१) अत्रत्यः पाठो मूलभूतपुस्तकेऽपि खण्डित इति कृत्वा यथास्थित एव स्थापित इति बोध्यम् ।

चारः । परमाण्वादौ व्यभिचारवारणाय विशेष्यं शेषं पूर्ववत्तथा चेत्यनेन सत्प्रतिपक्षेतेति चेत् ।

न। इदं यदि जलीयं स्यात्तदोद्भूतशीतस्पर्शवत्स्यात्प्रसिद्धजलवदित्यादिप्रतिकूलतर्कग्रस्तत्वेन तुल्यबलत्वाभावात् । नचेष्टापत्तिः । परस्परभिन्नद्रव्ययोः रसग्राहकत्वेन महत्त्वसिद्ध्या तच्छीतस्पर्शस्य प्रत्यक्षत्वापत्तेः । इदमभौतिकं इन्द्रियत्वान्मनोवदित्यादिना सत्प्रतिपक्षितत्वाच्च । विपक्षे मनसोऽपि पार्थिवत्वापत्तिर्बाधिका । नचा'न्नमयं हि सोम्य मनस्तेजोमयी वाक्'इत्यादिश्रुत्या मन आदेर्भौतिकत्वावगमादिष्टापत्तिरिति वाच्यम् । मन आदेः भूतसंसृष्टतयैव स्थितेः श्रुतेरन्नाद्यधीनत्वपरत्वात् । अतएव पृथिवीमयं हि सोम्य मन इति नोक्तम् । तदधीनानां तदात्मत्वे तेषां जलाद्यधीनत्वदर्शनेन तदात्मकत्वापत्तेः । 'स ईक्षाञ्चक्रे कस्मिन्वहमुत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन्प्रतिष्ठिते प्रतिष्ठास्यामीति' 'सप्राणमसृजत प्राणाच्छ्रद्धां खं वायुंर्ज्योतिरापः पृथिवीमिन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्मलोका लोकेषु नामचे'ति प्रश्नोपनिषदि मनोऽन्नयोः ब्रह्मणः सृष्टिश्रवणाच्च । भूतानामपि हिरण्यगर्भसंकल्पजन्यतयाऽन्नस्य मनोजन्यत्वाच्च ।

ननु श्रोत्रेन्द्रियं शब्दगुणवत् तद्ग्राहकत्वात् यद्यद्गुणग्राहकं तत्तज्जातीयगुणवद्भवतीति नियमात् । साजात्यं च ग्राह्यतावच्छेदकरूपेण बोध्यम् । शब्दवत आकाशत्वात्तथाचेत्यनेन सत्प्रतिपक्षतेति चेन्न । उक्तनियमस्य मनसि व्यभिचारेण तुल्यबलत्वाभावात् । श्रोत्रं स्वगुणाग्राहकं इन्द्रियत्वात् मनोवदित्यनेन सत्प्रतिपक्षितत्वाच्च । नच योग्यविशेषगुणशून्यत्वमत्रोपाधिरिति वाच्यम् । योग्यविशेषगुणशून्यत्वस्याप्यनुमानात् ।

इन्द्रियाणि न भौतिकानि इन्द्रियत्वान्मनोवदित्यादिविरोधाच्च । नच मनसोऽपीन्द्रियत्वात्कथं दृष्टान्ततेति वाच्यम् । पक्षै-

कदेशस्यापि दृष्टान्ततया उभयवादिसंमतत्वात् । नचाभौतिकत्वानुमाने हस्तपादादिकर्मेन्द्रियवन्नासापुटादिरूपाणां धीन्द्रियाणामपि शरीरावयवत्वेन भौतिकत्वावधारणाद्बाध इति वाच्यम् । नासापुटाद्यतिरिक्तानां ज्ञानसाधनानां साधितत्वात् ।

तथाहि–गन्धोपलब्धिः रसाद्युपलब्ध्यजनकशरीरसंयोगिकरणजन्या जन्यसाक्षात्कारत्वात । रूपप्रत्यक्षवत् । अत्रादिपदं स्पर्शसङ्ग्रहाय । विशिष्टे व्यर्थविशेषणत्वादन्यतरघटितं च साध्यद्वयमुपादेयं । रूपघटितं च साध्यं नोपादेयमन्यथा दृष्टान्तस्य साध्यवैकल्यापत्तेः । नचैवं चक्षुषाऽर्थांतरं । जात्यन्धस्य गन्धसाक्षात्कारानुपपत्तेः बाधस्फुरणात् । मनसा सिद्धसाधनवारणायाजनकान्तं । गन्धेन सिद्धसाधनवारणाय संयोगीति । नचैवं शरीरपदं व्यर्थं । उद्देश्यताप्रतीत्यर्थन्तदुपादानात् । अतएव करणपदमपि । नच घ्राणेन्द्रियाधारनासापुटेन सिद्धसाधनवारणाय शरीरपदन्तस्य तदवयवत्वेन तदसंयुक्तत्वाद्वारणमिति वाच्यम् । तस्य स्वीयरसाद्युपलब्धिजनकत्वेनाद्यविशेषणनिरस्तत्वात् । नच परकीयत्वविशेषणं गौरवात् । नच गोलकस्य शरीरसंयुक्तत्वात्तदधिष्ठानस्यान्यस्य चाभावाद् दृष्टान्तासिद्धिः । तत्रानुमानेन गोलकातिरिक्तकरणसिद्धेः ।

तथाहि अन्धकारस्थं मानुषगोलकं तेजोवृत्तिघटसाक्षात्कारकारणसंयोगाधिकरणम् । रूपवत्त्वे सति घटसाक्षात्कारकारणत्वात् घटवदिति । बाह्यालोकेनार्थान्तरवारणायान्धकारस्थमिति । सर्वजनीनमार्जारादिनयनेन्द्रियातिरिक्तदण्डायमानतेजसार्थान्तरवारणाय मानुषेति । आकाशादिनार्थान्तरवारणाय तेजः पदं । सन्निकर्षे व्यभिचारवारणाय सत्यन्तं । घटादौ व्यभिचारवारणाय घटपदं । अन्धकारोत्पन्नविनष्टे त्वचा साक्षात्कृते घटे न व्यभिचारश्चाक्षुषत्वेन साक्षात्कारस्य विशेषणात् । कारणत्वं चात्र फलोपधानरूपमतो नोक्तदोषतादवस्थ्यम् । तदप्यसाधारण्येन विव-

स्यादेतत्—अहङ्कारादेकरूपात्कथं जडप्रकाशकौ गणौ विलक्षणौ भवत इत्यत आह—

साच्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात्।
भूतादेस्तन्मात्रः स तामसः, तैजसादुभयम्॥ २५॥

"सात्त्विक" इति। प्रकाशलाघवाभ्यामेकादशक इन्द्रियगणः सात्त्विको वैकृतात्सात्विकादहङ्कारात्प्रवर्तते। भूतादेस्त्वहङ्कारात्तामसात्तन्मात्रो गणः प्रवर्तते। कस्मात्? यतः 'स तामसः' एतदुक्तम्भवति 'यद्यप्येको-

---

क्षितमतो न शरीरेण व्यभिचारः।

यत्तु। रूपवत्त्वव्याप्यघटसाक्षात्कारकारणतावच्छेदकवत्त्वादित्यर्थः। तेन शरीरे व्यभिचारस्तत्र तदवच्छेदकशरीरत्वस्य वायवीयशरीरेऽपि वृत्तेरिति।

तन्न। एवमप्यसिद्ध्यापत्तेः। तदवच्छेदकगोलकत्वस्य वायवीयगोलकेऽपि वृत्तेः। तेजः संयोगस्य तेजस्यपि सत्वान्न तत्र व्यभिचारः। नचतेजःप्रतियोगिकसंयोगस्य तेजस्यसत्वाद्यभिचारस्तदवस्थ एवेति वाच्यम्। आलोकवद्भूतले घटो यत्रानीतस्तत्रालोकप्रतियोगिकसंयोगाभावेन घटाप्रत्यक्षापत्त्या तथाविधसंयोगस्याहेतुत्वात्। नच रत्नविशेषे व्यभिचारस्तस्य घटसाक्षात्काराहेतुत्वात्। तत्प्रभायां च साध्यसत्त्वादिति। अधिकं त्वन्यत्रानुसन्धेयम्॥२४॥

तस्माद्गणश्च षोडशक इत्यनेन पुनरुक्तिं परिहरन् एकजातीयसामग्र्या एकजातीयमेव कार्यं दृष्टं नानेकजातीयमितिशङ्कानिरासपरत्वेनोपजीवकत्वसङ्गत्यार्यामवतारयति। स्यादेतदित्यादिना। सात्विकत्वे उपपत्तिमाह—प्रकाशलाघवाभ्यामिति। सात्विकाउद्भूतसत्वगुणका एवमग्रेऽपि बोध्यम्। तन्मात्रकारणस्य तामसका-

ऽहङ्कारस्तथाऽपि गुणभेदोद्भवाभिभवाभ्यां भिन्नं कार्यं करोति' इति ।

---

यत्वे उपपत्तिमाह—यत्त्वइति । गुणोद्भवादिभेदे गुणभेदे साम-ग्रीभेदान्न पूर्वोक्तदोष इत्यादौ तदुक्तम्भवतीति ।

नन्वेवं 'सात्त्विकमेकादशकं प्रवर्त्तते वैकृतादहङ्कारा'दिति सूत्रे एकादशानां पूरणमेकादशकं मनस्तस्यैव वैकृतादहंकारादुत्पत्तिः श्रूयते नतु तदतिरिक्तेन्द्रियाणामपि । प्रत्युत—

वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा ।
अहन्तत्त्वाद्विकुर्वाणान्मनो वैकारिकाश्च ये ।
देवा अर्थाभिव्यञ्जनं यतः सर्वाः प्रवृत्तयः ।
तैजसादिन्द्रियाण्येव ज्ञानकर्ममयानि च ।
तामसो भूतसूक्ष्मादिर्यतः खं लिङ्गमात्मनः ।

इत्यादिस्मृतौ तैजसादुत्पत्तिः । अत्रच वैकृतादिन्द्रियानुग्राहकाणां देवानामुत्पत्त्यकथनेन न्यूनतापत्तिश्चेति चेत् ।

न । एकादशसंख्यापरिमितमेकादशकमित्येवं व्याख्याने सूत्राविरोधात् । इन्द्रियाणां प्रकाशलाघवाभ्यां सात्त्विकत्वे सिद्धे वक्ष्यमाणयुक्त्या रजसः प्रेरकत्वेनोपष्टम्भकत्वेन वा कारणत्वे च सिद्धे स्मृतेरप्येतत्परतावश्यकतयाऽविरोधात् । समष्टीन्द्रियाणि मनोऽपेक्षयाऽल्पसत्त्वत्वेन राजसकार्यत्वेनैव स्मृतिषु निर्दिष्टान्यत्र तु व्यष्टीन्द्रियापेक्षयाऽधिकसत्त्वत्वेन सात्त्विकाहङ्कारकार्यतयोक्तानीत्यविरोध इति केचित् ।

'ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रापतंस्तमशनायापिपासाभ्यामन्ववार्यत्ता एनमब्रुवन्नायतनन्नः प्रतिजानीहि । यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणा' मित्यादिश्रुत्या देवानां ज्ञानकर्मसमुच्चयफलभूतानां चेतनत्वावगमेनोत्पत्त्यसम्भवे तदकथनेन न्यूनतादोषासम्भवाच्च । तदुपाध्युत्पत्ति-

मादाय देवोत्पत्तिर्गौणी बोध्या। ननु स ईक्षतेमानु लोकान् लोकपालानुसृजा इति सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्छयत्तमभ्यतपत्तस्याभितप्तस्य मुखं निरभिद्यत यथाण्डं मुखाद्वाग्वाचोऽग्निर्नासिके निरभिद्येतां नासिकाभ्यां प्राणः। प्राणाद्वायुरक्षिणी निरभेद्येतामक्षिभ्यां चक्षुः चक्षुषः आदित्यः। कर्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्राद्दिशः। त्वङ्निरभिद्यत त्वचो लोमानि लोमभ्य ओषधिवनस्पतयो हृदयं निरभिद्यत हृदयान्मनो मनसश्चन्द्रमा नाभिर्निरभिद्यत नाभ्या अपानोऽपानान्मृत्युः। शिश्नं निरभिद्यत शिश्नाद्रेतो रेतस आपः। चक्षुष सूर्योऽजायत इत्यादिश्रुतिः अधिष्ठानेभ्यः करणानि तेभ्यो देवा इति प्रतिपादनपरा विरुध्येत।

श्रुतिस्तु स जगत्कर्त्ता। ईक्षत ईक्षणं कृतवान् अत्राडागमाभावः छांदसः। एकस्याखण्डस्य चेतनस्यापि सृष्टेःप्रागकरणत्वादमुख्यमेवेक्षणं वक्तव्यं तच्चाचेतनेऽपि प्रधाने संभवतीत्यर्थः। यत्तु 'अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः सशृणोत्यकर्णः। स वेत्ति वेद्यं नच तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्त'मितिमन्त्रवर्णादकरणस्यापि स्वाभाविकनित्यचैतन्यस्येक्षणसम्भवात्। नच चैतन्यस्य नित्यस्य कथं कादाचित्केक्षणमिति वाच्यं। प्रागुत्पत्तेः प्राणिकर्मप्रयोज्यसृज्याकाराविद्यावृत्तौ चैतन्यप्रतिविम्बरूपस्येक्षणस्य कादाचित्कत्वसम्भवात्। नच तस्यापि कार्यत्वादीक्षणान्तरापेक्षाया मनवस्थापत्तिरिति वाच्यं। तस्यादिकार्यत्वेन स्वपरानिर्वाहकत्वाङ्गीकारात्।

यद्वा प्राणिकर्मवशात्सृष्टिकालेऽभिव्यक्त्युन्मुखीभूतानभिव्यक्तनामरूपावच्छिन्नसत्स्वरूपचैतन्यरूपेक्षणस्यौन्मुख्यकादाचित्कत्वेन कादाचित्कत्वसम्भवादिति तन्न। अपादो जवन इति यथा पङ्गुः कश्चन जवनोऽयन्तु व्यापकत्वाज्जवन इव। एवंगृहीतेत्यादीन्यपि व्याख्येयानि तथाचेक्षणस्य गौणत्वानिवृत्तेरलं प्रसङ्गागतेन।

संसरणाधिकरणलोका मया सृष्टा परिपालयितृवर्जिता विनश्येयुस्तस्मात्तद्रक्षणार्थं लोकापालानुसृजे सृजेयं । एवमीक्षित्वा सोऽद्भ्य एवाप्प्रधानेभ्यः पञ्चभूतेभ्यः पुरुषं पुरुषप्रकारं शिरःपाण्यादिमन्तं समुद्धृत्य समुपादाय मृत्पिण्डमिव कुलालः अमूर्छयत् । मूर्छितवान् अतिश्लिष्टस्वावयवसंयोगीकृतवान् । तं पिण्डं पुरुषविधमुद्दिश्य अभ्यतपत्–मुखादिसंकल्पं कृतवान् । अभितप्तस्य तापसंकल्पविषयस्य मुखं निरभिद्यत मुखाकारं सुषिरमजायत । यथा पक्षिणोऽण्डं एवं तस्मान्मुखाद्वाक्करणमिन्द्रियं निरवर्त्तत । ततो वाचोऽग्निः लोकपालः । एवमग्रेऽपि । लोमानि लोमसहचारितस्पर्शनेन्द्रियं । ओषध्यो वनस्पतयस्तदधिष्ठितो वायुः । हृदयं कमलं । नाभिः गुदफलं । अपानः पाय्विन्द्रियं । शिश्नं प्रजननेंद्रियस्थानं । तेन स्त्रीयोनेर्नासङ्ग्रहः । रेतः उपस्थेन्द्रियं । आपः प्रजापतिरित्येवं व्याख्येयेतिचेत् ।

न । वागादिकरणानां मुखादिगोलकाकार्यत्वेऽपि मुखादिगोलकाश्रये तदभिव्यक्तेर्मुखाद्वागित्याद्युपपत्तेः । एवं वाचोऽग्निरित्याद्यपि बोध्यं । अन्यथा ‘आपोमयः प्राणस्तेजोमयी वा’गित्यादि श्रुतिविरोधः । यथेन्द्रियाणां न भौतिकत्वं तथोक्तं पुरस्तात् ।

नचा‘ग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाक्षिणी प्राविशद्दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नोषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशँश्चन्द्रमा मनो भूत्वा हृदयं प्राविशन्मृत्युरपानो भूत्वा नाभिं प्राविशदापो रेतो भूत्वा शिश्नं प्राविशन्’इत्यादिश्रुतिः करणानां देवताकार्यत्वप्रतिपादनपरा विरुध्येत इति वाच्यम् । अग्निर्वाग्भूत्वा वागधिष्ठाता भूत्वेत्येवं व्याख्याने विरोधाभावात् । अन्यथा मुखाद्वाग्वाचोऽग्निरित्याद्युपक्रमविरोधापत्तेः ।

नचैव‘मस्य पुरुषस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्य’मि-

त्यादिदेवतालयश्रुतिविरोध इति वाच्यम् । अनारम्भके भूतले जलबिन्दोर्लयदर्शनेनानारम्भकेषु भूतेष्वपि 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यती'ति श्रुतावात्मनो लयवदापोमयः प्राणस्तेजोमयी वागित्यादिश्रुत्यविरोधायोक्तश्रुतेर्वृत्तिलयपरत्वात् ।

ननु यदुक्तं देवानां करणाधिष्ठातृत्वेन प्रवेश इति तन्न सम्भवति । चक्षुषा हि रूपाणि पश्यतीत्यादि श्रुत्या करणानां देवतानधिष्ठितानामेव करणत्वबोधनात् । नच 'करणानि चेतनाधिष्ठितानि अचेतनत्वे सति प्रवर्त्तमानत्वाद्वास्यादिव'दित्यनुमानेन देवताकल्पनमिति वाच्यम् । जीवाधिष्ठितत्वेन सिद्धसाधनत्वात् । देवानां जीवस्य चाधिष्ठातृत्वाङ्गीकारे एकाभिप्रायनियमनिमित्ताभावान्न किञ्चित्कार्यमुत्पद्येत विरोधात् ।

अपिच देवानामाधिष्ठातृत्वे जीवस्य तदपेक्षया दुर्बलतयाऽप्रयोजकत्वेन च करणाधिष्ठातृत्वाभावेन भोक्तृत्वाभावे स्वामित्वाभावापत्त्या देवानामेवाधिष्ठातृत्वं स्यात् । तथाच देवता इन्द्रियसाध्यफलभोगिन्यः तदधिष्ठातृत्वाज्जीववदिति देवानां भोक्तृत्वं स्यात् । नचेष्टापत्तिः 'नह वै देवा न्पायं गच्छन्ती'तिश्रुतिविरोधात्। तस्माच्छ्रुतिस्मृतिषु करणाधिष्ठातृदेवतानिरूपणं त्वग्न्याद्यभेदेनोपासनार्थं नतु तेषां मुखादिप्रवेशोऽपि वैयर्थ्यादिति चेत् ।

न। अनुपपत्तावसत्यामभेदेनोपासनापरतया व्याख्यानसम्भवात् । नचैकाभिप्रायानिमित्ताभावात्कार्यासिद्धिरूपानुपपत्तिरुक्तैवेति वाच्यम् । विप्रतिपित्सूनामप्यनेकेषामधिष्ठातॄणामेकपरमेश्वरनियम्यतया विप्रतिपत्त्यसम्भवात् । नच जीवाधिष्ठितत्वेन सिद्धसाधनं जीवस्याधिष्ठेयस्वरूपतत्साध्यप्रयोजनज्ञानपूर्वकतत्प्रेरकत्वरूपाधिष्ठातृत्वासम्भवात् । अतएव 'आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम्' । इति तत्स्वरूपानभिज्ञमात्मानं साधयन्तस्तार्किकाः परास्ताः । नचेश्वरेण सिद्धसाधनत्वं स्वरूपप्रयोजनाद्यभिज्ञजीवाधि-

ष्ठितत्वस्य साध्यत्वात्। नचाधिष्ठातृत्वाद्भोगापत्तिः। यन्तरि रथाधिष्ठातृत्वेऽपि विजयादेरभोक्तृत्वेनानैकान्तिकत्वात्। यदि यन्तरि मानाभावान्न भोक्तृत्वं तर्हि देवेष्वपि समानं, अधिष्ठातृत्वमात्रस्यैव श्रुतत्वात्। देवानां भोक्तृत्वानुमानं तु 'न हवै' इत्यादि श्रुतिबाधितमिति त्वयैवोक्तत्वाच्च। नच देवानां भोक्तृत्वाभावे 'ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रायतन् तमशनायापिपासाभ्यामन्ववार्यत् ता एनमब्रुवन् आयतनं नः प्रतिजानीहि यस्मिन् प्रतिष्ठिता अन्नमदामेति ताभ्यो गामानयत्ता अब्रुवन्न वै नोऽयमलमिति, ताभ्योऽश्वमानयत्ता अब्रुवन्नवै नोऽयमलमिति, ताभ्यः पुरुषमानयत्ता अब्रुवन् सुकृतं बतेति पुरुषो वाव सुकृतं ता अब्रवीद्यथायतनं प्रविशते'त्यादि श्रुतिः महदर्णवायतनाशनायादिपीडान्नादनार्थायतनप्रार्थनापरलोकज्ञानाद्यसार्थकत्वरूपदोषयुक्तगोऽश्वादितिर्यक्शरीरातिरिक्तपरलोकादिज्ञानसाधनस्वपरितोषयोग्यमनुष्यशरीराङ्गीकरणभोगजनककरणसहकृतप्रवेशादिपरा विरुध्येत इति वाच्यम्।

'आशिष्ठो द्रढिष्ठो बलिष्ठस्तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्। स एको मानुषआनन्दस्ते ये शतं मानुषा आनन्दाः स एको मनुष्यगन्धर्वाणामानन्दः। श्रोत्रियस्य चाकामहतस्ये'त्यादि श्रुतौ मानुषाः १ मनुष्यगन्धर्वाः २ देवगन्धर्वाः ३ चिरलोकाः (पितरः)४ आजानदेवाः ५ कर्मदेवाः ६ देवाः ७ इन्द्रः ८ बृहस्पतिः ९ प्रजापतिः १० ब्रह्मा ११ इति एकादशपर्वसु मानुषानन्दादुत्तरशतगुणितानन्दवत्सु कर्मभिरग्निहोत्रादिभिर्देवस्थानेषु जातानां तदतिरिक्तानां त्रयस्त्रिंशद्धविर्भुजां च देवानां मानुषानन्दादशशब्दलक्षणाधिकसंख्यागुणितानन्दश्रवणं दुःखसंवलितमानुषानन्दभोगकल्पने विरुध्येतातो देवेषु भोक्तृत्वाभावेऽपि सर्वकार्यकरणसंघातपञ्जराध्यक्षस्य भोक्तृत्वेन प्रत्यक्षसिद्धस्य वस्तुतोऽभोक्तृब्रह्मस्वरूपस्य स्वतो भोक्तृत्वायोगादिन्द्रियदेवताद्युपाधिकृत एव तस्य भोक्तृत्वा-

दिसंसार इति वक्तुं देवेष्वारोप्य तथाभिधानात् ।

अन्यथा चक्षुरादीन्द्रियदेवतानां मुख्यौदनादनासम्भवेनान्न-मदामेति कथनानुपपत्तेः । स्वस्वविषयग्रहणरूपान्नादनस्येन्द्रियैरेव संभवे देवानामन्नादनार्थायतनप्रार्थना तु देवताऽऽयलक्षणा या गतिः ज्ञानकर्मसमुच्चयानुष्ठानफलभूता सा अपि न संसारदुःखोपशमायेति सूचनाय । 'भीषास्माद्वातः पवते भीषोदेति सूर्यः । भीषास्माद-ग्निश्चेन्द्रश्च मृत्युर्द्धावति पञ्चम' इत्यादिमन्त्रवर्णे तेषां दुःखहेतुभय-श्रवणाच्च । ये त्रयस्त्रिंशत्ते अष्टौ वसव, एकादश रुद्रा, द्वादशा-दित्या, इन्द्र, प्रजापतिश्चेति ।

श्रुतौ प्रथमपर्यायेऽकामहतस्य ग्रहणे तस्य सार्वभौमानन्देन तुल्यानन्दः स्यात । तथाच व्याघातो भवेन्मानुषानन्दे निस्पृहो मानुषानन्दभोगभागी च इति ततो मनुष्यगन्धर्वानन्देन तुल्यानन्दं तस्य दर्शयितुं प्रथमपर्याये तदग्रहणमित्यर्थः ।

नच यदि अकामहत इत्यस्य पूर्वपर्वकामनारहित उत्तरोत्तर-पर्वकामनावानित्यर्थः स्यात्तदोक्तव्याघातः स्यात स न सम्भ-वति सामान्यतः कामनारहितस्यैव शब्देन प्रतीतेरिति वाच्यम् । सर्वकामरहितस्य तत्त्वज्ञस्य सर्वपर्वसु ग्रहणे तत्तत्पर्वसमफलत्वेन वै-राग्यस्य शतगुणितफलत्वासिध्या वैराग्ये आदेशनातिशयद्योतना-नुपपत्तः । तादृशवैराग्यऽतिशयाभावनोत्तरोत्तरपर्वणि सुखाति-शयानुपपत्तेश्च त्वन्मते प्रथमपर्वणि श्रोत्रियपाठापत्तेश्च ।

न च पूर्वपूर्वपर्वकामनारहित इत्येवास्तु उत्तरोत्तरपर्वकामना-वानिति मास्त्विति वाच्यम् । पूर्वपूर्वपर्वरक्तस्योत्तरोत्तरपर्वका-मावश्यकत्वात् । अन्यथा तद्विरक्तस्य तत्सुखमित्यसङ्गतमेव स्यात् । नचैवमपीह जन्मनि कामवतः सुखाभावेन मनुष्यगन्धर्वादिजन्म-न्येव सुखं वाच्यम् । तथासति तत्र श्रोत्रियत्वं न सम्भवतीति वाच्यम् । पूर्वजन्मश्रोत्रियत्वमादयोपपत्तेः ।

अन्येतु प्रथमपर्वण्यपि श्रोत्रियपाठो युक्त एव फलसाधनसम्पत्त्या पृथिवीशस्यानन्दः, श्रोत्रियस्य तु विना साधनं वैराग्यातिशयादेव तत्सम्भवतीति, उत्तरपर्वविरूपः क्षुद्रमानुषानन्दाच्छतगुणो नृपानन्दः क्षुद्रमानुषानन्दविरक्तस्यैव भवतीति वा । किंचात्र श्रोत्रियः परलोकं गतः पूर्वं परलोककामनावानिति परलोकं गतस्य पूर्वजन्मसिद्धश्रोत्रियत्वपरिग्रहोऽगतिकगतिरयुक्त एव श्रोत्रियजन्मन्येवैतद्वाक्यस्य योजयितुं शक्यत्वात् । श्रोत्रियस्य कर्मानुष्ठानादिना शुद्धान्तः करणस्याकामहतस्य पुष्कलवैराग्यद्वारा सम्पन्नज्ञानस्यानन्दे ब्रह्मानन्दलक्षणे सर्वेषामानन्दानामंशभावेन सिद्धेस्ते ये शतमानन्दाः स एक आनन्दः श्रोत्रियस्याकामहतस्य च भवतीति योजनसम्भवात् ।

तथापि मानुषानन्दजघन्यत्वेनातितुच्छत्वाद्ब्रह्मानन्दलेशत्वेनापि गणनानर्हतया मानुषानन्देन मनसो विक्षेपो न सम्भवति साधनदौर्लभ्यादिति विद्या मानुषे लोके सुखेन सम्पाद्या ऊर्द्धन्तु सुखप्रायेऽपि कर्मविद्याप्रभावतः सुलभविषयत्वात्सत्वरं मनसो विक्षेपेण विघ्नबहुलत्वा'न्नचेदिहावेदीन्महती विनष्टि'रिति श्रुतेर्विद्या शीघ्रं सम्पाद्येति द्योतनाय प्रथमे पर्वणि इहापाठः

ननु तत्वज्ञसामान्यकामनाभावपक्षवत् तत्तत्पर्वकामनाभावतस्तत्तत्पर्वसुखमिति पक्षोऽपि स्यात् समानपर्वणं उपस्थिततया तत्रैव वैराग्यसम्भवादनुपस्थितपूर्वपर्वणि वैराग्यकल्पने मानाभावात् । इहैव जन्मनि साधनं विनापि शुद्धान्तः करणस्य सुखसम्भवेन वैराग्ये आदरातिशयसम्भवात् । तत्वज्ञपक्षवदत्रापि विद्या शीघ्रसम्पाद्येति द्योतनाय प्रथमपर्याये श्रोत्रियापाठोपपत्तेश्चेतिचेत् ।

न । ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्येति विरोधापत्तेः । नहि तत्सुखविरक्त-

स्याज्ज्ञानिनस्तत्सुखं सम्भवति । 'यत्र नान्यत्पश्यति नान्यच्छृणोती'ति श्रुतेः । सचानन्द इहैव वितृष्णप्रसन्नोऽवगतस्तथाच वेदव्यासः ।

यच्च काममुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ इति ॥

नच वेदान्तमते ब्रह्मणः सुखरूपत्वात्स एको ब्रह्मण आनन्द इति भेदपरा षष्ठी विरुद्ध्यते साङ्ख्यमते ब्रह्मणः सुखसम्बन्धाभावाच्चेति वाच्यम् ।'ब्रह्मविदाप्नोति परं'। 'सत्यं ज्ञान मनन्तं ब्रह्म''यो वेद- निहितं गुहाया'मित्युपक्रमे गुहानिहितजीवाभिन्नस्य वेदनकर्मत्वेन निर्दिष्टस्य यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् न बिभेति कदाचन'इत्युपसंहारमन्त्रे 'तत्वमसि अहं ब्रह्मास्म्यानन्दो ब्रह्मे'त्यादि वदत्रापि आनन्दं ब्रह्म विद्वानिति सामानाधिकरण्येन निर्देश उचित एव,तथापि आनन्दं ब्रह्म विद्वानित्युक्ते तत्पदार्थानन्दपरमेवानन्दपदमिति भ्रमः स्यात्तन्माभूदतो भेदपरषष्ठ्यानन्दपदं जीवपरमिति बोधनाय भेदपरषष्ठ्युपपत्तेः ।

अतएव ब्रह्मणा गुरुणापि तद्वैयधिकरण्यानुरोधेन प्रजापतेरानन्दो ब्रह्मण आनन्द इत्यादिविवरणोपपत्तेरित्याहुः ।

सत्वतमोभ्यां सात्विकराजसाहङ्काराभ्याम् । सर्वं कार्यमितोऽग्रेऽहङ्कारजन्यमिति पूरणीयम् । रजसा राजसाहङ्कारेण एतेन रजसः स्वतन्त्रकार्याभावे 'अन्योन्याभिभवाश्रय जननमिथुनवृत्तयश्च गुणा' इत्यत्र सत्वं रजस्तमसी अभिभूय शान्तामात्मनो वृत्तिं लभते एवं रजः सत्वतमसी अभिभूय घोरामिति पूर्वोक्तविरोधः ।

सत्वात्सञ्जायते ज्ञानं रजसो लोभ एव च ।

इत्यादि भगवद्वचनविरोधश्चेति परास्तं । रजः पदेन राजसाहङ्कारस्य विवक्षितत्वान्न तु रजोगुणस्येति । भाष्ये उभयं ज्ञान-

ननु यदि सत्त्वतमोभ्यामेव सर्वं कार्यं जन्यते तदा कृतमकिञ्चित्करेण रजसेत्यत आह—"तैजसादुभयम्" इति । तैजसाद्राजसादुभयं गणद्वयं भवति । यद्यपि रजसो न कार्यान्तरमस्ति तथाऽपि सत्त्वतमसी स्वयमक्रिये समर्थे अपि न स्वस्वकार्यं कुरुतः; रजस्तु चलतया ते यदा चालयति तदा स्वकार्यं कुरुत इति । तदुभयस्मिन्नपि कार्ये सत्त्वतमसोः क्रियोत्पादनद्वारेणास्ति रजसः कारणत्वमिति न व्यर्थं रज इति ॥ २५ ॥

सात्त्विकमेकादशकमाख्यातुं बाह्येन्द्रियदशकं तावदाह-

बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनत्वगाख्यानि ।
वाक्पाणिपादपायूपस्थाः कर्मेन्द्रियाण्याहुः ॥ २६ ॥

"बुद्धीन्द्रियाणि" इति । सात्त्विकाहङ्कारोपादानत्व-

---

कर्मेन्द्रियमिति व्याख्यातं तन्मतं दूषयितुमाहोभयं गणद्वयमिति । तन्मात्रैकादशकमित्यर्थः ।

ननु तर्हि स्वतन्त्रकार्याभावात्कृतं रजसेत्याशङ्कते—यद्यपीति । रजसः राजसाहङ्कारस्य । कार्यान्तरं उभयगणातिरिक्तं रजः प्रधानात्मकं उपष्टम्भकं चलं च रज इत्युक्ताभिप्रायेण समाधत्ते—तथापीति । कार्यान्तराभावेऽपीत्यर्थः । यथा नैयायिकमते अस्मदादिशरीरं पार्थिवमप्याकाशादिभिरुपष्टभ्यते स्वर्णं तैजसमपि पृथिव्योपष्टभ्यते तथा राजसाहङ्कारेणोष्टभ्येते सत्वरजसी इत्यर्थः ।

अन्वयव्यतिरेकाभ्यां सिद्धमर्थमुपसंहरति सत्त्वतमसोरिति । रज इति रजःप्रधानोऽहङ्कार इत्यर्थः । वैकृतभूतादितैजसत्वकथनं तु लघुकार्यजनकमहाकार्यजनकस्राष्टिसमर्थत्वाभिप्रायकं बोध्यम् ॥२५॥

उपोद्घातसङ्गतिसूचनाय पूर्वोक्तमनुवदन्नार्यामवतारयति । सा-

मिन्द्रियत्वम् । तच्च द्विविधम् बुद्धीन्द्रियं कर्मेन्द्रियं च । उभयमप्येतादिन्द्रस्यात्मनश्चिन्हत्वादिन्द्रियमुच्यते । तानि च स्वसंज्ञाभिश्चक्षुरादिभिरुक्तानि । तत्र रूपग्रहणलिङ्गं चक्षुः, शब्दग्रहणलिङ्गं श्रोत्रम्, गन्धग्रहणलिङ्गं घ्राणम्, रसग्रहणलिङ्गं रसनम्, स्पर्शग्रहणलिङ्गं त्वक्, इति ज्ञानेन्द्रियाणां संज्ञा । एवं वागादीनां कार्यं वक्ष्यति ( कारिका २८ ) ॥ २६ ॥

एकादशमिन्द्रियमाह—

**उभयात्मकमत्र मनः, सङ्कल्पकमिन्द्रियं च साधर्म्यात् ।**
**गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च ॥ २७ ॥**

"उभयात्मकम्" इति । एकादशस्विन्द्रियेषु मध्ये मन उभयात्मकम्, बुद्धीन्द्रियं कर्मेन्द्रियं च, चक्षुरादीनां त्विकामिति—लक्षणमाह सात्विकेति । बुद्धीन्द्रियमिति । रूपरसगन्धशब्दस्पर्शा बुध्यन्ते एतैरिति बुद्धीन्द्रियाणि । एतेषां कर्म कुर्वन्तीति कर्मेन्द्रियाणि । सर्वेषामिन्द्रियसंज्ञायां हेतुमाहोभयमिति । इन्द्रस्य संघातेश्वरस्य । अन्येतु इन्द्रपदेन विषयास्तान्प्रति द्रवन्तीति इन्द्रियाणीत्याहुः ।

तत्र चक्षुरादि मध्ये चक्षुरादिसत्त्वेऽनुमानमाह—रूपग्रहणलिङ्गमित्यादिना । रूपोपलब्धिः सकरणिका क्रियात्वाच्छिदादिवत् । एवमिन्द्रियान्तरेऽपि बोध्यम् । त्वक्चक्षुषी द्रव्यस्यापि ग्राहके अन्यानि तु गुणमात्रस्य ग्राहकमिति बोध्यम् । चक्षुरादीनां तत्तद्भूतगुणग्राहकत्वेन तत्तद्गुणवत्त्वेन तत्तद्भूतारब्धत्वानुमानं तु यथा न साधीयस्तथोक्तं पुरस्तात् ।

वागादिसत्त्वे मानाभाव इत्यत आह । वागादीनामिति ॥२६॥

एकादशमिति । एकादशानां पूरणमेकादशमित्यर्थः । मनस उभयात्मकत्वे हेतुमाह चक्षुरादीनामित्यादिना । मनोऽधिष्ठितानां

मनःसंवद्धानाम् । अत एव 'अन्यत्रमना अभूवं नाद्राक्षमन्यत्रमना अभूवं नाश्रौष' मित्यादिश्रुतिरपि सङ्गच्छते ।

नचैवमेकमनःपरिणामरूपे ज्ञाने नानात्वं न सम्भवतीति वाच्यम् । एकस्मिन्नपि देहे तत्तदन्नोपयोगानुपयोगप्रयुक्तकृशत्वपुष्टत्वाद्यवस्थावन्मनःपरिणामभूते ज्ञाने चक्षुरादिसम्बन्धासम्बन्धप्रयुक्तचाक्षुषं-श्रौतमित्यादि-चाक्षुषत्वादिव्यवस्थोपपत्तेः । नचैवं गोलकजातमेवेन्द्रियमिति नास्तिकमतप्रवेश इति वाच्यम् । दत्तोत्तरत्वाच्छ्रुतिविरोधात् । गोलकादिसत्त्वेऽपि केषाञ्चिच्चाक्षुषाद्यदर्शनाच्च ।

भाष्यकारास्तु । एकस्यैव मुख्येन्द्रियस्य मनसोऽन्ये दश शक्तिभेदा इत्याहोभयात्मकं मनः । ज्ञानकर्मेन्द्रियात्मकं मनः इत्यर्थः । उभयात्मकमित्यस्यार्थं स्वयं विवृणोति । गुणपरिणामभेदान्नानात्वमवस्थावत् । यथैक एव नरः सङ्गवशान्नानात्वं भजते कामिनीसङ्गात् कामुको, विरक्तसङ्गाद्विरक्तोऽन्यसङ्गाच्चान्य एवं मनोऽपि चक्षुरादिसङ्गाच्चक्षुराद्येकीभावेन दर्शनादिवृत्तिविशिष्टतया नाना भवति । तत्र हेतुः गुणेत्यादि । गुणानां सत्त्वादीनां परिणामभेदेषु सामर्थ्यादित्यर्थः ।'एतच्च अन्यत्रमना अभूवं नाद्राक्षं अन्यत्रमना अभूवं नाश्रौषमित्यादि श्रुतिसिद्धाच्चक्षुरादीनां मनःसंयोगं विना व्यापाराक्षमत्वादनुमीयते इत्याहुः ।

तन्न । मनसोऽन्ये दश शक्तिभेदा इत्यर्थस्य सूत्रादप्रतीतेः । श्रुत्यादौ तथाऽदर्शनाच्च । उभयात्मकं मन इत्यस्मात् ज्ञानेन्द्रियत्वकर्मेन्द्रियत्वोभयस्य मनसि बोधनाच्च । ननु ज्ञानेन्द्रियत्वावच्छिन्नकर्मेन्द्रियत्वावच्छिन्नप्रतियोगिताकभेदाभावो बुध्यते तथा सति पञ्चज्ञानेन्द्रियपञ्चकर्मेन्द्रियभेदाभावस्य तत्रैव सत्त्वेन तद्तिरिक्तमनसोऽसिद्ध्यापत्तेः । उत्तरसूत्रैकवाक्यतानुरोधेनोभयात्मकपदेनोभयं विवक्षितं तच्च नानात्वपदेनोन्नयावस्थावत्-अवस्थाविशिष्टं मनो—मन एवेत्यर्थकरणे चक्षुरादिद्वारा विषयाकारपरि-

वागादीनां च मनोऽधिष्ठातानामेव स्वस्वविषयेषु प्रवृत्तेः।

तदसाधारणेन रूपेण लक्षयति—"सङ्कल्पकमत्र मनः" इति। सङ्कल्पेन रूपेण मनो लक्ष्यते। आलोचितमिन्द्रियेण 'वस्त्विदम्' इति सम्मुग्धम् 'इदमेवम्, नैवम्' इति सम्यक्कल्पयति विशेषणविशेष्यभावेन विवेचयतीति यावत्। यदाहुः—

णामविशिष्टतया मनो नानाभवनप्रतिपादकचक्षुरादिसङ्गाचक्षुराद्येकीभावेन दर्शनादिविशिष्टतया नानाभवतीति स्वोक्तविरोधापत्तेः।

सूत्रं तु गुणानां सत्त्वादीनां परिणामाश्चक्षुरादयस्तेषां भेदाभ्नानात्वं नानाविधत्वं ज्ञाने चाक्षुषादिवृत्तिप्रयुक्तं चाक्षुषत्वादिकमादाय मनः परिणामभूते एव ज्ञाने चाक्षुषं श्रौतमित्यादि व्यवहारः। यथैकस्मिन्नेव देहे तत्तदन्नोपयोगातुपयोगप्रयुक्ताः कृशत्वपुष्टत्वादयोऽवस्था इत्येवं व्याख्येयम्। अलं प्रसङ्गागतेन।

ननु कथं सर्वेन्द्रियाधिष्ठातृत्वस्योभयेन्द्रियात्मकत्वे प्रयोजकत्वमिति चेच्छृणु। बुध्यन्ते रूपादयो यैस्तानि बुद्धीन्द्रियाणि कर्म कुर्वन्तीति कर्मेन्द्रियाणीति व्युत्पत्त्या ज्ञानक्रियानिदानस्य तत्प्रयोजकस्य सर्वेन्द्रियाधिष्ठातृपदेन विवक्षितत्वात्। प्रयोगस्तु विमतं मनः ज्ञानेन्द्रियं कर्मेन्द्रियं वा तत्प्रयोजकसाधर्म्यात्संमतववदिति। इदं वस्त्वित्यत्रेदंतत्त्वस्य प्रकारत्वमाशंक्याह—संमुग्धमिति। समुग्धं विशेषणविशेष्यभावरहितम्। इदं–घटादि एवं–घटत्वाद्याश्रयं, नैवं—न पटत्वाद्याश्रयम्। विशेषणेति। विशिष्टप्रत्यक्षजनकमिति यावत्।

उक्तार्थे संमतिमाह–यदाहुरिति। अविकल्पितं—विशेषणविशेष्यभावरहितं। तच्चक्षुषा यदालोचितम्। सामान्यं घटत्वादि, विशेषो घटादिकल्पयन्तीति विशिष्टप्रत्यक्षं मनसः असाधारणकार्यमित्यर्थः।

'सम्मुग्धं वस्तुमात्रं तु प्राग्गृह्णन्त्यविकल्पितम् ।
तत् सामान्यविशेषाभ्यां कल्पयन्ति मनीषिणः'॥ इति।
तथा हि,
अस्ति ह्यालोचितज्ञानं प्रथमन्निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशम् मुग्धवस्तुजम् ।
ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया ।
बुद्ध्या ऽवसीयते सा ऽपि प्रत्यक्षत्वेन सम्मता ॥ इति॥

सा ऽयं सङ्कल्पलक्षणो व्यापारो मनसः समानासमानजातीयाभ्यां व्यवच्छिन्दन् मनो लक्षयति ।

---

संप्रत्यर्थं स्वयमेव विवृणोति—तथाहीति । बुध्या मनसा । ननु 'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारिव्यवसायात्मकं प्रत्यक्षं' इत्यत्र इन्द्रियस्यार्थेन सन्निकर्षादुत्पद्यते यज्ज्ञानमव्यपदेश्यं निर्विकल्पकमव्यभिचारि यथार्थं व्यवसायात्मकं सविकल्पकं च तत्प्रत्यक्षं यतस्तत्प्रत्यक्षं प्रमाणम् । इन्द्रियार्थसन्निकर्षात्सुखदुःखे भवतस्तद्व्युदासार्थं ज्ञानमिति । नच सुखं दुःखं वा ज्ञानं भवितुमर्हति तदभिन्नसामग्रीजत्वात् ज्ञानवदिति सुखादीनां ज्ञानत्वापत्त्या ज्ञानपदेनाशक्यं व्यावर्त्तनमिति वाच्यम् । तेषां ज्ञानसामग्र्यभिन्नजत्वाभावात् । अन्यथोपेक्षात्मकज्ञानसामग्र्यापि सुखाद्यापत्तेः ।

किञ्च तुल्ययुक्त्या ज्ञानानामपि सुखादिसामग्र्यभिन्नजत्वापत्त्या शीतार्त्तस्यापि चन्दनेन्द्रियसंयोगाच्छीतस्पर्शज्ञानस्य सुखत्वं स्यात् । उष्णार्त्तसम्बन्धिनो दुःखत्वं वा स्यात् तस्माद्विषयविशेषितेभ्यो ज्ञानेभ्यो निर्विषयतया भिन्नजातीयाः सुखादयो यथास्वमनुकूलवेदनीयत्वादिभिर्लक्षणैरन्योन्यभेदवन्तः । तत्रानुकूलवेदनीयत्वं यद्यपि न निरूपधीच्छाविषयत्वं दुःखाभावेऽतिव्याप्तेः । नापि भावत्वेन विशेषणीयं सुखी स्यामितीच्छायामा-

त्मसुखसुखत्वयोरपि विषयत्वात् । नच सुखत्वादविषयतावच्छेदकत्वं नतु विषयत्वमिति वाच्यम् । अवच्छेदकस्यापि विषयत्वात् । तथापि सुखत्वमेव तत् । एवं प्रतिकूलवेदनीयत्वं दुःखत्वमेवेति बोध्यम् । सुखदुःखे अवश्यसंवेद्ये अज्ञातसुखदुःखयोर्मानाभावात् । अवश्यसंवेद्यत्वं च समानकालीनसमानाधिकरणसाक्षात्कारविषयताव्याप्यजातिमत्त्वमिति ।

नच सत्यपीन्द्रियार्थसन्निकर्षे ज्ञानमात्रादेव सुखदुःखयोः स्वप्ने दर्शनात् यत्र जागरेऽन्द्रियार्थसान्निकर्षस्तत्रापि ज्ञानमस्तीति तदेव सुखदुःखयोः कारणं क्लृप्तसामर्थ्यात् । इन्द्रियार्थसन्निकर्षस्य तु ज्ञानमात्रोपयोगादन्यथासिद्धौ भावाभावाविति तद्वारणार्थं ज्ञानपदं व्यर्थमिति । न चेन्द्रियार्थसन्निकर्षः ज्ञानजननद्वारा सुखोत्पत्तौ हेतुरिति वाच्यम् । ज्ञानस्यापेक्षात्मकताया अपि सम्भवे फलापर्यवसानतया व्यापारत्वाभावादिति चेन्न । स्वप्ने सुखदुःखोत्पादस्यैवासिद्धेः । तज्ज्ञानस्यार्थज्ञानस्येव मिथ्यात्वात् ।

अव्यपदेश्यव्यवसायात्मकपदयोः सङ्ग्राह्यव्यवच्छेद्याभावेऽपि तत्र विप्रतिपत्तिनिराकरणाय द्वयोप्रत्यक्षोपाधिः स्वशब्देनोपात्तेति तथाच विशिष्टज्ञानस्येन्द्रियसन्निकर्षाजन्यत्वे सूत्रविरोध इति चेन्न । सूत्रार्थस्यैव विचार्यमाणत्वात् । तथाहि—अत्र चक्षुरिन्द्रियं किमणुपरिमाणं मध्यमपरिमाणं । परममहत्परिमाणं वा मध्यमपरिमाणमपि सर्षपादितुल्यं वाच्यमन्यथा कृष्णताराग्रवृत्तित्वानुपपत्तेः ।

अर्थसम्बन्धोऽपि गोलकसंबद्धस्यासम्बद्धस्य वा आद्ये न प्रथमद्वितीयौ सूर्यादेरचाक्षुषत्वप्रसङ्गात् । नह्यणुपरिमाणमुक्तमध्यमपरिमाणं वा तावत्पर्यंतमवस्थातुमुत्सहते । अत एव दीपालोकदृष्टान्तोऽपि परास्तः । तावत्पर्यन्तं तावत्परिमाणस्यालोकासम्भवात् । अपिच इन्द्रियाणामपि स्वरूपज्ञानाभावेन जीवाधिष्ठितत्वासम्भवा-

च्च । न तृतीयोऽनभ्युपगमात् । कुड्यादिव्यवहितस्यापि प्रत्यक्षत्वप्रसङ्गाच्च । अतएव नासम्बद्धपक्षोऽपि । अन्धत्वप्रसङ्गाच्च ।

अत्राव्यभिचारिज्ञानमात्रस्य निवेशे प्रत्यक्षप्रमाणेऽसम्भवः । तेषां भ्रमादिजनकत्वात् । इन्द्रियार्थसन्निकर्षजन्यज्ञानसामान्यस्य निवेशे ऽव्यभिचारिपदवैयर्थ्यम् ।

किञ्च चक्षुषो बहिर्गमनेऽपि यद्देशावच्छेदेन चक्षुः संयोगस्तद्देशावच्छेदेनैव तदुपलम्भो वाच्योऽन्यथा पृष्ठदेशावच्छेदेनालोकसंयुक्तोऽपि अग्रे चक्षुस्संयुक्तः घटस्तद्देशावच्छेदेनोपलभ्येत । एवं यद्देशावच्छेदेनालोकसंयोगस्तद्देशावच्छेदेनैव चक्षुः संयोगोऽन्यथाऽभिमुखदेशावच्छेदेनालोकसंयोगाभावेऽपि घटचाक्षुषापत्तेस्तथासति अणुपरिमाणस्योक्तमध्यमपरिमाणस्य वा चक्षुषो यावन्मात्रं संयोगव्याप्तिस्तावन्मात्रमुपलभ्येत वानरोष्ट्रादि च नैवोपलभ्येत उपलभ्यते च । वानरोष्ट्रादिमूर्त्तयोरेकदेशावच्छेदेनावस्थानासम्भवेनोपलम्भाभावप्रसङ्गश्च ।

एतेन यथा वर्त्तिदेशे पिण्डितमपि तेजः प्रसार्य प्रासादोदरं व्याप्नोति तत्कस्य हेतोः पृथवग्रत्वात् । विरोधश्चानिविडयोरेव मूर्त्तयोरन्यथा पटमहारजनयोर्घटोदकयोश्चाग्रहः स्यादिति परास्तम् । अत्यल्पस्याग्रताया अप्यत्यल्पत्वात् । अनिविडद्रव्यान्तर्गतच्छिद्रानन्तरितावयवावच्छेदेनैव चक्षुःसन्निकर्षसम्भवाच्च । चक्षुषो बहिर्निर्गमे सर्वं सन्निकृष्टमेव स्यात् तथा सति संनिकृष्टविप्रकृष्टदिग्देशव्यवहारो न स्यात् । सन्निकृष्टविप्रकृष्टयोः शाखाचन्द्रमसोरतुल्यकालग्रहणप्रभङ्गश्च । यद्गतिमद्भवति तत्तां गतिं नैरन्तर्येण कुर्वदपि सन्निकृष्टमाशु प्राप्नोति न विप्रकृष्टेन तुल्यकालङ्किन्तु विप्रकृष्टं चिरेणेति ।

यत्तु । द्योतकरादयः । यत्रेन्द्रियं शरीरं चार्थेन सम्बध्यते तत्र दिग्देशव्यवहारो न भवति दूरान्तिकानुविधानं वा । यदा त्वि-

न्द्रियमेव केवलं सम्बध्यते तदा शरीरमवधिं कृत्वा संयुक्तसंयोगाल्पीयस्त्वं भूयस्त्वं वापेक्षमाणस्य देहमर्थं चान्तरावस्थितस्य पृथिव्यादेः दिग्देशप्रत्ययाः सन्निकृष्टविप्रकृष्टप्रत्ययाश्च भवन्ति । खगानां चोपर्युपरि सञ्चरतां दूरान्तिकभावो बहुलतयालोकावयवभागानां संयुक्तसंयोगाल्पत्वभूयस्त्वाभ्यामवगन्तव्यः । शाखाचन्द्रमसोस्तुल्यकालग्रहणानभ्युपगमात् । को हि स्वस्थात्मा शाखाचन्द्रमसोस्तुल्यकालग्रहणं प्रतिपद्यते कालभेदाग्रहान्मिथ्या प्रत्यय एष उत्पलदलशतव्यक्तिभेद इव । चिन्त्यो हि तेजसो लाघवातिशयो यदुदयगिरिशिखरमारोहत्येव मार्त्तण्डमण्डले भवनोदरेष्वालोक इत्यभिमानो लौकिकानां तादृशं चाक्षुषमपि तेजः क्रमेणापि गच्छद्युगपत्तत्र प्राप्तमिति लक्ष्यते इति ।

तन्न । अन्यावधिकस्य दिग्देशव्यवहारस्यासति बाधके शरीरावधित्वेन प्रतिपादयितुमशक्यत्वात् । शरीरस्थितलोम्नामुपर्युपरिस्थिततया प्रतीतेर्निर्वोढुमशक्यत्वाच्च । शाखाचन्द्रमसोस्तुल्यकालप्रत्ययोऽसति बाधके मिथ्येति कल्पयितुमशक्यत्वात् ।

यत्तु वार्त्तिककाराः—चक्षुः प्राप्यकारि इन्द्रियत्वात् घ्राणादिवत् । अथवेन्द्रियाणि प्राप्यकारीणि करणत्वाद्वास्यादिवदित्यनुमानं बाधकमित्याहुस्तन्न । त्वगादौ व्यभिचारात् । चरमे तत्रैव बाधात् । त्वगिन्द्रियवत्कर्णशष्कुल्यवच्छिन्नश्रोत्रस्यापि गमनासम्भवात् ।

एतेन प्रयोगस्तु चक्षुःश्रोत्रे प्राप्य स्वविज्ञेयं कार्यं कुरुतः । जनकत्वे सति तदप्राप्तावजनकत्वात् । यज्जनकं सत् यदप्राप्तौ यन्न जनयति तत्तत्प्राप्तावेव तज्जनयति यथा कुम्भजनको मृदप्राप्तावकुर्वन्कुम्भं तत्प्राप्तावेव करोति तथाचैतत्तस्मात्तथेतीति तात्पर्यटीकाकृदुक्तं परास्तं । नचात्रभवतां वाचस्पतिमिश्राणां भ्रमो न सम्भवतीति शङ्कनीयम् सर्वमनुष्याणां भ्रान्तिधर्मत्वात् । वार्त्तिककारोक्तानुमानस्य त्वगादौ व्यभिचारवारणाय तदनुरोधेन प्रवृत्तेश्च ।

स्यादेतत्—असाधारणव्यापारयोगिनौ यथा महदहङ्कारौ नेन्द्रियम्, एवम्मनोऽप्यसाधारणव्यापारयोगि नेन्द्रियं भवितुमर्हतीत्यत आह—"इन्द्रियं च" इति । कुतः ?—"साधर्म्यात्" इन्द्रियान्तरैः सात्त्विकाहङ्कारो-

---

अत एवेन्द्रियं यद्यगत्वाऽनागतमर्थं गृह्णीयात्किमस्य कुड्यकटाद्यावरणमपकुर्याद्येन तदावृतं न गृह्णीयात् । गतौ तु स्पर्शवता प्रसादरहितेन सैवास्य प्रतिबध्यतेति न प्राप्नोति विषयमप्राप्तं च न गृह्णातीति स्वोक्तिरपि सङ्गच्छते अन्यथा प्रयोगस्तु इत्यादिस्वोक्तानुरोधेन प्रवृत्त्या चक्षुः श्रोत्रे इत्येव ब्रूयान्नतु इन्द्रियं यदीति सामान्यरूपेण ।

दिग्देशव्यपदेशाच्छाखाचन्द्रमसोस्तुल्यकालग्रहणाच्च चक्षुरेव प्राप्यकारीति नवीनमतमपि परास्तम् । नच चक्षुषो बहिर्निर्गमनाभावे उक्तरीत्या कुड्यादेः प्रतिबन्धकत्वानुपपत्तिरिति वाच्यम् । बहिर्निर्गमनेऽपि उक्तपरिमाणविकल्पादिग्देशव्यपदेशदोषेण गमनागमनयोर्विरुद्धत्वेन चानिर्वचनीयतापत्तेः । तथाच वेदान्तिन एव विजयेरन्नित्यर्थः । विषयसम्बद्धालोकद्वारैव चक्षुषो विषयसम्बन्धाङ्गीकारे आलोकगतिनिरोधे च कुड्यकटादेः प्रतिबन्धकत्वसम्भवाच्चालं प्रसङ्गागतेन ।

तथाच निर्विकल्पकं ज्ञानं प्रथमत इन्द्रियेण, पश्चान्मनसा सविकल्पकं ज्ञानं जायते इति सिद्धमिति । ननु मनो नेन्द्रियमसाधारणव्यापारवत्त्वात् । महदहङ्कारवत् । असाधारणव्यापारश्च संयोगातिरिक्तपरिणामविशेषः । यदीदमिन्द्रियं स्याच्चक्षुरादिवद्विषयसंयोगि स्यादित्यभिप्रायेणाशङ्कते—स्यादेतदिति । मन इन्द्रियं तत्साधर्म्याच्चक्षुरादिवत्तत्साधर्म्यं च सात्त्विकाहंकारोपादानत्वमित्यभिप्रायेण समाधत्ते—साधर्म्यादिति । महदहङ्कारयोस्तु नेन्द्रियत्वं तथात्वाभावादित्यर्थः ।

पादानत्वं च साधर्म्यम् नत्विन्द्रलिङ्गत्वम्, महदहङ्कारयोरप्यात्मलिङ्गत्वेनेन्द्रियत्वप्रसङ्गात्, तस्माद्व्युत्पत्तिमात्रमिन्द्रलिङ्गत्वम न तु प्रवृत्तिनिमित्तम्।

अथ कथं सात्त्विकाहङ्कारादेकस्मादेकादशेन्द्रियाणीत्यत आह—"गुणपरिणामविशेषाद् नानात्वं बाह्यभेदाश्च" इति। शब्दाद्युपभोगसम्प्रवर्तकादृष्टसहकारिभेदात्कार्यभेदः। अदृष्टभेदो ऽपि गुणपरिणाम एव।

अन्यंतु मनसाऽसाधारणविषयाभावादिन्द्रियत्व मास्त्विति विवदानः शङ्कते—स्यादेतदित्याहुः। 'इन्द्रलिङ्गमिन्द्रजुष्टमिन्द्रदत्तमित्यादिपाणिनीयवचनविरोधं परिहर्तुमुपसंहरति तस्मादिति। बाह्यभेदा इति। बाह्यभेदा अग्न्यादयः। यथैको ऽग्निर्दहति प्रकाशयति। यथैकैव कामिनी पुरुषाभिप्रायविशेषभेदात्सुखादिकं, बाह्यभेदाच्चेति पाठे तु ग्राह्यभेदादपीन्द्रियभेद आवश्यक इत्यर्थः।

यत्तु किं मनस इन्द्रियत्वे श्रुतिः प्रमाणमुत स्मृतिरनुमानं वा नाद्यस्तथाविधश्रुतेरनुपलंभान्न द्वितीयो मनःषष्ठानीन्द्रियाणीति स्मृतेर्मनस इन्द्रियगतषट्त्वसंख्यापूरकत्वे प्रमाणत्वान्न त्विन्द्रियत्वे। नापि चरमः। तथाहि—मन इन्द्रियमिन्द्रियगतषट्त्वसंख्यापूरकत्वादित्यनुमानस्य विशेषव्याप्तिमूलत्वे दृष्टान्ताभावात्। यद्यद्गतसंख्यापूरकं तत्तज्जातीयं। यथा पशौ प्रतिप्रस्थातृषष्ठा ऋत्विज इति सामान्यव्याप्तिमूलत्वे यजमानपञ्चमा इडां भक्षयन्तीत्यत्र ऋत्विग्गतपञ्चत्वसंख्याया अनृत्विजापि यजमानेन पूरणदर्शनेन तत्र व्यभिचारात्। नच यजमानस्यापि ब्राह्मणत्वेन साजात्यमस्त्येवेति वाच्यम्। यद्यत्पदावगतयद्गतसंख्यापूरकं तत्तत्पदार्थतावच्छेदकेन रूपेण तत्तज्जातीयमिति व्याप्तेर्विवक्षितत्वात् ऋत्विक्पदानुषक्त ऋत्विक्त्वस्यैव पदार्थतावच्छेदकत्वात्। वेदानध्यापयामास महाभारतपञ्चमानित्यत्र व्यभिचाराच्च।

'बाह्यभेदाश्च' इतिदृष्टान्तार्थम्—यथा बाह्यभेदास्तथैत-द्पीत्यर्थः ॥ २७ ॥

न च रूपाद्युपलब्धिः करणजन्या इन्द्रियजन्या वा कार्यत्वात्प्रत्यक्षज्ञानत्वात् घटवत् रूपादिप्रत्यक्षवदन्यथा जन्यसुखादिज्ञानस्य प्रत्यक्षत्वं न स्यादिति वाच्यम् । शरीरप्राणसंयोगादिद्वारा शरीरादिकमादायार्थान्तरात् । करणव्यापाररूपसन्निकर्षस्य करणान्तराजन्यतया कार्यमात्रस्य करणजन्यत्वानियमेनाप्रयोजकत्वाच्च । द्वितीयानुमाने ईश्वरप्रत्यक्षे व्यभिचारात् । न च जन्यप्रत्यक्षज्ञानत्वादित्येव हेतुरिति वाच्यम् । सुखादिसाक्षात्कारस्य जन्यत्वासिद्धेः ।

तथा हि । सुखादिव्यवहारः स्वविषयज्ञानजन्यः अर्थज्ञानाधीनव्यवहारत्वात् संमतवदिति लाघवसहकृतादनुमानात् लाघवसहकृतसुखसाक्षात्कारानुगतबुद्धेश्च, घटज्ञानधारातदाश्रयविषयकात् घटादिगोचरज्ञानेन घटज्ञानधारातदाश्रययोरविषयतयाऽसम्भवात्तत्कालविशेषावच्छिन्नज्ञानधारातदाश्रयसाक्षिरूपानित्यानुभवं विनाऽनुपपद्यमानादेतावन्तं कालमिदमनुभवन्नेवासमित्यनुसन्धानाच्च, न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते इत्यादिश्रुतेश्च समवायवन्नित्यैकसाक्षात्कारसिद्धेः । सुप्तप्रलयादिव्यवहारे व्यभिचारवारणायाधीनान्तम् ।

नारायणाश्रमास्तु । सुखसाक्षात्कारव्यवहारे व्यभिचारवारणार्थं ज्ञानाधीनजडव्यवहारत्वादिति वक्तव्यमित्याहुः । न च वेदान्तमते सुखस्य ज्ञानाभिन्नत्वेन व्यवहारविषयसुखस्य स्वविषयकज्ञानाभावाज्जडभिन्नत्वाच्च बाधस्वरूपासिद्धिरिति वाच्यम् । ज्ञानपदेन व्यवहारविषयस्य यज्ज्ञानं स्वविषयविषयकं विषयस्वरूपं वेत्यन्यतरस्य विवक्षितत्वात् ।

न चैवं सुखसाक्षात्कारव्यवहारे व्यभिचाराभावात्तद्वारणाय नारायणाश्रमाणां जडपदोपादानं व्यर्थमिति वाच्यम् । तदुपादान-

स्य भ्रममूलकत्वेनेष्टापत्तेः । अन्यथा परैः सुखसाक्षात्कारानुव्यवसायाङ्गीकारेण तत्र व्यभिचाराभावात् स्वमतरीत्योपादाने चोक्तरीत्या स्वरूपासिद्धेः । न चानुव्यवसायेन घटज्ञानधारादिस्मृत्युपपत्तिरिति वाच्यम् । तत्तज्ज्ञानानन्तरमनुव्यवसायाङ्गीकारे विजातीयव्यवधानेन ध्यानादिरूपधारानुपपत्तेः । धारानन्तरमङ्गीकारे तु विनष्टानां ज्ञानानामनुभवासम्भवात् । सामान्यलक्षणाङ्गीकारेऽपि समयविशेषावच्छिन्नज्ञानमात्रस्यानुभवासम्भवात् ।

वस्तुतोऽनुव्यवसायोऽपि न सम्भवति । तथा हि । येन मनःसंयोगेन घटज्ञानमजनि तेनैव तद्ग्राहिभानान्तरं जन्यत उतान्येन? नाद्यः । असमवायिकारणभेदस्य क्रमस्य च ज्ञानभेदक्रमप्रयोजकस्याभावेन व्यवसायाऽनुव्यवसाययोर्यौगपद्यापत्तेः । न चेष्टापत्तिरपसिद्धान्तापत्तेः । अनुव्यवसायं प्रति कर्मकारकतया जनकस्य व्यवसायस्य पूर्ववृत्तित्वनियमाच्च । नचासमवायिकारणस्यैव प्रत्ययक्रमे सामर्थ्यं न तु तद्भेदस्य क्रमस्य चेति वाच्यम् । असमवायिकारणभेद एव ज्ञानभेदे हेतुरिति सिद्धान्तहान्यापत्तेः । इष्टापत्तौ तु अपेक्षणीयान्तराभावेन विलम्बासम्भवात् व्यवसायानुव्यवसाययोर्यौगपद्यानिवृत्त्यापत्तेः ।

न च चक्षुरादिजन्यबाह्यविषयकज्ञानक्रमे बाह्यसामग्र्यवच्छेदक्रमभेद एव, अनुव्यवसाये तु व्यवसायसहकृततज्जनकमनःसंयोग एव हेतुरित्युक्तेरपसिद्धान्तदोषसत्त्वेऽपि नोक्तयौगपद्यापत्तिरिति वाच्यम् । आद्ये युगपदेव संयुक्तेषु घटपटादिषु युगपदेवानेकज्ञानजन्मप्रसंगात्तत्र समूहालम्बनात्मकैकज्ञानाङ्गीकारेऽपि ज्ञानधारापत्त्या सुषुप्त्याद्यभावप्रसंगात् । अत एव न चरमोऽपि, अनुव्यवसायधारापत्त्या सुषुप्त्याद्यभावप्रसंगात् । न द्वितीयः । घटज्ञानोदयसमये मनसि क्रिया ततो विभागस्ततः पूर्वसंयोगनाशस्तत उत्तरसंयोगोत्पत्तिस्ततो ज्ञानान्तरमित्यनेकक्षणविलम्बेनोत्पद्यमानस्य ज्ञानस्यापरोक्ष-

तथा पूर्वज्ञानग्राहकत्वानुपपत्तेः ।

साक्षात्कारस्य नित्यत्वेऽनुभवविरोध इति वदन्पृष्ट आचष्टां किं जाग्रति घटसाक्षात्कारसमये घटसाक्षात्कारो नास्ति उत सुषुप्त्यादौ ज्ञानं नास्तीति ज्ञानसामान्याभावानुभवो वा ? आद्येऽपि किं घटसाक्षात्कारकालीन उत तदितरकालीनो वा ? नाद्यः । ज्ञानस्य यौगपद्याभावेन घटसाक्षात्कारोत्पत्त्यनन्तरमभावज्ञानहेतुधर्मिप्रतियोगिज्ञानोत्पत्तिस्तदनन्तरं तदुत्पत्तिसमये घटसाक्षात्कारस्यैव नाशात् । घटसाक्षात्कारात्प्राक् धर्मिप्रतियोगिस्मरणाङ्गीकारेऽपि येनोद्बोधकसहकृतेनात्ममनःसंयोगेन स्मरणमजनि तेनैव मनसो बाह्येन्द्रियसन्निकर्षोत्पादकप्रयत्नोत्पादे तज्जन्यविभागादिसमये एव स्मरणनाशात् ।

न द्वितीयः । 'नहिद्रष्टुर्दृष्टेर्विपरिलोपो विद्यत'इत्यादिश्रुत्या इदानीं साक्षात्कारो नास्तीति स्वरूपेणाभावाननुभवेन च साक्षात्कारस्य नित्यत्वे सिद्धे साक्षात्कारे पटादिविषयकत्वाभावविषयकत्वेनैवानुभवस्यान्यथासिद्धेः । सुषुप्त्यादौ ज्ञानं नास्तीत्यनुभवः किं सुषुप्तिकालीन उत तदितरकालीनो वा नाद्यः, धर्मिप्रतियोगिज्ञानसत्त्वासत्त्वाभ्यां तदसम्भवात् । न च सुषुप्तिप्राक्कालीनाविनश्यदवस्थापन्नधर्मिप्रतियोगिज्ञानं सम्भवतीति वाच्यम् । ग्राहकज्ञानकाले ग्राह्यस्यैवाभावात् ग्राह्याभावे ग्राहकस्याप्रमात्वापत्तेश्च । न च विषयस्य प्रत्यक्षे विषयतया कारणत्वं पूर्ववृत्तित्वमात्रेणैव न तु सहभावेन मानाभावात् । ज्ञानानां प्रामाण्यं चाव्यवहितपूर्वक्षणान्तर्भावेण स्थूलकालोपाधिमादाय विषयसत्त्वप्रयुक्तं न त्वधिकरणक्षणमादायेति वाच्यम् । क्रियाहितातिशयाश्रयत्वेनैव कर्मत्वानिर्वाहाय सहभावस्यैवावश्यकत्वात् ।

न द्वितीयः । सुषुप्तिकालीनात्मनस्तत्कालीनज्ञानसामान्याभावस्य वेदानीमसत्त्वेन प्रत्यक्षासम्भवात्, विमत आत्मा सुषुप्तिकालीन-

ज्ञानवान् तद्विषयस्मरणादित्यनुमानाच्च यो यद्विषयस्मरणवान्स तद्विषयज्ञानवानिति व्याप्तेः । न च हेत्वसिद्धिः । सुखमहमस्वाप्सं गाढमूढोऽहमासं न किंचिदवेदिषमिति स्मरणाभिलापस्य सर्वजनीनानुभवसिद्धत्वात् । नचाप्रयोजकत्वम् । आत्मा यदि सुषुप्तिकालीनज्ञानसामान्याभाववान्स्यात्तदा तद्विषयस्मरणवान्स्यादिति विपक्षबाधकतर्कसत्त्वात् ।

ननु सुखमहमस्वाप्समित्यादि न स्मरणं किंतु सुषुप्तिकालीन आत्मा दुःखाभाववान् समवायसम्बन्धावच्छिन्नप्रतियोगिताकज्ञानसामान्याभाववान् अस्मर्यमाणत्वान्नियमेनास्मर्यमाणत्वाद्वेत्यनुमानम् । न च ज्ञानसामान्याभावस्येदानीमनुमीयमानत्वेन तद्रूपसुषुप्तिकालीनेऽसिद्धे धर्मिण्यात्मनि कथमनुमानं, प्रतिपन्ने प्रातश्चत्वरादौ धर्मिणि सायं समये तत्र गजाभावानुमानं सम्भवति न त्वप्रतिपन्ने धर्मिणीति वाच्यम् । विमतावुदयास्तमयसमयौ परस्परोत्तरभाविनावुदयास्तमयसमयत्वात्सम्प्रतिपन्नोदयास्तमयसमयवदिति विवादयोरप्युदयास्तमययोरन्तरालकालमनुमाय विमतोऽन्तरालकाल आत्मसम्बन्धी कालत्वात्सम्प्रतिपन्नकालवदित्यनुमिते धर्मिण्यात्मनि ज्ञानाभावानुमानोपपत्तेरिति चेत् ?

न । अस्मर्यमाणस्य पथि गच्छतस्तृणस्पर्शादौ नियमेनास्मर्यमाणस्य च निर्विकल्पकानुभूतेनैकान्तिकत्वात् । न च ज्ञानसामग्रीवैकल्यलक्षणलिङ्गाज्ज्ञानाभावानुमानमिति वाच्यम् । अन्योन्याश्रयापत्तेः सामग्र्यभावाज्ज्ञानाभावानुमानं तदभावाच्च सामग्र्यभावानुमानमिति । सुखमस्वाप्सं न किञ्चिदवेदिषमिति स्मृतिमूलानुभवबोधक—तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहत्य पक्षौ संल्लयायैव ध्रियत एवमेवायं पुरुष एतस्मा अन्ताय धावति यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति । यद्वैतन्न पश्यति पश्यन्वै तन्न पश्यति न द्रष्टुर्दृष्टेर्विप-

रिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत् । यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तं सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः । एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम् । उद्दालिको ह्यारुणिः श्वेतकेतुं पुत्रमुवाच स्वप्नान्तं मे सोम्य विजानीहीति यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति यथा शकुनिः सूत्रे प्रबद्धो दिशं दिशं पतित्वाऽन्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयत एवमेव खलु सोम्य तन्मनो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयते प्राणबन्धनं हि सोम्य मनः—इत्यादिश्रुत्या कालात्ययापदिष्टत्वाच्च ।

तथा हि—तत्प्रस्तुतमहमेवेदं सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः। तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माभयं रूपमित्यादि वक्ष्यमाणं धर्माधर्ममूलकामरहितं तत्र दृष्टान्त उपादीयते यथेति अस्मिन्नाकाशे भौतिके श्येनो मन्दवेगः सुपर्णस्तु महावेगवानिति भेदः विपरिपत्य श्रान्तः नानापरिपतनलक्षणकर्मणा परिखिन्नः संहत्य पक्षौ सम्प्रसार्य सङ्गमय्य पक्षौ । सम्यक् लीयतेऽस्मिन्निति संलयो नीडस्तस्मै एव ध्रियते स्वात्मनैव धार्यते । एवमेव यथायं दृष्टान्तस्तथायं पुरुषः । अन्ताय स्वप्नजागरितयोरवसानायाज्ञातब्रह्मणे सता सोम्य तदा सम्पन्नो भवति एव मेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तः । तद्यथापि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः । इति श्रुत्यन्तरात् ।

दृष्टान्ते वृत्तित्वेनेच्छाविषयत्वं चतुर्थ्यर्थः स च धात्वर्थेऽन्वेति तथाच नीडवृत्तित्वप्रकारकेच्छाविषयनीडानुयोगिकप्रयतनप्रतिबन्ध-

कसंयोगानुकूलकृतिमान् श्येनादिरित्यर्थः । दार्ष्टान्तिके तु नारदाय रोचते कलहः स्वस्ति भवते इत्यादिवद्वृत्तित्वं चतुर्थ्यर्थः । तथाचाज्ञात ब्रह्मष्टात्तिमन उपाधिकलयानुकूलव्यापारवानित्यर्थः। तत्र तस्मिन्नज्ञाते ब्रह्मणि, वृत्तित्वं सप्तम्यर्थः । तच्चाभेदेन तथाच प्रलीनमनस्काज्ञातब्रह्माभिन्नविषयकज्ञानावस्थाविशेषरूपसुषुप्त्याश्रय इत्यर्थः ।

नचात्मयोग्यविशेषगुणसामान्याभावः सुषुप्तिः । पुरुषान्तरे प्रतियोगिसत्त्वेनासिद्धेः । तत्तत्पुरुषीयत्वनिवेशे स्वपिधातोरनन्तार्थतापत्तेः । नच नाडीविशेषावच्छेदेन मनःसंयोगस्तस्यातीन्द्रियत्वेनाबालाङ्गनमस्वाप्समिति स्मृतिहेतुप्रत्यक्षायोग्यत्वात् । 'एवमेव खलु सोम्य तन्मनो दिशं दिशं पतित्वाऽन्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयते प्राणबन्धनं हि सोम्य मन' इत्यादिप्राणरूपे ऽज्ञातब्रह्मणि मनोलयश्रुतिविरोधाच्च । प्राणः बन्धनमधिष्ठानतया यस्य मनसो मनउपाधिकस्य जीवस्येत्यर्थः ।

नच प्रलीनमनस्केति विशेषणेनैव स्वप्नजागरितयोर्व्यावृत्तौ न कञ्चनेत्यादिविशेषणं व्यर्थमिति वाच्यम्। छान्दोग्यश्रुतिसिद्धसुषुप्तिसमानार्थक 'न कञ्चन कामं कामयते नकञ्चन स्वप्नं पश्यति तत्सुषुप्त' मितिमाण्डूकश्रुतिसमानार्थतालाभायात्र श्रुतौ तथोपादानात् । नचैकस्यैव विशेषणस्य व्यवच्छेदकत्वसम्भवादलं विशेषणाभ्यामिति वाच्यम् । विकल्पेन व्यवच्छेदकत्वात् । तदुक्तं माण्डूकव्याख्याने भगवत्पादैः । नहि सुषुप्ते पूर्वयोरिवान्यथाग्रहणलक्षणं स्वप्नदर्शनं कामो वा कश्चन विद्यत इति ।

गौडपादाचार्य्यास्तु । प्राप्तविषयोपभोगकाले कस्यापि काम स्याभावात्तत्कालव्यावृत्त्यर्थं न कञ्चन स्वप्नमिति। न कञ्चन स्वप्नमित्येवोक्ते कामकालेऽपि विषयान्यथाभावग्रहणलक्षणस्वप्नदर्शनाभावात्तद्व्यावृत्त्यर्थं न कञ्चन कामं कामयत इत्युक्तमित्याहुः । सुषुप्तस्थाने ऽज्ञातब्रह्मणि एकीभूतस्तदेवाह प्रज्ञानघन एवेति जाग्रदा-

दिप्रज्ञा सविषया एकीभूना मन्यात्ररूपप्रज्ञात्मिकेयम् । अतएव वि-शेषविज्ञानायासाभावादानन्दमय आनन्दप्रायः नानन्द एव दुःख-बीजस्य विद्यमानत्वात् । आनन्दभुक् स्वरूपानन्दोऽनुभूयतेऽनेन स आनन्दभुक् । एषोऽस्य परमानन्द इति श्रुत्यन्तरात् ।

सन्मात्ररूपेण सर्वस्यापि विद्यमानत्वात्तदात्मना सर्वं जानातीत्याह-प्राज्ञ इति । अतएव एष सर्वेश्वर इत्याद्यपि सङ्गच्छते । ननु विज्ञानस्वभाव एवात्मा चेत्कथं सता सम्पन्नोऽपि तदा बाह्यं न पश्येदित्यत आह । यत् यत्र सुप्ते वै इति निश्चये तच्चैतन्यं न पश्यति पश्य चैतत् तत्र सुषुप्ते पश्यन्नेव न पश्यति । तथाच यत्तत्र सुषुप्ते न पश्यतीति जानीषे तन्न तथा गृह्णीयाः कस्मात्पश्यन्नेव भवति तत्रेत्यर्थः । नच करणानां व्यापृतत्वाभावात्कथमेवं न विजानीयाम् । दृष्टेर्द्रष्टुः दृष्टिरूपद्रष्टुर्विपरिलोपाभावात्तथाचापरिलुप्तदृष्ट्यास्वयं ज्योतिःस्वभावतया सुषुप्ते पश्यन्नेव भवति ।

कथं तर्हि न पश्यतीति चेदुच्यते ननु तदस्ति किन्तद्वितीयं साभासमन्तःकरणं प्रमातृ ततोऽन्यच्चक्षुरादि प्रमाणं विभक्तं रूपादि प्रमेयं तत्सर्वं जाग्रत्स्वप्नयोरविद्याप्रतिपन्नं सुषुप्तिकाले नास्ति पृथगिति शेषः । यत्पश्येत् । नचैवं निर्विषयमेव ज्ञानं स्यात् । तथाच पश्यन्नित्यनुपपन्नमिति वाच्यम् । सन्मात्ररूपेण स्वप्नदर्शनविरोध्यज्ञानावस्थाभासकत्वेन कर्तृप्रत्ययोपपत्तेः ।

नन्वेवं द्वितीयप्रतियोगिलाभाय तत इतिपदस्य सार्थकत्वेऽपि द्वितीयमितिपदेनैव प्रमाणप्रमेययोर्लाभसम्भवादन्यदित्यादि व्यर्थं द्वितीयमित्यस्यैव मुख्यप्रधानत्वावगमविरोधश्चेति चेन्न । 'यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येदित्यादिश्रुत्या ततोऽन्यदित्यस्यैव मुख्यप्रधानत्वावगमात् । यत्र हि द्वैतमिव भवति तदितर इतरं जिघ्रति तदितर इतरं पश्यतीत्यादिश्रुत्यविरोधाय तादृशनियमे तात्पर्याभावाच्च । सत्कार्यवादे सूक्ष्मोपाधेः सत्त्वाद्वितीयाभावो न स-

म्भवस्ततो विभक्तमिति । विभक्तमसम्बद्धमित्यर्थः । नचविभागवतः स्वत एवान्यत्वाद्द्वितीयत्वाच्च द्वितीयमित्यादि विशेषणं व्यर्थमिति वाच्यम् । विभक्तस्य रूपादेः सत्त्वेऽप्यन्धबधिरादीनां विक्षिप्तचित्तानां च दर्शनाभावेन केवलस्य विभक्तस्य दर्शनप्रयोजकत्वाभावात् । नच प्रमात्राद्यभावाङ्गीकारे अज्ञानावस्थावभासकत्वोक्तिर्विरुध्येतेति वाच्यम् । अज्ञानस्याप्रमाणकत्वेन साक्षिमात्रवेद्यत्वात् ।

ननु बन्धस्य मिथ्यात्वान्मिथ्याभूतमेव किञ्चिदुपादानमेष्टव्यं तच्चाज्ञानमेव । नच घटादेर्मृत्वान्मृदेवोपादानं नत्वन्यत्तत्र मानाभावादिति वाच्यम् । शुक्त्यज्ञाने रजतभ्रमादि तदितरथा नेत्यन्वयव्यतिरेकाभ्यां रजताध्यासस्य मिथ्याभूताज्ञानोपादानत्वसिद्धौ विमतमज्ञानोपादानकमध्यासत्वात् शुक्तिरजताध्यासवदित्यनुमानस्य मानत्वात् । नचाधिष्ठानविशेषांशाग्रहग्रहावेव शुक्त्यज्ञानतद्भावौ ततश्च तद्विषयत्वेनान्वयव्यतिरेकावन्यथासिद्धाविति दृष्टान्ते साध्यवैकल्यमिति वाच्यम् विकल्पासहत्वात् ।

तथाहि अध्यासान्वयव्यतिरेकयोरधिष्ठानविशेषांशस्याग्रहविषयत्वं किं विशेषांशग्रहस्याध्यासं प्रति प्रतिबन्धकतया निवर्त्तकतया वा नाद्यः । प्रतिबन्धकाभावस्यान्वयव्यतिरेकविषयत्वसम्भवेऽप्यधिष्ठानविशेषग्रहस्याप्रतिबन्धकत्वात् । तदेव हि प्रतिबन्धकं सत्यपि सकलकारणसमवधाने यत्सत्त्वे न कार्योत्पादः । नच तथात्वं विशेषांशग्रहस्याध्यासकारणे दोषे सति तस्यैवासम्भवात् निर्दोषेन्द्रियार्थसन्निकर्षरूपकारणाभावात् ।

न द्वितीयः कार्यस्य स्वोत्पत्तावपेक्षितत्वेन कारणमात्रानुविधायित्वं निवर्त्तकाभावस्य तु स्वोत्पत्त्यनन्तरं स्वरूपसंरक्षणार्थमपेक्षितत्वेनान्वयव्यतिरेकाविषयत्वात् ।

अस्तु तर्हि दोषविषयत्वेनान्वयव्यतिरेकयोरन्यथासिद्धिस्तत्र

विषयदोषः सादृश्यादिः, इन्द्रियदोषः काचादिः प्रमातृदोषो रागादिः इति चेन्न । सर्वस्य भावकार्यस्य सोपादानत्वनियमात् । अध्यासस्य च भावकार्यत्वादपेक्षितोपादानान्वयव्यतिरेकयोर्दोषादिनिमित्तकारणविषयत्वेनान्यथासिद्ध्यसम्भवात् दोषस्य च तदुपादानत्वे मृदादेश्च तत्त्वेन घटादेरिव दोषाश्रितत्वेनाध्यासोपलम्भापत्तेः अननुगमाच्च ।

तर्हि क्लृप्तमेवात्मान्तःकरणं वाध्यासोपादानत्वेनान्वयव्यतिरेकविषयोऽस्तु नत्वक्लृप्तमज्ञानं कारणमिति चेन्न । क्लृप्तत्वेऽपि तयोः सत्यत्वेन मिथ्याभूताध्यासोपादानत्वासम्भवात् आत्मनो निरवयवत्वेन मिथ्यारजतप्रतिभासाकारेण परिणामासम्भवात् केवलस्य बहिरस्वातन्त्र्यतया विषयसंप्रयोगसापेक्षस्यैवान्तःकरणस्यानिर्वचनीयरजतप्रतिभासरूपपरिणामौचित्यात् । रजतादेश्च प्रतिभासात्पूर्वमसत्त्वात्तदिन्द्रियसम्प्रयोगासम्भवे तत्तज्ज्ञानरूपान्तःकरणपरिणामासम्भवादधिष्ठानसम्प्रयोगस्य चाध्यासहेत्वधिष्ठानसामान्यज्ञानोपक्षीणत्वात् । अधिष्ठानेन्द्रियसम्प्रयोगादधिष्ठानाकारवृत्तिरूपैकपरिणामवति तदैव रजतप्रतिभासरूपपरिणामान्तरासम्भवाच्च ।

किञ्चान्तःकरणस्य भ्रान्त्युपादानत्वे तदाधारत्वं वक्तव्यं तच्च किं केवलस्योत चित्यध्यस्तस्य नाद्यः । ज्ञातृत्वप्रसङ्गाज्जडस्य च तदसम्भवात् । अज्ञानभ्रमसम्यग्ज्ञानानामेकाश्रयत्वनियमेनाज्ञानसम्यग्ज्ञानयोरप्यन्तःकरणाश्रयत्वापत्त्या आत्मनो नित्यमुक्तत्वप्रसङ्गाच्च ।

नद्वितीयः । तथासति चित्तादात्म्यापन्नत्वेन ज्ञातृत्वाविरोधेऽपि अज्ञानस्याध्यासोपादानस्य त्वयाऽनभ्युपगमात् । अन्तःकरणस्य च स्वोपादानत्वासम्भवाच्चित्यन्तःकरणाध्यासस्यैवानुपपत्तेः । नच भ्रान्तेरज्ञानोपादानत्वे आत्माश्रयतया स्फुरणं न स्या-

दिति वाच्यम् । अज्ञानस्यात्मन्यध्यस्ततया तत्परिणाममस्यात्मनिष्ठतया स्फुरणसम्भवात् । नच तथासत्यर्थाध्यासस्यैवेदं रूप्यमिति बहिष्ठत्वेनोपालम्भो न स्यादितिशङ्क्यं । ज्ञानोपादानत्वेऽपि शुक्तीदमंशस्याज्ञानाधिष्ठानसंभवात् । न च तथासति अर्थाध्यासस्यैवेदं रूप्यमिति बहिष्ठत्वेनोपालम्भो न चैतन्यावच्छेदकत्वेन तन्निष्ठतयोपलम्भसम्भवादिति ।

तस्मादध्यासोपादानं मिथ्याभूतमज्ञानमिति सिद्धम् । तच भावरूपमभावस्योपादानत्वानुपपत्तेः । तत्र प्रमाणानि प्रत्यक्षानुमानार्थापत्त्यागमाः । तत्र प्रत्यक्षं तावदहमज्ञो मामन्यं च न जानामीति सामान्यतो विशेषतश्च विषयव्यावृत्ताज्ञानाश्रयत्वेनात्मनि प्रतीतिद्वयं साक्षिचैतन्यं केवलमज्ञानं नावभासयतीत्युत्तरतत्त्वदीपनानुरोधेनाज्ञ इति प्रतीतावनुल्लिख्यमानत्वेऽप्यज्ञानव्यावर्त्तकतयाभासस्याभ्युपगन्तव्यत्वात् ।

तत्र विचार्यते । कथमनया प्रतीत्या भावरूपाज्ञानसिद्धिः । ज्ञानाभावविषयत्वेनान्यथासिद्धेः । नच धर्मिप्रतियोगिज्ञानसत्त्वाभ्यां ज्ञानाभावविषयत्वासम्भव इति वाच्यम् । ज्ञानाभावविषयत्वाभावो हि किं सामान्याभावविषयत्वासम्भवो विशेषाभावविषयत्वासम्भवो वा नाद्यः । अन्यत्र चाक्षुषज्ञाने आलोकापेक्षायामपि तमोविषयकचाक्षुषज्ञाने विषयविरोधेनालोकानपेक्षणवदभावान्तरज्ञाने धर्मिप्रतियोगिज्ञानापेक्षायामपि ज्ञानस्यान्याभावज्ञाने तदनपेक्षणात् । अतएव प्रतियोगिबहिर्भावेणैव प्रतियोग्युपलम्भकसमवधानस्य योग्यतारूपत्वमभिमतं न्यायविदाम् ।

नच ज्ञानसामान्याभावज्ञानमेव न सम्भवति ज्ञानकाले ग्राह्यस्यैवाभावात् । ग्राह्यकाले च ज्ञानस्यैवासम्भवात् । परस्पराभावरूपतया विरोधाद्विषयासत्त्वकाले सम्भवाद्वा ज्ञानं भ्रम एव भवेत् । नच तद्भ्रमत्वेन व्यवह्रियत इति शङ्क्यं विषयस्य हि प्रत्यक्षे विषय-

तया कारणत्वं तच्च पूर्ववर्तित्वमात्रेण निर्वहति नतु तदर्थं सहभावो मृग्यते तथाच ज्ञानानां प्रामाण्यमव्यवहितपूर्वक्षणान्तर्भावेण स्थूलकालोपाधिमादाय व्यवसाये प्रामाण्यमभिमतं न्यायविदाम् ।

न द्वितीयः । प्रमाणज्ञानाभावविषयत्वसम्भवात् । प्रमाणज्ञानं गोचरयतः प्रतियोगिज्ञानस्य सविषयकप्रमाणगोचरतयार्थज्ञानत्वेऽपि तस्य साक्षिज्ञानरूपतया तत्सत्त्वेऽपि प्रमाणज्ञानाभावसम्भवात् । अज्ञानप्रमाणज्ञानयोर्विरोधपरिहाराय सिद्धान्तिना तथार्थस्यावश्यकाभ्युपेयत्वाच्च ।

नच प्रमाणज्ञानाभावविषयत्वेऽहं प्रज्ञो न प्रमापयामीति प्रतीत्याकारापत्तिः । अभावङ्गोचरयन्त्याः प्रतीतेः प्रतियोगिनि प्रतियोगितावच्छेदकप्रकारकत्वनियमादिति वाच्यम् । नेदं रजतमिति प्रतीतेर्लौकिकपारमार्थिकरजतप्रतियोगिकाभावविषयत्वस्य सिद्धान्तिनाङ्गीकारेऽपि प्रतियोगिनि पारमार्थिकरजतत्वरूपप्रतियोगितावच्छेदकविषयत्वानभ्युपगमात् ।

अत्र ब्रूमः । यत्तावदुक्तं सामान्याभावपक्षे ग्राह्यविरोधेन धर्मिप्रतियोगिज्ञानमनपेक्षमेवेति तन्मदम् । अभावप्रत्यक्षस्य प्रतियोग्यंशेऽलौकिकत्वेनोपनायकतया प्रतियोगिज्ञानस्यावश्यापेक्षणात् । नहि प्रतियोगित्वाभावत्वयोरिव प्रतियोगिनोऽपि तुल्यवित्तिवेद्यत्वं येनोपनायकाभावेऽप्यभावप्रत्यक्षे प्रतियोगी भासेत । किञ्च क्रियाहितातिशयाश्रयत्वेनैव कर्मत्वात्कथं ज्ञानोत्पत्तिकाले एव निवृत्तस्वरूपस्य ज्ञानसामान्याभावस्य क्रियाहितातिशयाश्रयत्वसम्भावनापि । अत एवोभयतः पाशरूपानुपपत्तिरशनया निबद्धं ज्ञानसामान्याभावप्रत्यक्षम् ।

यदपि प्रमाणज्ञानाभावविषय एवायमनुभवः । नच प्रतियोगिनि प्रमाणत्वभानापत्तिः । नेदं रजतमित्यत्र व्यभिचारादिति ।

तदपि न । तथाहि यत्र प्रतियोगिभानसामग्री प्रतियोगिता-

वच्छेदकभानसामग्रीनियते प्रतियोगिज्ञानं प्रतियोगितावच्छेदकमादायैवेदिति तत्र प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानजन्यतयाऽभावज्ञानं प्रतियोगिनि प्रतियोगितावच्छेदकप्रकारकमेव भवति उपनीतभानस्योपनायकसमानप्रकारकत्वनियमात् ।

यत्र तु प्रतियोगिभानसामग्री न तथेति प्रतियोगिज्ञानं प्रतियोगितावच्छेदकप्रकारकमिति वस्तुस्थितिः । त्वदुक्तमर्थं न जानामीत्यर्थेन सहानुभूयमानत्वात्प्रतियोगिज्ञानकालीनत्वाच्चाप्यज्ञानं न ज्ञानसामान्याभावः । नचार्थज्ञानकालेऽप्यर्थगतसंख्यादिज्ञानाभावमादाय प्रतीत्युपपत्तिरिति युक्तं । अन्यत्र तत्सम्भवेऽपि संख्यायां संख्यान्तराभावेन संख्यां न जानामीत्यत्र संख्याज्ञानाभावविषयत्वासम्भवात् । नाप्युक्तार्थज्ञानस्य वाक्यजज्ञानविषयत्वेऽप्यपरोक्षज्ञानाभावविषयेयमिति वाच्यम् । त्वदुक्तमर्थं न जानामीति प्रतीतेरप्यर्थविषयाया अपरोक्षायाः सत्त्वेऽपरोक्षज्ञानाभावासम्भवेन भ्रमत्वापत्तेः । नित्यपरोक्षेऽपूर्वादावपरोक्षज्ञानस्यैवासम्भवाच्च । सामान्यतो ज्ञानेऽपि सम्भवाद्विशेषज्ञानाभावविषयिणीयं प्रतीतिः सच संख्यावति तद्वत्तया ज्ञायमानसंख्याज्ञानाभावरूपः संख्यादौ च परोक्षापरोक्षज्ञानयोग्ये परोक्षतयाऽपरोक्षतया वा ज्ञाने तदन्यतरज्ञानाभावरूपपरोक्षैकस्वभावे धर्मादौ च शास्त्रार्थत्वेन ज्ञानेऽपि हिताहितप्राप्तिसाधनत्वज्ञानाभावरूप इति न कदाचिदनुपपत्तिरिति चेत् ।

न, सङ्ख्यादिरूपविशेषज्ञानाभावविषयत्वासम्भवात् विशेषविषयकज्ञानसत्त्वे तस्यैव विशेषज्ञानत्वेन तदभावरूपग्राह्यस्यैवाभावात् तदसत्त्वे तु प्रतियोगिज्ञानरूपकारणाभावात् । नच ज्ञानतदभावयोरिव तज्ज्ञानतदज्ञानयोरपि विरोधः । इतरथा सत्यपि चाक्षुषादिकुम्भानुभवे तदज्ञानानुवृत्तिप्रसङ्गात् । तथाचोक्तप्रतीतेर्ज्ञानाभावविषयत्ववदज्ञानविषयत्वमप्यनुपपन्नमिति वाच्यम् । न जानामी-

त्यज्ञानस्य विरोधिज्ञानसत्त्वे तन्निवर्त्यत्वेनाज्ञानासम्भवश्च । ज्ञानाभावे न जानामीत्यनापत्तेरज्ञानस्यापि ज्ञानविषयत्वात् । नच साक्षिज्ञानस्याज्ञानसाधकत्वं वृत्तिज्ञानस्य च तन्निवर्त्तकत्वमिति न विरोध इति वाच्यम् । अज्ञानस्य सविषयकत्वस्य सत्त्वान्निर्विषयाज्ञानासिद्धेः । तत्तद्विषयविशिष्टाज्ञानस्य तत्तद्विषयविशिष्टज्ञाननिवर्त्यत्वादतो निवर्त्तकज्ञानसत्त्वे नाज्ञानं तदभावे तत्साधकाभावान्नाज्ञानसिद्धिः ।

नच तज्ज्ञानातिरिक्तसाक्षिज्ञानमस्ति अनभ्युपगमादिति चेन्न । अज्ञानस्य सविषयकत्वानुभवेऽपि विषयोपादानतया तस्य विषयात्प्राक्सिद्धेः । सुषुप्तौ विषयाभावेऽपि नाज्ञासिषमित्युत्थितस्य परामर्शदर्शनाच्च निर्विषयाज्ञानसिद्धेः । नच विषयात्प्राक् ब्रह्मविषयकं सम्भवतीति वाच्यम् । विषयात्प्राक् तद्विषयकत्वे मानाभावेन विषयाध्यासोत्तरं विषयविशिष्टाज्ञानभानात्तत्साधकचैतन्यसिद्धेः । अन्यथा घटमहं न जानामीत्यनुभवाभावप्रसङ्गात । नह्यज्ञाननाशविशिष्टघटभानं मानात्सिध्यति मानस्याज्ञातता निवर्त्तकत्वात् ।

यथार्थानुभवो मानमिति वदद्भिस्तार्किकैरप्यनुभवपदेन ज्ञाततापिकार्या (?) स्मृतेर्व्यावर्त्तितत्वात् । तथाचाज्ञातताज्ञापनं प्रमाणमिति प्रमाणलक्षणात् । घटनिष्ठाज्ञातता न प्रमाणेन विषयीकर्त्तुं शक्यतेऽज्ञानं साक्षिभास्यं प्रमाणनिवर्त्यं चेति । नहि घटनिष्ठाज्ञातता प्रत्यक्षेण विषयीक्रियते चाक्षुषादिज्ञानोत्तरं तस्या अनुवृत्तिप्रसङ्गात् । नापीदानीं ज्ञातत्वेन प्रागज्ञातत्वसिद्धिः । धारावाहिके व्यभिचारात् । नापीदानीमेव ज्ञातत्वेन तत्सिद्धिः प्रागज्ञातत्वेनेदानीमेव ज्ञातत्वसिद्धिस्तत्सिद्धौ च तत्सिद्धिरितीतरेतराश्रयात् । अतो न प्रमाणादज्ञाततासिद्धिस्तदसिद्धावपि घटं न जानामीत्यज्ञानविशिष्टघटज्ञानदर्शनात्तद्भासकत्वेन साक्षिसिद्धिः । अज्ञान-

स्य वृत्तिविरोधित्वेऽपि साक्षिचैतन्याविरोधित्वादन्यथा तद्भास्यत्वानुपपत्तेः इति ।

अत्र केचित् । तत्राप्युक्तप्रतीतौ भासमानमज्ञानं न ज्ञानाभावः । अर्थविषयकतयानुभूयमानत्वाज्ज्ञानवदित्यभिप्रेतं किंवा उक्तरूपमज्ञानं नार्थज्ञानाभावः । अर्थज्ञानकाले प्रमीयमाणत्वादर्थवत् । नचाप्रयोजकत्वमर्थज्ञानकाले प्रतियोगिनि स्थिते तदभावासम्भवेन तत्प्रमाणसम्भवादिति ।

नाद्यः । मुख्यार्थविषयत्वविवक्षायामसिद्धेः । अज्ञाने मुख्यायाः जडसङ्ख्यादिरूपार्थविषयतायाः सिद्धान्तिनानभ्युपगमात् । अर्थविषयत्वमात्रविवक्षायां तु ज्ञानाभाव एव व्यभिचारात् । अर्थविषयकज्ञानपर्युदासेनाभिधीयमानतया वार्थेन सहैकस्मिन्नधिष्ठानेऽध्यस्ततया वाऽज्ञाने औपचारिकार्थविषयतावदर्थविषयकज्ञाननिषेधेनाभिधीयमानतया ज्ञानाभावेऽपि तत्संभवात् ।

न द्वितीयः । अप्रयोजकत्वादेव साक्षिप्रतिभासरूपार्थज्ञानकालेऽपि प्रमाणरूपार्थज्ञानाभावात्मकतया ज्ञानाभावरूपत्वेऽपि प्रमीयमाणत्वोपपत्तेरिति ।

तन्न । द्वितीयानुमानपरत्वाभ्युपगमात् । उक्तरीत्या प्रमाणज्ञानाभावविषयत्वासम्भवेनान्यथासिद्ध्यभावात् । प्रमाणज्ञानाभावविषयत्वे प्रतियोगिनि प्रतियोगितावच्छेदकं प्रामाण्यं भासेतैव प्रामाण्यस्य स्वतस्त्वेन ज्ञानभानसामग्रीनियतसामग्रीकतया प्रतियोग्यनुपनायकस्य प्रतियोगिज्ञानस्य प्रामाण्यप्रकारकत्वावश्यंभावात् । अनुमानमपि विवादगोचरापन्नं स्वप्रमाणज्ञानं प्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकं । अप्रकाशितार्थप्रकाशकत्वात् । अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति । स्वप्रागभावव्यतिरिक्तेतिपदमहिम्ना भावरूपं, स्वविषयावरणेतिपदमहिम्ना समानविषयं विषयानुभवसंशब्दितस्य प्रमाणज्ञानस्य चिन्मात्रस्या-

न्तःकरणवृत्त्युपधानेन तद्धर्मत्वाभ्युपगमात् न जन्यत्वानुपपत्तिः। स्वदेशगतपदमहिम्ना च समानाश्रयं पक्षधर्मतावलादज्ञानं सिद्ध्यति।

अत्र यथोक्तविशेषणविशिष्टस्वानिवर्त्त्यवस्त्वन्तरस्याज्ञानातिरिक्तस्यासम्भवेन तन्निवर्त्तकप्रमाणज्ञानमेव भवतीति साध्यविशेषोपादानमहिम्ना तस्यैव साध्यविवादलाभेन विवादगोचरेति पदासिद्धस्य धर्मिविशेषस्य स्पष्टीकरणार्थं प्रमाणज्ञानमित्युक्तम्। धारावाहिकज्ञाने भागबाधासिद्धिवारणाय विवादगोचरापन्नमिति पदं तद्भिन्नज्ञानपरं साध्ये स्वप्रागभावव्यतिरिक्तेतिपदत्यागे प्रागभावमादायार्थान्तरता, अस्ति हि तस्य स्वविषयावरणत्वं स्वप्रयोज्यव्यवहाराभावप्रयोजकत्वरूपं स्वविषयावरणशब्दार्थत्वात्स्वनिवर्त्त्यत्वं स्पष्टं प्रमातृगतत्वेन प्रमाणसमानदेशत्वमपि तथा वस्त्वन्तरमपि अत्र वस्तुशब्दस्य मिथ्याज्ञानपरतया तद्भिन्नत्वस्य वस्त्वन्तरशब्दार्थत्वात्।

तथा स्वविषयावरणपदत्यागे स्वनिवर्त्त्यपूर्वज्ञानमादायार्थान्तरता तस्य स्वप्रागभावव्यतिरिक्तत्वे सति स्वनिवर्त्त्यत्वे च प्रमाणगतत्वेन स्वदेशगतत्वे च सति मिथ्याज्ञानभिन्नत्वात् स्वविषयावरणपदोपादाने तु न तमादायार्थान्तरता पूर्वज्ञानस्योत्तरज्ञानप्रयोज्यव्यवहाराभावं प्रत्यप्रयोजकत्वात् तथा स्वनिवर्त्त्यपदत्यागेऽदृष्टमादायार्थान्तरता तस्य कार्यमात्रप्रयोजकतया प्रमाणप्रयोज्यव्यवहाराभावं प्रत्यपि प्रयोजकत्वेन स्वविषयावरणत्वात् इतरत्तु स्पष्टम्। तथास्वदेशगतपदं विषयगताज्ञाततामादायार्थान्तरव्युदासार्थम्। वस्त्वन्तरपदं तु मिथ्याज्ञानमादाय तद्व्युदासाय मिथ्याज्ञानस्य प्रमाणप्रयोज्यव्यवहारविपरीतव्यवहारप्रयोजकतया प्रमाणप्रयोज्यव्यवहाराभावप्रयोजकत्वात् हेतौ च धारावाहिकज्ञाने व्यभिचारव्यावृत्त्यर्थमप्रकाशितेति दृष्टान्ते मध्यवर्त्तिप्रदीपप्रभाया साध्यसाधनवैकल्यप्रहाणार्थं प्रथमविशेषणं सवितृकिरणव्याप्तदेशस्थप्रदीपव्यावृत्त्यर्थमन्धकार इति।

नन्विह किमनात्मज्ञानं पक्ष उतात्मज्ञानं नाद्यः। अनात्माव-रकस्याज्ञानस्याङ्गीकारेण तत्साधने बाधात् । न द्वितीयः । अना-त्मज्ञाने व्यभिचारात् । अप्रकाशितार्थप्रकाशकत्वं च किमप्रकाशि-तार्थप्रकाशकर्तृत्वं उत तत्करणत्वं । नोभौ असिद्धिसाधनवैकल्य-दोषप्रसङ्गात् । अथ प्रकाशस्यातद्रूपतया प्रमाणज्ञानस्य तत्कर्तृत्व-तत्करणत्वयोरसम्भवात् प्रदीपप्रकाशस्थलेऽर्थप्रकाशस्य प्रमातृ-कत्वेन स्वं प्रति स्वस्य कर्तृकरणत्वयोरसम्भवात् तस्माद्यत्किञ्चि-देतदिति चेत् ।

मैवं, धारावाहिकाभिन्नस्यानात्मज्ञानस्य पक्षत्वात् । नच बाधा-पत्तिः। घटाद्यवच्छिन्नं चैतन्यं प्रत्यक्षादिविषयत्वेनापैयते तत्त्वज्ञाना-वृतमिति बाधासम्भवात् । नच हेतोर्दुर्निरूपत्वं प्रकाशशब्देन त-ज्जन्यो व्यवहारो लक्ष्यते ततश्चाप्रकाशितार्थव्यवहारहेतुत्वादिति हेतुनिरूपणात् तस्य प्रमाणज्ञानप्रमयोरनुगतत्वेन नासिद्धिसाध-नवैकल्यम् ।

अत्र केचिदाहुः । यथाश्रुतमिदमनुमानमनुपपन्नं विवादगो-चरापन्नमिति पक्षविशेषणस्य व्यर्थत्वात् । नच धारावाहिकज्ञाने बाधवारणार्थं तत् । तस्याप्युत्तरकालावच्छिन्नाज्ञातार्थज्ञापकत्वेनो-क्तसाध्यसत्त्वात् किञ्च साध्ये प्रागभावव्यतिरिक्तपदमपि व्यर्थं प्रतियोगिनः प्रागभावनिवृत्तिरूपत्वेन ज्ञानप्रागभावस्य ज्ञाननिव-र्त्यत्वासम्भवात् । अन्ततः स्वनिवर्त्यपूर्वकमित्येवास्तु तत इतर-त्सर्वं व्यर्थं । किञ्च हेतौ किं प्रकाशवत्त्वं नाम प्रकाशकर्तृत्वं वा व्यवहारहेतुत्वं वा तमोनिवर्तकत्वं वा नाद्यः । हेत्वसिद्धेः । ज्ञानस्यैव प्रकाशरूपत्वेन स्वस्य स्वम्प्रति कर्तृत्वासम्भवात् । न द्वितीयः । उपेक्षणीयार्थज्ञानस्य व्यवहाराहेतुत्वेन भागासिद्धेः । नापि तृतीयः । अप्रकाशितार्थेति विशेषणवैयर्थ्यात् ।

तस्मादज्ञानसाधकमनुमानद्वयं बोध्यं । प्रमाणज्ञानं स्वविषया-

वरणस्वनिवर्त्यपूर्वकं तमोविरोधित्वात् । प्रथमोत्पन्नप्रदीपप्रभावत् इत्येकम् । तथा प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वदेशगतवस्त्वंतरपूर्वकमप्रकाशितार्थप्रकाशकत्वादन्धकारे प्रथमोत्पन्नप्रभावदित्यपरमिति ।

तच्चिन्त्यम् । यन्मते प्रतियोगिनः प्रागभावनिवर्त्तकत्वं न तु निवृत्तिरूपत्वं तथा ज्ञानमेव गगनकुसुमायमानमतो ज्ञानमेव ज्ञाननिवर्त्यं नान्यदिति कथापि न यत्कर्णपथमवतीर्णा तम्प्रत्येनदनुमानप्रयोगेण पदवैयर्थ्यशङ्कया अप्यभावात् । परमतेन परो बोधनीय इति ब्रह्मवादिनां समयबन्धेन यं प्रतिवादीकृत्य भावरूपाज्ञानसाधनं तन्मतमर्यादयैवानाभासीभूतहेतुप्रयोगेण व्यवहर्त्तुमुचितत्वादन्यथा स्वीकृतनियमभङ्गे निग्रहापत्तेः ।

न च तथापि विवादगोचरापन्नमिति पक्षविशेषणं व्यर्थमेव धारावाहिकज्ञानानामुत्तरकालावच्छिन्नत्वेनाज्ञातज्ञापकतयोक्तसाध्यसत्त्वेन बाधकाभावादिति । सूक्ष्मकालस्य प्रत्यक्षागोचरत्वात् । वस्तुमात्रस्य पूर्वमेव ज्ञातत्वात् । न चोपेक्षाज्ञाने भागासिद्धिः । तत्र प्रवृत्तिनिवृत्तिरूपव्यवहाराभावेऽप्यभिज्ञाभिवदनव्यवहारसम्भवादतो यथाश्रुतमेव वरमिति ।

यत्तु स्वयमेवमुत्प्रेक्षितं तमोविरोधित्वादिति तदपेशलं विकल्पासहत्वात् । तथाहि । तत्किमन्धकारविरोधित्वं वा अज्ञानविरोधित्वं वा ज्ञानविरोधित्वं वा नाद्यः स्वरूपासिद्धेः । न द्वितीयः । अज्ञानस्य प्रसिद्धतया तद्घटितहेतोरप्यप्रसिद्धेः । नेतरः तथा सत्यनुगतरूपक्रोडीकारेण पक्षसपक्षयोर्हेतुसाधारण्येऽप्युभयवादिसिद्धप्रागभावरूपज्ञानविरोधित्वमादायैव हेतोः पक्षधर्मतापर्यवसानं सा च स्वनिवर्त्यप्रागभावनिवर्त्तकत्वमात्रेणैवान्यथासिद्धेति यथोक्तसाध्यं प्रत्युक्तहेतोरप्रयोजकत्वात्तस्माद्यत्किञ्चिदेतत् ।

अर्थापत्तिस्तु । मिथ्याध्यासो मिथ्याभूतोपादानमन्तरेणा-

नुपपद्यमानस्तत्कल्पयति तस्य च मिथ्याभूतस्य सादित्वे उपादानपरम्पराकल्पनागौरवादनादित्वं यच्चानादिभावरूपं ज्ञानापोद्यं तदज्ञानमिति आगमः । नेदं रजतमित्यादिना यदि प्रातिभासिकं रजतं निषिध्यते तदा प्रतिभासकाले तस्य सत्त्वात्कथं त्रैकालिकाभावग्रहस्य प्रमात्वं । नापि पारमार्थिकं तस्याप्रसक्तेः । न हि धर्मिप्रतियोगिज्ञानमेव निषेधधीकारणमपि तु निषेधधीप्रतिक्षेप्यविषयासञ्जकतया तत्संसर्गधीरपि अन्यथा गेहे घटोऽस्तीति प्रश्नानन्तरमिव गेहं घट इति प्रश्नानन्तरमपि नास्तीत्युत्तरप्रसङ्गात् । तत्संसर्गज्ञानाभ्युपगमे च तस्यापरोक्षतया तदनुरोधेन शुक्तीदमंशे पारमार्थिकरजततादात्म्यस्यापि प्रातिभासिकत्वापत्तौ प्रातिभासिकस्येव पारमार्थिकस्यापि रजतस्य निषेधानुपपत्तेः ।

अत्र ब्रूमः । प्रातिभासिकमेव रजतं नेदं रजतमिति निषिध्यते । न च कदाचित्तत्र सत्त्वात्कथं त्रैकालिकनिषेधः । प्रातिभासिकतया तत्सत्त्वेऽपि पारमार्थिकतया सर्वदाऽसत्त्वात् । अत एव प्रतिभातमेव केवलं रजतं न तदस्तीत्यनुभवः । नचैकत्रैकप्रतियोगिकसत्त्वासत्त्वयोर्विरोधः । आधिकरणेऽवच्छेदकभेदेनेव प्रतियोगिनि प्रतियोगितावच्छेदकभेदेनापि विरोधभङ्गात् । न च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावे मानाभावः । गवि शशशृंगं नास्तीति प्रतीतेः प्रमाणत्वात् । नासौ गोश्रृंगे शशीयत्वाभावमात्रविषयिणीति युक्तम् । गव्येव शशीयत्वविशिष्टशृङ्गनिषेधरूपत्वात् । अन्यथा भूतले घटो न, भूतलं घटो नेति प्रतीतिभ्यामपि घटे भूतलसंसर्गतादात्म्याभावावेव सिद्ध्येतां न तु संसर्गतादात्म्यावच्छिन्नघटात्यन्ताभावान्योन्याभावौ । एतत्प्रतीतिद्वयं भूतल एव संसर्गतादात्म्याभ्यामवच्छिन्नं घटमेव निषेधति न तु घटे भूतलसंसर्गतादात्म्ये इति यदि तर्हि उक्तप्रतीतिरपि गव्येव शशीयत्वविशिष्टशृङ्गमेव निषेधति न तु गोः शृङ्गे शशीयत्वमिति तुल्यम् ।

न च पारमार्थिकत्वावच्छिन्नप्रतियोगिताकयोः प्रातिभासिकपारमार्थिकरजताभावयोरपि सत्त्वे प्रातिभासिकरजताभाव एव बाधबुद्ध्याऽवधार्यत इत्यत्र किं नियामकमिति वाच्यम् । प्रातिभासिके प्रतिपन्नौ निषेधप्रतियोगित्वरूपत्राध्यत्वानुपपत्तेः । पारमार्थिकस्यैव बाध्यतापत्त्या मिथ्यात्वापत्तेः । आत्मनि नेति नेतीति श्रौतप्रपञ्चनिषेधानुपपत्तेश्च नियामकत्वात् । न ह्यात्मनि प्रतिभासप्रपञ्चातिरिक्तः पारमार्थिकः प्रपञ्चोऽस्ति येनाऽऽध्यासिकतत्सत्त्वेऽपि ततोऽन्यं पारमार्थिकमादाय त्रैकालिकनिषेधोपपत्तिः स्यात् । तस्मादाध्यासिकत्वेन तत्र सत एव पारमार्थिकत्वेनासत्त्वं श्रुत्याऽवबुद्ध्यत इत्यनिच्छताऽपि स्वीकार्यम् ।

न च नेदं रजतमिति बुद्धेः पारमार्थिकत्वावच्छिन्नप्रातिभासिकरजताभावविषयत्वेऽपि प्रतियोगितावच्छेदकपारमार्थिकत्वावच्छिन्नरजतरूपप्रतियोगिज्ञानस्य हेतुतयाऽवश्यापेक्षणे तदनुरोधेन प्रातिभासिकरजते पारमार्थिकत्वसत्तापत्तौ तदवच्छिन्नस्यापि तत्र सत्त्वात्पुनर्निषेधानुपपत्तिरिति युक्तम् । यत्राभावबुद्धौ प्रतियोगितावच्छेदकविशिष्टः प्रतियोगी विषयस्तत्रैव तद्विशिष्टप्रतियोग्युपनायकत्वेन प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य हेतुत्वात् । नेदं रजतमिति बुद्धेश्च प्रतियोगिनि प्रतियोगितावच्छेदकपारमार्थिकत्ववैशिष्ट्याविषयत्वात् । तादृश्या अपि तस्याः पारमार्थिकत्वावच्छिन्नप्रातिभासिकाभावविषयत्वं प्रातिभासिकत्वावच्छिन्नप्रातिभासिकाभावरूपैकविषयत्वासम्भवेऽभावान्तरविषयत्वनियमेन पारिशेष्यात् ।

ननु शुक्तीदमंशे प्रातिभासिकतया रजतसत्त्वं पारमार्थिकतया तु तस्यैव त्रैकाल्याभाव इति व्यवस्थायाः किङ्कल्पकमिति चेन्न । इदं रजतं नेदं रजतमिति संविद्द्वयानुपपत्तिरेव । न चानयोः एकसंविदपह्नव एव ज्यायान् न तु तदनुरोधेनालौकिककल्पनामिति

युक्तम् । नास्त्यत्र रजतं रजतमित्यभादिति मिथ्यैव रजतमभादिति च कालत्रयासत्त्वविषयत्वेन मिथ्यारजतविषयत्वेन च संवित्प्रतिसन्धानादन्यतरसंविदपह्नवायोगात् । शुक्तौ प्रवृत्तिः पुरोवर्त्तिरजतज्ञानपूर्विका रजतार्थिनः पुरोवर्त्तिनि प्रवृत्तित्वात् सम्प्रतिपन्नप्रवृत्तिवदित्ययथार्थज्ञानसिद्धिः ।

न च हेतोरप्रयोजकत्वम् । पूरोवर्तिज्ञानं विना प्रवर्त्तकान्तराभावेन हेतूच्छित्तेरेव बाधकत्वात् । प्रवर्त्तकान्तरं हि भवदिदं रजतमिति ज्ञानद्वयं भवेदेकैकं वा ? आद्येऽपि किं मिलितं प्रवर्त्तकमुत क्रमिकम् ? नाद्यः मनसः क्रमकारित्वनियमेन क्रमेणैवोत्पन्नयोः क्षणिकयोः स्मृतिग्रहणयोर्मेलकासम्भवात् । न द्वितीयस्तथा सतीदंग्रहणस्य रजतस्मृतिव्यवहितत्वेन प्रवृत्त्यहेतुत्वापातात् । अव्यवहितपूर्वक्षणवर्त्तिनो हेतुत्वनियमात् । द्वितीयेऽपि किमिदंज्ञानं प्रवर्त्तकं रजतज्ञानं वा ? नाद्यः लोष्टेऽपि रजतार्थिप्रवृत्तिप्रसङ्गात्तस्यापीदमाकारज्ञानविषयत्वात् । न द्वितीयो देशान्तरीयरजते प्रवृत्त्यापत्तेस्तस्मात्संसर्गज्ञानाभावे प्रवृत्त्यसम्भवस्य बाधकत्वान्नाप्रयोजकत्वं हेतोरिति ।

किञ्चानास्वादिततिक्तरसस्य बालस्य मधुरे तिक्ताभासः कथं स्मरणं स्यात्तिक्तरसस्याननुभवात् जन्मान्तरानुभवात्तत्कल्पने मानाभावात् । अन्यथाऽन्यदपि स्मर्येत नरः । आस्वाद्य थूत्कृत्य गुडादेस्त्यागदर्शनस्य परिशेषमुखेन जन्मान्तरानुभवजन्यतिक्तस्मृतिकल्पकस्य सत्त्वात् । न चेत्सप्तमरसस्याप्याभासापत्तेः तदत्यन्तासत्त्वे षड्रसातिरिक्ते रसत्वावभासः किन्न स्यात् । पित्तदोषस्य तत्स्मृतावेवोद्बोधकत्वाङ्गीकारात् इति चेत् ? भ्रान्तिव्यवहारानुपपत्तेः ।

अस्तु तर्हि धीरूपस्य रजतस्याधीरूपत्वेन ख्यातिर्भातिः सैव चात्मख्यातिः । आत्मशब्देन बुद्धेरभिधानात् । न च रजतस्य धीरूपत्वे मानाभावः । विमतं धीरूपं सम्प्रयोगजज्ञानाविषयत्वे सत्यप-

रोक्षव्यवहारविषयत्वात्संविद्वदित्यनुमानस्य सत्त्वात् । हेतौ नित्यानुमेयव्यावृत्त्यर्थं विशेष्यं घटादिव्युदासार्थं विशेषणम् । तदाकारतायाः संस्कारदोषादिनिमित्तत्वात्कादाचित्कत्वाद्युपपत्तिः ।

बहिष्ठत्वेन शीरूपं रूप्यं भाति तत्किं उत्पद्यते वा न वा ? नाद्यः ज्ञानादर्थोत्पत्त्यदर्शनान्नान्त्यः तथा सति शीरजनयोर्विरुद्धोत्पन्नानुत्पन्नधर्माध्यासेन भेदापातात् । ज्ञानादुत्पत्तिसम्भवेऽपि स्वजनकेन विषयीक्रियते उतान्येन वा ? नाद्यः समानकालत्वाभावेनापरोक्षं न स्यात् । द्वितीयेऽपि दुष्टकरणाजन्येन जन्येन वा ? आद्ये सर्वैः विषयीकरणापातः, विनिगमकाभावात् । द्वितीयेऽपि येन विषयीकृतं तस्य ज्ञानस्य कर्मीभूतं रजतं तस्य जनकं न वा ? आद्ये तदर्थक्रियाकारि तत्स्यात्तथा च तस्यापि सत्त्वप्रसङ्गः । तथा च ज्ञानमात्रवादित्वभङ्गः । नेतरः रजतस्याप्रतीत्यापत्तेः । जन्यजनकभावाभावे सम्बन्धान्तरानिरूपणे विषयत्वस्यैवाभावात् ।

दिगम्बरः । प्रतीत्यनुरोधेन यदि भ्रान्तिविषयस्य सत्त्वमभ्युपगम्यते तदा पारमार्थिकत्वमेव कल्पनीयं लाघवात् । अपारमार्थिकत्वे सत्तात्रैविध्यं निषेधस्य पारमार्थरजतविषयत्वं चेति कल्पनीयमित्यतिगौरवम् । तन्न । परमार्थिकत्वेऽनेकग्राह्यत्वप्रसङ्गात् । दोषस्य नियामकत्वे सत्यस्थलेऽपि स्यात् ।

वैताण्डिकः । कोऽयं बाधो नाम अन्यार्थिनोऽन्यत्र प्रवृत्तिनिषेधो वा तद्योगिताविच्छेदो वा अविविक्ततया प्रतिपन्नस्य विवेकज्ञानं वा इदमंशे रजताद्यन्योन्याभावबोधो वा प्रतिपन्नोपाधावभावप्रतियोगित्वबोधो वा अज्ञाननिवृत्तिर्वा ?

नाद्यः । यत्र वैराग्येणैव रजतादौ परिव्राजकादेः प्रवृत्त्यनुदयस्तत्र प्रवृत्तिनिषेधाभावेनाव्याप्तेः । जलज्ञानात्प्रवृत्त्युद्यतस्य सर्पचौरादिदर्शनेन प्रवृत्तिनिषेधे बाधप्रसिद्ध्यापत्तेः ।

न द्वितीयः । बाधकज्ञाने योग्यतायाः क्वचिदपि विच्छेदाभावेना-

सम्भवात् । अन्यथा योग्यताया उन्मूदितत्वात्समयान्तरे पुरोवर्त्तिनि प्रवृत्तिर्न स्यात् । न च योग्यतान्तरस्य पुनस्तत्रोत्पाद इति शङ्क्यम् । योग्यताया यावद्द्रव्यभावित्वेनान्तरा विच्छेदपुनरुत्पादयोरसम्भवात् । न च योग्यताप्रतिबन्धो बाधः । विवेकज्ञानसमये संसर्गज्ञानरूपहेत्वभावादेव संसृष्टाप्रवृत्त्युपपत्तौ प्रतिबन्धककल्पनानवकाशात् ।

न तृतीयः । अविविक्तत्वं हि विवेकेनागृहीतत्वमभेदेन गृहीतत्वं वा ? आद्येऽपि किं पदार्थज्ञानातिरिक्तं विवेकग्रहणमुत पदार्थज्ञानमेव ? नाद्यः । आदौ विवेकेनागृह्यमाणेषु सर्वपदार्थेषु यत्पश्चादितरापेक्षया भेदज्ञानं तस्य तेषु बाधत्वप्रसङ्गात् । नेतरः पदार्थज्ञानमात्रस्य विवेकज्ञानत्वे इदं रजतमित्यत्रापि अविवेकाभावप्रसङ्गात् । न द्वितीयः । पीतो घट इति ज्ञानानन्तरं घटस्य पीतत्वमिति ज्ञाने बाधत्वप्रसङ्गात् ।

अत एव न चतुर्थोऽपि ।

पञ्चमेऽपि किं ज्ञानस्याभावप्रतियोगित्वं बाध उतार्थस्य ? नाद्यः ज्ञानमात्रस्य कतिपयक्षणावस्थायितया ध्वंसप्रतियोगित्वेन बाध्यत्वप्रसङ्गात् । द्वितीयेऽपि किं प्रतिपन्नस्योताप्रतिपन्नस्य ? प्रतिपन्नत्वपक्षेऽपि भ्रमविषयविषयेणोत्तरज्ञानेन बाध उतान्यविषयेण ? नाद्यः भ्रान्तिवद्बाधकज्ञानेनापि शुक्तीदमंशतादात्म्यापन्नरजतविषयीकरणेन भ्रमप्रामाण्यस्यैव दृढीकरणात् । नेतरः भिन्नगोचरत्वेन बाध्यबाधकाभावप्रसङ्गात् । न द्वितीयः, तथा सत्यप्रसक्तनिषेधानुपपत्तेः । नाप्यज्ञाननिवृत्तिः । नेदं रजतमिति प्रतीत्या तदविषयीकरणात् ।

अत्रेदं विचार्यते । भ्रान्तिप्रतिपन्नस्यैवार्थस्य तद्विषयेणैवोत्तरज्ञानेनाभावप्रतियोगित्वबोधः कथं न बाधः । न च तेनैव तत्रैव तस्यैव सत्त्वं विषयीकृत्यासत्त्वबोधने व्याघात इति शङ्क्यम् । द्विविधं हि विषयीकरणं विधातुं निषेद्धुं च तत्र द्वितीये न व्याघात-

कथाऽपि तदर्थमेव विषयीकरणात् ।

वर्त्तमानेन प्रलीनेन वा कार्येण सहाज्ञाननिवृत्तिर्बाधः । प्रमाणमात्रे चाज्ञानमात्रस्यैव निवर्तनान्न बाधकत्वप्रसक्तिर्विपर्ययोत्पत्त्यनन्तरं मनसो विषयान्तरसंचारे च शुक्तिलोचनसम्प्रयोगजाधिष्ठानज्ञानेनाज्ञाननिवृत्तौ वार्त्तमानिककार्याभावेनाव्याप्तिः तद्वारणाय प्रविलीनेनेति । वार्त्तमानिककार्यसहिताज्ञाननिवृत्तावव्याप्तिवारणाय च वार्त्तमानिकेति कार्यत्वेनानुगमान्नाननुगमः । स्वप्ने तावद्देशान्तरादिसम्बन्धिदेहेन्द्रियान्तरमन्तःकरणोपहितचैतन्येऽध्यस्यते । एतद्देहादिविपरीतदेशादिसम्बन्ध्येतद्देशादिकं वा । अत एव तदनन्तरं सुप्तोत्थितः क्वाहं क्व स देशः क्व तद्व्रजादीति स्मरति । न च न्तःकरणावच्छिन्नचैतन्यस्याधिष्ठानत्वाङ्गीकारेऽहंकारसामानाधिकरण्येनावभासापत्तिः । तादृशसंस्काराभावात् ।

नन्वतिव्यापकमध्यासलक्षणं नामादिषु ब्रह्मदृष्टेर्वस्तुत आरोप्यब्रह्मप्रतियोगिकात्यन्ताभाववतोऽन्यस्य नामादेरन्यब्रह्मात्मनाऽवभाससत्त्वात् । नचासावध्यासो न वास्या विषयोऽध्यासो दुष्टकरणजन्यत्वाभावात् । ज्ञानानिरस्यत्वान्मिथ्यार्थगोचरत्वाभावाच्च न ह्यत्रारोप्यस्य ब्रह्मणो मिथ्यात्वम् । मैवम्, ज्ञानत्वाभावेनैवास्यां लक्षणागमनात् । न हि ज्ञानमिच्छातः शक्यानुष्ठानमनुष्ठापयति चैतमिच्छातो नाम ब्रह्मेत्युपासीतेत्यादिचोदना तस्मान्मानसी क्रियेयमिति नतत्रातिव्याप्तिः ।

ननु ज्ञानमपि नारायणस्मरणमिच्छातो जायते इति चेन्न । ज्ञानजनकमनोव्यापारविशेष एव तस्या उपक्षयात् । किमत्र विनिगमकमिति चेत्? अनिच्छतोऽपि दुर्गन्धादिबोधदर्शनमिति गृहाण । ज्ञानाकारतयाऽन्तःस्थस्य रजतादेरध्यास इत्यात्मख्यातिवादिनः । बहिष्ठस्येत्यन्यथाख्यातिवादिनः । शुक्तिरजतयोरविवेकात्तादात्म्याभिमान इत्यख्यातिवादी । शुक्त्यभावो रजतं तद्रूपेण शुक्तिख्याति-

रित्यन्यथाख्यात्येकदेशिनः । शुक्त्यात्मना स्थितं तुच्छरूप्यात्मना भातीति शून्यवादिनः । तथा चान्यस्यान्यत्रावभास इति सर्वसाधारणम् ।

शून्यवाद्याह—अन्यस्येति व्यर्थम्, न च सर्वज्ञानानामध्यासत्वापत्तिः, इष्टत्वात् । न चाधिष्ठानज्ञानाभावे कथं भ्रमत्वम्, पूर्वभ्रमसंस्काराभ्यामेवोपपत्तावधिष्ठानज्ञानस्य कारणत्वे मानाभावात् ।

अत्र ब्रूमः, किं ज्ञानमात्रस्य भ्रमत्वं ब्रूषे उताविद्याजनितस्य ? नाद्यः शून्यज्ञानस्यापि भ्रमत्वप्रसङ्गात् । द्वितीयेऽपि किमधिष्ठानमात्रमपन्हूयेत तच्चान्वयव्यतिरेकाभ्यां पूर्वं तस्य सत्त्वात् । अपि चाध्यस्तमपि न शून्यं कथं पुनरधिष्ठानं शून्यम्भवेत् ? न चाध्यस्तमपि शून्यमिति शङ्क्यम्, तथात्वे अपरोक्षावभासासम्भवात् । विनाशानन्तरं च सर्वं शून्यमेव । न च रजतस्य मिथ्यात्वे तद्धर्मस्येदन्त्वादेरपि मिथ्यात्वमिति शङ्क्यम् । इदन्तायाः तद्धर्मत्वासिद्धेः तस्यास्संयुक्तधर्मत्वात् ।

न च रजतस्यापरोक्षत्वानुपपत्त्या संयुक्तत्वमस्तु इति शङ्क्यम् । इन्द्रियवृत्तिप्रापितापारोक्ष्यचैतन्यैकाध्यासादसंयुक्तस्याप्यपरोक्षत्वोपपत्तेः । न त्वगृहीतविशेषत्वाभावान्नात्मन्यनात्माध्यासः । आत्मा नागृहीतविशेष अनन्यनिमित्तप्रकाशत्वाद्व्यतिरेके शुक्त्यादिवत् । न चाप्रयोजकत्वम् । आत्माऽगृहीतविशेषः संविद्रूपत्वात् । स्वयम्प्रकाशत्वनित्यत्वरूपागृहीतविशेषविषयसंवेदनवदिति सत्यनुमानपराहतिश्चेति वाच्यम् ।

संवेदनं हि चैतन्यमुत वृत्तिः ? आद्ये तस्य पक्षत्वेन दृष्टान्तासिद्धेः । द्वितीये वृत्तौ स्वयम्प्रकाशत्वनित्यत्वादेरभावात् । अन्यनिमित्तप्रकाशत्वाच्चागृहीतविशेषत्वसम्भवेऽपि आत्मनि अतादात्म्येन निरंशत्वेन तदसम्भवात् । न चात्मा न गृहीतविशेषः निरंशत्वाद्गगनवदिति साध्याभावसाधकमिति वाच्यम् । अन्याधीन-

प्रकाशत्वस्योपाधित्वात् । स्वयंज्योतिष्ट्वभङ्गस्य विपक्षे बाधकत्वाच्च ।

न चात्मा न स्वयंज्योतिः व्यवहारपदत्वात् घटवदिति वाच्यम् । 'अत्रायं पुरुषः स्वयं ज्योतिः आत्मैवास्य ज्योतिः' इत्यादिश्रुतिविरोधे बाधितत्वात् । न च ज्योतिःशब्दस्य प्रकाशगुणवद्द्रव्यवाचकत्वान्न तत्सामानाधिकरण्यादात्मनो बोधरूपत्वमिति शङ्क्यम् । ज्योतिःशब्दस्य तमोविरोधिप्रकाशमात्रवाचकत्वसम्भवे गौरवेण प्रकाशगुणवद्द्रव्यप्रतिपादकत्वकल्पनागौरवात् । न च प्रकाशमात्रवाचकत्वे आत्मनो गुणत्वापत्त्या सामानाधिकरण्यानुपपत्तेः प्रकाशगुणवद्द्रव्यवाचकत्वं कल्प्यत इति वाच्यम् । ज्ञानरूपस्य प्रकाशस्य गुणत्वासिद्धेः ।

किञ्चात्मनोऽन्याधीनप्रकाशत्वे घटादाविवात्मन्यपि प्रसक्तस्यान्याधीनप्रकाशत्वस्य व्यावृत्त्यर्थमुपात्तस्य स्वयमिति विशेषणस्यात्मैवास्य ज्योतिरित्यत्र एवकारस्य च कथं नानुपपत्तिः । न च घटादिज्ञानस्य स्वातिरिक्तकर्त्रादिकारकापेक्षादर्शनादात्मज्ञानस्यापि प्राप्तं कारकान्तराधीनत्वं व्यावर्त्तयितुं स्वयमिति विशेषणमिति वाच्यम् । ज्योतिर्विशेष्यत्वेन ज्योतिरन्तरनिवृत्तेरेव तत्प्रयोजनतया कारकान्तरनिवृत्तेर्विशेषणफलत्वायोगात् ।

किञ्च जन्मन्येव कारकापेक्षाऽतो जन्माभावे आत्मज्ञाने कारकाधीनत्वाप्रसक्तेर्न तन्निवृत्तिर्विशेषणप्रयोजनम् । न च जन्माभावोऽसिद्धः । विमतं जन्मवत् ज्ञानत्वाद्विषयज्ञानवदिति वाच्यम् । अप्रयोजकत्वात् । आत्मनि प्रकाश्यगुणस्य प्रयुक्तमेव जन्मेत्यस्याभावनिश्चयात् ।

किञ्च विषयज्ञानवदित्यत्र ज्ञानशब्देन चैतन्यं विवक्ष्यते उत वृत्तिः । नाद्यः । साध्यवैकल्यापातात् चैतन्यस्य जन्मवैधुर्यात् । न द्वितीयः । साधनवैकल्यप्रसङ्गात् । किञ्च आत्मा न स्वातिरिक्तसंविदधीनव्यवहारविषयः संविद्रूपत्वात्संविद्वदित्यनुमानपराहृ-

तिरपि आत्मा न स्वयंज्योतिरित्यनुमाने । न च संविद्रूपत्वमसिद्धम् । प्रज्ञानात्मतादिवाक्यात्तत्सिद्धेः । न चाहं जानामीति ज्ञानाश्रयत्वम् । तस्या अहंकाराश्रयविषयत्वात् । न चात्माश्रय एव भवतु । विज्ञानमानन्दं ब्रह्मेत्यादिश्रुतिबलेनात्मनो ज्ञानरूपब्रह्माभिन्नत्वेन ज्ञानाश्रयत्वाभावात् ।

ननु श्रुतौ विज्ञानपदं विज्ञातृपरमिति आत्मनो विज्ञात्रभेद एव बोध्यते । न च ज्ञानशब्दस्य बोधार्थत्वात्कथं ज्ञातृपरत्वमिति शङ्क्यम् । करणाधिकरणयोश्चेति सूत्रे ल्युट्प्रत्ययस्याधिकरणे विधानात् । न च भावेऽपि विधानात्कथं विनिगम इति शङ्क्यम् । भावार्थस्य क्रियात्मकत्वेनात्मनस्तद्रूपतानुपपत्तेः ।

मैवम् । अक्रियात्मकस्यापि धात्वर्थस्य गडि वदनैकदेशे इत्यादौ प्रसिद्धत्वात् । अद्वैतश्रुतिविरोधापत्तेश्च । किञ्च स्वातिरिक्तान्यनेकानि कल्पनीयानि तत्र चोत्पादविनाशौ कल्पनीयौ तथा चातिगौरवादनन्यनिमित्तप्रकाशत्वमेव युक्तम् । किञ्च विमतं नागन्तुकं प्रागभावशून्यत्वाद्गगनवत् । न च साध्यावैशिष्ट्यम् । आद्यक्षणसम्बन्धाभावस्य साध्यत्वात् । न च हेत्वसिद्धिः । आत्मनि प्रकाशप्रागभावाभ्युपगमे जिज्ञासायां संशयविपर्ययाभावप्रमाप्रसङ्गात् । न चेष्टापत्तिः । अनुपलम्भबाधितत्वादिति ।

अविद्यायां प्रत्यक्षानुमानार्थापत्तयः प्रमाणमित्युक्तम् । श्रुतिस्मृतयोऽपि तां प्रमाणयन्ति ।

तत्र श्रुतयः । 'अनृतेन हि प्रत्यूढाः' । 'तदिमेऽसत्यकायाः' ।

'अनीशया शोचति मुह्यमानः' । 'न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति । अविद्यायामन्तरे वर्त्तमाना नान्यच्छ्रेयो वेदयन्ते इत्याद्याः ।

स्मृतयश्च 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' इत्याद्याः ।

ब्रह्मप्रतिपत्तिप्रसक्तेः प्रतिबन्धकान्तरानिरूपणाच्चाज्ञानमेव तत् । प्रतिबन्धकान्तरं हि किं मिथ्याज्ञानमुत तत्संस्कार आहो ग्रहणाभावः अथ वा कर्म ? नाद्यः । सुषुप्तौ मिथ्याज्ञानाभावेन ब्रह्मरूपप्रतिपत्तिप्रसङ्गात् । सुषुप्तेः सकलज्ञानोपरमस्वरूपत्वात् । न द्वितीयः, रूप्यभ्रमसंस्कारे सत्यपि शुक्तिबोधदर्शनेन संस्कारस्य प्रतिपत्त्यप्रतिबन्धकत्वात् । तृतीये किमागन्तुकग्रहणाभावः प्रतिबन्धक उत स्वरूपग्रहणाभावः ? नाद्यः कादाचित्कग्रहणाभावस्य स्वतःसिद्धविरोधित्वाभावात् । नद्वितीयः ग्रहणस्य स्वरूपत्वेन तदभावानुपपत्तेः । नापि चतुर्थः । साक्षात्कारानन्तरमपि ब्रह्मस्वरूपानवभासप्रसङ्गात्, ज्ञानेन कर्मनिवृत्त्यसम्भवात् ।

तस्मान्मिथ्याज्ञानतत्संस्काराग्रहणकर्मभ्योऽन्यदनवभासानिमित्तं मिथ्या वस्तु सिद्धं, तदेवाविद्या । न तं विदाथेति यूयं तमीश्वरं न विदाथ तस्मात्तत्प्रतिपत्त्युपायं कुरुत । न चेश्वरो नास्तीत्यत आह: य इमाः प्रजाः जजान जनितवान् कार्यलिङ्गेनेश्वरसिद्धेः । परमाणुवदयोग्यत्वादेवेश्वराग्रहणमित्यत आह । अन्तरं बभूवेति युष्माकं ब्रह्मणश्चान्तरं बभूवान्तरकृतैवाप्रतिपत्तिर्नायोग्यत्वकृतेत्यर्थः । तच्च देशादिविलक्षणमित्याहान्यदिति । किं तदन्तरं किञ्च तत्कृत्यमित्यत्राह । नीहारेणेति प्रावृतत्वं चाच्छन्नपरिपूर्णस्वरूपता । अत एव विक्षेपविषया इत्याह । जल्प्या इति मनुष्योऽहं ब्राह्मणोऽहमित्याद्यध्यासविषया इत्यर्थः । असून्प्राणान्तर्पयन्तीत्यसुतृपः उक्थशब्देन कर्माङ्गाभिधानद्वारा कर्मोपलक्षितं तस्मिन् शिष्यन्ते विधिवाक्यैर्ये पुमांसस्ते तथोक्ताः चरन्ति संसारचक्रे भ्रमन्तीत्यर्थः ।

ब्रह्मण आत्मत्वात्तत्र प्रसिद्धस्य नीहारस्याच्छादकत्वानुपपत्तेराच्छदकत्वसाम्यादज्ञानस्यैव नीहारशब्देनाभिधानात् । अविद्यायामन्तरे इत्यस्यायमर्थः । अविद्यामोहितास्संतोऽन्यदैहिकपु-

रुषार्थव्यतिरिक्तं ब्रह्माख्यश्रेयो न जानन्तीति अज्ञानेनावृत्तं ज्ञानशब्देन स्वरूपज्ञानं गृह्यते ।

श्रुत्यर्थापत्तिरपि 'विद्वान्नामरूपाद्विमुक्त' इत्यादिश्रुतिभ्यः श्रूयमाणा ज्ञानाद्बन्धनिवृत्तिर्बन्धस्य परमार्थत्वेनानुपपद्यमानस्याविद्यात्मकत्वं कल्पयति तद्धेतुतयाऽविद्यां कल्पयतीति चेन्न । प्रमाणोपन्यासस्य साक्षिमात्रसिद्धेऽप्यभावत्वानिवृत्त्यर्थत्वादलं प्रसङ्गागतेन ? प्रमाणोपन्यासश्चाविद्यायां साक्षिमात्रगम्यायां तस्याभावत्वभ्रमनिवृत्त्यर्थं घटादिवत् । अज्ञानस्य प्रामाणिकत्वे द्वेषे किं बीजम् । प्रामाणिकस्यापि घटादेर्मुद्गरनिवृत्तिदर्शनाज्ज्ञानात्तन्निवृत्तिसम्भवात् । प्रमाणप्रवृत्तिरज्ञातेऽर्थे ज्ञाते त्वज्ञानकृतावरणाभावात्प्रमाणवेद्यता न स्वीक्रियते । आत्मातिरिक्ताशेषत्वे सति प्रियत्वं परमप्रेमास्पदत्वं तच्चात्मनः सुखरूपत्वं विनाऽनुपपन्नम् । तच्च मा न भूवं किन्तु भूयासमिति प्रतीत्या सिद्धम् । अहमिति प्रत्ययस्य देहादिसम्भिन्नात्मावभासतया भूयासं मा न भूवमिति कामनायाः दुःखहेतुप्राणवियोगाभावविषयत्वासिद्धेः ।

न च तथापि सा नात्मनः सुखरूपतामन्तरेण । न हि दुःखे तत्साधने वा मत्प्रतिकूलमेतदित्यनुभवमन्तरा तदभावे कामना, न चात्मनः सुखरूपत्वमन्तरेण दुःखतत्साधनयोरात्मप्रतिकूलभावइति शङ्क्यम् । द्वेष्यत्वरूपप्रतिकूलत्वस्य स्ववृत्तिदुःखस्वरूपत्वमात्रमितिकत्वेनात्मनः सुखरूपतामन्तरेणापि स्ववृत्तेः [शीतपत्रान्नपृष्टे]

तत्त्वात्मनो निरतिशयनित्यसुखरूपत्वं न सम्भवति साधनतारतम्यरूपसातिशयत्वस्यानित्यत्वस्य सर्वजनीनत्वादात्मनश्च निरतिशयत्वान्नित्यत्वाच्च । न च स्वारसिकेच्छारूपपरमप्रेमास्पदत्वरूपसुखलक्षणसत्त्वात्सुखरूपत्वे सिद्धे मनोवृत्तिवैशद्यप्रयुक्तं तारतम्यं नित्यत्वं चेति वाच्यम् । सिद्धे इच्छाविरहात् ।

सुखरूपत्वे सुखं मे स्यादितिवन्सुखमहं स्यामित्यपि स्यात् । न चाविद्यावृतत्वेन भ्रमाद्विपर्यय इति वाच्यम् । मां न जानामीत्यननुभवात् ।

ननु सुषुप्तोत्थितस्य सुखमहमस्वाप्समिति स्मृत्यभिलापमूलकःसुखानुभवो नित्यात्मरूप एव कल्पनीयो मनःसंनिकर्षादिसामग्र्यभावेन जन्यसुखत्वानुभवस्याभावादिति चेन्न। स्वीयाव्यवहितपूर्वक्षणे शय्यामृदुस्पर्शादिजन्यसुखस्य तदन्तक्षणपर्यन्तानुवृत्तिकल्पनेन तत्रान्तरस्वविषयत्वरूपस्वप्रकाशत्वाभ्युपगमेन सुखतदनुभवसंस्कारस्मृतीनामुपपादनसम्भवात् । न च सत्यं ज्ञानमानन्दं ब्रह्मेतिश्रुतिस्तत्र मानम् । नाहं ब्रह्मेति प्रत्यक्षेण संसारित्वासंसारित्वविरुद्धधर्मलिङ्गकानुमानसहकृतद्वासुपर्णेतिश्रुत्या तत्त्वमसीतिवाक्यस्य तदभेदप्रमानुत्पादकत्वात् ।

अत्रोच्यते सिद्धत्वेऽपि सदा भूयासं न कदाचन मा भूवमित्यात्मनो भाविसर्वकालसम्बन्धित्वरूपसदातनत्वगोचरेच्छायाः सर्वजनीनत्वात् । न च सुखाधिकरणतया सुखार्थत्वोपाधिनीच्छा । तर्हि सुखस्यापि भोगसाधनतया तदुपाधिकी स्यात् । श्रुतिस्तु आत्मनः कामाय सर्वं प्रियं भवतीति सर्वस्य वैषयिकसुखस्यात्मभोग्यत्वादेव तत्साधनानां प्रियत्वोक्त्या ससाधनस्य सर्वसुखस्य स्वारसिकप्रेमास्पदत्वं प्रतिषिध्यात्मन एव तत्प्रतिपादनेनान्यसर्वशेषित्वं बोधयति । आत्मन इति षष्ठी भोग्यत्वार्था काम्यन्ते इति कामाः सुखं तथा चात्मभोग्यसुखायेत्यर्थः । इत्थं चात्मन एव स्वारसिकसुखत्वेऽपि अविद्यावृतत्वादेवात्मा न सुखं सुखमहमिति प्रतीतिश्च सुखं मे स्यादितीच्छा चेत्यादि नानुपपन्नम् । तथा च आत्मा सुखं परमप्रेमास्पदत्वात्सुखवदित्युपपन्नम् ।

यत्तु स्वीयाव्यवहितपूर्वक्षणे शय्यामृदुस्पर्शादिजन्यसुखस्य

कल्पनमित्यादि तद्वत् । प्रतिपुरुष सुषुप्त्यानन्त्यादनन्तसु तदा-
द्यक्षणेषु अनन्तानां सुखानां जन्मनाशादिकल्पने गौरवात् ए-
कात्मकल्पनस्यैवौचित्यात् । ननु अहमर्थस्य वर्त्तमानत्वेन सौषुप्त-
सुखसाक्षिणोऽपि नित्यतया तदविशेषात्कथं स्मृतिविषयत्वमिति
चेन् । मनोलयोपलक्षितमूलाज्ञानावस्थारूपसुषुप्त्यवस्थाया अतीत-
त्वेन तद्विशिष्टरूपेण सुखादीनामप्यतीतत्वात् । अज्ञानानामपि स-
र्वेषामतीतत्वाभावेऽपि जागरादिक्षणे यद्विषयकं ज्ञानमुत्पन्नं
तद्विषयकाज्ञानस्य नष्टत्वात्तस्यैव स्मर्यमाणत्वेऽपि तत्संवलि-
तानामज्ञानान्तराणामपि न किंचिदवेदिषमित्यविशेषेण स्मर्य-
माणवदभिलापो वनं कुसुमितमितिवत् । दुःख प्रातिकूल्य-
सम्भवात् । न हि सुखविरोधित्वेन दुःखप्रातिकूल्य तथा सति
सुखदुःखयोर्विरोधस्य स्वरूपमात्रनिबन्धनतया सिद्धान्तिमते वै-
रिदुःखेऽपि सुखरूपात्मविरोधित्वेन द्वेषप्रसङ्गात् । न च न तयोः
स्वरूपनिबन्धनो विरोधो येन वैरिदुःखेऽपि द्वेषप्रसङ्गः किन्तु सा-
मानाधिकरण्येनाधाराधेयभावेन वेति युक्तं आद्ये दुःखप्रातिकूल्या-
नुरोधेनात्मनः सुखरूपतोपपादनायोगः सामानाधिकरण्याभावात् ।
न द्वितीयः । लौकिकसुखदुःखयोरेकदैकोपाध्यावप्यवस्थानापत्तिः ।
विरोधिनिमित्ताधाराधेयभावाभावात् । न च सुखस्यात्मशेषतया
सुखरूपत्वमनुमीयताम् । दुःखस्यापि शेषतयैव द्वेष्यतयात्मनो दुःख-
रूपताया अपि प्रसंगान्न चात्मनो दुःखरूपत्वे दुःखस्याप्यात्मप्राति-
कूल्याभावादद्वेष्यत्वप्रसङ्ग इति शङ्क्यम् । दुःखस्य स्ववृत्तिदुःखत्वेनैव
द्वेष्यतयात्मनो दुःखरूपत्वे सुखरूपत्वे तदुभयाभिन्नत्वरूपत्वे वा तदन-
पायादिति तत्र यद्यात्मानन्दरूपो न स्यात्तदाभिव्यक्तिविशेष-
रूपात्माभिरूपान्तःकरणपरिणामविशेष आनन्दावाप्त्यर्थिनः का-
मना न स्यात् । यद्यात्मा दुःखरूपः स्यात्तदा सुखमहमस्वाप्तमिति
परामर्शो न स्यादित्यर्थः ।

नैयायिकाः। इच्छादि पृथिव्याद्यष्टद्रव्यातिरिक्ताश्रितं तद्-समवेतत्वे सति गुणत्वाद्यन्नैवं तन्नैवं यथा गन्धादि। न च विशेष-णासिद्धिः। न तावदिच्छादिः स्पर्शवद्विशेषगुणा अयावद्द्रव्यभा-वित्वान्नापि नभोविशेषगुणः बाह्येन्द्रियाग्राह्यत्वान्नापि दिक्कालमनो-गुणः विशेषगुणत्वादिति नत्सिद्धेः। न च विशेषगुणत्वमसिद्धम्, गुणत्वे सत्येकैकेन्द्रियग्राह्यत्वेन तत्सिद्धेरितीच्छादिगुणवद् द्रव्यमन्य-देवात्मेत्यनुमिमते। प्रत्यक्षसिद्धस्यैवात्मनो विप्रतिपत्तिनिराकरणेन सम्भावनाबुद्धिजनकान्यनुमानानीति तदा न कश्चिद्विरोधः। यदि तु नित्यानुमेय एव तदा कुम्भवदहमित्यपरोक्षावभासो विरुध्येत। तत्रापि प्रमितिस्त्वात्मनि संयुक्तसमवायनिमित्तकाज्ञानान्तरादपरो-क्षेति नैयायिकवैशेषिकाः।

तन्न आत्मविषयकं ज्ञानं मनोजन्यमत्र प्रामाणाभावात्। न च व्यावृत्ते मनस्यात्मदृष्टेरव्यावृत्तेरदृष्टेरन्वयव्यतिरेकाविवात्मनः मा-नसत्वे मानमिति वाच्यम्। तयोरात्मव्यवहारहेतुविषयानुभव-विषयतयाऽन्यथासिद्धत्वात्। न चात्मानुभवाविषयत्वमेव तयोः किन्न स्यादिति शङ्क्यम्। विषयज्ञानाश्रयत्वेनात्मनि व्यवहारसम्भवे ज्ञानान्तरादात्मसिद्धिकल्पनायां गौरवप्रसङ्गात्। तस्माद्विष-यत्वमन्तरेणात्मा परोक्षः। न चैतद्युक्तमात्मसमवेतानुभवस्य संयुक्तसमवायजज्ञानविषयतया विषयनिष्ठानुभवस्य संयुक्त-तादात्म्यजज्ञानविषयतयापरोक्षत्वमिति विकल्पासहत्वाद्यथा चै-तथोक्तं प्राक्।

ननु सुषुप्तोत्थितस्य सुखमहमस्वाप्समिति सुखाश्रयकोटि-निक्षिप्ततयाऽहमः परामर्शः। धर्मिप्रतियोगिज्ञानाभावेन दुःखाभावा-सम्भवाद्विषयसन्निकर्षाभावाद्विषयसुखानुभवासम्भवात् स्मरणान्य-थानुपपत्त्या स्वरूपसुखानुभवाङ्गीकारः। न च अविद्यावृतत्वात्कथं स्वरूपसुखानुभव इति शङ्क्यम्। पूर्णसुखस्याप्रकाशेऽप्यज्ञानसाधक-

तया प्रकाशमानसाक्षिस्वरूपसुखप्रकाशसम्भवात् । न च साक्षिस्फुरणेऽपि यथा जागरिते न स्वरूपसुखानुभवस्तथा सुषुप्तावपीति युक्तम् । जागरिते विक्षेपेणाभिभूततयाऽप्रकाशोपपत्तेः । निरुपाधिप्रेमास्पदत्वानुपपत्त्या तत्स्वरूपसुखावभाससत्त्वात् ।

अथ सुषुप्तोत्थितस्य सुखमस्वाप्समितिवन्निर्दुःखमस्वाप्समिति दुःखाभावपरामर्शोऽपि दृश्यते स कथमुपपादनीयः प्रतियोगिस्मरणाभावेन सुषुप्तौ दुःखाभावानुभवासम्भवादिति चेन्न । पूर्णानन्दानुभव।तिबन्धकाज्ञानावरणानुभवमादायोपपत्तेः । यत्तावदुक्तं स्वप्नान्ते जागरान्ते वा धर्मिप्रतियोगिज्ञानसम्भवान्न सुषुप्तौ दुःखाभावाद्यनुभवासम्भव इति तत्तथैव । सुषुप्तौ प्राणस्थितिर्न । तत्र मानं यदा सुप्तः न कञ्चन स्वप्नं पश्यत्यथास्मिन्प्राण एवैकधा भवति तदैनं वाक्सर्वैर्नामभिः सहाप्येतीत्यादि । एवमेतस्मादात्मनः सर्वे प्राणा इति । क्रमिकाणि ज्ञानानि क्रमकारिकरणपूर्वकाणि क्रमवत्कार्यत्वात् क्रमकारिकुठारमाध्यद्वैधीभाववदिति । न च ज्ञानादयः साश्रया गुणत्वात्सम्मतवदित्याश्रयान्तरस्याभावाज्ज्ञानाश्रयत्वम् । तथात्मनि प्रतीयमानकर्तृत्वानिर्वाहकत्वेन निर्भेदे भेदहेतुत्वेन उत्क्रान्तिशरीरान्तरप्रवेशादिनिर्वाहकत्वेन च तदेष्टव्यमिति आत्माश्रयत्वेन कर्तृत्वादेः भेदस्य च स्वाभाविकत्वाद्व्यापकस्य सुकृतदुष्कृतानुरोधेन शरीरे निष्पन्ने तेन भोजकादृष्टवदात्मसंयोगरूपवृत्तिलाभसम्भवात् । बुद्धिर्द्रव्यं परिमाणवत्त्वात्सम्मतवदिति । न च हेत्वसिद्धिः ।

"बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः"

इति । आत्मगतपरिमाणेन महानपि । सधीः स्वप्नो भूत्वेमं लोकमनुसंचरतीति । कस्मिन्नुत्क्रान्ते उत्क्रान्तो भविष्यामीति प्राणस्यैवोपाधित्वमिति । प्राणव्यापारस्यान्तःकरणाधीनत्वेन

माणस्यान्तःकरणांशत्वात् । आत्मनि कर्तृत्वादि मिथ्या क्लृप्तप्रतीति-सत्ताकारणशून्यत्वात् स्फटिकलौहित्यादिवदिति । न च दृष्टान्ते साध्यवैकल्यम् । पारमार्थिकलौहित्यस्य सत्ताप्रतीत्योरन्वयव्यतिरेकाभ्यां क्लृप्तं यत्कारणं तदभावेन तत्र मिथ्यात्वस्यैव सिद्धेः । कामः संकल्पो विचिकित्साश्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवेति श्रुतौ धीर्मन इति सामानाधिकरण्येन मनसो धीशब्दवाच्यज्ञानोपादानत्वावगमविरोधश्च । न च दर्शनकारणत्वमादायैव तत्स्यादिति वाच्यम् । मृद्घट इतिवद् दंडो घट इत्यदर्शनात् । एतेन व्यासंगान्यथानुपपत्त्या बाह्यज्ञाने मनः करणतया स्वीकार्यमिति परास्तम् । नैयायिका अपि धारावाहिकज्ञानयौगपद्यनिरासायात्मनि क्रमजननशक्तेरवश्यवाच्यत्वे तयैव ज्ञानक्रमोत्पादनिर्वाहे तत्कल्पनवैयर्थ्यात् । नन्वेवं सति रूपज्ञानकाले स्पर्शज्ञानापत्तिः । न च त्वत्पक्षे मनसश्चक्षुःसंयोगकाले स्पर्शनसंयोग एव कुतो न स्यादिति वाच्यम् । अदृष्टस्य नियामकत्वादिति चेन्न । प्रकृतेऽपि तुल्यत्वादित्यन्यत्र विस्तर इति । तस्मान्मनो नेन्द्रियमिति वेदान्तिन इति ।

तन्न । इन्द्रियाणां मनश्चास्मीति भगवद्वचनस्य मनस इंद्रियत्वे मानत्वात् । न च मनःषष्ठानीन्द्रियाणीतिवन्मनसस्सत्त्वे मानं न त्विन्द्रियत्वेऽपीति वाच्यम् । निर्धारणषष्ठ्यनुपपत्तेः । तथा हि । समानजातीयेषु गुणक्रियादिभिरेकदेशस्य पृथक्करणं निर्धारणम् । तत्र सजातीयस्य गवां कृष्णा सम्पन्नक्षीरेत्यादौ निर्धार्यतावच्छेदकव्यापकरूपावच्छिन्नस्य गोपदेनोपस्थापितत्वात् । निर्धार्यस्य च कृष्णापदेन निर्धारकस्य च सम्पन्नक्षीरेति पदेनोपस्थितत्वान्निर्धारणप्रयोजकतादात्म्यमेव षष्ठ्यर्थो वाच्यः । तथा च गोतादात्म्यवती कृष्णा सम्पन्नक्षीरेति बोधः । गवां गौःसम्पन्नक्षीरेत्यस्य वारणाय कृष्णापदस्य कृष्णाभिन्ने सम्पन्नक्षीरापदस्य सम्पन्नक्षीराभिन्ने लक्षणाऽभ्युपेया । तेन गोतादात्म्यवती कृष्णान्या सम्पन्नक्षीरान्ये-

त्यपि बोधः। युगपद्वृत्तिद्वयविरोधानङ्गीकाराच्चैकदा शक्तिलक्षणोपस्थापितार्थान्वयबोधः। गवां गौः सम्पन्नक्षीरेति तु न स्यात्तत्र गोतादात्म्यवती गोभिन्नेति बोधासम्भवात्। अत्र च कृष्णाभिन्नत्वावच्छेदेन सम्पन्नक्षीराभिन्नान्वयो बोध्यस्तेन गवामियं सम्पन्नक्षीरेत्यस्य वारणं तत्र गवाभिन्नैतद्भिन्नत्वावच्छेदेन सम्पन्नक्षीरान्यत्वाभावात् व्यक्त्यन्तरस्यापि सम्पन्नक्षीरत्वात्।

एवं गवाभिन्नकृष्णात्वावच्छेदेन सम्पन्नक्षीराया अन्वयो बोध्यस्तेन गवां शुक्लान्या सम्पन्नक्षीरेति न प्रयोगः। एवं नराणां भीमः प्रचुरं भुङ्क्ते इत्यादौ नरतादात्म्यवान् भीमः प्रचुरं भुङ्क्ते। नरतादात्म्यवान्भीमभिन्नः प्रचुरभोक्तृत्वाभाववानिति बोधः। तथा चेन्द्रियाणां मनश्चास्मीत्यत्रेन्द्रियतादात्म्यवन्मनः भगवदभिन्नम्। इन्द्रियतादात्म्यवन्मनोभिन्नं भगवद्भिन्नमिति बोधः। न च भूतानामस्मि चेतनेत्यत्र चेतनाया भूततादात्म्याभावेऽपि निर्धारणषष्ठीवत्प्रकृतेऽपि सा स्यादिति वाच्यम्। साभासान्तःकरणवृत्तेश्चेतनापदेन विवक्षितत्वात्। न चैवं चेतनापदस्य गौणत्वापत्तिरिति वाच्यम्। अनुभवोपक्रमानुरोधेन गौणत्वस्यावश्यकत्वात्।

न च मनस इन्द्रियत्वे कामः सङ्कल्प इत्यादि श्रुतिविरोध इति वाच्यम्। धीपदस्यात्र महत्तत्त्वातिरिक्तज्ञानरूपपरिणामपरत्वात्। अन्यथा महत्तत्त्वकार्यत्वं मनसो न स्यात्। अहङ्कारमनसोस्तत्त्वज्ञानेन लये स्मरणदर्शनेन सत्त्वपुरुषान्यताख्यातिरूपध्यानाख्यश्रेष्ठवृत्त्या च महत्तत्त्वस्य पृथगङ्गीकारावश्यकत्वात्।

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह।
बुद्धिश्च न विचेष्टेत तामाहुः परमाङ्गतिम्॥

तस्मिन्पुरुषाश्चतुर्दश जायंत एका कन्या दशेन्द्रियाणि मन एकादशं चेतो द्वादशमहङ्कारस्त्रयोदशः प्राणश्चतुर्दशात्मा पञ्चदशी बुद्धिः।

तदेवमेकादशेन्द्रियाणि स्वरूपेण उक्त्वा दशानाम-प्यसाधारणीर्वृत्तीराह —

शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः।
वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम् ॥ २८ ॥

बुद्धीन्द्रियाणां सम्मुखवस्तुदर्शनमालोचनमुक्तम्।

---

शनैः शनैरुपरमेद् बुद्ध्या धृतिगृहीतया।
आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥
सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः।

इत्यादौ मनसो बुद्धेः पृथग्ग्रहणाच्च। न च मनसः ज्ञानोपादानत्वे तत्प्रति करणत्वं न स्यादिति वाच्यम्। चेतननिष्ठमनःपरिणामप्रतिबिम्बस्य प्रमात्वाङ्गीकारेण तं प्रति मनःपरिणामस्य मुख्यकारणत्वाङ्गीकारात्। यथा चैतत्तथोक्तं पुरस्तात् ॥ २७ ॥

उपजीवकत्वसङ्गतिं सूचयन्नार्यामवतारयति। तदेवमित्यादिना। पञ्चानामित्यस्यार्थमाह। बुद्धीन्द्रियाणामिति। आलोचनपदार्थस्तूक्त एवेत्याह। सम्मुखेति।

कण्ठेति। न च दृश्यमानकण्ठादय एव करणानि तदतिरिक्तकर्मेन्द्रिये मानाभाव इति वाच्यम्। वचनादयः सकरणाः क्रियात्वाद्दर्शनवदित्यादिमानात्।

न च दृश्यमानकण्ठादिना सिद्धसाधनम्। सर्वाङ्गानां साम्येन विलक्षणनिमित्तत्वासम्भवे चक्षुरादिवद्विलक्षणकरणसिद्धेः।

न च शुक्रमूत्रसिङ्घाणोत्सर्गनिमित्तं तत्तदिन्द्रियमभ्युपेयम्। उपस्थेन्द्रियेणैव शुक्रमूत्रोत्सर्गसम्भवात। सिङ्घाणस्य मुखेनापि सम्भवेन त्यागस्यानियततयेन्द्रियान्तरकल्पकत्वासम्भवान्नियतस्यैव कल्पकत्वात्।

"वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम्" कर्मेन्द्रियाणाम् । कण्ठताल्वादिस्थानमिन्द्रियं वाक्, तस्या वृत्तिर्वचनम्, ज्ञानेन्द्रियाणां वृत्तयः स्पष्टाः ॥ २८ ॥

अन्तःकरणत्रयस्य वृत्तिमाह—

स्वालक्षण्यं वृत्तिस्त्रयस्य सैषा भवत्यसामान्या ।
सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥ २९ ॥

"स्वालक्षण्यम्" इति । स्वालक्षण्यं वृत्तिस्त्रयस्य । स्वमसाधारणं लक्षणं येषां तानि स्वलक्षणानि महदहङ्कारमनांसि, तेषां भावः स्वालक्षण्यम्, तच्च स्वानि स्वानि लक्षणान्येव । तद्यथा—महतो ऽध्यवसायो ऽह-

---

यद्यप्यानन्दो बुद्धिगतत्वादुपस्थव्यापारो न भवितुमर्हति तथाऽप्यानन्दपदेनानन्दहेतुस्त्रीपुंलिङ्गस्पर्शविशेष एवोक्तवृत्तिः फलं परिणामेति यावत् । मूले मात्रपदेन सविकल्पकज्ञानव्यवच्छेदः । वचनादिव्युदास इति केचित् ॥ २८ ॥

अवसरसङ्गत्यान्तःकरणस्य वृत्तिमाह । अतःकरणेति । वायवः पञ्च इति । प्राणादिरूपाः पञ्च वायुवत्सञ्चारात् वायवो न तु प्रसिद्धवायवः ।

अत्र कश्चित्प्राणाद्या वायुविशेषा एव ते चान्तःकरणवृत्त्या जीवनयोनिप्रयत्नरूपया मीयन्ते इति कृत्वा प्राणाद्याः करणवृत्तिरिस्रभेदनिर्देश इत्याह । तन्न । "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी । प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च" "न वायुक्रिये पृथगुपदेशादिति" श्रुतिसूत्राविरोधादिति । तथा चान्तःकरणपरिणामेऽपि वायुतुल्यसञ्चारविशेषाद्वायुदेवताधिष्ठितत्वाच्च वायुव्यवहारोपपत्तिरित्यर्थः ।

ङ्कारस्याभिमानः सङ्कल्पो मनसो वृत्तिर्व्यापारः ।

वृत्तिद्वैविध्यं साधारणासाधारणत्वाभ्यामाह—"सैषा भवत्यसामान्या" । असाधारणी । "सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च" । सामान्या चासौ करणवृत्तिश्चेति । त्रयाणामपि करणानां पञ्च वायवो जीवनं वृत्तिः, तद्भावे भावात् तदभावे चाभावात् । तत्र प्राणो नासाग्रहृन्नाभिपादाङ्गुष्ठवृत्तिः, अपानः कृकाटिकापृष्ठपादपायूपस्थपार्श्ववृत्तिः, समानो हृन्नाभिसर्वसन्धिवृत्तिः, उदानो हृत्कण्ठतालुमूर्धभ्रूमध्यवृत्तिः, व्यानस्त्वग्वृत्तिरिति पञ्च वायवः ॥ २९ ॥

---

सामान्यामाह । सामान्येति । एतद्वृत्तेर्विशेषमाह । त्रयाणामपीत्यादि । जीवनं वृत्तिः जीवनहेतुपरिणामाः पञ्च वायव इत्यर्थः ।

अन्ये तु इन्द्रियव्यापारलक्षणा वृत्तिरिह नास्तीति वृत्तिशब्दो जीवनपरतया व्याख्यात इत्याहुः ।

प्राणादिव्यापारसत्त्वे सर्वकरणव्यापारसत्त्वं जीवनं तदभावे तदभाव इत्याह । तद्भावे इति ।

ननु प्राणादीनां भेदकाभावात्कथं पञ्चत्वमित्यत आह । तत्रेति । कृकाटिका । कंठदेशः । पार्ष्णिः । पादस्य पृष्ठभागः । पार्श्वेति पाठान्तरम् । व्यानः सर्वशरीरग इति तु न सम्भवति । तस्य सर्वशरीरगतत्वे स्थानभेदेन तस्यैव संज्ञान्तरापत्तेः ।

ननु प्राणादीनामन्तःकरणत्रयवृत्तित्वाङ्गीकारे "प्राणोऽपानो व्यान उदानः समानोऽन इत्येतत्सर्वं प्राण एवे"ति बृहदारण्यके वृत्तिमतः प्राणस्य निर्देशानुपपत्तिः । न च प्राणशब्देनानशब्दस्य पौनरुक्तिरिति वाच्यम् । निरुपसर्गानशब्दस्य सामान्यदेहचेष्टाभिसम्बन्धिसामान्यवृत्तिपरत्वात् । अथातो दैवः परिमर एतद्वै ब्रह्म

दीप्यते यदग्निर्ज्वलत्यथैतन्म्रियते यन्न दृश्यते तस्य चन्द्रमसमेव तेजो गच्छति वायुं प्राण इति कौषीतकीये । प्राणः स वायुरिति श्रुत्यन्तरं च विरुध्येतेति चेन्न । विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च । तस्य हैतस्य हृदयस्याग्रं प्रद्योतते नैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति । सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चेत्यादिश्रुत्या विज्ञानाख्यस्य बुद्धेर्निखिलकर्महेतुत्वप्रतिपादनेन प्राणपदस्य वायुपदस्य च क्रियासाधर्म्येण विज्ञानपरत्वात् उपसंहृतसर्वकरणग्रामस्य हृदयस्य हृदयच्छिद्रस्याग्रं नाडीमुखं निर्गमनद्वारं प्रद्योतते आत्मज्योतिषाऽवभासते तेनैवात्मज्योतिःप्रद्योतेन हृदयाग्रेण आत्मनो निर्गमनं सोपाधेरेव । समानः सन्नुभौ लोकावनुसञ्चरतीति श्रुतेः । चक्षुष्टो वेत्यादि यथा कर्म ज्ञानं वा लोकप्राप्तिनिमित्तं तथा अनूत्क्रामतीत्यादौ तु जीवादेः प्राधान्याभिप्रायेणानुशब्दप्रयोगो न क्रमाभिप्रायेण देशकालभेदाभावात् । सविज्ञानो भवति । कर्मवशात्तूद्भाव्यमानेनान्तःकरणं वृत्तिविशेषाश्रितवासनात्मकविशेषविज्ञानेन सह भवति । सविज्ञानमेव विशेषविज्ञानोद्भासितमवगन्तव्यम् । अन्ववक्रामत्यनुगच्छतीति श्रुत्यर्थः ।

यत्तु ब्रह्ममीमांसाभाष्ये तथा प्राणस्य श्रेष्ठत्वाद्युद्घोषणं गुणभावोपगमश्च यत्तं प्रति वागादीनां न करणवृत्तिमात्रे प्राणेऽवकल्पते तस्मादन्यो वायुविक्रियाभ्यां प्राण इति । तन्न । अनुक्तोपालम्भात् । अन्तःकरणत्रयस्यैव प्राणादिवृत्तिभेदाङ्गीकारात् । करणपदस्येन्द्रियपरत्वे सैषेत्यादिना वृत्तिद्वैविध्यकथनानुपपत्तेः ।

अन्ये तु मुखनासिकाभ्यां निष्क्रमणप्रवेशात्प्राणः । नाभेरधस्ताद्गमनतन्मलाद्यपनयनादपानः । विष्वक् गमनवानुन्मीलना-

चतुर्विधकरणस्यास्यासाधारणीषु वृत्तिषु क्रमाक्रमौ सप्रकारावाह—

युगपच्चतुष्टयस्य तु वृत्तिः क्रमशश्च तस्य निर्दिष्टा ।
दृष्टे, तथाऽप्यदृष्टे त्रयस्य तत्पूर्विका वृत्तिः ॥ ३० ॥

युगपदिति, दृष्टे यथा—यदा सन्तमसान्धकारे विद्युत्सम्पातमात्राद्व्याघ्रमभिमुखमतिसन्निहितं पश्यति तदा खल्वस्यालोचनसङ्कल्पाभिमानाध्यवसायाः युगपदेव प्रादुर्भवन्ति, यतस्तत उत्प्लुत्य तत्स्थानादेकपदेऽपसरति ॥

---

दिचेष्टाहेतुर्व्यानः । ऊर्ध्वगमनवानुत्क्रमणवायुरुदानः । अशितपीतान्नपानादेरौदर्याग्निप्रेरणद्वारा पाकेन रसादिभावमापाद्य समीकरणात्सकलशरीरप्रदेशेषु प्रवेशनात्समानः । क्षुत्पिपासाहेतुरिति क्रियाकार्यभेदात् संज्ञाभेद इत्याहुः ॥ २९ ॥

उपजीवकत्वसङ्गत्याऽऽर्यामवतारयति । असाधारणीष्विति । दृष्टे । प्रत्यक्षविषये । युगपदेवेति । बाह्येन्द्रियमनोहङ्कारमहत्तत्त्वस्येति शेषः ।

एतेन मूलस्थचतुष्टयस्येति पदं व्याख्यातम् । जातिसाङ्कर्यस्यास्माकमदोषात् । सामग्रीसमवधाने सत्यनेकैरपीन्द्रियैरेकदैकवृत्त्युत्पादने बाधकं नास्तीति भावः ।

न चैकवृत्त्यङ्गीकारे भवन्तीत्युक्तिविरोधापत्तिरिति वाच्यम् । एकस्या एवानेकाकारतामादाय बहुवचनोपपत्तेः । अन्यथा वृत्तिरिति मूलविरोधापत्तेः । अक्रमोत्पत्तौ वृत्तेरनेकत्वे मानाभावाद्गौरवाच्च । आलोचनं निर्विकल्पकम् । तत्र हेतुमाह । यत इति । एकपदे, शीघ्रमेव ।

यत्तु साङ्कर्यस्य जातिबाधकत्वे स्वसामानाधिकरण्यस्वा-

भावसामानाधिकरण्योभयसम्बन्धेन जातिविशिष्टजातित्वावच्छेदेन स्वसमानाधिकरणाभावप्रतियोगित्वाभावनियमभङ्गप्रसङ्ग इति तन्न। तादृशनियमकल्पने प्रयोजनाभावात् । जातिसाङ्कर्यानिरूपणाच्च ।

न च जात्योः परस्परात्यन्ताभावसमानाधिकरणत्वे सति एकाधिकरणवृत्तित्वं जातिसाङ्कर्यमिति वाच्यम् । जात्योस्तथात्वस्याप्रसिद्धत्वात् ।

न च जात्योपाध्योः परस्परात्यन्ताभावसमानाधिकरणत्वे सत्येकाधिकरणवृत्तित्वम् । जातिमात्रोच्छेदापत्तेः । द्रव्यत्वादेरपि पृथिवीगुणान्यतरत्वादिकमादाय यथोक्तसाङ्कर्यसम्भवात् । परस्परत्वस्य दुर्वचत्वाच्च । तद्भिन्नत्वे सति तद्भिन्नत्वरूपपरस्परत्वनिर्वचनस्याननुगतत्वाज्जातिमात्रोच्छेदापत्तिदोषानिवृत्तेः ।

अथ स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदिका या जातिस्तत्समानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकत्वं जातिसाङ्कर्यम् । स्वपदद्वयं सङ्कीर्णत्वेनाभिमतधर्मपरम् । तच्च भूतत्वेऽपि तस्य स्वसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकमूर्त्तत्वरूपजातेरधिकरणे मनसि वर्त्तते योऽन्योन्याभावस्तत्प्रतियोगितावच्छेदकत्वात् । जातित्वोपादानाच्चान्यतरत्वादिकमादाय न जातिमात्रोच्छेदः । स्वसामानाधिकरण्ये स्वाधिकरणत्वं चरमप्रतियोगितावच्छेदकत्वं च समवायविशेषणतातिरिक्तसम्बन्धावच्छिन्नं ग्राह्यम् । अन्यथा समवायावच्छिन्नत्वस्योक्तौ प्रत्यक्षत्वानुमितित्वादिना सङ्कीर्णतया भ्रमत्वं चाक्षुषत्वादिना सङ्कीर्णतया च संशयत्वं न जातिरिति प्रामाणिकानां प्रवादो व्याहन्येत । भ्रमत्वादेः स्वमते समवायेनावृत्तेः । विशेषणताविशेषावच्छिन्नत्वोक्तौ तु भूतत्वादेरनेन हेतुना जातित्वाभावसाधने सन्दिग्धासिद्ध्यापत्तेः । तस्य जातित्ववादिना तेन सम्बन्धेन वृत्तेरनभ्युपगमात् । प्रतियोगितावच्छेदकत्वं स्व-

रूपतो व्यक्तिद्वयावृत्ति वक्तव्यम् । स्वरूपत इत्यनुपादाने भूतत्वादावनेन हेतुना जातित्वाभावसाधने आकाशघटान्यतरत्वविशिष्टद्रव्यत्वादौ व्यभिचारापत्तेः । तस्य पृथिवीत्वमूर्त्तत्वादिरूपतादृशजातिसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकत्वात् । विशिष्टस्यानतिरिक्ततया तस्य जातित्वाभावविरहात् । व्यक्तिद्वयावृत्तीत्यनुपादाने द्रव्यत्वादेरपि पृथिवीत्वादिना सङ्कीर्णतापत्तेः । एकत्र द्वयमिति न्यायेन स्वरूपतो द्रव्यत्वजलत्वोभयावच्छिन्नान्योन्याभावस्य पृथिवीत्वादौ सत्त्वात् ।

यद्वा स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदिका या जातिस्तत्समानाधिकरणात्यन्ताभावप्रतियोगित्वम् । प्रतियोगित्वं च स्वरूपतो व्यक्तिद्वयावृत्त्यधिकरणतावच्छिन्नत्वेन समवायावच्छिन्नत्वेन च विशेषणीयम्, नातो वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नाभावं विशेषणतादिव्यधिकरणसम्बन्धावच्छिन्नत्वेनाभावं चादाय द्रव्यत्वादेः पृथिवीत्वादिना साङ्कर्यापत्तिः । व्यक्तिद्वयावृत्तित्वं च द्वित्वपर्याप्त्यधिकरणावृत्तित्वं शेषं पूर्ववदिति चेन्न । भूतत्वादावनेन हेतुना जातित्वाभावसाधने स्वत्वस्यानुगतस्याभावात् । भूतत्वादेरुपादाने जलत्वादौ व्यभिचारापत्तेः । तस्य भूतत्वसामानाधिकरण्यभूतत्वसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकत्वोभयवत्पृथिवीत्वादिसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकत्वात् । तादृशोभयवत्पृथिवीत्वादिसमानाधिकरणात्यन्ताभावप्रतियोगित्वाद् वा ।

न च तादृशोभयवज्जातिसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकत्वे सति तादृशोभयाभाववज्जातिसमानाधिकरणात्यन्ताभावप्रतियोगित्वे सति वा भूतत्वादिरेव हेतुरिति वाच्यम् । तथा सति सत्यन्तदलवैयर्थ्यापत्तेः ।

न च तावन्मात्रमेवास्त्विति वाच्यम् । साङ्कर्यकथनस्योन्मत्त-

मलापत्त्वापत्तेः । स्वपदद्वयस्य जातिपरत्वे उपाधिपरत्वे वोक्तदोषापत्तेः । अभिमतधर्मपरत्वस्याप्युक्तविकल्पग्रासात् । किञ्चाभिमतघटकभ्रमरूपाभिमानस्य विशेषणत्वे यत्र न तदभिमानस्तत्राव्याप्तिः।

न च सर्वत्र नियमेनाभिमानकल्पनान्न दोष इति वाच्यम् । विदुषामसम्भवात् । उपलक्षणत्वे उपलक्ष्यतावच्छेदकाज्ञाने लक्षणस्य दुर्ज्ञेयत्वापत्तिः । तज्ज्ञाने च तेनैव निर्वाहे तस्य वैयर्थ्यापत्तिरिति।

यत्तु सर्वाः जातीः प्रातिस्विकरूपेणोपादाय तत्तज्जातिमत्तदन्यवृत्तित्वे सति तत्तज्जातिमन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वं तत्तज्जात्या साङ्कर्यं वक्तव्यम् । अत्र वृत्तित्वमवच्छेदकत्वं च समवायविशेषणतातिरिक्तसम्बन्धावच्छिन्नं ग्राह्यम् । तच्च सत्ताद्रव्यत्वस्थले पृथिवीसामान्यान्यतरत्वादौ पृथिवीसामान्यान्यतरमिति प्रमानिरूपितविशेष्यताव्यक्तौ च प्रसिद्धम् । इत्थं च भूतत्वादौ मूर्त्ततदन्यवृत्तित्वे सति मूर्त्तनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वादिना जातित्वाभावः साधनीयः । पृथिवीगगनान्यतरत्वादिकं पृथिवीगगनान्यतरमिति प्रमानिरूपितविशेष्यताव्यक्तिश्च दृष्टान्तः प्रतियोगितावच्छेदकत्वं च स्वरूपतो व्यक्तिद्वयावृत्ति वक्तव्यम् । तेन मूर्त्तत्वादौ उक्तक्रमेण जातित्वाभावसाधने पृथिव्यन्यत्वविशिष्टद्रव्यत्वादौ न व्यभिचारस्तस्यापि पृथिव्यात्मकमूर्त्तनिष्ठान्योन्याभावीयव्यक्तिद्वयावृत्तिप्रतियोगितावच्छेदकतावत्त्वात् । विशिष्टस्यानतिरिक्तत्वेन च तत्र जातित्वाभावविरहात् । न वा द्रव्यत्वादावपि पृथिवीत्वादिना सङ्कीर्णतापत्तिः । एकत्र द्वयमिति न्यायेन स्वरूपतो द्रव्यत्वजलत्वोभयाद्यवच्छिन्नान्योन्याभावस्य पृथिव्यादौ सत्त्वादिति ।

तन्न । सर्वजातीनां प्रातिस्विकरूपेण दुर्ज्ञेयतया लक्षणस्य दुर्ज्ञेयत्वापत्तेरननुगतत्वाच्च । किञ्च भूतत्वादावुक्तक्रमेण जातित्वाभावसाधने पराभ्युपगताखण्डोपाधित्वेन पक्षत्वे अप्रसिद्धिः ।

स्वमतसिद्धात्मान्यत्वविशिष्टविशेषगुणवत्त्वरूपभूतत्वेन पक्षत्वे सिद्धसाधनम् । स्वरूपासिद्धिश्च । विशेषगुणस्य प्रतिव्यक्ति भिन्नतया कस्यापि मूर्त्ततदितरवृत्तित्वविरहाज्जात्यखण्डोपाध्यतिरिक्तस्य पदार्थस्य स्वरूपतोऽवच्छेदकत्वानभ्युपगमेन स्वरूपतोऽन्योन्याभावप्रतियोगितावच्छेदकत्वविरहाच्च । अखण्डोपाधित्वं च विशेषणताविशेषेण वर्त्तमानसमवायेतरभावत्त्वम् । भूतपदप्रवृत्तिनिमित्तत्वेन पक्षत्वे आत्मान्यत्वे इत्याद्युक्तविशेषगुणवत्त्वस्यैव स्वमते भूतपदप्रवृत्तिनिमित्तत्वात्स्वरूपासिद्धिर्दुर्वारैव । एवं भ्रमत्वसंशयत्वाद्यपि बोध्यम् ।

अन्ये तु भूतत्वं पृथिव्यादिचतुष्टयवृत्तिजातिरेव । द्रव्यनिष्ठविलक्षणसंयोगलक्षणासमवायिकारणजन्यतावच्छेदकत्वेन तत्सिद्धेः ।

न च जन्यद्रव्यत्वमेव तथेति वाच्यम् । जन्यत्वस्य निवेशे गौरवात् कालिकसम्बन्धेन घटत्वादिकमादाय विनिगमनाविरहाच्च । द्रव्यवति द्रव्यान्तरानुत्पत्त्या समवायसम्बन्धेन द्रव्योत्पत्तिं प्रति समवायसम्बन्धेन द्रव्यस्य प्रतिबन्धकत्वावश्यकतया तत्प्रतिबध्यतावच्छेदकत्वेन द्रव्याभावकार्यतावच्छेदकत्वेन च तत्सिद्धेश्च ।

न च मूर्त्तत्वमेव तदुभयकार्यतावच्छेदकमखण्डागुरुव्याप्यधर्मेण कार्यत्वसम्भवे व्यापकधर्मेण कार्यत्वकल्पनाविरहेण द्रव्यत्वमादाय विनिगमनाभावादिति वाच्यम् । भूतत्वस्याकार्यानन्तमनोव्यावृत्तत्वेन तस्यैव तदुभयकार्यतावच्छेदकत्वात् । अल्पतरनियताजनकसाधारणेन क्लृप्तेनाक्लृप्तेन वा अगुरुधर्मेण कारणत्वे सुवचे बहुतरतत्साधारणधर्मेण तत्कारणत्वकल्पनानुदयवदल्पतराकार्यसाधारणेन क्लृप्तेनावल्कृप्तेन वा लघुधर्मेण कार्यत्वे सुवचे बहुतराकार्यसाधारणधर्मेण कार्यत्वस्यापि युक्तिसाम्येनाकल्पनात् ।

यत्तु पदार्थखण्डने रघुनाथभट्टाचार्याः । मूर्त्तत्वं स्पन्दसमवायिकारणतावच्छेदको जातिविशेषो भूतत्वं तदेवेति ।

क्रमशश्च—यदा मन्दालोके प्रथमन्तावद्वस्तुमात्रं सम्मुग्धमालोचयति, अथ प्रणिहितमनाः कर्णान्ताकृष्टसशरसिञ्जिनीमण्डलीकृतकोदण्डः प्रचण्डतरः पाटच्चरोऽयमिति निश्चिनोति, अथ च माम्प्रत्येतीत्यभिमन्यते, अथाध्यवस्यत्यपसरामीतः स्थानादिति ॥

परोक्षे त्वन्तःकरणत्रयस्य बाह्येन्द्रियवर्जं वृत्तिरित्याह—अदृष्टे त्रयस्य तत्पूर्विका वृत्तिः इति । अन्तः-

तन्न । मनोऽपि चासमवेतं भूतमिति त्वदुक्त्या नित्यसाधारणमूर्त्तत्वस्य द्रव्यनिष्ठविलक्षणेत्याद्युक्तासमवायिकारणजन्यतावच्छेदकत्वानुपपत्तेः । अन्यथा तुल्ययुक्त्या सामान्यतो द्रव्यत्वेन जन्यसत्त्वं प्रति विशिष्य तत्तद्व्यक्तिसमवेतसत्त्वं प्रति तत्तद्व्यक्तित्वेन वा समवायिकारणस्य कारणत्वापत्त्या मूर्त्तत्वेन कारणत्वे मानाभावापत्तिः । नोदनस्य वेगजन्यकर्मणि वेगस्य नोदनजन्ये व्यभिचारेण विजातीयप्रयत्नवदात्मसंयोगस्यैव कर्मासमवायिकारणत्वावश्यकत्वे तदभावादेव विभुनि कर्मोत्पादासम्भवादित्याहुः ।

वस्तुतस्तु समवायजात्यादिखण्डनेन साङ्कर्यस्यापि खण्डितत्वादिति ध्येयम् ।

क्रममाह । क्रमशश्चेति । आलोचयति । किञ्चिदिदमिति जानाति ।

अथ । आलोचनानन्तरम् । पाटच्चरोऽयमिति निश्चिनोति । तं विशिनष्टि । कर्णान्तेति । कर्णान्तं कर्णनिकटमाकृष्ट आनीतो यः शरस्तेन सह सिञ्जिनी ज्या धनुर्गुणस्तेन मण्डलीकृतः । दिक्षु व्यापी, कोदण्डो धनुर्येन तादृश इत्यर्थः । अध्यवस्यतीत्यस्यार्थमाह । अपसरामीति । पलाये इत्यर्थः । परोक्षविषये इन्द्रियावृत्तेराह । इन्द्रियावर्जमिति । विशेषान्तरमाह ।

करणत्रयस्य युगपत्क्रमेण वृत्तिर्दृष्टपूर्विकेति । अनुमानागमस्मृतयो हि परोक्षे ऽर्थे दर्शनपूर्वाः प्रवर्तन्ते नान्यथा । यथा दृष्टे तथा ऽदृष्टे ऽपीति योजना ॥ ३० ॥

स्यादेतत्—चतुर्णां त्रयाणां वा वृत्तयो न तावन्मात्राधीनाः, तेषां सदातनत्वेन वृत्तीनां सदोत्पादप्रसङ्गात्, आकस्मिकत्वे तु वृत्तिसङ्करप्रसङ्गो नियमहेतोरभावादित्यत आह—

स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहेतुकां वृत्तिम् ।
पुरुषार्थ एव हेतुर्न केनचित्कार्यते करणम् ॥ ३१ ॥

स्वाम् इति । करणानीति शेषः । यथा हि बहवः पुरुषाः शाक्तीकयाष्टीकधानुष्ककार्पाणिकाः कृतसङ्के-

दृष्टपूर्विकेतीति । अनुमाने व्याप्तिज्ञानार्थं प्रत्यक्षापेक्षा शब्दे शक्त्यनुमानापेक्षया प्रत्यक्षापेक्षेति भावः । परमाणुराकाशसंयोगी गुरुत्वादित्यादावपि पतनादिप्रत्यक्षस्य परम्परयोपयोगित्वं बोध्यम् । यथेत्यध्याहृत्य मूलं योजयति । यथेति ॥ ३० ॥

अवसरसङ्गत्याऽऽर्यामवतारयति । स्यादेतदिति । पुरुषस्य कूटस्थत्वेनेश्वरस्य प्रतिषिद्धत्वेन कूटस्थत्वेन वा अप्रवर्त्तकत्वात्तावन्मात्रस्य प्रवर्त्तकत्वे त्वाह । न तावन्मात्रेति । तावन्मात्राधीनत्वे दोषान्निर्हेतुकैवाऽस्त्वित्यत आह । आकस्मिकत्व इति । सङ्करः । मनोवृत्तिरहङ्कारस्याहङ्कारवृत्तिर्मनस इत्यादि । यौगपद्यपक्षे आकूतरूपोपाधिहेतुसत्त्वेन सदोत्पादसङ्करौ दूरीकुर्वन्नाकूतपदसूचितं दृष्टान्तमाह । यथा हीति । शक्तिर्नामास्त्रविशेषस्तयैव विहरतीति शाक्तीकः । एवमुत्तरत्रापि । कृपाणः खड्गः । कृतसङ्केताः सर्वैरस्माभिः परोऽयं शत्रुर्घातनीय इति । युग्माभिप्राय-

ताः परावस्कन्दनाय प्रवृत्ताः, तत्रान्यतमस्याकूतमवगम्यान्यतमः प्रवर्तते, प्रवर्तमानस्तु शाक्तीकः शक्तिमेवादत्ते नतु यष्ट्यादिकम्, एवं याष्टीको ऽपि यष्टिमेव न शक्त्यादिकम् । तथा ऽन्यतमस्य करणस्याकूतात् स्वकार्यकरणाभिमुख्यादन्यतमं करणं प्रवर्तते । तत्प्रवृत्तेश्च हेतुत्वान्न वृत्तिसङ्करप्रसङ्ग इत्युक्तम्—स्वां स्वां प्रतिपद्यन्ते इति ॥

स्यादेतत्–याष्टीकादयश्चेतनत्वात् परस्पराकूतमवगम्य प्रवर्तन्त इति युक्तम् । करणानि त्वचेतनानि, तस्मान्नैवं प्रवर्तितुमुत्सहन्ते । तेनैषामधिष्ठात्रा करणानां स्वरूपसामर्थ्योपयोगाभिज्ञेन भवितव्यमित्यत आह–"पुरुषार्थ एव हेतुः, न केनचित्कार्यते करणम्"इति । भोगाप-

रूपाकूतस्याचेतने बाधात् प्रवृत्त्युन्मुखत्वपरत्वमाह । स्वकार्येति । तत्प्रवृत्तेः । अन्यतमप्रवृत्तेः । सङ्करेत्यनेन सदोत्पादोऽपि लक्ष्यते ।

न चान्यतमकार्योन्मुखत्वेन पूर्वोक्तदोषाभावेऽपि क्रमयौगपद्यसङ्करोऽपरिहार्य एवेति वाच्यम् । अनुभवानुसारेण यौगपद्यं प्रति संशयादेः प्रतिबन्धकत्वकल्पनात् ।

करणानां स्वरूपाभिज्ञकर्तृप्रेर्यत्वनियम इत्यभिप्रायेणाशङ्कते । स्यादेतदिति । करणस्य कर्तृप्रेर्यत्वनियमे कर्तृत्वमुपादानगोचरज्ञानचिकीर्षाकृतिमत्त्वं तत्र ज्ञानादेः कार्यत्वेन कर्त्रपेक्षायामात्माश्रयाद्यापत्तेः । कर्तृव्यापारस्य च ज्ञानादेः करणाधीनत्वेन करणान्तरापेक्षायां करणानवस्थापत्तेश्च । सुषुप्तास्त्वयमेव बुद्धेरुत्थानदर्शनाच्च । पुरुषार्थप्रयोजकादृष्टाभिव्यक्त्या स्वयमेव करणं प्रवर्तते इत्यवश्यमङ्गीकार्यमित्यभिप्रायेण समाधत्ते । भोगापवर्गलक्षण इति । पुरुषार्थस्य प्रवृत्तेः प्रागसत्त्वादाह । अनागतावस्थ इति । एवकारव्यावर्त्यमाह । कृतमत्रेति । कृतं व्यर्थमित्यर्थः ।

वर्गलक्षणः पुरुषार्थ एवानागतावस्थः प्रवर्तयति करणानि, कृतमत्र तत्स्वरूपाभिज्ञेन कर्त्रा। एतच्च "वत्सविवृद्धिनिमित्तम्" (कारिका ५७) इत्यत्रोपपादयिष्यते ॥ ३१ ॥

"न केनचित् कार्यते करणम्" इत्युक्तम्। तत्र करणं विभजते—

**करणं त्रयोदशविधम्, तदाहरणधारणप्रकाशकरम्।**
**कार्यं च तस्य दशधा,ऽऽहार्यं धार्यं प्रकाश्यं च ॥ ३२ ॥**

करणं त्रयोदशविधम् इति। इन्द्रियाण्येकादश बुद्धिरहङ्कारश्चेति त्रयोदशप्रकारं करणम्। कारकविशेषः करणम्। न च व्यापारावेशं विना कारक-

मूले न केन चिच्चेतनेन कार्यते प्रेर्यते करणमित्यर्थः। तेनादृष्टप्रेर्यत्वेऽपि करणस्य न क्षतिरिति। उक्तनियमे स्वयं व्यभिचारस्याप्रदर्शितत्वादाह व्याख्यायाम् एतच्चेति।

अन्ये तु। पुरुषार्थ एव स्वविषयकेच्छाद्वारा करणव्यापारहेतुरित्यर्थः। तत्रेच्छावान् जीवः कर्ताऽऽवश्यक ईश्वरस्तु न तदपेक्षायां मानाभावादित्याहुः तन्न। जीवस्यापि कर्तृत्वाङ्गीकारेऽपसिद्धान्तापत्तेः। कूटस्थहान्यापत्तेरीश्वरानङ्गीकारे श्रुतिविरोधापत्तेरुक्तत्वाच्च ॥ ३१ ॥

अवसरसङ्गतिं सूचयन् बाह्यान्तर्मिलित्वा कियन्ति करणानीत्याकाङ्क्षयाऽऽर्यामवतारयति। न केन चिदिति। तत्रेति। अवच्छिन्नत्वं सप्तम्यर्थस्तथा च प्रेर्यत्वाभावावच्छिन्नं करणं विभजते इत्यर्थः। क्वचित्तत्करणमिति पाठस्तु सुगम एव।

विधपदस्य वैयर्थ्यमाशङ्क्याह। त्रयोदशप्रकारमिति। तथा च व्यक्तिभेदेनानन्त्यप्रतिपादनान्न वैयर्थ्यमित्यर्थः। व्यापारवदसाधारणं कारणं करणमिति मतनिरासायाह। कारकविशेष

इति । यथा चैतत्तथोक्तं पुरस्तात् ।

सामान्यलक्षणं विना विशेषलक्षणासम्भवादाह । न चेति । न व्यापारं विना कारकत्वमित्युक्ते व्यापाररूपक्रियानिमित्तत्वं कारकत्वमिति कारकसामान्यलक्षणं स्यात्तच्च न सम्भवति क्रियां प्रति निमित्तत्वं यदि जनकत्वं तदा विप्राय गां ददातीत्यादाव-व्याप्तेः । यदि प्रयोजकत्वं तदा सम्प्रदानादेरनुमतिप्रकाशनद्वारेव तण्डुलादिसम्पादनद्वारा सम्बन्धिनोऽपि पाकादिक्रियानिमित्तत्वेन चैत्रस्य पचतीत्यादौ चैत्रादावतिव्याप्तेरितः क्रियान्वयित्वलाभायावेशपदम् ।

न चैवमपि तण्डुलं पचतीत्यादौ कर्माद्यव्याप्तिः । तण्डुलादेः पाकाद्यन्वयाभावात् द्वितीयार्थधात्वर्थयोरेवान्वयादिति वाच्यम् । कर्तृत्वकर्मत्वादिषट्कान्यतमविभक्त्यर्थद्वारा क्रियान्वयित्वस्य विवक्षितत्वात् । तण्डुलं पचति चैत्रः पच्यते तण्डुल इत्यादौ द्वितीयार्थेन कर्मत्वेनाख्यातार्थेन कर्तृत्वेन कर्मत्वेन च तण्डुलादेः धात्वर्थपाकक्रियायामन्वयान्नाव्याप्तिः । चैत्रस्य पचतीत्यादौ चैत्रसम्बन्धित्वं पाके नान्वेति षष्ठ्याः नामार्थाकाङ्क्षतया क्रियाया अपि कर्मादिकारकसाकाङ्क्षतया परस्पराकाङ्क्षाविरहात् । किं तु तण्डुलमित्रादिपदाध्याहारेण चैत्रस्य तण्डुलं पचतीत्येवान्वयबोधः । ओदनस्य भोक्ता चैत्रस्य पाक इत्यादौ कर्मत्वकर्तृत्वार्थकत्वेन कारकविभक्तिरेव कर्तृकर्मणोः कृतीति तद्विधानात् । तण्डुलः पपचतीत्यत्र न कर्मत्वसम्बन्धेनान्वयः कर्मत्वस्य द्वितीयाविभक्त्युपस्थापितत्वाभावात् । स्तोकं पचतीत्यादौ द्वितीयायाः कर्मत्वानभिधायकत्वेनालक्ष्यत्वान्नाव्याप्तिः । अभिधायकत्वे कर्मणीत्यादिनैव द्वितीयासिद्धेः । क्रियाविशेषणस्य कर्मत्वं नपुंसकत्वं चेति वार्त्तिकवैयर्थ्यापत्तेः । द्वितीयाया अभेदार्थकत्वाद्वा नाव्याप्तिः ।

न च पचति चैत्र इत्यादौ वर्त्तमानकालीनो यः पाकानुकूल-

कृत्यभावस्तदन्वयिनश्चैत्रस्याकारकत्वापत्तिरिति वाच्यम् । प्रथमाया कर्तृत्वानाभिधायकत्वेन चैत्रस्य कारकत्वाभावात् । अत एव दक्षिणेन हिमवंतं,जटाभिस्तापसः,पाकाय स्थाली,धूमाद्वह्निः,चर्मणि द्वीपिनं हन्तीत्यादावुपपदद्वितीयादिविभक्तिस्थलेऽपि नाव्याप्तिः ।

न च न पचतीत्यादौ वर्तमानत्वादेर्धात्वर्थ एवान्वयो भवत्विति वाच्यम् । वर्तमानपाककृतिकालेऽपि तदभावस्य पूर्वकाल सत्त्वान्न पचतीति प्रयोगापत्तेः ।

न चाभावेऽपि वर्त्तमानत्वमन्वेति । कृतौ तदन्वयस्य वैयर्थ्यापत्तेः । निष्पन्नं चिरभाविनं वा ओदनं न पचतीत्यादौ तादृशओदनकर्मकपाकानुकूलकृत्यप्रसिद्ध्या तत्रानन्वयप्रसङ्गाच्च । तस्मान्नञर्थे वर्त्तमानत्वान्वयः । एवं नापाक्षीन्न पक्ष्यतीत्यादौ चातीतत्वमनागतत्वं च तादृशकृत्यभावे भासते न तु कृतौ पाकानुकूलातीतकृतेस्तादृशानागतकृतेश्च सत्त्वेऽपि वर्त्तमानकाले तदभावस्य सत्त्वान्नापाक्षीदित्यादिप्रयोगोपपत्तेः । भाविनं नापाक्षीदित्यादौ तु भाविकर्मकपाकानुकूलातीतकृतेः निष्पन्नं न पक्ष्यतीत्यादौ निष्पन्नकर्मकभविष्यत्कृतेश्चाप्रसिद्ध्या नञर्थानन्वयप्रसङ्गाच्च । अतीतत्वमनागतत्वं चातीतानागतकालावच्छिन्नत्वं न तु वर्त्तमानध्वंसप्रागभावप्रतियोगित्वम्, अनन्ताभावे तदसम्भवात् । ध्वंसप्रागभावयोरन्त्यसम्भवेऽपि तद्बोधे प्रयोगनियमानिर्वाहात् । अन्यथा ऽनागतपाकयोर्वर्त्तमानयोर्वा तादृशकृतेः सत्त्वे एव न पक्ष्यतीति स्यात् । तदैव तादृशकृतिध्वंसस्य प्रागभावप्रतियोगित्वात् । एवमतीतादिकृतिसत्त्वे एव नापाक्षीदिति स्यात्तदैव तादृशकृतिप्रागभावस्य वर्त्तमानध्वंसप्रतियोगित्वात् । इत्थं च नापाक्षीदित्यादावतीतकालावच्छिन्नतादृशकृत्यभाववानिति न पक्ष्यतीत्यादौ चानागतकालावच्छिन्नतादृशकृत्यभाववानिति धीः । वर्त्तमानत्वं च तत्तत्प्रयोगाधिकरणकालत्वम् ।

वर्त्तमानसामीप्यमपि क्वचिल्लडर्थः । वर्त्तमानसामीप्ये वर्त्तमानवद्वेति पाणिनिसूत्रात् । वर्त्तमानसामीप्यं चातीतानागतसाधारणं तच्च भविष्यद्वृत्तिवर्त्तमानध्वंसोत्पत्तिक्षणोत्पत्तिकक्रियादिवृत्तित्वरूपम्, अतीतवृत्तिवर्त्तमानक्षणोत्पत्तिकध्वंसप्रतियोगिक्रियादिवृत्तित्वरूपम् । कदा यास्यसीत्युक्त एष गच्छामीत्यादावाद्यम् । कदा आगतोऽसीति पृष्टे एष आगच्छामीत्यादावन्त्यं प्रतीयते । तदपि वर्त्तमानत्वादिवत्स्वकृतावेवान्वेति । एवं च निरुक्तवर्त्तमानसामीप्याश्रयगमनानुकूलकृतिमानहमित्याकारकोऽन्वयबोधः । लिटः परोक्षत्वे सत्यनद्यतनातीतत्वमर्थः । अद्यतनं च गतनिशायाः प्रहरस्तथाऽऽगामिन्याः, दिनस्य यामचतुष्टयं च । एवमत्यन्तापह्नवेऽपि लिट् साधुः। अत्यन्तापह्नवे च लिड् वक्तव्य इति वार्त्तिकात् । यथा कलिङ्गो दृष्टोऽसि त्वयेति केनचित्पृष्टे स च तमपह्नोतुमाह नाहङ्कलिङ्गं जगामेति तदपह्नवश्च तदप्रतिपत्त्यनुकूलशब्दः । तस्य चात्यन्तिकत्वं प्रश्नविषयविपरीतमनुक्त्वा तदुपपादकविपरीतकथनम् । प्रकृते दर्शनविषयतया दृष्टोऽस्तीति प्रश्नविषयः । तद्विपरीतं न दृष्टोऽस्तीत्यनुक्त्वा तदुपपादकस्यातीतकलिङ्गगमनस्याभावकथनम् ।

इदं तु बोध्यम् । अनद्यतनत्वं परोक्षत्वं चात्यन्तापह्नवश्च न तत्तत्प्रत्ययशक्यः । न वा तत्तत्पदजन्यशाब्दधीविषयः किं त्वहमादिपदे उच्चारयितृत्वादिवत्स्वरूपसदेव तत्तत्प्रत्ययाधीनधीनियामकम् । शाब्दधीबोधविषयश्चातीतत्वमेव । अन्यथा अत्यन्तापह्नवस्य शाब्दधीविषयत्वेऽपह्नवत्वव्याघातादिति दिक् ।

क्रियातिपत्तौ लृङः भविष्यत्त्वं हेतुहेतुमद्भावोऽतिपत्तिश्चार्थः । लिङ्निमित्ते लृङ् क्रियातिपत्ताविति पाणिनिसूत्रस्वरसात् । लिङ्निमित्ते हेतुहेतुमद्भावे स च क्रियान्वयिभविष्यत्त्वं च कृदर्थकाख्यातस्थले कृतावाश्रयार्थकस्थले च धात्वर्थेऽन्वेति । क्रियाया अनिष्पत्तिश्चातिक्रमेण पतनं सम्भावनं यद्देशे यत्काले च क्रियायाः

सम्भवस्तस्मिन्देशे काले च सम्भावनं प्रसञ्जनमिति यावत् ।

तच्च सम्भावनमुत्कटकोटिकसंशयः । बाधावतारे चाहार्यज्ञानं तत्र धात्वर्थः । प्रकारतया प्रथमान्तार्थश्च विषयतयाऽन्वेति । यथा हि यदि सहस्रवर्षमजीविष्यंस्तदा पुत्रशतमजनिष्यं यदिशब्दस्यानिर्धारणं कालविशेषश्चार्थः । स च क्रियान्वयी । द्वितीयायाश्चात्यन्तसंयोगो व्यापकत्वं निरूढलक्षणयाऽर्थः । तथा निर्धारितकालविशेषवृत्तिभविष्यद्धेतुभूतसहस्रवर्षव्यापकजीवनप्रकारकसम्भावनाविषयोऽहं तत्कालीनभविष्यत्कार्यीभूतशतपुत्रकर्मकोत्पत्त्यनुकूलव्यापारप्रकारकसम्भावनाविषयः । अत्र च वर्षसहस्रजीवित्वस्य स्वस्मिन् बाधावतारे प्रसक्तिरेव सम्भावनं तदनवतारे संशय एव तदिति । एवं भूतेऽप्युक्तरूपार्थे लृङ् यथा यदि शिलाः कोमला अभविष्यन्तदा क्रोष्टुभिरेवाभक्षयिष्यन् । अत्र यदिशब्दस्यासत्त्वं कालविशेषश्चार्थः । लृङश्चातीतत्वं हेतुहेतुमद्भावः प्रसञ्जनं चार्थः । असत्त्वं चाभावप्रतियोगित्वम् । तच्च धात्वर्थेऽन्वेति । अभावे च प्रथमान्तार्थोऽधिकरणत्वेनान्वेति । एवं च शिलाः स्ववृत्त्यभावप्रतियोगिहेतुभूतातीतकोमलीभवनप्रकारकप्रसञ्जनविषयास्तत्कालीनक्रोष्टुवृत्त्यतीतकृतिजन्यकार्यीभूतभक्षणकर्मत्वेन प्रसञ्जिताः । एवं यद्ययं निर्वह्निः स्यात्तदा निर्धूमः स्यादिति तर्के यदिशब्दस्यानिर्द्धारणं कालविशेषश्चार्थः । लिङः वर्त्तमानत्वं प्रसञ्जनं चार्थः । तथा च पर्वतो ऽनिर्द्धारितकालविशेषवृत्तिवर्त्तमाननिर्वह्नित्वसत्ताप्रसञ्जनविषयस्तत्कालीनवर्त्तमाननिर्धूमसत्ताप्रसञ्जनविषय इत्यन्वयबोधः ।

परे तु क्रियातिपत्तिस्थले आहार्य एव शाब्दबोधः । यदि च वर्षसहस्रमजीविष्यं तदा पुत्रशतमजनिष्यमित्यादावयोग्यतानिश्चयसत्त्वेऽप्यनिर्धारितकालविशेषवृत्तिभविष्यद्धेतुभूतवर्षसहस्रजीवित्ववानहं तत्कालीनभविष्यत्कार्यीभूतपुत्रशतोत्पत्त्यनुकूलव्यापार-

वानहमित्यन्वयधीराहार्यरूपा एव । यदि शिलाः कोमला अभविष्यन् यद्ययं निर्वह्निः स्यादित्यादौ च तर्के आहार्य एव तादृशो बोधः ।

न चैवं वह्निना सिञ्चतीत्यादावयोग्यतानिश्चयसत्त्वे आहार्यबोधः स्यादिष्टत्वात् ।

न च भवेद्वा, यद्यादिपदयुक्तदशलिङादिपदसमभिव्याहार एव तन्नियामकः । यदि च दोषविशेषाद्यजन्यानाहार्यतज्जन्यत्वापेक्षया तच्छाब्दत्वादेर्लघुत्वात्तदवच्छिन्नं प्रत्येवायोग्यतानिश्चयादेः प्रतिबन्धकत्वस्वीकाराञ्चाहार्यशाब्दबोध इत्युपेयते तदा क्रियानिष्पत्तौ तर्के च पदार्थोपस्थितिमात्रं न शाब्दधीः । अनन्तरं तादृशोपस्थितिलाघवप्रतिसन्धानेन मानस एव तादृशतर्कात्मको बोधः । यथा शब्दो नित्यो न वेति विप्रतिपत्तिवाक्यात्पदार्थोपस्थितौ मानस एव संशयः । लिङ्निमित्ते लृङ् क्रियानिष्पत्ताविन्यनुशासनं तु तादृशापत्तितात्पर्यस्थले लृङ् साधुरित्येवमित्याहुः ।

अन्ये तु । क्रियातिपत्तिः प्रसक्तक्रियाया अभावः । लक्षणया धातोस्तादृशक्रियाया अभावबोधे यदिशब्दस्तात्पर्यग्राहकः । हेतुहेतुमद्भावत्वं, यथायथमतीतत्वमनागतत्वं च लृङर्थः । तच्चाभावान्वयि । एवं च यदि शिला इत्यादावतीतकालसम्बन्धिहेतुभूतकोमलीभवनाभाववत्यः शिलाः क्रोष्टुवृत्तिकृतिजन्यातीतकालसम्बन्धिजन्यभूतलक्षणकर्मत्वाभाववत्य इति बोधः । एवं कोमलीभवनाभावहेतुकः शिलायाः क्रोष्टुकर्तृकभक्षणाभाव इति पर्यवसितोऽर्थः । एवं वर्षसहस्रमित्यादावनागतकालसम्बन्धित्वविषयकः । तथा चानागतकालसम्बन्धिवर्षसहस्रीयजीवित्वाभावहेतुको मम पुत्रशतोत्पादकत्वाभाव इति पर्यवसितोऽर्थः । यद्ययं निर्वह्निः स्यादित्यादौ तु पूर्वोक्त एवार्थो ग्राह्यः । निर्वह्नित्वसत्त्वाभावस्य वह्निपर्यवसितस्यानुमित्युत्प-

त्वमिति व्यापारावेशमाह—तदाहरणधारणप्रकाश-करम् इति । यथायथम् । तत्र कर्मेन्द्रियाणि वागादीन्याहरन्ति, यथास्वमुपाददते, स्वव्यापारेण व्याप्नुवन्तीति यावत् । बुद्ध्यहङ्कारमनांसि तु स्ववृत्त्या प्राणादिलक्षणया धारयन्ति । बुद्धीन्द्रियाणि प्रकाशयन्ति ।

आहरणधारणादिक्रियाणां सकर्मकतया किं कर्म कतिविधं चेत्यत आह—कार्यं च तस्य इति । कार्यं तस्य त्रयोदशविधस्य करणस्य दशधा, आहा-

त्तिपाकाले पक्षे अनिर्णीतत्वेन तत्कालावनीर्णतर्कबोधकप्रकृतवाक्यस्य तत्काले बाधप्रसङ्गादिति ।

तच्चिन्त्यम् । चिन्ताबीजं तु आपत्तिवाक्यादिवद् बाधनिश्चयकाले असम्भावनाविषयबोधस्य सर्वानुभवसिद्धत्वादिति । यदि च त्वं गच्छ इत्यादिशब्दोऽपि याञ्चा तदा अन्यकर्तृकत्वेनेच्छाविषयक्रियाबोधकः शब्द एव याञ्चा बोध्या । लभेयं भिक्षामित्यादौ तु निरुक्तयाञ्चायाः स्वविषयीभूतदानप्रयुक्तत्वसम्बन्धेन लाभेऽन्वयः भिक्षापदं च याञ्चाविषयपरम् । एवं च भिक्षाकर्मनिरुक्तयाञ्चाविषयप्रयुक्तलाभाश्रयत्ववानित्यन्वयबोधः ।

केचित्तु लभेयं भिक्षामित्यादौ विधेरिच्छाविषयत्वमेवार्थः । भिक्षापदस्य याचनीयार्थकत्वात् । तादृशेच्छाया याञ्चापरत्वम् । एवं च भिक्षाकर्मकेच्छाविषयलाभाश्रयतावानहमित्येवान्वयबोधः । एवं च निरुक्तयाञ्चाया आज्ञादिसाधारणत्वात विजातीयेच्छैव सर्वत्र याञ्चापदार्थः । एवमाज्ञानुज्ञासंज्ञादिरपि विजातीयेच्छैव । समिधेत्यादौ समिदादिज्ञानविषयसमित्कर्मकाहरणानुकूलकृतिमाँस्त्वमित्यन्वयबोध इत्यलं प्रसङ्गागतेन ।

प्रकृतमनुसरामः । आहरन्तीति । शब्दस्य नित्यत्वपक्षे इदम् । अनित्यत्वे तु वागिन्द्रियं शब्दं जनयतीत्यर्थो बोध्यः ।

र्यं धार्यं प्रकाश्यं च । आहार्यं व्याप्यम् । कर्मेन्द्रियाणां वचनादानविहरणोत्सर्गानन्दाः यथायथं व्याप्याः, ते च यथायथं दिव्यादिव्यतया दश—इत्याहार्यं दशधा । एवं धार्यमप्यन्तःकरणत्रयस्य प्राणादिलक्षणया वृत्त्या शरीरम्, तच्च पार्थिवादिपाञ्चभौतिकम् । शब्दादीनां पञ्चानां समूहः पृथिवी, ते च पञ्च दिव्यादिव्यतया दशेति धार्यमपि दशधा। एवं बुद्धीन्द्रियाणां शब्दस्पर्शरूपरसगन्धा यथायथं व्याप्याः, ते च यथायथं दिव्यादिव्यतया दशेति प्रकाश्यमपि दशधेति ॥ ३२ ॥

आकाशमयो वायुमयस्तेजोमय आपोमयः पृथिवमिय इति श्रुतिमाश्रित्याह । तच्चेति ।

यत्तु पाञ्चभौतिकत्वे जलत्वादिना सांकर्यं तन्न । सांकर्यस्यादोषत्वात् । स्वेदोष्मादेरुपलम्भात् । शुक्रशोणितदेहबीजे द्रवबाहुल्याच्च ।

न च मृतशरीरे स्वेदादेर्विनाशेऽपि शरीरत्वेन प्रत्यभिज्ञानान्न पाञ्चभौतिकत्वमिति वाच्यम् । तादृशप्रत्यभिज्ञाया आकारविशेषविषयत्वात । अत एवेदं नष्टमिति व्यवह्रियते ।

न च तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्यामिति ब्रह्ममीमांसाधिकरणे देहान्तरप्रतिपत्तौ देहबीजैर्भूतसूक्ष्मैः परिष्वक्तो गच्छति कुतः प्रश्ननिरूपणाभ्याम् । तथा हि प्रश्नः वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति । निरूपणं च प्रतिवचनं द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चस्वग्निषु श्रद्धासोमवृष्टयन्नरेतोरूपाः पंचाहुतीर्दर्शयित्वेति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति तस्मादपोपलक्षितभूतसूक्ष्मैः परिवेष्टितो जीवो यातीति सिद्धान्तितम् । तच्च न सम्भवति । उपादानगमने कार्यस्यादर्शनप्रसङ्गादुपादानानां हस्तपादादीनामदर्शन-

त्रयोदशविधकरणे ऽवान्तरविभागं करोति—

अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम् ।
साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम् ॥ ३३ ॥

अन्तःकरणम् इति । अन्तःकरणं त्रिविधम्—'बुद्धिरहङ्कारो मन' इति; शरीराभ्यन्तरवर्तित्वादन्तःकरणम् ।

दशधा बाह्यकरणम् । त्रयस्य अन्तःकरणस्य "विषयाख्यम्" विषयमाख्याति विषयसङ्कल्पाभिमानाध्यवसायेषु कर्तव्येषु द्वारीभवति । तत्र बुद्धीन्द्रियाण्यालोचनेन, कर्मेन्द्रियाणि तु यथास्वं व्यापारेण ।

---

प्रसङ्गाच्चेति वाच्यम् । लिङ्गशरीरस्य मातापितृजषाट्कौशिकस्थूलशरीरोपादानत्वाभावात्, देहबीजैर्भूतसूक्ष्मैरित्युक्तिस्तु एतत्सत्त्वे एव स्थूलशरीरोत्पत्तिर्नान्यथेति प्रतिपादनाय । लिङ्गशरीरं चैकादशेन्द्रियाणि पञ्चतन्मात्राणि बुद्धिश्चेति सप्तदशात्मकम् । न त्वत्रयवि ।

अहंकारस्य बुद्धावेवान्तर्भावः । कर्मात्मा पुरुषो योऽसौ बन्धमोक्षैः स युज्यते । सप्तदशकेनापि राशिना युज्यते च स इति मोक्षधर्मादौ राशिशब्देन स्थूलदेहवदवयवित्वनिराकरणात् । प्राणश्चान्तःकरणवृत्तिभेद अतो लिङ्गदेहे प्राणपञ्चकस्याप्यन्तर्भावो बोध्यः । तदधिष्ठानशरीरं च सूक्ष्मपञ्चभूतात्मकम् । अतिवाहकशरीरस्यैकत्वाभिधानं तु लिङ्गशरीराधिष्ठानशरीरयोन्योरन्यनियतत्वेन सूक्ष्मत्वेन चैकताभिप्रायात् । तस्यैव भोगो न स्थूलशरीरस्य मृते व्यभिचारात् अत एव भोगायतनं शरीरमिति सिद्धान्तः स्थूलशरीरे तदधिष्ठानत्वाद्गौणः शरीरव्यवहारः । अधिकं तु सूक्ष्मा मातापितृजा इत्यादौ वक्ष्यते ॥ ३२ ॥

अवसरसङ्गत्याऽऽर्यामवतारयति । त्रयोदशेति । द्वारीभ-

बाह्यान्तरयोः करणयोर्विशेषान्तरमाह—"साम्प्रतकालम्" इति । वर्तमानकालं बाह्यमिन्द्रियम् । वर्तमानसमीपमनागतमतीतमपि वर्तमानम्; अतो वागपि वर्तमानकालविषया भवति । त्रिकालमाभ्यन्तरं करणम्" इति । तद्यथा—नदीपूरभेदादभूद् वृष्टिः; अस्ति धूमादग्निरिह नगनिकुञ्जे, असत्युपघातके पिवतीति । अन्यथाऽन्धादेरपि रूपादिदर्शनापत्तेरित्यर्थः । एवं कर्मेन्द्रियव्यापारस्योपयोगमाह । कर्मेन्द्रियाणीति । तथा च कर्मेन्द्रियव्यापारेण जनिते पदार्थे बुद्धीन्द्रियप्रवृत्त्याऽन्तःकरणप्रवृत्तिरित्यर्थः । अनागतमिति । अनागतमित्यनेनातीतमपि ग्राह्यम् । एतच्च व्याख्यातं पुरस्तात् । सामीप्यग्रहणफलमाह । अत इति । वाग् इन्द्रियं तज्जन्यः शब्दोऽपि वागित्युच्यते । तस्यातीताद्यर्थविषयकत्वाद्वर्त्तमानार्थविषयत्वमपि सम्भवतीत्यर्थः ।

न च वाक्पदस्य शब्दपरत्वे मानाभाव इति वाच्यम् । यः कश्च शब्दो वागेव सैषाह्यन्तमायत्तैषा हितेति बृहदारण्यकश्रुतेर्मानत्वात् । श्रुतिस्तु यः कश्च शब्दः शब्दसामान्यं वागेव हि यस्मात् सैषा शब्दात्मिकेन्द्रियरूपा वाक् अन्तं निर्णयात्मकं सिद्धान्तमभिधेयनिर्णयमायत्ता तु अनुमानशब्दसहकारेणातीतादिविषयकमिन्द्रियसहकारेण तु वर्त्तमानविषयकमेवेत्यभिप्रायेणाह । तद्यथेति ।

न च नदीपूरभेदस्य पूर्णत्वशीघ्रत्वरूपविशेषविशिष्टपूरत्वरूपहेतोर्नद्यां वर्त्तमानस्य पर्जन्यापादानकप्रथमाध्वजलसम्बन्धरूपवृष्टेरुपरि देशस्थत्वेन व्यधिकरणत्वात्कथं तेन भूतवृष्ट्यनुमानमिति वाच्यम् । भूतवृष्टिमदुपरिदेशसम्बन्धित्वस्यैवानुमानात् । प्रयोगस्तु । नदी तादृशवृष्टिमदुपरिदेशसम्बन्धिनी उक्तविशिष्टपूरत्वादित्यादि । वर्त्तमानहेतुबलाद्वर्त्तमानत्वं साध्ये सिध्यतीत्यभिप्रायेणाह । अस्तीति ॥ ३३ ॥

पौलिकाण्डसञ्चरणाद्भविष्यति वृष्टिरिति, तदनुरूपाश्च सङ्कल्पाभिमानाध्यवसाया भवन्ति ।

कालश्च वैशेषिकाभिमत एको नानागतादिव्यवहारभेदं प्रवर्तयितुमर्हति । तस्मादयं यैरुपाधिभेदैरनागतादिभेदं प्रतिपद्यते सन्तु त एवोपाधयः, ये ऽनागतादिव्यवहारहेतवः, कृतमत्रान्तर्गडुना कालेनेति साङ्ख्याचार्याः तस्मान्न कालरूपतत्त्वान्तराभ्युपगम इति ॥ ३३ ॥

साम्प्रतकालानां बाह्येन्द्रियाणां विषयं विवेचयति—

बुद्धीन्द्रियाणि तेषां पञ्च विशेषाविशेषविषयाणि ।
वाग्भवति शब्दविषया शेषाणि तु पञ्चविषयाणि ३४ ॥

"बुद्धीन्द्रियाणि" इति । "बुद्धीन्द्रियाणि" "तेषां" दशानामिन्द्रियाणाम्मध्ये "पञ्च," "विशेषाविशेषविषयाणि" विशेषाः स्थूलाः शब्दादयः शान्तघोरमूढरूपाः पृथिव्यादिरूपाः, अविशेषास्तन्मात्राणि सूक्ष्माः शब्दादयः, मात्रग्रहणेन स्थूलभूतमपाकरोति । विशेषाश्च अविशेषाश्च विशेषाविशेषाः त एव विषया येषां बुद्धीन्द्रियाणां तानि तथोक्तानि । तत्रोर्ध्वस्रोतसां योगिनां च श्रोत्रं शब्दतन्मात्रविषयं स्थूलशब्दविषयं च, अस्मदादीनां तु स्थूलशब्दविषयमेव । एवन्तेषां त्वक् स्थूलसूक्ष्मस्पर्शविषया, अस्मदादीनां तु स्थूलस्पर्शविषयैव । एवञ्चक्षुरादयो ऽपि तेषामस्मदादीनां च रूपादिषु सूक्ष्मस्थूलेषु

---

प्रसंगसङ्गत्याऽऽर्यामवतारयति । साम्प्रतकालानामिति ।बाह्येन्द्रियाणां विषयनिरूपणायाह–दशानामिति । शान्तेति । शान्तो विपञ्च्यादिध्वनिः । घोरो मेघादेः । मूढो व्याघ्रादेरित्यर्थः । धर्मधर्मिणोरभेदाभिप्रायेणाह । पृथिव्यादिरूपा इति । कर्मेन्द्रि-

द्रष्टव्याः ।

एवं कर्मेन्द्रियेषु मध्ये "वाग्भवति शब्दविषया" स्थूलशब्दविषया, तद्धेतुत्वात् । न तु शब्दतन्मात्रस्य हेतुस्तस्याहङ्कारिकत्वेन वागिन्द्रियेण सहैककारणकत्वात् । "शेषाणि तु" चत्वारि पायूपस्थपाणिपादाख्यानि "पञ्चविषयाणि" पाण्याद्याहार्याणां घटादीनां पञ्चशब्दाद्यात्मकत्वादिति ॥ ३४ ॥

साम्प्रतं त्रयोदशसु करणेषु केषाञ्चित्प्रधानभावं सहेतुकमाह—

सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात् ।
तस्मात्त्रिविधं करणं द्वारि, द्वाराणि शेषाणि ॥ ३५ ॥

"सान्तःकरणा" इति । "द्वारि" प्रधानम् । "द्वाराणि" करणानि, बाह्येन्द्रियाणि द्वाराणि । तैरुपनीतं स-

यविषये वागिंद्रियविषयस्य पंचशब्दाद्यनात्मकत्वरूपविशेषात्पृथक्करणमित्याह । एवमिति । स्थूलशब्दस्य विषयत्वे हेतुमाह । तद्धेतुत्वादिति । स्थूलशब्दजनकत्वादित्यर्थः । तस्य । शब्दतन्मात्रस्य ।

यद्यपि तामसाहंकारकार्यत्वं शब्दतन्मात्रस्य सात्त्विकाहंकारकार्यत्वं वागिन्द्रियस्येत्युक्तं सात्त्विक एकादशक इत्यादिना । तथाप्याहंकारिकत्वाविशेष इत्यभिप्रायेणाह । आहंकारिकत्वेनेति । पञ्चविषयाणि । शब्दादिपञ्चात्मकानि ॥ ३४ ॥

बाह्येन्द्रियमपेक्ष्यान्तःकरणस्य फलायोगव्यवच्छिन्नत्वरूपमुख्यकरणत्वं बाह्येन्द्रियाणां गौणं तत्र को गुण इत्याकांक्षायामुपजीवकत्वसङ्गत्याऽऽर्यामवतारयति । साम्प्रतमिति । गुणमाह । तदुपनीतेति । छिदायां प्रहारस्य मुख्यकरणत्वेऽपि प्रकृष्ट-

वं विषयं समनोऽहङ्कारा बुद्धिः यस्मादवगाहते ऽध्यवस्यति तस्माद्बाह्येन्द्रियाणि द्वाराणि, द्वारवती च सान्तःकरणा बुद्धिरिति ॥ ३५ ॥

न केवलं बाह्यानीन्द्रियाण्यपेक्ष्य प्रधानं बुद्धिः, अपि तु ये अप्यहङ्कारमनसी द्वारिणी ते अप्यपेक्ष्य बुद्धिः प्रधानमित्याह—

एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः ।
कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति ॥ ३६ ॥

"एते" इति । यथा हि ग्रामाध्यक्षः कौटुम्बिकेभ्यः करमादाय विषयाध्यक्षाय प्रयच्छति, विषयाध्यक्षश्च सर्वाध्यक्षाय, स च भूपतये, तथा बाह्येन्द्रियाण्यालोच्य मनसे समर्पयन्ति, मनश्च सङ्कल्प्याहङ्काराय, अहङ्कारश्चाभिमत्य बुद्धौ सर्वाध्यक्षभूतायां,-तदिदमुक्तम्-"पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति' इति ॥

बाह्येन्द्रियमनोऽहङ्काराश्च "गुणविशेषाः" गुणानां सत्त्वरजस्तमसां विकाराः, ते तु परस्परविरोधशीला अपि

साधनत्वरूपगुणयोगात्कुठारस्य परम्परया करणत्ववत्तथाऽत्रापीत्यर्थः ॥ ३५ ॥

उभयमपेक्ष्य बुद्धिरेव प्रधानमित्यभिप्रायेण पूर्वोक्तमङ्गत्याऽऽर्यामवतारयति । न केवलमिति । तत्र दृष्टान्तमाह । यथा हीति । कुटुम्बिभ्यो गृहस्थेभ्यः कर्षकेभ्यश्च । करपदं साक्षाद्राजभोगयोग्यवस्त्रालङ्कारादिपरम् । विषयाध्यक्षाय । देशाध्यक्षाय । सर्वाध्यक्षाय । प्रधानाय । दार्ष्टान्तिकमाह । तथेति । गुणानां परार्थत्वादिति न्यायेन सामन्तवत्स्वातन्त्र्यं निराकरोति ।

रन्तरं" विशेषं "विशिनष्टि" करोति—यथौदनपाकं पचतीति,–करणं च प्रतिपादनम् । ननु प्रधानपुरुषयोरन्तरस्य कृतकत्वादनित्यत्वम्, तत्कृतस्य मोक्षस्यानित्यत्वं स्यादित्यत आह–"विशिनष्टि"—'प्रधानं सविकारमन्यदहमन्य' इति विद्यमानमेवान्तरमविवेकेनाविद्यमानमिव बुद्धिर्बोधयति न तु करोति, येनानित्यत्वमित्यर्थः । अनेनापवर्गः पुरुषार्थो दर्शितः, "सूक्ष्मम्" दुर्लक्ष्यम्—तदन्तरमित्यर्थः ॥ ३७ ॥

तदेवं करणानि विभज्य विशेषाविशेषान् विभजते—

**तन्मात्राण्यविशेषाः, तेभ्यो भूतानि पञ्च पञ्चभ्यः ।**
**एते स्मृता विशेषाः, शान्ता घोराश्च मूढाश्च ॥ ३८॥**

"तन्मात्राणि" इति । शब्दादितन्मात्राणि सूक्ष्माणि । न चैषां शान्तत्वादिरस्ति उपभोगयोग्यो विशेष इति मात्रशब्दार्थः ।

धात्वर्थस्य लाभाद्धात्वर्थोऽत्र न विवक्षितः किन्तु प्रत्ययार्थ एवेत्यभिप्रायेणाह । करोतीति । तत्र दृष्टान्तमाह । यथेति । ओदनपाकमित्यत्र समाहारद्वन्द्वस्तथा चोदनं पचति पाकं पचति तद्वदित्यर्थः । विशेषस्य नित्यत्वात्करणं न सम्भवत्यत आह । करणं प्रतिपादनमिति । तथा चान्तरं विषयीकरोत्यध्यवसायरूपत्वाद् बुद्धेरित्यर्थः। तत्करणस्य निष्प्रयोजनत्वमाशङ्काह । अनेनेति तस्य पुरुषार्थमोक्षसाधनत्वान्न वैयर्थ्यमिति भावः । श्रवणमननाद्युपायं विनाऽन्तरस्य विषयीकणासम्भवात्तं विशिनष्टि । सूक्ष्ममिति ॥ ३७ ॥

उपोद्घातसंगतिसूचनाय पूर्वोक्तमनुवदन्नार्यामवतारयति । तदेवमिति ।

अविशेषानुक्त्वा विशेषान्वक्तुमुत्पत्तिमेषामाह– "तेभ्यो भूतानि" इति । तेभ्यस्तन्मात्रेभ्यो यथासंख्यमेकद्वित्रिचतुःपञ्चभ्यो भूतान्याकाशानिलानलसलिलावनिरूपाणि "पञ्च" "पञ्चभ्यः" तन्मात्रेभ्यः ॥

अस्त्वेतेषामुत्पत्तिः, विशेषत्वं किमायातमित्यत आह– "एते स्मृता विशेषाः" इति । कुतः—"शान्ता घोराश्च मूढाश्च" । चकार एको हेतौ द्वितीयः समुच्चये । यस्मादाकाशादिषु स्थूलेषु सत्त्वप्रधानतया केचिच्छान्ताः सुखाः प्रकाशा लघवः, केचिद्रजःप्रधानतया घोराः दुःखाः अनवस्थिताः, केचित्तमःप्रधानतया मूढा विषण्णा गुरवः । ते ऽमी परस्परव्यावृत्त्या ऽनुभूयमाना 'विशेषाः' इति च 'स्थूलाः' इति चोच्यन्ते तन्मात्राणि त्वस्मदादिभिः परस्परव्यावृत्तानि नानुभूयन्ते, इत्यविशेषाः सूक्ष्मा इति चोच्यन्ते ॥ ३८ ॥

---

ननु तन्मात्राण्येव भोग्यानि स्युः कृतं भूतविशेषैरित्यत आह । न चैषामिति । अस्मदाद्युपभोगयोग्यतासम्पादनायाह । यथासंख्यमिति । यथा चैतत्तथोक्तं पुरस्तात् । पञ्चभ्यः पञ्च भूतानीत्यत्रोक्तानत्रानूद्य विशेषत्वाभिधानान्न पौनरुक्त्यमिति ध्येयम् । भूतेषु विशेषस्य किं प्रयोजनमित्याशयेन पृच्छति । अस्त्विति । तथा चोभयभोग एव प्रयोजनमित्यर्थः । तदेवाशङ्क्यापादयति । कुत इत्यादिना । सर्वेषां त्रिगुणत्वाविशेषादाह । द्वितीय इति । शब्दाः सुखदुःखमूढाः विपञ्चीसिंहव्याघ्रमेघादिशब्दाः । एवं स्पर्शा वायवग्निविषादिषु । रूपाणि कामिनीविद्युत्तिक्तादिषु । रसाश्च इक्षुराजसर्षपनिम्बपत्रेषु । गन्धाः कर्पूरचंपककुसुमलशुनादिषु । ऊर्ध्वस्रोतसां भोगहेतवो ऽप्यस्मदादीनां नानुभवपथमारोहन्तीत्याह । नानुभूयन्ते इति ॥ ३८ ॥

सूक्ष्मशरीरं विभजते—

पूर्वोत्पन्नमसक्तं नियतम्महदादिसूक्ष्मपर्यन्तम् ।
संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् ॥ ४० ॥

'पूर्वोत्पन्नम्' इति । "पूर्वोत्पन्नम्" प्रधानेनादिसर्गे प्रतिपुरुषमेकैकमुत्पादितम् । "असक्तम्" अव्याहतम् शिलामप्यनुविशति । "नियतम्" आ चादिसर्गादा च महाप्रलयादवतिष्ठते,—"महदादिसूक्ष्मपर्यन्तम्", महदहङ्कारैकादशेन्द्रियपञ्चतन्मात्रपर्यन्तम् । एषां समुदायः सूक्ष्मं शरीरम्, शान्तघोरमूढैरिन्द्रियैरन्वितत्वाद्वि-

दिति" श्रुतिस्मृतिविरोधः परिमाणभेदेन धर्मभेदात्प्रलयपर्यन्तावस्थानानुपपत्तिश्चेति चेन्न।

पुरि स्थूलशरीरे शेते इति व्युत्पत्त्या शरीरव्याप्तिकथनेनांगुष्ठपरिमाणस्यानियतत्वेन नियतपरिमाणशोधने श्रुत्यादेस्तात्पर्याभावात् । तत्र तात्पर्यांगीकारेऽपि वृत्त्याख्यपरिणामविशेषेण सर्वशरीरव्याप्त्यंगीकारात् । वृत्तिश्च दीपशिखेव द्रव्यरूपपरिणामो न तु गुणः सर्पणानुपपत्तेरिति । अणुपरिमाणं तत्कृतिश्रुतेरिति [ सां० दर्श० अ० ३ सू० १४ ] सूत्रं तु तत्कृतिश्रुतेः क्रियाश्रुतेः विज्ञानं यज्ञं तनुते इत्यादिश्रुतेर्न विभु किन्तु अणुपरिमाणपरिच्छिन्नं न त्वत्यन्तमेवाणु सावयवत्वादित्येवं व्याख्येयम् ॥ ३९ ॥

अवसरसंगत्याऽऽर्यामवतारयति । सूक्ष्मशरीरमिति । महदादीत्यादि तु पूर्वं व्याख्यातम् । सूक्ष्मशरीरस्यावयवित्वं निराकरोति । एषां समुदाय इति । एवं चेत्कथमस्य भोगोपयोगित्वमित्यत आह । शान्तेति ।

शेषः ॥

नन्वस्त्वेतदेव शरीरं भोगायतनं पुरुषस्य, कृतं दृश्यमानेन षाट्कौशिकेन शरीरेणेत्यत आह–"संसरति" इति । उपात्तमुपात्तं षाट्कौशिकं शरीरं जहाति हायं हायं चोपादत्ते–कस्मात् इति "निरुपभोगम्" यत, षाट्कौशिकं शरीरं भोगायतनं विना सूक्ष्मं शरीरं निरुपभोगं यस्मात्तस्मात्सूक्ष्मं शरीरं संसरति ॥

---

एतेन इंद्रियाणां सात्त्विकाहंकारकार्यत्वेऽपि धर्माधर्मप्रधानदेवतिर्यग्देहादौ न्यूनाधिकदृष्ट्यादिस्तु शान्तघोरादीन्द्रियैर्निर्वहतीति सूचितम् । यथा राज्ञः सूपकाराणां संचरणं पाकशालासु राजार्थं तथा लिंगशरीराणां स्थूलशरीरेषु संसृतिः पुरुषार्थमित्याह । उपात्तमिति । हायं हायं चेति । हित्वा हित्वा चेत्यर्थः ।

ननु न विद्यते उपभोगः सुखसाक्षात्काररूपो यस्य येन वा तन्निरुपभोगमिति तच्च लिंगशरीरस्य बाधितं तद्घटकबुद्धेः पुरुषे सुखाद्याकारपरिणामप्रतिबिम्बजनकत्वात् । सुखादिसाक्षात्काररूपचैतन्यप्रतिबिम्बाश्रयत्वाच्चेत्याशंक्य तद्विशिनष्टि । षाट्कौशिकशरीरं विनेति ।

नन्वेवं संसृतिकाले भोगाभावप्रसंगः । न चेष्टापत्तिः। यममार्गे दुःखभोगप्रतिपादकवाक्यविरोधापत्तेरिति चेन्न। तत्र वायवीयशरीरान्तरप्रवेशश्रवणात् । वृक्षगुल्मलतौषधिवनस्पतितृणवीरुधादीनामपि स्थूलशरीरत्वांगीकाराच्च दोषः । हस्तपादादिरहितस्य शरीरत्वसंभवात् ।

न च धर्मादिसहकृतबुद्धेरेव जनकत्वमस्तु कृतं स्थूलशरीरेणेति वाच्यम् । "अभिवादितश्च यो विप्र आशिषं न प्रयच्छति । श्मशाने जायते वृक्षो गृध्रकंकनिषेवितः । शरीरजैः कर्मदोषैर्याति स्थावरतां नरः। वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिता"मित्यादि-

ननु धर्माधर्मनिमित्तः संसारः, न च सूक्ष्मशरीरस्यास्ति तद्योगः, तत्कथं संसरतीत्यत आह—"भावैरधिवासितम्" इति । धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणि भावाः, तदन्विता बुद्धिः, तदन्वितञ्च सूक्ष्मं शरीरमिति तदपि भावैरधिवासितम्, यथा सुरभिचम्पककुसुमसम्पर्काद्वस्त्रं तदामोदवासितम्भवति । तस्माद्भावैरेवाधिवासितत्वात् संसरति ।

कस्मात् पुनः प्रधानमिव महाप्रलये ऽपि तच्छरीरन्न तिष्ठतीत्यत आह—"लिङ्गम्" इति । लयं गच्छतीति लिङ्गम्—हेतुमत्त्वेन चास्य लिङ्गत्वमिति भावः ॥ ४० ॥

स्यादेतत्—बुद्धिरेव साहङ्कारेन्द्रिया कस्मान्न संसरति ? कृतं सूक्ष्मशरीरेणाप्रामाणिकेनेत्यत आह—

---

स्मृत्या धर्मादेश्चादनस्थूलशरीरादिसामग्रीजननद्वारैव सुखाद्युत्पादकत्वकल्पनात् ।

ननु "योनिमन्ये प्रपद्यंते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयंति यथाकर्म यथाश्रुतम् । मानसं मनसैवायमुपभुङ्क्ते शुभाशुभम् । वाचा वाचाकृतं कर्म कायेनैव तु कायिक"मित्यादिश्रुतिस्मृतिभ्यामवगतसंसारनिमित्तधर्मादेः लिंगशरीरे ऽभावात्कथं संसरणमित्याशयेन शंकते । नन्विति । परम्परासम्बन्धे दृष्टान्तमाह । यथेति । आशंकापूर्वकलिंगपदव्युत्पत्तिमाह । कस्मादिति ।

ननु वह्नेर्धूमो लिंगमित्यादौ ज्ञापके लिंगपदप्रवृत्तिदर्शनात् वने विलीनो विहंग इत्यादावदर्शनाच्च कथं तद्व्युत्पत्त्या लिंगपदप्रवृत्तिरित्यत आह । हेतुमत्त्वेन चेति । तथा च हेतुमत्सावयवमित्यादौ जन्यत्वस्योक्तत्वात्प्रधानज्ञापकत्वमपि सम्भवतीत्यर्थः ॥ ४० ॥

उपोद्घातसंगत्याऽऽर्यामवतारयति । स्यादेतदिति । उक्तमप्रामाणिकत्वन्निरस्यति । जन्मेति । प्रायणं मरणं तयोरन्तराले । मध्ये ।

चित्रं यथाऽऽश्रयमृते स्थाण्वादिभ्यो विना यथा च्छाया ।
तद्वद्विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम् ॥ ४१ ॥

"चित्रम्" इति । लिङ्गनात् ज्ञापनात् बुद्ध्यादयो 'लिङ्गम्', तत् "अनाश्रयन्न तिष्ठति"। जन्ममरणान्तराले बुद्ध्यादयः प्रत्युत्पन्नशरीराश्रिताः,-प्रत्युत्पन्नपञ्चतन्मात्रवत्त्वे सति बुद्ध्यादित्वात्,-दृश्यमानशरीरवृत्तिबुद्ध्यादिवत् । "विना विशेषैः" इति, सूक्ष्मैः शरीरैरित्यर्थः । आगमश्चात्र भवति—

"ततः सत्यवतः कायात् पाशबद्धं वशङ्गतम् ।
अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष बलाद्यमः" ।

[महाभारत वनपर्व–अध्याय २९६,]इत्यङ्गुष्ठमात्रत्वेन सूक्ष्मशरीरत्वमुपलक्षयति । आत्मनो निष्कर्षासम्भवात् सूक्ष्ममेव शरीरम् 'पुरुषः', तदपि पुरि स्थूलशरीरे शेते इति ॥ ४१ ॥

---

साश्रया इत्युक्ते प्रधानेनान्यथासिद्धेराह । प्रत्युत्पन्नेति । प्रत्युत्पन्नत्वं पूर्वोत्पन्नत्वं तेन तदाश्रयीभूतशरीरस्य पश्चादुत्पत्तौ पूर्वं निराश्रयावस्थानांगीकारेण पुनस्तदाश्रयकल्पनं व्यर्थमिति परास्तम् ।

वस्तुतस्तु अन्तरालकालावच्छिन्ना बुद्ध्यादयः शरीराश्रिता इत्युक्ते प्रधानवत्प्रळयावस्थायिशरीरसिद्ध्या ऽर्थान्तरापत्तिरतः प्रत्युत्पन्नेति । सर्गे प्रत्युत्पन्नमित्यर्थः । न च दृष्टान्तासिद्धिः । उत्पन्नमात्रपरत्वात् । उक्तानुमानस्याप्रयोजकत्वशंकानिरासायाह । आगमश्चेति ।

नन्वंगुष्ठमात्रत्वे स्थूलत्वप्राप्त्या न संवाद इत्यत आगमं व्याचष्टे। सूक्ष्मशरीरत्वमिति । न च लाक्षणिकार्थकरणमनुचितम् । अङ्गुष्ठपदस्य स्वस्वांगुष्ठपरत्वेऽपि सर्पादेरंगुष्ठाभावेन लक्षणाया

एवं सूक्ष्मशरीरास्तित्वमुपपाद्य यथा संसरति येन हेतुना च-तदुभयमाह—

पुरुषार्थहेतुकमिदं निमित्तनैमित्तिकप्रसङ्गेन ।
प्रकृतेर्विभुत्वयोगान्नटवद्व्यवतिष्ठते लिङ्गम् ॥ ४२ ॥

"पुरुषार्थहेतुकम्" इति । पुरुषार्थेन हेतुना प्रयुक्तम् । "निमित्तम्" धर्माधर्मादि, "नैमित्तिकम्" तेषु तेषु निकायेषु यथायथं षाट्कौशिकशरीरपरिग्रहः, स हि धर्मादिनिमित्तप्रभवः । निमित्तञ्च नैमित्तिकञ्च-तत्र यः प्रसङ्गः प्रसक्तिस्तया "नटवद्व्यवतिष्ठते लिङ्गम्" सूक्ष्मशरीरम् । यथा हि नटस्तां तां भूमिकां विधाय परशुरामो वा ऽजातशत्रुर्वा वत्सराजो वा भवति, एवन्तत्तत्स्थूलशरीरपरिग्रहणाद्देवो वा मनुष्यो वा पशुर्वा वनस्पतिर्वा भवति सूक्ष्मशरीरमित्यर्थः ।

आवश्यकत्वात् ।

नन्वागमे सूक्ष्मशरीरस्य नामापि न श्रूयते इत्यत्राह । आत्मन इत्यादि । उभयत्र लक्षणाकल्पने आगमस्य लक्षणया मरणमात्रपरत्वमेव किं न स्यादित्यत आह । तदपीति । तथा च सर्वपदानां स्वार्थत्यागापेक्षया पुरुषशब्दमात्रस्य योगार्थग्रहणमेव न्याय्यं तस्यापि न स्वार्थत्यागो योगार्थस्यार्थत्वादित्यर्थः॥४१॥

उपोद्घातसंगत्याऽऽर्यामवतारयति । एवमिति । निकायेषु देव तिर्यङ्मनुष्येषु षाट्कौशिकशरीरपरिग्रहः । धर्मादिनिमित्तक इत्यर्थः । निमित्तं धर्मादि । नैमित्तिकं च धर्मादिकारणकस्थूलशरीरादिप्रसक्तिः । मनुष्योऽहं ममेदं यागादिधर्मरूपं कार्यमित्याद्यभिमानः । तया पूर्वोक्तप्रसक्त्या । दृष्टान्तमुपपादयति । यथा ही-

कुतस्त्यः पुनरस्येदृशो महिमेत्यत आह—"प्रकृतेर्विभुत्वयोगात्" इति । तथा च पुराणम्—"वैश्वरूप्यात् प्रधानस्य परिणामोऽयमद्भुतः" इति ॥ ४२ ॥

"निमित्तनैमित्तिकप्रसङ्गेन" इत्युक्तम्—तत्र निमित्तनैमित्तिके विभजते—

सांसिद्धिकाश्च भावाः प्राकृतिका वैकृताश्च धर्माद्याः ।
दृष्टाः करणाश्रयिणः कार्याश्रयिणश्च कललाद्याः ॥४३॥

"सांसिद्धिकाश्च" इति । "वैकृताः" नैमित्तिकाः, पु-

ति । भवति । तच्छरीरं स्वाभिन्नत्वेन महत्त्वेन च मन्यते ।

ननु कथमणुपरिमाणस्य सूक्ष्मशरीरस्य महद्देहेषु व्याप्त्यभिमान इत्याशंकते । कुतस्त्य इति । प्रकृत्यापूरापगमाभ्यां महदल्पादिकमुपपद्यते इत्यभिप्रायेण समाधत्ते । प्रकृतेरित्यादि । तत्र पुराणसंमतिमाह । तथा चेति । अद्भुतः । प्रकृत्यापूरापगमाभ्यां महदल्पपरिमाणवानित्यर्थः ॥ ४२ ॥

प्रसंगसंगत्याऽऽर्यामवतारयति । निमित्तेति । धर्ममात्रपरभावपदस्य प्राकृतिकवैकृतिकोभयत्रान्वयलाभाय प्राकृतिकस्य सांसिद्धिकेऽन्वयलाभाय च वैपरीत्येनार्यां व्याचष्टे । वैकृतिका इति ।

केचित्तु धर्माद्या भावाः त्रिविधाः सांसिद्धिकाः प्राकृतिका वैकृतिकाश्च । सांसिद्धिकाः सहजाः प्रकृतिपरिणामकाले परिणमन्ते फलायन्ते प्राकृतिका इत्याहुः ।

प्रकृते तु भावा द्विविधास्तेषु मध्ये धर्माद्याः करणाश्रयिणः बुद्ध्याश्रयिणः दृष्टा इत्येवं बोध्यम् । असांसिद्धिकत्वे हेतुमाह ।

रूपस्य जातस्योत्तरकालं देवताराधनादिनोत्पन्नाः। "प्राकृतिकाः" स्वाभाविका भावाः सांसिद्धिकाः। तथा हि—सर्गादावादिविद्वानत्रभगवान् कपिलो महामुनिर्धर्मज्ञानवैराग्यैश्वर्यसम्पन्नः प्रादुर्बभूवेति स्मरन्ति। वैकृताश्च भावा असांसिद्धिकाः, ये उपायानुष्ठानेनोत्पन्नाः, यथा प्राचेतसप्रभृतीनाम्महर्षीणाम्। एवमधर्माज्ञानावैराग्यानैश्वर्याण्यपि।

कार्यं शरीरं तदाश्रयिणः, तस्यावस्थाः, कललबुद्बुदमांसपेशीकरण्डाद्यङ्गप्रत्यङ्गव्यूहाः गर्भस्थस्य, ततो निर्गतस्य बालस्य बाल्यकौमारयौवनवार्धकानीति॥४३॥

उपायेति। अस्मदादिधर्माद्या अप्युपायसाध्यत्वाद्वैकृतिका इति बोध्यम्।

निमित्तविभागं दर्शयित्वा नैमित्तिकविभागमाह। कार्यमिति। शरीरं लिंगशरीरम्। "एकरात्रोषितं कललं भवती"त्यादिश्रुतिमाश्रित्याह। कललेति। कललं शुक्रशोणितयोर्मिश्रणम्। बुद्बुदश्शुक्रस्याधोभावेन शोणितस्योर्द्ध्वभावेनावस्थानम्। मांसपेशी त्वगाद्यर्थं पिंडाद्याकारिता। कंडरा सुषुम्णाधारमेरुदण्डः। अंगं शिरःकरचरणादि। प्रत्यंगमंगुल्यादि। एते सर्वे व्यूहाः संस्थानरूपा गर्भस्थस्यावस्थाः ततो निर्गतस्य बाल्यकैशोरपौगंडयौवनवार्द्धकादिः। सप्तमे जीवेन संयुक्तः, नवमे पूर्वजातीः स्मरति शुभाशुभं च। यदि योन्याः प्रमुच्येऽहं तत्प्रपद्ये महेश्वरं योनिद्वारं सम्प्राप्तो यन्त्रेण संपीड्यमानो महता दुःखेन जातमात्रस्तु वैसावेन (१)वायुना संस्पृष्टो न तदा स्मरतीत्यादिश्रुतेः॥ ४३॥

---

(१)प्रसवसम्बन्धिनेत्यर्थः।

अवगतानि निमित्तनैमित्तिकानि । कतमस्य तु निमित्तस्य कतमन्नैमित्तिकमित्यत आह—

धर्मेण गमनमूर्ध्वं, गमनमधस्ताद्भवत्यधर्मेण ।
ज्ञानेन चापवर्गो, विपर्ययादिष्यते बन्धः ॥ ४४ ॥

"धर्मेण गमनमूर्ध्वम्" द्युप्रभृतिषु लोकेषु । "गमनमधस्ताद्भवत्यधर्मेण" सुतलादिषु लोकेषु । "ज्ञानेन चापवर्गः" । तावदेव प्रकृतिर्भोगमारभते न यावद्विवेकख्यातिं करोति । अथ विवेकख्यातौ सत्यां कृतकृत्यतया विवेकख्यातिमन्तम्पुरुषम्प्रति निवर्तते । यथाहुः—

"विवेकख्यातिपर्यन्तं ज्ञेयं प्रकृतिचेष्टितम्" इति ॥

"विपर्ययात्" अतत्त्वज्ञानात् "इष्यते बन्धः" ॥

स च त्रिविधः-प्राकृतिको वैकृतिको दाक्षिणकश्चेति । तत्र प्रकृतावात्मज्ञानाद्ये प्रकृतिमुपासते तेषां प्राकृतिको बन्धः, यः पुराणे प्रकृतिलयान् प्रत्युच्यते ।

"पूर्णं शतसहस्रं हि तिष्ठन्त्यव्यक्तचिन्तकाः" इति ॥

वैकारिको बन्धस्तेषां ये विकारानेव भूतेन्द्रियाह-

---

प्रसंगसंगत्याऽऽर्यामवतारयति । अवगतानीति। धर्मेण । केवलशुक्लेन परहिंसारहितेन । शुक्लकृष्णेन च परहिंसापूर्वकेण । ऊर्द्ध्वं ब्राह्मप्राजापत्यैन्द्रगान्धर्वयाक्षराक्षसपैशाचादिषु लोकेषु । सुतलादिषु । अतलवितलमहातलसुतलतलातलरसातलपाताले-ष्वित्यर्थः । आदौ सुतलग्रहणं तु क्वाचित्कताहशपुराणपाठाभिप्राये-ण । यावि प्रकृतिचेष्टितमिति । प्रकृतिचेष्टितम् । प्रकृतेर्महत्तत्त्वादि परिणामो याति प्राप्नोति भवतीति ।

पूर्णं शतसहस्रं मन्वन्तराणामिति शेषः । इंद्रियवशीकृतान्मत्वाऽऽहेन्द्रियचिन्तका इति । विगतज्वरा इति । पंचानामेव

ङ्कारबुद्धीः पुरुषधियोपासते, तान् प्रतीदमुच्यते—

"दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः ।
भौतिकास्तु शतम्पूर्णं, सहस्रन्त्वाभिमानिकाः" ॥
बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः" ।
ते खल्वमी विदेहा येषां वैकृतिको बन्धः इति ॥

इष्टापूर्तेन दाक्षिणकः । पुरुषतत्त्वानभिज्ञो हीष्टापूर्तकारी कामोपहतमना बध्यते इति ॥ ४४ ॥

**वैराग्यात् प्रकृतिलयः, संसारो भवति राजसाद्रागात् ।**
**ऐश्वर्यादविघातो, विपर्ययात्तद्विपर्यासः ॥ ४५ ॥**

"वैराग्यात् प्रकृतिलयः," इति—पुरुषतत्त्वानभिज्ञस्य वैराग्यमात्रात् प्रकृतिलयः, प्रकृतिग्रहणेन प्रकृतिमहदहङ्कारभूतेन्द्रियाणि गृह्यन्ते, तेष्वात्मबुद्ध्योपास्यमानेषु लयः । कालान्तरेण च पुनराविर्भवति ॥

"संसारो भवति राजसाद्रागात्" इति । 'राजसात्' इत्यनेन रजसो दुःखहेतुत्वात् संसारस्य दुःखहे-

---

विशेषणम् । विगतज्वरत्वे हेतुमाह । विदेहा इति । इष्टम् यागहोमादि । आपूर्त्तं वापीकूपतडागादि । प्रकृत्यादिलयेऽपि न कृतकृत्यता संख्याश्रवणात् । पुरुषं प्राप्य कालसंख्या न विद्यते इति मुक्तेर्न पुनरावृत्तिरित्यर्थः ॥ ४४ ॥

ज्ञानरहितस्य विरक्तस्यापि मोक्षो न सम्भवतीत्याह । वैराग्यादिति । मात्रपदेन तत्त्वज्ञानं व्यावर्त्यते । प्रकृतौ वैराग्यवतोऽन्योपासनातः प्रकृतिलयासम्भवादाह । प्रकृतिग्रहणेनेति ।

संसारनिमित्तत्वं धर्मादेरुक्तं तन्न साक्षात्किन्तु रागद्वारेत्यभिप्रायेणाह । राजसाद्रागादिति । राजसादित्युक्तेः फलमाह । राजसादित्यनेनेति । दुःखहेतुतासूचनं च हेयतालाभायेत्यर्थः ।

तुता सूचिता ॥

"ऐश्वर्यादविघात" इति-इच्छायाः । ईश्वरो हि यदेवेच्छति तदेव करोति । "विपर्ययात्" अनैश्वर्यात् "तद्विपर्यासः" सर्वत्रेच्छाविघात इत्यर्थः ॥ ४५ ॥

बुद्धिधर्मान् धर्मादीनष्टौ भावान् समासव्यासाभ्यां मुमुक्षूणां हेयोपादेयान् दर्शयितुं प्रथमन्तावत् समासमाह—

एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः ।
गुणवैषम्यविमर्दात्, तस्य च भेदास्तु पञ्चाशत् ॥४६॥

"एषः" इति । प्रतीयते ऽनेनेति प्रत्ययो बुद्धिः, तस्य सर्गः । तत्र "विपर्ययः" अज्ञानमविद्या, सा ऽपि बुद्धिधर्मः । "अशक्तिः" अपि करणवैकल्यहेतुका बुद्धिधर्म

---

कस्याविघात इत्यतः पूरयति । इच्छाया इति । इच्छाया अविघातत्वं स्वविषयसिद्ध्युपहितत्वम् ।

अन्ये तु ऐश्वर्यादणिमादिलक्षणादविघातो गतिप्रतिबन्धाभावः । विपर्ययादनैश्वर्याचद्विपरीतात्तद्विपर्यासः सर्वत्र गतिविच्छेद इत्याहुः ।

अत्र शास्त्रनिषिद्धविषयकरागात्प्रवृत्तिद्वारा नरकः एवं यागादिरागात्स्वर्गादिः । स्त्र्यादिगोचराच्छास्त्रविहितकर्मकरणेनेहलोकभोगपुरःसरपरलोकप्राप्तिरिति बोध्यम् ॥ ४५ ॥

मोक्षबन्धानुकूलत्वेनोपद्धातसंगतिं सूचयन्नार्यामवतारयति । बुद्धिधर्मानिति । अष्टौ धर्मज्ञानवैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्याणि । विपर्ययादीनां तत्त्वान्तरत्वनिराकरणाय प्रत्ययेति विशेषणमित्याह । प्रतीयत इति । तथा च विपर्ययादीनां बुद्धिकार्यत्वेन बुद्धावन्तर्भावान्न तत्त्वान्तरत्वमिति भावः ।

एव । "तुष्टिसिद्धी" अपि वक्ष्यमाणलक्षणे बुद्धिधर्मावेव तत्र विपर्ययाशक्तितुष्टिषु यथायोगं समानाश्च धर्मादीनां ज्ञानवर्जमन्तर्भावः, सिद्धौ च ज्ञानस्येति ॥

व्यासमाह—"तस्य च भेदास्तु पञ्चाशत्" इति । कस्मात्? "गुणवैषम्यविमर्दात्" इति । गुणानां वैषम्यमेकैकस्याधिकबलता द्वयोर्द्वयोर्वा, एकैकस्य न्यूनबलता द्वयोर्द्वयोर्वा, ते च न्यूनाधिक्ये मन्दमध्याधिकयमात्रतया यथाकार्यमुन्नीयेते । तदिदं गुणानां वैषम्यम् तेनोपमर्दः, एकैकस्य न्यूनस्य द्वयोर्वाऽभिभवः । तस्मात्त-

---

पूर्वोक्तमज्ञानं परिभाषान्तरेणाह । विपर्यय इति । पूर्वोक्तानां धर्मादीनां विपर्ययादिष्वन्तर्भावमाह । तत्रेति । यथायोगमिति । तत्र विपर्यये अधर्माज्ञानयोः प्रवेशः । विपर्ययस्य नरकहेतुत्वात् । अशक्तौ अनैश्वर्यावैराग्ययोस्तस्या दुःखहेतुत्वात् । तथा चानुभवः अहमतिदुःखी यतो ऽशक्तोऽहमिति । तुष्टौ धर्मवैराग्यैश्वर्याणाम् । यतो धर्मी तुष्यति सर्वदा तथा विरक्तोऽपि ईश्वरस्तुष्यत्येवेति ।

अन्ये तु विपर्ययस्याज्ञाने । करणवैकल्यं बधिरतादिदोषः । स हेतुर्यस्याः अशक्तेस्तस्या अधर्मे, तुष्टेर्धर्मे, सिद्धेर्ज्ञानेऽन्तर्भावः । अज्ञानादयस्तु बुद्धेरेवातो विपर्ययादयोऽपि न तत्त्वान्तरमित्याहुः ।

तस्य । प्रत्ययसर्गस्य । ननु कथमेककारणादनेककार्याणीत्याशङ्कते । कस्मादिति । समाधत्ते । गुणवैषम्येति । तेनाधिकन्यूनबलेनेत्यर्थः । न्यूनाधिक्य इति । भवत इति शेषः । ते च कार्येणोन्नेये इत्याह । मन्दमध्येति । मन्दादेः कार्येऽन्वयः । यथा यदि आलस्यादिवशादीषद्ग्राहकता तदा तमस आधिक्यम् । यदि विक्षेपप्राधान्यान्मन्दग्राहकता तदा रजसः प्राधान्यम् । यदि प्रकृष्टग्राहकता तदा सत्त्वस्य प्राधान्यम् । एवं सत्त्वरजसोः स-

स्य भेदाः पञ्चाशदिति ॥ ४६ ॥

तानेव पञ्चाशद्भेदान् गणयति—

**पञ्च विपर्ययभेदा भवन्त्यशक्तिश्च करणवैकल्यात्।**
**अष्टाविंशतिभेदा, तुष्टिर्नवधा, ऽष्टधा सिद्धिः॥ ४७॥**

"पञ्च" इति। अविद्याऽस्मितारागद्वेषाभिनिवेशा यथासंख्यं तमोमोहमहामोहतामिस्रान्धतामिस्रसञ्ज्ञकाः पञ्च विपर्ययविशेषाः, विपर्ययप्रभवानामप्यस्मितादीनां विपर्ययस्वभावत्वात्। यद्वा—यदविद्यया विपर्ययेणावधार्यते वस्तु अस्मितादयस्तत्स्वभावाः सन्तस्तद्-

स्त्वतमसो रजस्तमसोर्वाऽऽधिक्यं बोध्यम्। पदार्थं व्याख्याय वाक्यार्थमाह। तदिदमिति। उपसंहरति। तस्मादिति॥ ४६॥

आर्यामवतारयति। तानेवेति। योगसूत्रानुसारेणाह। अविद्येति। तानेव नामान्तरेणाह। यथासंख्यमिति। अस्मितादीनां विपर्ययकार्यत्वाद्विपर्ययत्वमित्याह। विपर्ययप्रभवानामिति। एतत्कथनं त्वविद्यासमुच्छेदे तेषामपि समुच्छेदोऽवश्यम्भावीति सूचनाय। तेषामुच्छेत्तव्यताहेतुः संसारकारणत्वम्। अस्मितादयः जात्यायुर्भोगरूपपुरुषार्थाय परस्परानुग्रहं कुर्वन्तः परिणामहेतुबलसंपादनेनाव्यक्तमहदादिकार्यपरम्परामुज्ञावयन्तीत्यर्थः।

ननु अविद्यातः प्रभवत्वेऽप्येषां कथं तत्स्वभावत्वं न हि कुविन्दादिप्रभवानां पटादीनां तत्स्वभावता तन्निवृत्तौ तन्निवृत्तिर्वेत्यत आह। यद्वेति। वस्तुपदोत्तरं तद्वस्तु अनुशेरते विपर्यासकाल एवोपलभन्ते इति पूरणीयम्। तथा चाविद्यया विपर्ययाख्यया यद्वस्तु आकार्यते समारोप्यते तदनुशेरते तत् विपर्यासकाल एवोपलभन्तेऽस्मितादयोऽतस्ताद्विपर्यासस्वभावास्तत्र विपर्यासे एव निविशन्त

भिनिविशन्ते । अत एव पञ्चपर्वाऽविद्येत्याह भगवान् वार्षगण्यः ॥ ४७ ॥

सम्प्रति पञ्चानां विपर्ययभेदानामवान्तरभेदमाह-

भेदस्तमसोऽष्टविधो मोहस्य च, दशविधो महामोहः ।
तामिस्रोऽष्टादशधा, तथा भवत्यन्धतामिस्रः ॥ ४८ ॥

"भेदः" इति । भेदस्तमसोऽविद्याया अष्टविधः । अष्टस्वव्यक्तमहदहङ्कारपञ्चतन्मात्रेष्वनात्मस्वात्मबुद्धिरविद्या तमः, अष्टविधविषयत्वात्तस्याष्टविधत्वम् ॥

"मोहस्य च" इति, अत्राप्यष्टविधो भेदश्चकारेणानुषज्यते । देवा ह्यष्टविधमैश्वर्यमासाद्यामृतत्वाभिमानिनोऽणिमादिकमात्मीयं शाश्वतिकमभिमन्यन्ते, सेयमास्मिता मोहोऽष्टविधैश्वर्यविषयत्वादष्टविधः ॥

---

इति समुदायार्थः । अवधार्यते इत्यस्यापि पूर्वोक्तार्थे एव पर्यवसानं बोध्यम् । अत्रार्थे मुन्यन्तरसम्मतिमाह । अत एवेति अविद्यादिस्वरूपं तु वक्ष्यति ॥ ४७ ॥

प्रसंगसंगत्याऽऽर्यामवतारयति । संप्रतीति । अव्यक्ताद्यष्टविषयत्वादष्टविधत्वमित्याह । अष्टविधेति ।

ननु "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्ये"ति (योग० पा० २ सू० ५)योगसूत्रविरोधः । शुक्त्यादिविपर्ययाणामसंग्रहश्चेति चेन्न । आत्मख्यात्यभिप्रायेण तथाऽभिधानात् । अन्यत्रात्माभिमानाभावात् ।

मोहस्याष्टविषयानाह । देवा इति । अणिमादिकं तु पूर्वमुक्तमेव अष्टविधेषु प्राप्तेषु योऽभिमान उत्पद्यते स मोहः स एवास्मितापर्याय इत्याह । सोऽयमिति । छिन्द्येति । दिव्यत्व च शब्दस्य विपंच्याद्यजन्यत्वमेवं गन्धरसस्पर्शरूपेष्वपि बोध्यम् । आस-

"दशविधो महामोहः" इति । शब्दादिषु पञ्चसु दिव्यादिव्यतया दशविधविषयेषु रञ्जनीयेषु राग आसक्तिर्महामोहः, स च दशविधविषयत्वाद्दशविधः ॥

"तामिस्रो" द्वेषो "ऽष्टादशधा" । शब्दादयो दश विषया रञ्जनीयाः स्वरूपतः, ऐश्वर्यन्त्वणिमादिकन्न स्वरूपतो रञ्जनीयम्—किं तु रञ्जनीयशब्दाद्युपायाः । ते च शब्दादय उपस्थिताः परस्परेणोपहन्यमानास्तदुपायाश्चाणिमादयः स्वरूपेणैव कोपनीया भवन्तीति शब्दादिभिर्दशभिः सहाणिमाद्यष्टकमष्टादशधेति, तद्विषयो द्वेषस्तामिस्रो ऽष्टादशविषयत्वादष्टादशधेति ।

"तथा भवत्यन्धतामिस्रः" । अभिनिवेशो ऽन्धतामिस्रः । तथेत्यनेनाष्टादशधेत्यनुषज्यते । देवाः खल्वणिमादिकमष्टविधमैश्वर्यमासाद्य दश शब्दादीन् विषयान् भुञ्जानाः—'शब्दादयो भोग्यास्तदुपायाश्चाणिमाद-

---

क्तिः रागो महामोह इत्याह । राग आसक्तिरिति ।

ननु विषयाणां स्त्र्यादीनामनेकत्वात्कथं विषयभेदेन दशविधत्वमिति । न चैकेन्द्रियग्राह्यत्वरूपविषयत्वं विवक्षितमिति वाच्यम् । सुखे तत्साधने च स्त्र्यादौ रागस्य सम्भवेन तथा विवक्षाया निरर्थकत्वादिति चेन्न । धर्मधर्मिणोरभेदेन स्त्र्यादेस्तन्मध्ये एवान्तर्भावात् । न हि रूपादिरहितस्त्र्यादिकमस्ति ।

तामिस्रो द्वेष इति पर्याय इत्याह । तामिस्र इति । दिव्यादिव्यविषयरूपेण शब्दादयो दश तत्प्रत्युपाया अणिमादयोऽष्टौ तद्विषयत्वाद्द्वेषोऽप्यष्टादशधेत्यभिप्रायेणाष्टादशविषयत्वमुपपादयति। शब्दादय इति । स्वरूपतः विषयत्वेन । उपायेषु भेदकमाह । ऐश्वर्याणीति । द्वेषविषयत्वे हेतुमाह । परस्परेणोपहन्यमाना इति । उपहन्यमाना निवर्त्यमाना इत्यर्थः । अभिनिवेशस्त्रासोऽन्ध-

यो ऽस्माकमसुरादिभिर्मापघानिषत' इति—बिभ्यति । तदिदं भयमभिनिवेशो ऽन्धतामिस्रो ऽष्टादशविषयत्वादष्टादशधेति ॥

सो ऽयं पञ्चविधो विकल्पो विपर्ययो ऽवान्तरभेदाद्द्वाषष्टिरिति ॥ ४८ ॥

तदेवं पञ्चविपर्ययभेदानुक्त्वा ऽष्टाविंशतिभेदामशक्तिमाह—

**एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा ।**
**सप्तदश वधा बुद्धेर्विपर्ययात्तुष्टिसिद्धीनाम् ॥ ४९ ॥**

"एकादश"–इति । ( इन्द्रियवधस्य ग्रहो बुद्धिवधहेतुत्वेन, न त्वशक्तिभेदपूरणत्वेन ) "एकादशेन्द्रियवधाः"–

"बाधिर्यं कुष्ठिता ऽन्धत्वं जडता ऽजिघ्रता तथा ।
मूकता कौण्यपङ्गुत्वे क्लैब्योदावर्तमन्दताः" ॥

यथासंख्यं श्रोत्रादीनामिन्द्रियाणां वधाः । एताव-

---

तामिस्र इति पर्याय इत्याह । तथेति । तत्रोपपत्तिमाह । देवा इति । बिभ्यति । भयं प्राप्नुवंति । तथा चाष्टादशविषयकहननिमित्तं भयमित्यर्थः ।

उपसंहरति । सोऽयमिति । पंचधा विकल्प्यन्ते इति पंच विकल्पा इत्यर्थः ॥ ४८ ॥

उपोद्घातसंगत्याऽऽर्यामवतारयति । तदेवमिति । दोषरूपवधान् गणयति । बाधिर्यमिति । बाधिर्यं श्रोत्रस्य, कुष्ठिता त्वचः स्पर्शाग्राहकता, जिह्वाया जडता रसाग्राहकता । मूकता वाचः शब्दाजनकता । क्लैब्यमपत्याजनकता शिश्नः, उदावर्त्तः उदराध्मानहेतुर्गुदस्य मन्दता । प्रमादो मनसः । इतरत्स्पष्टम् । श्रोत्रादीनाम् । श्रोत्रादिमनोन्तानामेकादशेन्द्रियाणामित्यर्थः। एतावती । एतावत्सं-

त्येव तु तद्धेतुका बुद्धेरशक्तिः स्वव्यापारे भवति। तथा चैकादशहेतुकत्वादेकादशधा बुद्धेरशक्तिरुच्यते। हेतुहेतुमतोरभेदविवक्षया च सामानाधिकरण्यम्॥

तदेवमिन्द्रियवधद्वारेण बुद्धेरशक्तिमुक्त्वा स्वरूपतोऽशक्तीराह—"सह बुद्धिवधैः" इति। कति बुद्धेः स्वरूपतो वधा इत्यत आह। "सप्तदश वधा बुद्धेः"। कुतः? "विपर्ययात्तुष्टिसिद्धीनाम्।" तुष्टयो नवधेति तद्विपर्ययास्तन्निरूपणान्नवधा भवन्ति, एवं सिद्धयोऽष्टाविति

---

ख्याका। तद्धेतुका। दुष्टेन्द्रियहेतुका दोषहेतुका वा। स्वव्यापारे भवतीति। बाधिर्यादिदोषदुष्टेन्द्रियैर्द्वारभूतैरनुपस्थिते तत्तद्विषये द्वारिणी बुद्धिरशक्ता पुरुषायार्थे न समर्पयतीत्यर्थः।

इन्द्रियाणामशक्तिः कथं बुद्धेरुच्यते इत्यत आह। हेतुहेतुमतोरिति। इन्द्रियाणि हेतुर्बुद्धिर्हेतुमती हेतुदोषो हेतुमत्युपचर्यत इत्यर्थः। सामानाधिकरण्यं चैकादशेन्द्रियवधा इत्यत्र।

न चानेकरोगादिकृतानां चाकचिक्यादिदोषविशिष्टविषयकृतानां चाशक्तीनां रोगदोषसमसंख्यतया कथमष्टाविंशतित्वमिति वाच्यम्। रोगाणामिन्द्रियादिवधे एवोपक्षीणत्वात्। विषयदोषाणां तत्तद्रूपेण विषयग्रहप्रतिबन्धकत्वे रूपान्तरेण प्रतिबन्धकत्वाभावेनाशक्त्यप्रयोजकत्वात्।

तुष्टीनां भेदेऽपि कथं तद्व्यतिरेकरूपविपर्ययस्य भेद इत्यत आह। तन्निरूपणादिति। निरूपिकायास्तुष्टेर्भेदे तत्प्रतियोगिका अतुष्टयो नवेत्यर्थः। नास्ति प्रधानमिति प्रतीतिरसुवर्णनाम्नी अतुष्टिः प्रथमा। एवं नास्ति महत्तत्त्वमित्यज्ञानमलिनानाम्नी द्वितीया। तथाऽहंकारस्यादर्शनं मनोज्ञानाम्नी तृतीया। तथा नैव सन्ति तन्मात्राणि भूताकाराणीत्यदृष्टिनाम्नी चतुर्थी। विषयाणामर्जने प्रवृत्तिरपरानाम्नी पञ्चमी। रक्षणे प्रवृत्तिः सुपरानाम्नी षष्ठी। तत्क्ष-

ताश्चिपर्ययास्तन्निरूपणादष्टौ भवन्तीति ॥ ४९ ॥

तुष्टिर्नवधेत्युक्तम्, ताः परिगणयति—

आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः ।
बाह्या विषयोपरमात् पञ्च च, नव तुष्टयोऽभिमताः ॥५०॥

---

ये दोषमपश्यतः प्रतिपत्तिरसुनेत्रानाम्नी सप्तमी । भोगशक्तिर्वसुनारिकानाम्नी अष्टमी । हिंसादोषमपश्यतो भोगारम्भे प्रवृत्तिरनुत्तमाम्भसिकानाम्नी नवमीति तुष्टेर्विपर्ययान्नव तुष्टयो व्याख्याताः ।

एवं सिद्धिविपर्ययादसिद्धयोऽष्टौ भवन्ति । वक्ष्यमाणाध्ययनं विना यत्किञ्चित्तत्वाविर्भावः प्रतार इति प्रथमा । एवमन्यार्थशब्दश्रवणाज्जायमानं ज्ञानमशब्दो यथाशास्त्राध्ययनानुत्पन्नत्वाद् सुतारो द्वितीया । आगमाविरोध्यूहनं विना जायमानं ज्ञानमतारतारमिति तृतीया । अध्ययनश्रवणमननवतोऽप्यसुहृद्वाक्योपदेशाज्जायमानं विपरीतं ज्ञानमरम्यकं चतुर्थी । एवं दानशुश्रूषादिकं विनाऽतुष्टगुरोरुपदेशादुत्पन्नं वासनाद्यनुच्छेदकं तदसदामुदितं पञ्चमी । कस्यचिदाध्यात्मिकेन शारीरकमानसादिदुःखानुभूतस्यापि संसारेऽनुद्वेगादजिज्ञासा ज्ञानमप्रमोदं षष्ठी । एवमाधिभौतिकदस्युशत्रुसरीसृपादिनाऽभिभूतस्य पुरुषापसदस्य संसारेऽनुद्वेगादजिज्ञासेत्यज्ञानममुदितनाम्नी सप्तमी । यक्षरक्षःपिशाचग्रहाद्यैराभिभूतस्यापि संसारानलतप्तस्यापि कामिन्यासक्तस्य संसारेऽनुद्वेगादजिज्ञासेत्यज्ञानमप्रमोदमाननाम्नी अष्टमीत्यष्टावसिद्धयः उक्तनवतुष्टिविपर्ययाः सप्तदश बुद्धिवधा एकादशेन्द्रियवधा इत्येवमष्टाविंशतिधाऽशक्तिरिति ॥ ४९ ॥

उपोद्घातसंगत्याऽऽर्यामवतारयति । तुष्टिर्नवधेत्युक्तमिति । श्रवणमननानिदिध्यासनवतो वक्ष्यमाणतुष्ट्यसम्भवादाह । प्रकृतिव्यतिरिक्त इति । प्रतिपद्य । तावन्मात्रं ज्ञात्वा । श्रवणम-

"आध्यात्मिक्यः" इति आध्यात्मिक्यः—'प्रकृतिव्यतिरिक्त आत्मा ऽस्ति' इति प्रतिपद्य, ततो ऽस्य श्रवणमननादिना(१) विवेकसाक्षात्काराय त्वसदुपदेशतुष्टो यो न प्रयतते तस्याध्यात्मिक्यश्चतस्रस्तुष्टयो भवन्ति, प्रकृतिव्यतिरिक्तमात्मानमधिकृत्य यस्मात्तास्तुष्टयस्तस्मादाध्यात्मिक्यः। कास्ता इत्यत आह—"प्रकृत्युपादानकालभाग्याख्याः", प्रकृत्यादिराख्या यासां तास्तथोक्ताः॥

तत्र प्रकृत्याख्या तुष्टिर्यथा कस्यचिदुपदेशो—'विवेकसाक्षात्कारो हि प्रकृतिपरिणामभेदस्तञ्च प्रकृतिरेव करोतीति कृतन्तद्ध्यानाभ्यासेन, तस्मादेवमेवास्तु वत्स',—इति संयमुपदेष्टव्यस्य तुष्टिः प्रकृतौ, सा तुष्टिः प्रकृत्याख्या अम्भ उच्यते॥

तत्ते श्रवणमननयोर्न यतते इत्यर्थः। श्रवणमननादिनेति पाठेऽपि तत्रैवान्वयः। न यतते इत्यत्र हेतुमाह। असदुपदेशेति। आध्यात्मिकपदस्य यौगिकत्वमाह। प्रकृतिव्यतिरिक्तमिति।

तत्र प्रथमामाह। तत्रेति। अम्भ इत्यादिपरिभाषा सांख्याचार्याणामिति।

द्वितीयामाह। या त्विति। "तस्माच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्ये"दिति श्रुतिमाश्रित्याऽऽह। प्रव्रज्यायास्त्विति। उपरतपदेन सन्न्यासो विवक्षित इत्यर्थः। सलिलमित्यपि पारिभाषिकम्, एवमुत्तरत्रापि।

"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये"इत्यादिश्रुतिमाश्रित्य तृतीयामाह। या तु प्रवज्येति।

(१) श्रवणमनने इति टीकाकृत्संमतं पाठान्तरम्।

या तु—"प्राकृत्यपि विवेकख्यातिर्न सा प्रकृतिमात्राद्भवति, मा भूत्सर्वस्य सर्वदा, तन्मात्रस्य सर्वान् प्रत्यविशेषात्, प्रव्रज्यायास्तु सा भवति तस्मात् प्रव्रज्यामुपाददीथाः,कृतन्ते ध्यानाभ्यासेनायुष्मन्"—इति उपदेशे या तुष्टिः सोपादानाख्या 'सलिलम्' उच्यते ॥

या तु,—'प्रव्रज्या ऽपि न सद्यो निर्वाणदेति सैव कालपरिपाकमपेक्ष्य सिद्धिन्ते विधास्यति, अलमुत्तसतया तव'—इति उपदेशे या तुष्टिः सा कालाख्या 'ओघ' उच्यते ॥

या तु—'न प्रकृतेर्न कालान्नाप्युपादानाद्विवेकख्यातिः अपि तु भाग्यादेव । अत एव मदालसापत्यान्यतिबालानि मातुरुपदेशादेव विवेकख्यातिमन्ति मुक्तानि बभूवुः, तस्माद्भाग्यमेव हेतुर्नान्यत्'—इति उपदेशे या तुष्टिः सा भाग्याख्या 'वृष्टिः' उच्यते ॥

बाह्या दर्शयति—"बाह्याः" तुष्टयः "विषयोपरमात्, "पञ्च" । याः खल्वनात्मनः प्रकृतिमहदहङ्कारादीनात्मेत्यभिमन्यमानस्य वैराग्ये सति तुष्टयस्ता बाह्याः, आत्मज्ञानाभावे सत्यनात्मानमधिकृत्य प्रवृत्तेरिति । ताश्च वैराग्ये सति तुष्टय इति वैराग्यहेतुपञ्चत्वाद्वैरा-

"भाग्यं फलति सर्वत्र न विद्या न च पौरुषं"मित्यादिस्मृतिमाश्रित्य । चतुर्थीमाह । या तु न कालादिति । अत्रेतिहासं प्रमाणयति । अत एवेति ।

आध्यात्मिकय उक्त्वा बाह्या विषयोपरमादित्युक्तं व्याकरोति । वैराग्ये सतीति । अर्जनमयथार्थानुष्ठानेनापि योग्यस्य विषयस्य संपादनम् । हिंसा मरणानुकूलव्यापारः । तेषु पंचसु कुत्र

ण्याण्यपि पञ्च, तत्पञ्चत्वात् तुष्टयः पञ्चेति । उपरम्यते ऽनेनेत्युपरमो वैराग्यम्, विषयादुपरमो विषयोपरमः । विषया भोग्याः शब्दादयः पञ्च, उपरमा अपि पञ्च ॥

तथा हि—अर्जनरक्षणक्षयभोगहिंसादोषदर्शनहेतुजन्मानः पञ्चोपरमा भवन्ति । तथा हि—सेवादयो धनार्जनोपायाः, ते च सेवकादीन् दुःखाकुर्वन्ति,

"दृप्यद्दुरीश्वरद्वाःस्थदण्डिचण्डार्धचन्द्रजाम् ।
वेदनां भावयन् प्राज्ञः कः सेवास्वनुषज्जयते" ॥

एवमन्ये ऽप्यर्जनोपायाः दुःखा इति विषयोपरमे या तुष्टिः सैषा 'पारम्' उच्यते ॥

तथा ऽर्जितन्धनं राजैकागारिकाग्निजलौघादिभ्यो विनङ्क्ष्यतीति तद्रक्षणे महद् दुःखमिति भावयतो विषयोपरमे या तुष्टिः सा द्वितीया 'सुपारम्" उच्यते ॥

तथा महता ऽऽयासेनार्जितन्धनं भुज्यमानं क्षीयते इति तत्प्रक्षयम्भावयतो विषयोपरमे या तुष्टिः सा तृतीया 'पारापारम्, उच्यते ॥

को दोष इत्यपेक्षायामाह। तथा हीति। दर्पेण दुरीश्वरस्य सेवानुरूपं दुःखमजानतो ये द्वाःस्थाः द्वारस्थिताश्च ते दंडिनश्च तेषां अर्धचन्द्रैर्हस्तस्यांगुष्ठतर्जनीप्रमाणसंस्थानविशेषैश्च जातां वेदनां दुःखैकनिदानमिति । पारमिति परिभाषा ।

अर्जनदुःखमनुभवारूढं सम्पाद्य रक्षणं दुःखं द्वितीयं तथा करोति। तथेति । एकागारिकाश्चौराः । सुपारमिति परिभाषा । तृतीयामाह । तथेति । भोगे दोषं चतुर्थमाह । एवं शब्दादीति ।

"न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते" इति मनुवचनमाश्रि-

एवं शब्दादिभोगाभ्यासात् प्रवर्धन्ते कामाः, ते च विषयाप्राप्तौ कामिनं दुःखाकुर्वन्तीति भोगदोषं भावयतो विषयोपरमे या तुष्टिः सा चतुर्थी 'अनुत्तमाम्भ' उच्यते ।

एवन्नानुपहत्य भूतानि विषयोपभोगः सम्भवतीति हिंसादोषदर्शनाद्विषयोपरमे या तुष्टिः 'सा पञ्चमी 'उत्तमाम्भ' उच्यते ॥

एवमाध्यात्मिकीभिश्चतसृभिः बाह्याभिश्च पञ्चभिः 'नव तुष्टयो ऽभिमताः' ॥ ५० ॥

गौणमुख्यभेदैः सिद्धीराह—

**ऊहः शब्दो ऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः ।**
**दानं च सिद्धयो ऽष्टौ, सिद्धेः पूर्वो ऽङ्कुशस्त्रिविधः ॥५१॥**

"ऊह" इति । विहन्यमानस्य दुःखस्य त्रित्वात्तद्विघातास्त्रय इतीमा मुख्यास्तिस्रः सिद्धयः, तदुपायतया त्वितरा गौण्यः पञ्च सिद्धयः, ता अपि हेतुहेतुमत्तया व्यवस्थिताः । तत्राऽऽद्या ऽध्ययनलक्षणा सिद्धिर्हेतुरेव । मुख्यास्तु सिद्धयो हेतुमत्य एव । मध्यमास्तु हेतुहेतुमत्यः॥

विधिवद् गुरुमुखादध्यात्मविद्यानामक्षरस्वरूपग्रहणमध्ययनम् प्रथमा सिद्धिस्तारमुच्यते ॥

---

त्याह । वर्द्धन्त इति । दुःखाकुर्वंति । दुःखं प्रयच्छंतीति ।

"न हिंस्यात्सर्वा भूतानि अन्यत्र तीर्थेभ्य" इति श्रुतिमाश्रित्य पंचमीमाह । एवं नानुपहत्येति ॥ ५० ॥

पूर्वोक्तसंगत्याऽऽर्यामवतारयति । गौणमुख्येति । [सहृत्प्राप्तिश्चतुर्थीयम्] अध्ययनं विना शाब्दज्ञानाद्यभावेन तासां हेतुमत्त्वं प्रकटयितुमर्थात्पाठक्रममुल्लंघ्यार्यां व्याकरोति । गुरुमुखादिति ।

तत्कार्यम्–शब्दः; 'शब्दः' इति पदम् शब्दजनितमर्थज्ञानमुपलक्षयति, कार्ये कारणोपचारात्, । सा द्वितीया सिद्धिः सुतारमुच्यते । पाठार्थाभ्यान्तदिदन्द्विधा श्रवणम् ॥

"ऊहः" तर्कः, आगमाविरोधिन्यायेनागमार्थपरीक्षणम् । परीक्षणञ्च संशयपूर्वपक्षनिराकरणेनोत्तरपक्षव्यवस्थापनम् । तदिदम्मननमाचक्षत आगमिनः । सा तृतीया सिद्धिस्तारतरमुच्यते ॥

"सुहृत्प्राप्तिः" न्यायेन स्वयम्परीक्षितमप्यर्थं न श्रद्धत्ते, न यावद् गुरुशिष्यसब्रह्मचारिभिः सह संवाद्यते । अतः सुहृदां गुरुशिष्यसब्रह्मचारिणां संवादकानां प्राप्तिः सुहृत्प्राप्तिः सा सिद्धिश्चतुर्थी 'रम्यक' उच्यते ॥

"दानं" च शुद्धिर्विवेकज्ञानस्य, 'दैप् शोधने' (धातुपाठः—९४९) इत्यस्माद्धातोर्दानपदव्युत्पत्तेः । यथाह भगवान् पतञ्जलिः—"विवेकख्यातिरविप्लवो दुः-

स्वाध्यायोऽध्येतव्य इति श्रुतेः । आचार्याधीनो वेदमध्यैष्टेति स्मृतेश्च क्रियाकारकभावापन्नपदसमुदायरूपपरशब्दपदस्य कार्यपरत्वमाह । शब्द इतीति ।

तृतीयामाह । ऊह इति । चतुर्थीमाह । सुहृदिति । ज्ञानपदस्य शुद्धिपरत्वे हेतुमाह । दैप् इति । सूत्रं शुद्धिपदाभावात्कथमुक्तार्थसंमतमत आह । विप्लव इति । प्रवाहो नाम विजातीयप्रत्ययान्तरास्पृष्टत्वे सति सजातीयप्रत्ययसंततिस्तस्मिन्नवस्थानमित्यर्थः । मन्त्रतपःसमाधिभिरणिमादिसिद्धिर्विपर्ययहानं विनाऽपि भवत्यतः संसारापरिपन्थित्वात्सा सिध्याभास एवेति न गृहीता । तथा चोक्तं योगसूत्रेण "ते समाधावुपसर्गा व्युत्थाने सिद्धय" इति । आदरपदेन तपोब्रह्मचर्यादि-

खत्रयस्य हानोपायः" इति ( योगसूत्र २ । २६ ) । 'अविप्लवः' शुद्धिः, सा च सवासनसंशयविपर्यासानां परिहारेण विवेकसाक्षात्कारस्य स्वच्छप्रवाहे ऽवस्थापनम् । सा च नैं विना ऽऽदरनैरन्तर्यदीर्घकालसेविताभ्यासपरिपाकाद्भवतीति दानेन ( विवेकख्यात्याः कार्येण ) सो ऽपि संगृहीतः । सेयम्पञ्चमी सिद्धिस्सदामुदितमुच्यते ॥

तिस्रश्च मुख्याः सिद्धयः प्रमोदमुदितमोदमाना, इत्यष्टौ सिद्धयः ॥

अन्ये व्याचक्षते—विनोपदेशादिना प्राग्भवीयाभ्यासवशात्तत्त्वस्य स्वयमूहनं यत् सा सिद्धिरूहः । यस्य सांख्यशास्त्रपाठमन्यदीयमाकर्ण्य तत्त्वज्ञानमुत्पद्यते सा सिद्धिः शब्दः, शब्दपाठादनन्तरम्भावात् । यस्य शिष्याचार्यसम्बन्धेन सांख्यशास्त्रं ग्रन्थतो ऽर्थतश्चाधीत्य ज्ञानमुत्पद्यते सा ऽध्ययनहेतुका सिद्धिरध्ययनम् । सुहृत्प्राप्तिरिति । यस्याधिगततत्त्वं सुहृदं प्राप्य ज्ञानमुत्पद्यते सा ज्ञानलक्षणा सिद्धिस्तस्य सुहृत्प्राप्तिः । दानञ्च सिद्धिहेतुः, धनादिदानेनाराधितो ज्ञानी ज्ञानम्प्रयच्छति । अस्य च युक्तायुक्तत्वे सूरिभिरेवावगन्तव्ये इति कृ-

---

गृह्यते । सोऽपि आदरादिपाकान्तोऽपि सूत्रोक्तो गृहीतः । साधनसिद्धीरुक्त्वा साध्यसिद्धीर्मुख्या आह । तिस्रश्चेति । तारसुतारतारतरप्रमोदमुदितमोदमानरम्यकसदामुदिताख्या इत्याकारपाठस्यागस्तु अध्ययनादितृतीयं विना तत्त्वज्ञानानुत्पत्तेः सुहृत्प्राप्तिद्वयं विना च तत्त्वज्ञानशुद्ध्यनुपपत्तेराध्यात्मिकादिदुःखत्रयस्य विनाशाभावादपुमर्थता शास्त्रस्याऽऽपद्येत तन्निरासायेति बोध्यम् ।

अन्येषां व्याख्यामाह । अन्ये त्विति । सूरिभिरिति ।

तत्परदोषोद्भावनेन नः सिद्धान्तमात्रव्याख्यानप्रवृत्तानामिति ॥

सिद्धितुष्टिविपर्ययेणाशक्तिर्बुद्धिवधस्सप्तदशधा द्रष्टव्यः ।

अत्र बुद्धिप्रत्ययसर्गे सिद्धिरुपादेयेति प्रसिद्धमेव । तन्निवारणहेतवस्तु विपर्ययाशक्तितुष्टयो हेया इत्याह— "सिद्धेः पूर्वो ऽङ्कुशस्त्रिविधः" इति । "पूर्व" इति विपर्ययाशक्तितुष्टीः परामृशति । ताः सिद्धिकरिणीनामङ्कुशो, निवारकत्वात् । अतः सिद्धिपरिपन्थित्वात् विपर्ययाशक्तितुष्टयो हेया इत्यर्थः ॥ ५१ ॥

स्यादेतत्—पुरुषार्थप्रयुक्ता सृष्टिः स च पुरुषार्थः प्रत्ययसर्गाद्वा तन्मात्रसर्गाद्वा सिद्ध्यतीति कृतमुभयसर्गेणेत्यत आह—

**न विना भावैर्लिङ्गं न विना लिङ्गेन भावनिर्वृत्तिः ।**
**लिङ्गाख्यो भावाख्यस्तस्माद्द्विविधः प्रवर्त्तते सर्गः॥५२॥**

"न विना" इति । "लिङ्गम्" इति तन्मात्रसर्गमुप-

---

अयमाशयः । ऊहस्तर्कपर्यायो मननन्तु प्रश्रुतस्योहने शक्तिः शब्दाध्ययनयोः सांकर्यापत्तिः । अध्ययनपदस्य विधिवद्वेदायत्तीकरणे शक्तिर्न तु ज्ञाने । सुहृदुपदेशं विना ज्ञानोत्पत्त्यसम्भवेन शब्देन पौनरुक्त्यापत्तिः । वैराग्यवतां धनादिलाभे सन्तोषासम्भवादुपदेशानुपपत्तिरिति दिक् ।

हेयोपादेयमाह । अत्रेति । सिद्धिविरोधित्वाद्विपर्ययादेर्हेयत्वमुपसंहरति । अत इति ॥ ५१ ॥

उपोद्घातसंगत्याऽऽर्यामवतारयति । स्यादेतदिति । प्रत्ययसर्गात् । एष प्रत्ययसर्ग इत्युक्तात् । लिंगपदस्याभिधेयमाह । तन्मात्रसर्गमिति ।

लक्षयति, "भावैः" इति च प्रत्ययसर्गम् । एतदुक्तम्भवति—तन्मात्रसर्गस्य पुरुषार्थसाधनत्वं स्वरूपञ्च न प्रत्ययसर्गाद्विना भवति, एवं प्रत्ययसर्गस्य स्वरूपं पुरुषार्थसाधनत्वञ्च न तन्मात्रसर्गादृते, इत्युभयथा सर्गप्रवृत्तिः । भोगः पुरुषार्थो न भोग्यान् शब्दादीन् भोगायतनं शरीरद्वयञ्चान्तरेण सम्भवतीत्युपपन्नस्तन्मात्रसर्गः । एवं स एव भोगो भोगसाधनानीन्द्रियाण्यन्तःकरणानि चान्तरेण न सम्भवति । न च तानि धर्मादीन् भावान् विना सम्भवन्ति । न चापवर्गहेतुर्विवेकख्यातिरुभयसर्गं विना इत्युपपन्न उभयविधः सर्गः ॥

अनादित्वाच्च बीजाङ्कुरवन्नान्योन्याश्रयदोषमावहति कल्पादावपि प्राचीनकल्पोत्पन्नभावलिङ्गसंस्कारवशाद्भा-

एतेन पंच महाभूतान्यपि संगृहीतानि भावपदस्य भूयते प्राप्यतेऽर्थादिंद्रियेणेति व्युत्पत्त्या विषयपरत्वादाह । भावैरिति । चेति । एतेन शब्दादयोऽपि संगृहीता इति ।

परस्परं विना स्वरूपं पुरुषार्थसाधनत्वं च न सम्भवतीत्यभिप्रायेण समाधत्ते । एतदुक्तं भवतीति । तत्रोपपत्तिमाह । तन्मात्रसर्गस्येति । विना न भवति । कुतः? घटत्वादिवज्जडत्वादित्यर्थः । प्रत्ययसर्गस्यापेक्षामाह । एवमिति । धर्मादिप्रत्ययसर्गस्य वैयर्थ्यं निराकरोति । न च तानीति । परमपुरुषार्थे मोक्षेऽपि उभयसर्गापेक्षेत्याह । न चापवर्गेति । प्रत्ययसर्गे सति तन्मात्रसर्गस्तस्मिन्सति प्रत्ययसर्ग इत्यन्योन्याश्रय इत्याशंक्याह । अनादित्वाच्चेति । न चानादित्वे मानाभावः । "न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठेत्यादेर्मानत्वात् ।

ननु भवतु तथेदानीं सर्गादौ भवत्येवान्योन्याश्रयतेत्यत आह । कल्पादाविति । संस्कारस्तत्तत्कार्याणां सूक्ष्मावस्था ।

वल्लिङ्गयोरुत्पत्तिनानुपपन्नेति सर्वमवदातम् ॥ ५२ ॥

विभक्तः प्रत्ययसर्गः । भूतादिसर्गं विभजते—

अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति ।
मानुषकश्चैकविधः, समासतो भौतिकः सर्गः ॥५३॥

"अष्टविकल्प" इति । ब्राह्मः, प्राजापत्यः, ऐन्द्रः, पैत्रो, गान्धर्वो, याक्षो, राक्षसः, पैशाचः इत्यष्टविधो "दैवः" सर्गः ॥

"तैर्यग्योनश्च पञ्चधा भवति," पशुमृगपक्षिसरीसृपस्थावराः ॥

"मानुषकश्चैकविधः" इति, ब्राह्मणत्वाद्यवान्तरजातिभेदाविवक्षया, संस्थानस्य चतुर्ष्वपि वर्णेष्वविशेषात् । इति "समासतः" सङ्क्षेपतः । "भौतिकः सर्गः" । घटादयस्त्वशरीरत्वे ऽपि स्थावरा एवेति ॥ ५३ ॥

---

"हिंस्राहिंस्रे मृदक्रूरे धर्माधर्मावृतानृते ।
तद्भाविताः प्रपद्यन्त तस्मात्तत्तस्य रोचते"इति मनूक्तेः॥५२॥

अवसरसंगत्याऽऽर्यामवतारयति । विभक्त इति । विभक्तो विभागेन व्याख्यातः। सरीसृपाः सर्पादयः । "पुरश्चक्रे द्विपदः"इति श्रुतिमनुसृत्याऽऽह । मानुषकश्चेति । मानुषसर्गस्य ब्राह्मणत्वादिना चतुर्विधत्वात्कथमेकविधत्वमित्यत आह । ब्राह्मणत्वेति । भौतिको भूतानां व्यष्टिप्राणिनां विराजः सकाशात्सर्ग इत्यर्थः ।

ननु स्थावराणां शरीरत्वांगीकारे घटादीनां स्थावरत्वं न स्यादित्यत आह । घटादय इति । तथा च स्थावरत्वं न शरीरत्वव्याप्यमित्यर्थः ।

न च बाह्यज्ञानं यत्रास्ति तदेव शरीरमिति नियमाद्वृक्षादीनां बाह्यज्ञानाभावान्न शरीरत्वमिति वाच्यम् । तादृशनियमे मानाभा-

भौतिकस्यास्य सर्गस्य चैतन्योत्कर्षनिकर्षतारतम्याभ्यामूर्ध्वाऽधोमध्यभावेन त्रैविध्यमाह—

ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः ।
मध्ये रजोविशालो, ब्रह्मादिस्तम्बपर्यन्तः ॥ ५४ ॥

"ऊर्ध्वं सत्त्वविशालः" इति । द्युप्रभृतिसत्यान्तो लोकः सत्त्वबहुलः । "तमोविशालश्च मूलतः सर्गः",

---

वात् । भोक्त्रधिष्ठानं विना मनुष्यादिशरीरस्य वृद्धिह्रासाद्यभावे वृक्षेष्वपि वृद्धिह्रासाद्यभावदर्शनात् । "अस्य यदेकां शाखां जीवो जहात्यथ सा शुष्यति" ।

"शरीरजैः कर्मदोषैर्याति स्थावरतां नरः ।
वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिता"मित्यादि श्रुतिस्मृतेश्च ।

ननु वृक्षादीनां शरीरविशिष्टचेतनत्वे धर्माद्युत्पत्तिप्रसंग इति चेन्न । ब्राह्मणादिशरीरविशिष्टत्वेनैवाधिकारश्रवणात् । अत एव कर्मदेहः परमर्षीणाम्, भोगदेह इंद्रादीनाम् ,उभयदेहो राजर्षीणाम् । तद्विलक्षणश्च देहो वैराग्यवतां दत्तात्रेयजडभरतादीनामित्युक्तिरपि संगच्छते ।

ऊष्मजा यूकादयः । अण्डजाः पक्षिसर्पादयः । उद्भिज्जा वृक्षादय इति चत्वार्येवेति न नियमः । सङ्कल्पजाः सनकादयः, मंत्रौषधिसिद्धिजा रक्तबीजशरीरादय इति श्रवणात् । किंतु ऊष्मजमण्डजं जरायुजमुद्भिज्जं सांकल्पिकं सांसिद्धिकं चेति ॥ ५३ ॥

अवसरसंगत्याऽऽर्यामवतारयति । भौतिकस्येति । ननु तन्मात्रसर्गस्याविशेषे कथं सुखादितारतम्यमित्याशंक्य सत्त्वादिवैषम्यप्रयोज्यचैतन्योत्कर्षनिकर्षतारतम्यादित्यभिप्रायेणाह । चैतन्येति । सत्त्वादिवैषम्ये तु धर्मादिकं निमित्तमिति बोध्यम् ।मूलतः। भूलोकादधः । तद्दर्शयति ।पश्वादीति । पश्वादेरधःपतनशीलत्वा-

पश्वादिस्थावरान्तः, सोऽयम्मोहमयत्वात्तमोबहुलः। भूलोकस्तु सप्तद्वीपसमुद्रसन्निवेशः "मध्ये रजोविशालो" धर्माधर्मानुष्ठानपरत्वाद् दुःखबहुलत्वाच्च। तामिमां लोकसंस्थितिं संक्षिपति "ब्रह्मादिस्तम्बपर्यन्तः", स्तम्बग्रहणेन वृक्षादयः सङ्गृहीताः ॥ ५४ ॥

तदेवं सर्गं दर्शयित्वा तस्यापवर्गसाधनवैराग्योपयोगिनीं दुःखहेतुतामाह—

तत्र जरामरणकृतं दुःखम्प्राप्नोति चेतनः पुरुषः ।
लिङ्गस्याऽऽविनिवृत्तेस्तस्माद् दुःखं स्वभावेन ॥ ५५ ॥

"तत्र" इति। 'तत्र' शरीरादौ। यद्यपि विविधा विचित्रानन्दभोगभागिनः प्राणभृद्देहाः, तथा ऽपि सर्वेषां जरामरणकृतं दुःखमविशिष्टम्। सर्वस्य खलु कृमेरपि मरणत्रासो—'मा न भूवम्' 'भूयासम्' इत्येवमात्मको ऽस्ति। दुःखं च भयहेतुरिति दुःखम्मरणम् ॥

स्यादेतत्-दुःखादयः प्राकृता बुद्धिगुणाः, तत्कथमेते

---

दित्यर्थः। दैहिकं सर्गमुक्त्वा लोकसंस्थितिमाह। तामिमामिति। स्तंबः। सूक्ष्मवीरुधादिः ॥ ५४ ॥

उपोद्घातसंगत्याऽऽर्यामवतारयति। तदेवमिति।

ननु देवादीनां सुखमेव श्रूयते कुतो दुःखात्मकस्तत्राह। यद्यपीति। तत्रानुभवं प्रमाणयति। मा न भूवमिति। मा न भूवं न भवामीति न, अपि तु भूयासं सदा जीवामीत्यर्थः। त्रासे दुःखस्यावश्यकत्वमाह। दुःखं चेति। धर्मधर्मिणोरभेदादाह। दुःखं मरणमिति। कथमिति आक्षेपार्थः। अन्यधर्मा अन्यसम्बन्धिनो न भवन्तीत्यर्थः। यथा हि केवलो रक्तः स्फटिक इत्या-

चेतनसम्बन्धिनो भवन्तीत्यत आह–"पुरुष" इति । पुरि लिङ्गे शेते इति पुरुषः लिङ्गं च तत्सम्बन्धीति चेतनोऽपि तत्सम्बन्धी भवतीत्यर्थः ॥

कुतः पुनर्लिङ्गसम्बन्धि दुःखम्पुरुषस्य चेतनस्येत्यत आह–"लिङ्गस्याऽऽविनिवृत्तेः"–पुरुषाद्भेदाग्रहाल्लिङ्गधर्मानात्मन्यध्यवस्यति पुरुषः । अथ वा दुःखप्राप्ताववधिराङा कथ्यते लिङ्गम् यावन्न निवर्तते तावदिति ॥ ५५ ॥

दिदृष्टान्तेन समाधत्ते । पुरीति ।

ननु बुद्धिगतस्वप्रतिबिम्बेन स्वगतबुद्धिधर्मप्रतिबिम्बग्रहणेऽपि न सन्तप्येत । दृष्टं हि लोकेऽपि स्वकीयस्फटिकादावन्यदीयधर्मारोपज्ञाने सन्तापाभाव इत्याशयेन पुनः शंकते । कुतः पुनरिति । अन्यधर्मप्रतिबिम्बत्वेन ज्ञानाभावात्सन्तापः सम्भवतीत्याशयेन समाधत्ते । पुरुषाद्भेदाग्रहादिति । तथा च लिङ्गस्य पुरुषाद्भेदाग्रहादित्यर्थः ।

यद्वा सान्निध्यस्य मुक्तपुरुषसाधारणत्वात्कथं बन्धहेतुत्वमित्यभिप्रायेण पुनः शंकते । कुतः पुनरिति । अविवेकप्रयोज्यसान्निध्यस्य बन्धप्रयोजकत्वान्नोक्तदोष इत्यभिप्रायेण समाधत्ते । पुरुषादिति ।

नन्वेवं भेदाग्रहो नामाविवेकः स च विवेकप्रागभावो विवेकाख्यस्य ज्ञानस्य वासना वा स विषयतासम्बन्धेन पुरुषधर्मोऽन्यधर्माध्यासे हेतुरिति पर्यवसाने अन्यथाख्यात्यापत्तिः । न चेष्टापत्तिः ।

"आत्मख्यातिरसत्ख्यातिरन्यथाख्यातिरेव च ।

तथाऽनिर्वचनख्यातिरख्यातिः ख्यातिपचक" मिति ख्यातिपंचकेषु आद्यचतुर्णां निरासात् । तथा हि क्षणिकविज्ञानस्यात्मनस्तदाकाररजतादेर्बाह्यत्वेन ख्यातिरात्मख्यातिः । अत एव नेदं रज-

तमित्यादिपुरोवर्त्तिनि बाह्ये ज्ञानाकाररजननिषेधोऽपि संगच्छते । तथा च नास्ति प्रकृत्यादि बाह्यं वा वस्तु येन तत्संयोगादौपाधिकस्तात्त्विको वा बन्धः स्यादिति सौत्रान्तिका अहुरसदसत् ।

ज्ञानं न रजतमित्याद्यबाधितप्रतीत्या रजतादेर्ज्ञानाकारत्वासम्भवात् बाह्यवस्त्वभावे क्वाचित्कानियमानुपपत्तेर्निषेधानुपपत्तेश्च । न हि निरधिष्ठानको भ्रमो निषेधो वाऽनुभूयते ।

वैभाषिकास्तु भ्रमेऽसदेव रजतं भासते इत्यसत्ख्यातिरेव भ्रमः । असतो रजतादेः ख्यातिरिति तद्विवरणात् । तथा चासदेव बन्धकृतं प्रकृत्यादि नत्याहुस्तन्न

असतोऽन्द्रियसन्निकर्षादिरूपसामग्र्यसंभवेन तज्ज्ञानानुपपत्तेः । इन्द्रियसन्निकर्षाद्यभ्युपगमे सदसतोर्वैलक्षण्यानुपपत्तेः ।

न चासदेव रजतमत्राभादित्यनुभवानुपपत्तिरिति वाच्यम् । अनुभवस्य सदन्यविषयकत्वात् । अत्राविद्यमानरजतविषयकत्वाद्वा । असतोऽपरोक्षज्ञानासम्भवात् । न हीन्द्रियं विषयसन्निकर्षं विनाऽपरोक्षं ज्ञानं जनयति । असतो बाधायोगाच्च । न ह्यसतोऽत्यन्ताभावोऽस्ति । न च सार्वदेशीयसार्वकालिकात्यन्ताभावप्रतियोगित्वमसत्त्वमतो ऽसतोऽप्यत्यन्ताभावोऽस्त्येवेति वाच्यम् । प्रतियोगित्वाश्रयस्य भावरूपत्वांगीकारे द्रव्याद्यन्यतमत्वापत्त्या नाममात्रे विवादापत्तेः । त्वदुक्ताभावासिद्धेश्च । न हि द्रव्यादेस्तादृशोऽभावोऽस्ति । अत्यन्ताभावरूपत्वे च तत्प्रतियोगिनो भावरूपत्वापत्त्या तादृशभावस्याप्रसिद्धेः । तादृशभावस्य गगनादेरात्मनो वाऽङ्गीकारे तदभावत्वायोगात् ।

न च गगनाद्यभाव एव सः,तस्यासत्त्वानुपपत्तेः । न च गगनाद्यभावस्य शशशृंगतुल्यत्वादसत्त्वोपपत्तिरिति वाच्यम् । असतः प्रमाणाविषयत्वेनाव्यवहार्यत्वापत्तेः । प्रमाणविषयस्यैव व्यवहार्यत्वात् । गगनाभावादेरसत्त्वे स्वाभावविरहस्वभाववादिनस्ते त-

द्विरहस्वभावस्य गगनादेरप्यसत्त्वापत्तेः । गगनादेर्वृत्तिमत्त्वाभावेन सर्वदेशीयत्वासम्भवाच्च ।

यत्तु भवानन्दभट्टाचार्याः असद्वैशिष्ट्यस्य सदुपरागेणापि भाननिरासादित्यर्थः । न च प्रतियोग्यप्रसिद्धिः । शुक्तिविशेषत्वावच्छिन्नरजतत्वप्रकारत्वस्य रजतत्वप्रकारतासामान्यस्य वा यत्किंचित्प्रमात्वघटकप्रकारतानियामकसम्बन्धनिरूपितत्वनियमबलेनार्थतस्तन्निरासात् । असद्वैशिष्ट्यभाने तु रजतत्वप्रातियोगिकशुक्त्यनुयोगिकवैशिष्ट्यस्य किंचित्प्रमात्वघटकप्रकारत्वानियामकतया शुक्तौ रजतत्वप्रकारतायां तादृशसम्बन्धनिरूपितत्वाभावेन तादृशनियमभंगादित्याहुः ।

तदपरे न क्षमन्ते । तथा हि । असद्वैशिष्ट्यभानमते शुक्तिविशेष्यत्वावच्छिन्नरजतत्वस्य यत्किंचित्प्रमात्वघटकप्रकारतानियामकसम्बन्धनिरूपितत्वाप्रसिद्ध्योभयमतसिद्धनियमाभावेनार्थतस्तन्निरासासंभवात् । अन्यथाख्यातिमतेऽपि उक्तप्रमात्वघटकप्रकारतानिरूपितसम्बन्धस्य रजतानुयोगिकरजतत्वप्रयोगिकसमवायरूपस्योक्तप्रकारतानिरूपकत्वाभावेनोक्तनियमासम्भवात् । रजतानुयोगिकसंसर्गस्य भानांगीकारे तु तज्ज्ञानस्यान्यथाख्यातित्वापत्त्या रजतत्वप्रकारकत्ववत्तत्संसर्गप्रकारकत्वापत्तेः । तदुक्तमसत्ख्यातिवादिभिः—

"अन्यथाख्यातिवादिमतेऽपि विभ्रमे पुरोवर्त्तिसंसर्गस्य शून्यतयाऽनवभासापत्तेः शून्यसम्बन्धस्य भानांगीकारे अर्द्धजरतीयदोषवारणाय सम्बन्धिनोरसतोर्भानावश्यकत्वेऽस्मदीयजयापत्तेः । सम्बन्धेऽप्यन्यथाख्यात्यंगीकारे रजतत्वादिवत्प्रकारत्वापत्त्याऽनवस्थापत्तेः । इदं रजतमित्यत्र पुरोवर्त्तिशुक्त्यादिनिरूपितरजतत्वसंसर्गस्यैव भानानुभवाच्च ।

एतेनेन्दत्वविशिष्टधर्मिनिरूपितो रजताभेदो रजतत्वसमवायो

वा भ्रमविषयस्तौ चान्यत्र वर्त्तेते रजतेऽपीदन्त्वस्य सत्त्वादिति परास्तम्। किं च किं भ्रमविषयीभूतेदन्त्वविशिष्टधर्मी रजतमेव ? तर्हि शुक्तौ न प्रवर्त्तेत तस्या भ्रमाविषयत्वात्। शुक्तिरेव चेत्स एव दोषः। विशिष्टज्ञानं च विशेष्यं विशेषणं तदुभयसम्बन्धं च विषयीकरोतीति कथं नासद्वैशिष्ट्यभानमिति। तस्मादसदेवाध्यासविषय इति"।

"एतेन रजतत्वप्रकारतासामान्यस्य वेति नियमोऽपि परास्तः। असद्वैशिष्ट्यभानावश्यकत्वात्। प्रमात्मकज्ञानीयरजतत्वप्रकारत्वस्येत्युक्ते त्वसद्वैशिष्ट्यभाने नियमभंगासंभवेनार्थतस्तन्निरासासम्भवात्। न चानवस्थादोषभयादसद्वैशिष्ट्यभानांगीकारेऽपि प्रकारतया सद्धर्मस्य भानांगीकारे क्षमभावः। अत एवान्यथा प्रकारान्तरेण व्यधिकरणधर्मेण ख्यातिरन्यथाख्यातिरिति तद्विवरणमुपपद्यते। सम्बन्धत्वेन सम्बन्धस्य भाने इन्द्रियसन्निकर्षानपेक्षणाच्चासद्वैशिष्ट्यभानं सम्भवति। असतीन्द्रियसन्निकर्षादिरूपज्ञानसामग्र्यसम्भवेनासतः प्रकारतया भानं न सम्भवतीति वाच्यम्। अन्यत्र स्थितरजतत्वादिविशेषणे इन्द्रियसन्निकर्षाभावस्योभयमतेऽपि तुल्यत्वात्। न च ज्ञानलक्षणासन्निकर्षस्तत्रास्तीति वाच्यम्। ज्ञानलक्षणासन्निकर्षस्य प्राङ्‌ निरस्तत्वात्। न चैवं सोऽयं देवदत्तः सुरभि चन्दनं घटो नास्तीत्यादिविशिष्टप्रत्यक्षे तत्तादेः कथं भानमिति वाच्यम्। तत्तांशे स्मृतित्वांगीकारात्। सांकर्यस्य दोषत्वाभावोपपादनेन स्मृतित्वानुभवत्वयोरेकत्रावच्छेदकभेदेन वृत्तौ विरोधाभावात्। सुरभि चन्दनमिति प्रतीतिस्तु यदि पूर्वगृहीतसौरभविशिष्टधर्मिविषया तदा विशेषणांशे स्मृतिरन्यत्र तु अनुमितिरूपैवेति"।

यदुक्तं व्यधिकरणधर्मप्रकारकं शुक्त्यादिविशेष्यात्तद्वृत्तिधर्मप्रकारकं ज्ञानमन्यथाख्यातिरिति तदपि न। इदं रजतमित्यनुभवस्य पु-

रोवर्त्तिरजतत्वविशिष्टाभेदविषयकत्वात् । न तु पुरोवर्त्तिनि रजतसंसर्गविषयकत्वम् । रजतमिति स्मृत्युपसर्जनस्य तस्यारोपासम्भवात् । अन्यथा संसर्गाभावधीनियामकप्रतियोग्यारोपसमये प्रतियोगितावच्छेदकरूपतादात्म्यस्यापि प्रतियोगिविशेषणतयोपस्थितत्वेनान्योन्याभावधीप्रसंगात् । घटत्वाद्यभावधीप्रसंगाच्च । स्वतन्त्रोपस्थितरजतारोपसामग्र्यां सत्यामुपसर्जनस्यैवारोप इति नियन्तुमशक्यत्वाच्च ।

न चान्यत्र विद्यमानस्यान्यत्र ख्यातिरित्यन्यथाख्यातिशब्दस्य रूढिरिति वाच्यम् । ज्ञानप्रत्यासत्तेर्दूषितत्वेन तथा भानासम्भवात् । सम्भवेऽपि ज्ञानस्य स्वविषयप्रवर्त्तकत्वनियमेनान्यत्रैव प्रवृत्त्यापत्तेः । रजतज्ञानविषयरजतस्यान्यत्रैव सत्त्वात् ।

न च शुक्तिरेव तद्विषयेति वाच्यम् । अन्याकारज्ञानस्यान्यावलम्बनत्वे संविद्विरोधापत्तेः । उभयविषयकत्वांगीकारेऽपि रजतार्थिनः शुक्तौ प्रवृत्त्यसम्भवात् ।

न चेष्टतावच्छेदकप्रकारतानिरूपितविशेष्यतासम्बन्धेन ज्ञानस्य विशेष्यतासम्बन्धेन प्रवृत्तिं प्रति हेतुत्वांगीकारे क्षतिविरह इति वाच्यम् । भ्रमादिस्थले तादृशज्ञानस्यानुपदमेव निरस्तत्वात् ।

न च विमतमिह निषिध्यमानं देशान्तरे सदिह निषिध्यमानत्वात् । यद्यत्र निषिध्यते तत्तदन्यत्र सद्यथा भूतले निषिध्यमानं घटादिकम्, तथा चेदम्, तस्मात्तथेति वाच्यम् । अप्रयोजकत्वात् । विपक्षे बाधकतर्काभावात् । न च हेतुभंग एव बाधकस्तर्कः । तस्य प्राप्तिमात्रापेक्षत्वेनान्यत्र सत्त्वानपेक्षणात् । इह चोत्पन्नस्य घटस्येहैव च निषिध्यमानस्यान्यत्र सत्त्वं नास्तीति तेन व्यभिचारात् ।

न च देशान्तर इत्यनुक्त्वा क्वचिदितिपदेन साध्यनिर्देशः कार्यस्तथा च तस्यापि तद्देशे सत्त्वात्क्वचित्सदिति साध्यमस्तीति वाच्यम् । असद्वैशिष्ट्यभानस्यानुपदमुपपादितत्वेन तेनैव व्य-

भिचारात्

वेदान्तिनस्तु । अनिर्वचनीयख्यातिरेव भ्रमः । अनिर्वचनीयस्य सत्त्वेनासत्त्वेन सत्त्वासत्त्वाभ्यां च निर्वक्तुमशक्यस्य तत्रोत्पन्नप्रातिभासिकस्य रजतस्य ख्यातिरिति तद्विवरणात् ।

न च विमतमित्यादिन्यायविरोध इति वाच्यम् । भूतलस्थघटस्य तत्रैव समयान्तरे ऽत्यन्ताभाववद्रजताधिकरणेऽपि कालभेदेन तदत्यन्ताभावे बाधकाभावात् ।

न च घटस्यापसारणेन मुद्गरादिना नाशेन वोत्तरकालेऽत्यन्ताभावसम्भवे ऽप्यत्र रजतापसारणाद्यभावेन कालान्तरेऽत्यन्ताभावो न सम्भवतीति वाच्यम् । पूर्वोत्पन्नस्य रजतस्याधिष्ठानसाक्षात्कारेण निवर्त्तितस्य कालान्तरेऽत्यन्ताभावसम्भवात् । ज्ञानस्यार्थनिवर्त्तकत्वं तु मुद्गरादेरिवान्वयव्यतिरेकाभ्यामवध्रियते इति ।

न च प्रसिद्धरजतसामग्र्यभावात्कथं तत्र रजतोत्पत्तिरिति वाच्यम । खण्डघटपाकजघटयोः क्लृप्तदण्डचक्रकुलालादिसामग्र्यभावेऽपि कल्पनीयसामग्र्यन्तरवदत्रापि सामग्र्यन्तरकल्पनात् । रजतं साक्षात्करोमीत्यनुव्यवसायसम्भवेन भ्रमस्थलेऽपि विषयेन्द्रियसन्निकर्षप्रयोज्यलौकिकविषयताया आवश्यकत्वे विषयोत्पत्तेरप्यावश्यकत्वात् । रजतादौ लौकिकप्रत्यक्षं विना पुरोवर्त्तिरजतावयवादौ प्रवृत्त्यनुपपत्तेश्च ।

न च संयोगस्येव दोषस्यापि प्रत्यक्षहेतुत्वमिति वाच्यम् । प्रत्यक्षसामान्यप्रयोजकातिरिक्तकारणाभावेनाप्रामाण्यस्य परतस्त्वानुपपत्तेः । सत्यरजतादिस्थले व्यभिचारेण भ्रमं प्रति तस्य हेतुत्वेऽपि गौरवेण भ्रमात्मकप्रत्यक्षत्वावच्छिन्नं प्रत्यहेतुत्वात् । भ्रमात्मकरजतप्रत्यक्षत्वाद्यपेक्षया प्रातिभासिकरजतत्वस्य कार्यतावच्छेदकत्वे लाघवाच्च ।

यत्तु अद्वैतसिद्धान्तविद्योतने ब्रह्मानन्दसरस्वत्याचार्याः–वि-

षयदोषस्य कारणत्वस्थले तत्कार्यता रजतादिलौकिकप्रकारता-निरूपितसंसर्गतानिरूपितविशेष्यतासम्बन्धेन चाक्षुषत्वादिना वाच्या । तथा च लाघवात्तादात्म्यादिसम्बन्धेन रजतत्वादिनैव सोच्यतामिन्द्रियनिष्ठकाचादिदोषस्यापि शंखादिविषयविशेष एव पीतत्वादिभ्रमविशेषजननात्तादृशविषयविशेषनिष्ठेन स्वाश्रयसंयोगादिना हेतुत्वे तत्कार्यताऽपि समवायादिना पीतत्वादिनैवोच्यताम् । एवमात्मनिष्ठरागादिदोषस्य हेतुत्वस्थलेऽपि रजतत्वादिनैव ।

न च तत्र रजतदेशात्मप्रत्यासत्त्यसम्भवः शंकनीयः । शरीरावच्छेदेन ज्ञानादेरिव शुक्तीदन्त्वादिवैशिष्ट्यावच्छेदेन रजतादेरात्मसमवाये बाधकाभावात् । तत्प्रत्यासत्त्यैव कार्यत्वसम्भवात् । अत एव भ्रमस्थले रजताद्युत्पत्त्यंगीकारे दोषरहितस्यापि तत्प्रत्यक्षमस्त्विति परास्तम् । तत्पुरुषसमवेतविषयकप्रत्यक्षे तादात्म्येन तत्पुरुषत्वेन हेतुत्वादित्याहुः ।

तन्न । सत्यरजतादिस्थले दोषाभावेन व्यभिचारात् । तत्रापि दोषकल्पनेऽप्रामाण्यस्य परतस्त्वानुपपत्त्यनिवृत्तेः। प्रातिभासिकव्यावहारिकयोरवैलक्षण्यापत्तेश्च ।

न चानिर्वचनीयरजतांगीकारे तत्र प्रसिद्धरजतार्थिनः प्रवृत्त्यनुपपत्तिरिति वाच्यम् । प्रसिद्धाप्रसिद्धोदासीनरजतविषयकज्ञानस्यैव प्रवर्त्तकत्वात् ।

मधुसूदनसरस्वत्याचार्यास्तु रजतत्वं पारमार्थिकत्वाभिमतरजतव्यक्तिभिन्नवृत्ति सकलरजतवृत्तिजातित्वात् । यदेवं तदेवं यथा सत्तादि तथा चेदं तस्मात्तथा । न च रजतमात्रावृत्तित्वमुपाधिः । पक्षमात्रव्यावर्त्तकत्वेन पक्षेतरवदनुपाधित्वात् । नापि रजतभिन्नवृत्तित्वम् । उक्तदोषात् । नचाऽप्रयोजकत्वम्, प्रसिद्धव्यक्तिमाने प्रमाणाभावात् व्यक्त्यन्तरानुत्पादे च निर्विषयज्ञानानुत्पत्तेरेव बाधकतर्कस्य विद्यमानत्वात् । यतः पठन्ति—"अर्थेनैव विशेषो हि

निराकारतया धिया' मिति । इत्थं भूतलक्षणे चेयं तृतीया तथाऽर्थरूप एव विशेषः । न च शुक्तिरेव विषयः, रजतस्यानुभवमाक्षित्वादित्याहुः ।

तन्न । रजतत्वं न पारमार्थिकत्वाभिमतरजतभिन्नव्यक्तिवृत्ति पारमार्थिकत्वाभिमतरजतसामग्रीजन्यतावच्छेदकत्वात् यद्यत्सामग्रीजन्यतावच्छेदकं भवति तत्तत्सामग्रीजन्यमात्रवृत्ति भवति यथोभयाभिमतघटत्वादि । अत्र च हेतुभंग एवानुकूलतर्कः । पूर्वानुमाने च पारमार्थिकत्वाभिमतयत्किञ्चिद्रजतव्यक्तिभिन्नवृत्तित्वसाधने सिद्धसाधनापत्तेः । तादृशयावद्रजतव्यक्तिभिन्नवृत्तित्वसाधने च घटादिव्यक्तिवृत्तित्वेनार्थान्तरापत्तेः । बाधापत्तेश्च । न च बाधबलादेवानिर्वचनीयरजतवृत्तित्वसिद्धिः । नेदं रजतमित्यनुभवेन तत्रापि बाधस्य सत्त्वात् । तथा च पारमार्थिकत्वाभिमते रजते एकम्, मिथ्याभूतं दोषजन्यतावच्छेदकं च परम्, प्रवृत्त्यन्यथानुपपत्त्या चोभयसाधारणं चापरं रजतत्वमिति महागौरवापत्तिरिति भावः ।

ननु प्रसिद्धाप्रसिद्धोदासीनरजतविषयकज्ञानस्य रजतत्वविषयकत्वमङ्गीक्रियते न वा ? नान्त्यः, इष्टतावच्छेदकाविषयकत्वेन प्रवर्त्तकत्वानुपपत्तेः । जात्यतिरिक्तपदार्थस्य स्वरूपेण भानासम्भवाच्च । आद्येऽपि किं सत्यरजतसाधारणं रजतत्वमुतानिर्वचनीयरजतत्वम्, नान्त्यः, तस्येष्टतावच्छेदकत्वाभावेन तज्ज्ञानस्य प्रवर्त्तकत्वानुपपत्तेः । नाद्यः । अनुपददूषितमधुसूदनमतप्रवेशापत्तेरिति चेन्न ।

शुक्तित्वादिवद्दोषवशेनानिर्वचनीयरजतत्वेऽनिर्वचनीयत्वस्याभानाद्रजतत्वभानाच्च प्रवृत्त्युपपत्तेः ।

ननु कालभेदेन क्षीरादेर्दध्यादिपरिणामवत् शुक्त्यादे रजतादिपरिणामसंभवे वस्तुनो नानारूपत्वेन वा रजतादिव्यवहारापत्ते-

रनिर्वचनीयरजतादिकल्पनं व्यर्थम् । न च बाधकप्रत्ययानुपपत्ति-रिति वाच्यम् । कालभेदेन भिन्नविषयकत्वात्तस्य बाधकत्वासिद्धेः । तीव्रातपादिघटिताघटितसामग्रीभेदेनैकसमयेऽपि पुरुषभेदेन रजतग्रहणाग्रहणोपपत्तेः ।

एवं रक्तवस्त्रस्य निशि चन्द्रिकायां नीलतया, दीपसमवधाने तु लोहिततया प्रतीत्युत्पत्तेः । कालभेदेन वा विरोधाभावात् । न चैवमपि स्वाप्नपदार्थानां जाग्रत्यनुपलम्भाद्रूपान्तरेणोपलम्भाभावाच्च ज्ञानातिरिक्तनाशकस्याभावाच्च न सत्त्वं सम्भवतीति वाच्यम् । "अथ रथान् रथयोगान्पथः सृजत एष सुप्तेषु जागर्त्ति कामं कामं पुरुषो निर्मिमाण" इत्यादिश्रुत्यविरोधाय तत्रत्यानां पदार्थानां जाग्रदवस्थादर्शनायोग्यत्वकल्पनात् । अन्यथा विमताः स्वाप्नपदार्थाः सम्यञ्चः स्वाप्नपदार्थत्वात् जपसंराधितदेवतोक्त"त्वं सर्वज्ञो भविष्यसी"त्याद्युभयमतसिद्धस्वप्नपदार्थवदित्यनुमानविरोधापत्तेरिति चेन्न । क्षीरस्य दधिपरिणामवत् राजगृहे चिरस्थितानामपि रजतभाजनानां शुक्तिभावादर्शनात्प्रत्युत रजतभावदर्शनात् । वस्तुनः पारमार्थिकनानात्मत्वाङ्गीकारे मरीचीनामपि पिपासानिवर्त्तकत्वापत्तेः ।

न च तोयमेव द्विविधं पिपासोपशमनमतदुपशमनमिति युक्तम् । पिपासोपशमनार्थे क्रियाकारित्वव्यापकनिवृत्त्या तद्व्याप्यस्य तोयस्यापि निवृत्तेः । पिपासोपशमकमुदकमित्येकरूपस्य सम्भवेऽनेकरूपकल्पनागौरवाच्च ।

न च रजतस्य भविष्यत्तामगोचरयन् वर्तमानरजतावभासिज्ञानं स्वसमयवर्त्तिनीं शुक्तिं गोचरयता भविष्यत्प्रत्ययेन बाध्यते कालभेदेन विरोधाभावादिति युक्तम् । असति विनाशकारणे रजतमिदं स्थिरं रजतत्वात् अनुभूतप्रत्यभिज्ञातरजतवदिति पृष्ठभाव्यनुमानसहकृतप्रत्यक्षेण रजतज्ञानकालमारभ्य यावत् शुक्तिज्ञा-

नकाले रजतविनाशहेत्वदर्शनेन शुक्तिकाज्ञानकालवृत्ति रजतं गृह्यते तथा च शुक्तित्वरजतत्वयोरेकदैकत्र सत्त्वापत्त्या विरोधादर्थाद्बाध्यबाधकभावापत्तेः ।

तदुक्तं वार्त्तिके—रजतं गृह्यमाणं हि चिरस्थायीति गृह्यते । भविष्यच्छुक्तिकाज्ञानकालं व्याप्नोति तेन तदिति । स्वप्नसंवादस्तु काकतालीयो न तु स्वाप्नं प्रमाणयितुमर्हति तादृशस्यैव बहुलं विसंवाददर्शनात् । विमता इत्याद्यनुमानस्य देशकालनिमित्ताभावेन कालात्ययापदिष्टत्वात् । न हि देहदेशे रथादयोऽवकाशं लभन्ते ।

न च "बहिः कुलायादमृतश्चरित्वा स ईयतेऽमृतो यत्र कामम्" इति श्रुत्यविरोधाय "अथ रथान् रथयोगान्" इत्यादिश्रुतेर्बहिर्देशे सृष्टौ तात्पर्यकल्पने देशानुपपत्तिर्नास्तीति वाच्यम् । सुषुप्तस्य पुरुषस्य क्षणमात्रेण योजनशतान्तरितदेशगमनागमनासम्भवेन कुरुष्वहमद्य शयानो निद्रयाऽभिप्लुतः स्वप्ने पञ्चालानभिगतश्चास्मि प्रतिबुद्धश्चेति प्रत्यागमनवर्जितस्वप्नश्रवणेन स्वप्नकर्त्तुः शयनदेशे एव पार्श्वस्थैरुपलम्भेन विरोधात् । स यत्रैतत्स्वप्नया चरतीत्युपक्रम्य स्वशरीरे यथाकामं परिवर्त्तते इति श्रुतिविरोधाच्च बहिः कुलायादित्यादिश्रुतेर्बहिरिव कुलायादित्येवं गौणतया व्याख्येयत्वात् । यो हि शरीरे वसन्नपि प्रयोजनं न करोति स बहिरिव शरीराद्भवतीत्यर्थः । कालसंवादोऽपि । यथा मुहूर्त्तमात्रवर्त्तिनि स्वप्ने कदाचिद्बहून्वर्षपूगानतिवाहयति । क्षणेन मनुष्योऽयं निर्धारितः क्षणेन वृक्ष इति करणे निवर्त्तने वा निमित्ताभावाच्च करणोपसंहारात्तद्ग्रहणाय चक्षुराद्यभावाच्च ।

न च प्रमुष्टतत्ताकस्मरणमेव स्वप्न इति वाच्यम् । अनधिगताबाधितस्वप्नदर्शनात् । स्वप्ने स्वशिरोच्छेदनमद्राक्षमित्याद्यनुभ-

वानुपपत्तेश्च। तथा च विमताः स्वाप्नपदार्थाः न सम्यञ्चस्तत्क्लृप्तसामग्र्यजन्यत्वाच्छुक्तिरूप्यवदित्यर्थः।

ननु दृष्टान्ते क्लृप्तसामग्र्यपि न सम्भवति। न च शुक्त्यवयव एवोपादानम्, तदुत्पन्नस्य शुक्तित्वापत्तेः। न च दोषसंस्कारादिसहकृताविद्यैव प्रातिभासिकरजतोत्पादिकेति वाच्यम्। तदनुविद्धतयाऽप्रतीतेः। न च वियदादेरविद्योपादानत्वेऽपि तदनुविद्धप्रतीत्यभावेन व्यभिचारात्तादृशनियमो न सम्भवतीति वाच्यम्। वियदादेराविद्यकत्वे मानाभावात्।

न च 'मायां तु प्रकृतिं विद्या'दित्यादिश्रुतिरेव मानमिति वाच्यम्। इदमंशाचैलजिनबन्धनाद्यनुपपत्तेश्च(?) वियदाद्यतिरिक्ते तस्या उपादानत्वाकल्पनात्। वियदादिवत्सोपादानत्वे सकर्तृकत्वापत्तेश्चेति चेन्न

विमतो रूप्याभासः साक्षादविद्योपादानः अन्यानुपादानत्वे सति सोपादानत्वादाकाशादिवदित्यनुमानेनान्वयव्यतिरेकाभ्यां च शुक्त्याद्यज्ञानस्य कारणत्वावधारणात्। किं च शुक्त्यादिज्ञानमज्ञानं नाशयद्रूप्यादिकमपि नाशयति। तच्च तदुपादानत्वं विना न घटते निमित्तनाशस्य कार्यनाशं प्रत्यप्रयोजकत्वात्। उपादेये उपादानानुविनियमाभावात्। कपालं घटो गोमयं वृश्चिकादीत्यप्रतीतेः। कारणतानवच्छेदकरूपेण नियमाङ्गीकारे तु जडत्वादिनाऽत्रापि सम्भवात्।

न चेदमंशानुविद्धतया प्रतीत्यनुपपत्तिरिति वाच्यम्। न्यायमते अवच्छेदकतया शरीरानुविद्धात्मनिष्ठसुखादिदमंशस्यावच्छेदकताया अज्ञाने निवेशात्तदनुविद्धतया प्रतीत्युपपत्तेः। कार्यकारणयोरभेदादंगुलिनिर्देशाद्युपपत्तिः। सोपादानत्वेन सकर्तृकत्वापत्ताविष्टापत्तिः। स हि कर्त्तेति श्रवणात्।

न च स्वोपादानगोचरज्ञानचिकीर्षादिमत्त्वरूपकर्तृत्वं न सम्भवतीति वाच्यम् । कर्तृपदस्य लांगूलं गवादीनुद्वहतीति निमित्तत्ववत्प्रातिभासिकभाननिमित्तमोदत्रासादिहेतुसुकृतदुष्कृतकर्तृत्वरूपनिमित्तत्वपरत्वात् ।

न च तत्त्वज्ञानस्य प्रतिबन्धकत्वेन तदभावविषयतयोक्तान्वयव्यतिरेकावन्यथासिद्धाविति वाच्यम् । तत्त्वज्ञानस्य दोषादिघटितरजतसामग्रीकालीनत्वाभावेनाप्रतिबन्धकत्वात् ।

न च विमतं रजतं सोपादानकं न भवति सद्विलक्षणत्वादसदिवेति वाच्यम् । घटादौ व्यभिचारात् । न च घटः सन्नेवान्यथा घटस्य भावकार्यत्वानुपपत्तेरिति वाच्यम् । बाधायोग्यसतः कार्यत्वानुपपत्तेः भावकार्यत्वस्यैव विलोपप्रसङ्गात् । बाधायोग्यत्वसत्त्वातिरिक्ताभावत्वविलक्षणभावत्वेन घटादेः सोपादानत्वे तादृशस्य शुक्तिरजतेऽप्यङ्गीकारेण सोपादानत्वसम्भवात् ।

यत्तु । शुक्तिकारूप्यस्योत्पत्तिविनाशाभ्युपगमे शुक्तिकायां रजतमुत्पन्नं नष्टमित्यनुभवप्रसङ्ग इति तन्न । भ्रान्तिसमये पूर्वोत्पन्नाविनष्टशुक्त्यभिन्नतया भ्रान्तेरेव प्रतिबन्धकत्वात् विरोधिज्ञानानुदयेन रजतस्याविनाशाच्च । बाधसमये अत्यन्ताभावग्रहस्यैव प्रतिबन्धकत्वात् ।

न च त्रयाणामत्र सत्त्वाद्विनिगमनाविरह इति वाच्यम् । फलबलेनात्यन्ताभावसामग्र्या एव बलवत्त्वस्य विनिगमकत्वात् ।

वस्तुतस्तु 'अथ रथान् रथयोगा'नित्यादिश्रुतिजन्यज्ञानवतां स्वप्ने इव शुक्तिकायामपि तत्प्रतीताविष्टापत्तेः । पामराणां तथा प्रतीत्यभावेन शुक्तिरजतादेरुत्पादविनाशाकल्पने स्वप्नेऽपि रथादेरुत्पत्तिविनाशाकल्पनोपपत्तेः । गौरोऽहं ब्राह्मणोऽहं देवदत्तोऽहमित्याद्यनुभववतां विचारशून्यानां देहातिरिक्तात्मानुभवाभावात् देहातिरिक्तात्मासिद्ध्यापत्तेश्च ।

न च प्रतिबिम्बमिथ्यात्वे तत्राज्ञानस्योपादानत्वं न सम्भवति । सर्वात्मनाऽधिष्ठानज्ञानानन्तरमपि प्रतिबिम्बाध्यासदर्शनात् । अधिष्ठानविशेषज्ञानस्य प्रतिबिम्बानिवर्त्तकत्वाच्चेति वाच्यम् । अधिष्ठानज्ञानानिवर्त्यब्रह्मविषयकमूलाज्ञानस्यैवोपादानत्वात् ।

न च प्रतिबिम्बाध्यासस्य मूलाज्ञानकार्यत्वे बिम्बोपाधिसन्निधिनिवृत्तिसहकृताधिष्ठानज्ञानेनानिवृत्त्यापत्तेः । तदुपादानमूलाज्ञानस्य ब्रह्मज्ञानातिरिक्तज्ञानानाश्यत्वादिति वाच्यम् । दर्पणत्वादिना ऽधिष्ठानज्ञानस्य भिन्नविषयकतया मूलाज्ञानानिवर्त्तकत्ववद्दर्पणे मुखं नास्तीति ज्ञानस्य बिम्बोपाधिसन्निधिविरहसचिवस्य मूलाज्ञानानिवर्त्तकत्वेऽपि तदुपादानकप्रतिबिम्बाभावविषयकतया प्रतिबिम्बाध्यासनिवर्त्तकत्वसम्भवात् ।

ननु शुक्तिरजतादेरिव प्रतिबिम्बाध्यासस्यापि उपाधिसन्निधिसचिवावस्थाज्ञानपरिणामत्वसम्भवे किं मूलाज्ञानपरिणामत्वकल्पनया ? बिम्बोपाधिसन्निधिविरहसचिवस्याधिष्ठानज्ञानस्य तन्निवर्त्तकत्वात् । अत एव ज्ञानमज्ञानस्यैव निवर्त्तकमज्ञानकार्यस्य तु उपादानाज्ञाननिवृत्त्या निवृत्तिरिति पञ्चपादिकाकारोक्तमपि सङ्गच्छते इति चेन्न ।

अवस्थाज्ञानस्याऽऽवरणात्मकत्वे सर्वात्मनाऽधिष्ठानज्ञानाभावात् । अनावरणात्मकत्वे अधिष्ठानज्ञानस्य विरोधप्रयोजकसमानविषयकत्वाभावेन तन्निवर्त्तकत्वानुपपत्तेः ।

एतेनोपाधिसन्निधावावरणशक्तिर्नाश्यते । उपाधिनिवृत्तिसचिवेनाधिष्ठानज्ञानेन विक्षेपशक्तिमदज्ञानमिति परास्तम् ।

ननु विरोधिविषयकज्ञानस्य स्वसमानविषयकाज्ञाननिवर्त्तकत्वं स्वविरोधिज्ञानप्रतिबन्धकत्वं च दृष्टं न तु स्वविरोधिज्ञानविषयनिवर्त्तकत्वं तथा चोपाधिसन्निधिनिवृत्तिसचिवेन दर्पणे मे मुखं नास्तीति ज्ञानेन प्रतिबिम्बज्ञाननिवृत्तावपि प्रतिबिम्बानिवृत्त्याप-

त्तिः । न चेष्टापत्तिः । चैत्रप्रतिबिम्बस्य मैत्रेण निरीक्ष्यमाणस्य चैत्रसन्निधिनिवृत्तावपि दृश्यत्वापत्तेः । एतेन स्वोपादानाज्ञाननिवर्तकब्रह्मज्ञाननिवर्त्य एवायमध्यासोऽस्तु व्यावहारिकत्वापत्तिस्त्वविद्यातिरिक्तदोषजन्यत्वेन प्रत्युक्तेति परास्तमिति चेन्न । ब्रह्मज्ञानबाध्यस्य घटादेर्मुद्गरादिना बाधाभावेऽपि नाशवदत्रापि सूक्ष्मावस्थारूपनाशाङ्गीकारात् । शुक्तिरजताद्यध्यासे त्वन्वयव्यतिरेकाभ्यां शुक्तित्वप्रकारकावस्थाज्ञानस्यैव हेतुत्वावधारणे मूलाज्ञानस्य हेतुत्वाकल्पनात् न शुक्तिरजतादेः सर्वपुरुषीयसाधारण्यापत्तिः ।

न च यः श्वेतः शङ्खः स एवायं श्वैत्यव्याप्यशङ्खत्ववांश्चायमित्यादिविशेषदर्शनवतः पित्तपीनिमादिदोषवच्चक्षुष्मतः पीतोऽयमिति शङ्ख इति भ्रमे उक्तरीत्याऽवस्थाज्ञानासम्भवेन मूलाज्ञानोपादानत्वावश्यकत्वे प्रतिबिम्बवत् रक्तवस्त्रेषु निशि चन्द्रिकायां नैल्यवच्च सर्वपुरुषीयसाधारण्यापत्तिरिति वाच्यम् । तद्ग्राहकस्य दोषवदिन्द्रियस्य सर्वपुरुषसाधारण्याभावात् । प्रतिबिम्बादिस्थले दोषस्य सर्वपुरुषसाधारण्येन दृष्टान्तवैषम्यात् । एवं स्वप्नेऽसन्निहितदेशादेः भानासम्भवेन देशादेरध्यस्तत्वे तदवच्छिन्ने चैतन्येऽध्यासासम्भवेन स्वाप्नगजादेः शुद्धचैतन्ये एवाध्यासो वाच्यस्तत्र चावस्थाज्ञानासम्भवेन मूलाज्ञानमेव तदुपादानमिति ।

न च शुद्धचैतन्यस्याऽऽवृतत्वात्कथमधिष्ठानत्वमिति वाच्यम् । चिदानन्दरूपेण मूलाविद्ययाऽऽवृतत्वेऽपि सद्रूपेणानावृतत्वात् । स्वाप्नगजाद्युत्पत्तिकालोत्पन्नान्तःकरणवृत्त्या अविद्यावृत्त्या वा ऽधिष्ठानचैतन्यस्य प्रमातृत्वापत्त्या प्रमातृचैतन्यस्येदं पश्यामीति व्यवहारोपपत्तिरित्याहुः ।

तन्न । विवेकाग्रहादेव शुक्त्यादिपुरोवर्तिप्रवृत्त्युपपत्त्या साङ्ख्यैरपि विपर्यासानङ्गीकारात् ।

न चैवमिदं रजतमिति ज्ञानकाले विवेकाग्रहाभावात् सुषुप्त्यादौ विवेकाग्रहसत्त्वात्प्रवृत्त्यनुपपत्त्युपपत्ती इति वाच्यम्। परस्पराग्रहीतभेदपुरोवर्त्तिविषयेष्टज्ञानस्यैव विवेकाग्रहपदार्थत्वेन विवक्षितत्वात्। पुरोवर्त्तिनि अगृहीतेष्टभेदपुरोवर्त्तिविषयेष्टज्ञानत्वेन हेतुत्वे रजतं पुरोवर्त्तिभिन्नमिति ज्ञानादपि प्रवृत्त्यापत्तेः। इष्टे अगृहीतपुरोवर्त्तिभेदपुरोवर्त्तिविषयेष्टज्ञानत्वेन हेतुत्वे च शुक्तौ नेदं रजतमिति ज्ञानादपि प्रवृत्त्यापत्तेः। उदासीनदशायां प्रवृत्त्यापत्तिवारणाय पुरोवर्त्तीत्यादि।

न चैवमपि सत्यरजते नेदं रजतमिति ज्ञानस्य पुरोवर्त्तिनि इष्टभेदविषयकत्वेऽन्यथाख्यात्या ज्ञानद्वयात्मकत्वेनेदन्त्वरूपेण रजते रजतभेदाविषयकत्वात्ततोऽपि प्रवृत्त्यापत्तिरिति वाच्यम्। स्वातन्त्र्येणेष्टविषयकज्ञानस्य विवक्षितत्वात् सत्यरजतस्थले तु परस्परं भेदाभावादेवागृहीतभेदकत्वं ज्ञानस्य सम्भवति। भ्रमस्थले तु इष्टभेदसत्त्वेऽपि दोषादग्रहणम्। स्वातन्त्र्यं चाभावविषयतानिरूपितविषयतातिरिक्तविषयतावत्त्वम्। तेनाभावाप्रतियोगित्वेनोपस्थितत्वं स्वातन्त्र्यं न वाच्यम्। इदं रजतमिति ज्ञानात्प्रवृत्त्यभावप्रसङ्गात्। अत्र रजतस्याभावाप्रतियोगित्वेन रूपेणानुपस्थितत्वात्।

न चाभावप्रतियोगित्वेनानुपस्थितत्वमन्याविशेषणीभूतत्वेन वाऽनुपस्थितत्वं वाच्यम्। तदा रजते एव नेदं रजतमिति ज्ञानेऽप्युक्तरूपसत्त्वेन प्रवृत्त्यापत्तेः। न हि तन्मते रजतरूपपुरोवर्त्तिनीष्टभेदप्रतियोगित्वेन रजतमुपस्थितमन्यथाख्यात्यापत्तेरिति परास्तम्।

अन्ये तु भेदाग्रहशब्देनेष्टतावच्छेदकरजतत्वादिविरोधिकालपृष्ठादेः शुक्त्यादावग्रहस्योक्तत्वात्। तथा च समवायेन पुरोवर्त्तिविशेष्यकेष्टतावच्छेदकप्रकारकप्रवृत्तित्वावच्छिन्नं प्रति स्वसमानकालीनस्वसामानाधिकरण्यसम्बन्धेनोक्तग्रहाभावविशिष्टपुरोवर्त्ति-

विषयेष्टतावच्छेदकप्रकारकज्ञानं समवायेन हेतुरिति। तेन सत्यरजतस्थले न प्रवृत्त्यनुपपत्तिर्न वा रजते नेदं रजतमिति ज्ञानात्प्रवृत्त्यापत्तिः।

न चेदं रङ्गमिति ज्ञानानन्तरं रजतस्मरणे अन्योन्याभावरूपभेदस्याग्रहसत्त्वात्प्रवृत्त्यापत्तिरत्रापीष्टतावच्छेदकविरोधिरङ्गत्वोपस्थितेः सत्त्वात्। अत एवेदं रजतत्वाभाववदिति ज्ञानेऽपि न प्रवृत्त्यापत्तिः।

न चेदं रजतमित्यादिशब्दाभिलापरूपो रजताभेदशुक्तिगोचरो व्यवहारः स्वविषयाभेदज्ञानसाध्यः व्यवहारत्वात्सम्मतवदित्यभेदज्ञानसिद्ध्याऽन्यथाख्यात्यापत्तिरिति वाच्यम्। उक्तभेदाग्रहसहकृतपुरोवर्त्तिविषयरजतज्ञानाभ्यामेव तदुपपत्तेः। एवमिच्छारूपो व्यवहारोऽपि।

या तु प्रत्यक्षमणौ "ननु पीतः शङ्खो न श्वेत इति भेदज्ञानेऽपि श्वेताभेदानुमित्या श्वेतार्थिप्रवृत्तेरभेदधीस्तद्धेतुरिति चे"दित्याशङ्का सा महतां गङ्गेश्वराचार्याणामेव शोभते। यतः परमते तत्र श्वेतभेदग्रहो न सम्प्रतिपन्नः परेणान्यथाख्यातेरनंगीकाराद् भ्रान्तानामेव तादृशाशङ्कायाः सम्भवात्। रजते इष्टपुरोवर्त्तिभेदस्याप्रसिद्ध्या कथं तदभाव इति प्राक् स्वोक्तेरननुसन्धानाच्च।

यदपि विपरीतचतुष्के युगपत्प्रवृत्तिनिवृत्त्यापत्तिः। तथा हि। यत्र रङ्गरजतयोरिमे रजतरङ्गे नेमे रङ्गरजते इत्यत्र रङ्गे रजतमित्येकं नेदं रङ्गमित्यपरं रजते इदं रङ्गमित्येकं नेदं रजतमित्यपरं विपरीतमिति समूहालम्बना धीः चतुर्ष्वंशेषु भ्रमस्तत्स्थले उभयत्र युगपद्रजतत्वप्रकारकप्रवृत्तिरङ्गत्वप्रकारकनिवृत्त्योरापत्तिः। रङ्गेऽन्यथाख्यात्यापत्त्याऽनिष्टरङ्गभेदाग्रहरूपनिवृत्तिसामग्री दोषप्रतिबन्धकवशाच्च रजतेष्टभेदाग्रहरूपप्रवृत्तिसामग्री। एवं रजतेऽन्यथाख्यात्यापत्त्या रजतभेदाग्रहरूपप्रवृत्तिसामग्री प्रतिबन्धकदोषव-

शाद्यानिष्टरङ्गभेदाग्रहरूपनिवृत्तिसामग्री चानयोः सत्त्वादिति ।

तन्न । विपरीतद्वये इत्येव सामञ्जस्ये अधिकवैयर्थ्यात् । रङ्गरजतयोरिमे रङ्गरजते इति प्रमात्मकज्ञानस्थलेऽपि रङ्गे रङ्गभेदग्रहे रजते रजतभेदग्रहे च अन्यथाख्यात्यापत्त्या परस्परभेदाग्रहेण च युगपत् प्रवृत्तिनिवृत्त्युपपादानसम्भवेन विपरीतपदवैयर्थ्याच्च । रङ्गेऽनिष्टतावच्छेदकरजतत्वविरोधिकालपृष्ठत्वादिग्रहसत्त्वेन रजतत्वप्रकारकप्रवृत्त्यसम्भवाच्च ।

यत्तु रजतरङ्गयोर्युगपदिन्द्रियसन्निकर्षे सति च रङ्गे भेदग्रहस्य प्रतिबन्धकदोषे तयोरिमे रजते इति ज्ञानेन कारणाभावसम्भावनापीति प्रत्यक्षमणिदीधितौ रघुनाथभट्टाचार्यैरुक्तं विवृतं चैतत्तद्व्याख्यातृभिः । यत्र रजते न रजतभेदग्रहो न वा रङ्गे रजतभेदग्रहस्तत्र सति युगपदिन्द्रियसन्निकर्षे रजतरङ्गयोरिमे रजते इति रंगरजतविशेष्यकरजतत्वप्रकारकज्ञाने न किमपि बाधकं ज्ञानलक्षणानङ्गीकारेऽपि रजतत्वेन समं संयुक्तसमवायस्य सत्त्वात् तादृशं च ज्ञानं रङ्गांशे न प्रमात्मकं विशेषणवद्विशेष्यसन्निकर्षरूपप्रमासामग्र्यभावात् । किं त्वन्यथाख्यातिरेवेति भाव इति ।

तन्न । तत्तत्संयुक्तसमवायसन्निकर्षस्य तत्तद्विशेष्यं तत्तद्विशिष्टज्ञानजनकत्वनियमेन रजतसंयुक्तसमवायसन्निकर्षेण रङ्गविशेष्यकरजतत्वप्रकारकज्ञानासम्भवात् । अन्यथा तेन नियामकाभावात् घटादिविशेष्यकज्ञानापत्तेः । रजतरजतत्वानिर्विकल्पकोत्तरं रजतत्वांशे रजतविशिष्टज्ञानापत्तेश्च ।

न च तत्रादृष्टविशेषः प्रतिबन्धकः । प्रतिबध्यस्य रजतत्वविशेष्यकरजतज्ञानस्याप्रसिद्धेः । प्रसिद्धौ तस्य प्रतिबध्यत्वासम्भवात् । विशेषणज्ञानस्य तत्तद्धर्मिविशेष्यकविशिष्टज्ञानहेतुतया न तेनापि रङ्गविशेष्यकरजतत्वविशिष्टबुद्ध्यापत्तिः ।

यदपि सामान्यरूपेण व्याप्तिग्रहे बाधानवतारे लाघवज्ञानस-

हकारात्पक्षे विशेषरूपेण साध्यं परिच्छिन्नत्त्यनुमानमिति वाग्नुमतं तथा च बाधानवतारे सति च लाघवज्ञाने बाधितमपि साध्यं पक्षे परिच्छिन्दन्केन वारणीयमिति दीधितिकृद्भिरुक्तं विवृतं चैतत्तद्व्याख्यातृभिः । महानसीयवह्नित्वादिना व्यापकताज्ञानं विनाऽपि शुद्धवह्नित्वादिना व्यापकताज्ञानस्य महानसीयवह्नौ लाघवमित्यादिलाघवज्ञानसहकारेण महानसीयवह्निभिन्नवह्न्यभाववान्पर्वत इत्यादीतरबाधसहकारेण च महानसीयत्वविशिष्टवह्नित्वादिरूपेण तादृशवह्न्यादिविधेयकानुमितिजनकत्वं तत्रापि गुरोरनुमतं तथा च तादृशानुमितेर्भ्रमरूपाविशिष्टज्ञानत्वं सम्भवति तादृशानुमितौ तादृशलाघवज्ञानेतरबाधयोर्हेतुत्वकल्पनाच्च न तच्छून्यकाले तदापत्तिः । न चैवं तादृशलाघवज्ञानादिजन्यानुमितौ महानसीयवह्नित्वावच्छिन्ननिरूपितव्याप्त्यवगाहिपरामर्शस्य व्यभिचार इति वाच्यम् । अन्यलिङ्गकानुमितौ व्यभिचारवारणाय परामर्शजन्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशनस्याऽऽवश्यकतया व्यभिचाराभावात् । एवं तादृशपरामर्शजन्यानुमितौ लाघवादीनां व्यभिचारवारणाय लाघवज्ञानादिजन्यतावच्छेदककोटावपि लाघवज्ञानाव्यवहितोत्तरत्वं निवेशनीयम् । एवमेतत्कालीनश्चैत्रो जीवनमरणान्यतरप्रतियोगी प्राणित्वादयं कालः चैत्रजीवनमरणान्यतरवान् कालत्वात् इत्यादौ मृतचैत्रे लाघवसहकाराज्जीवनप्रतियोगित्वं यत्र भासते तत्राप्यन्यथाख्यातिसिद्धिरिति ।

तन्न । तदीयपरामर्शग्रन्थे लाघवज्ञानस्य हेतुत्वनिराकरणेन तत्राप्यनुमतामिति कथनस्य तन्मताज्ञानप्रयुक्तत्वात् । पर्वतो महानसीयवह्निभिन्नवह्न्यभाववान् पर्वतो महानसीयवह्निमानित्यादिकथनं तु त्वदीयग्रन्थव्याख्यातॄणामेव शोभते यतः पामराणामपि तथा भ्रमाभावात् । उक्तस्थले महानसीयवह्नित्वेन शुद्धवह्नित्वेन वा महानसीयवह्निभानोपगमे लाघवज्ञानाद्यसत्त्वे तादृशभा-

नवारणाय तत्र लाघवज्ञानादीनामव्यवहितोत्तरत्वं जन्यतावच्छेदककोटौ निवेश्य जनकत्वं कल्पनीयम् । एवं लाघवज्ञानादिविषयसाध्यातिरिक्तसाध्यभानवारणाय तत्र तेषां प्रतिबन्धकत्वं च कल्पनीयमिति महद्गौरवमित्यादिज्ञानवतां तथा भ्रमासम्भवात् । अत एव नैयायिकधुरन्धरैरुपाध्यायादिभिरपि महानसीयवह्नित्वादिनोक्तस्थले भानानङ्गीकारात् ।

न चैवमीश्वरानुमाने ऽनेकेश्वरसिद्धिप्रसङ्ग इति वाच्यम् । एकत्वस्यानुमित्यविषयत्वेऽपि स ऐक्षत एको देव इत्यादिश्रुत्यैवैकत्वसिद्धेः । अनेकत्वे प्रमाणाभावाच्च ।

ननु बाधस्य हेत्वाभासान्तरत्वानुपपत्त्याऽनुमितौ व्यापकतानवच्छेदकरूपस्य लाघवज्ञानादिवशाद्भानमावश्यकं तथा सत्येव तादृशानुमितिप्रतिबन्धकतया बाधस्य हेत्वाभासत्वसिद्धिः ।

न च लाघवज्ञानाद्यसत्त्वेऽपि पर्वतो वह्न्यभाववानिति बाधनिश्चये पर्वतो वह्निमानित्यनुदयेन तत्प्रतिबन्धकतया तस्य हेत्वाभासत्वसिद्धिरिति वाच्यम् । तत्र पर्वते धूमादेर्हेतोर्ज्ञानदशायां व्यभिचारज्ञानस्य सत्त्वेन तेनैवानुमितिप्रतिबन्धात् तदज्ञानदशायां च पक्षधर्मताज्ञानाभावादेवानुमित्यनुदयसम्भवादिति चेन्न ।

धूमादिहेतोः पक्षवृत्तित्वज्ञानेऽपि वह्न्यभाववद्वृत्तिर्धूम इति विशिष्टज्ञानात्मकव्यभिचारज्ञानस्यैव प्रतिबन्धकतयोक्तस्थले तादृशव्यभिचारज्ञानस्यासत्त्वात् । व्यभिचारज्ञानस्य व्याप्तिज्ञानविघटनद्वारैवानुमितिप्रतिबन्धकतया यत्र वह्निव्याप्यधूमवान् पर्वत इति ज्ञानोत्तरं पर्वतो वह्न्यभाववानिति बाधनिश्चयस्तत्र व्याप्तिज्ञानस्य वृत्ततया तद्विघटनद्वारा व्यभिचारज्ञानस्यानुमितिप्रतिबन्धकत्वासम्भवेन बाधस्य तत्प्रतिबन्धकतया हेत्वाभासत्वसिद्धेश्च । बाधस्य हेत्वाभासान्तरत्वाभावेऽप्यस्माकं क्षतिविरहाच्च ।

न च पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति पक्षतावच्छेदका-

वच्छेदेन परामर्शस्य हेतुतया गन्धप्रागभावकालावच्छिन्नो घटो गन्धवान्पृथिवीत्वादित्यादौ पक्षतावच्छेदकगन्धप्रागभावकाला-वच्छेदेन गन्धानुमितेर्भ्रमरूपविशिष्टज्ञानत्वं दुर्वारमिति वाच्यम् । तादृशानुमितौ तादृशापरामर्शस्यातिरिक्तजनकत्वकल्पनेन तादृशा-नुमितिं प्रति तादृशानुमित्याविरहविशिष्टसत्यक्षेच्छाविशिष्टसत्यक्ष-सामग्र्यादीनां प्रतिबन्धकत्वकल्पनेन च महागौरवभियाऽतिप्रस-ङ्गभङ्गाय व्यापकतावटकसम्बन्धेनैव व्यापकस्यानुमितौ मानमिति नियमांगीकारेण चोपाध्यायादिभिस्तादृशानुमितेरनङ्गीकारात् ।

न च दूष्यं गन्धवत्पृथिवीत्वादित्यादिभागासिद्धेः पक्षताव-च्छेदकसामानाधिकरण्येन हेत्वभाववत्ताज्ञानरूपतया अवच्छेदका-वच्छेदेन हेतुमत्ताज्ञानरूपानुमितिकारणविघटकतया तस्याः प-क्षतावच्छेदकावच्छेदेनानुमित्यङ्गीकर्तृनये हेत्वाभासविधया तस्या दूषणत्वसम्भवेऽपि त्वन्नये सामानाधिकरण्येन हेतुमत्ताज्ञानस्यानु-मितिकारणत्वेन तत्प्रतिबन्धकत्वाभावाद् दूषणत्वानुपपत्तिरिति वा-च्यम् । सामानाधिकरण्येनानुमितिं प्रति पक्षतावच्छेदकावच्छेदेन हेतुमत्तापरामर्शस्य हेतुतया तद्विघटकतयैव तस्या हेत्वाभासविधयै-व दूषणत्वसम्भवात् ।

न चोत्पत्तिकालीनो घटो गन्धव्याप्यपृथिवीत्ववानित्या-कारकादपि परामर्शात्पक्षतावच्छेदकसामानाधिकरण्यमात्रावगाह्यनु-मितिस्वीकारे पक्षतावच्छेदकसामानाधिकरण्यमात्रावगाहिसि-द्धिदशायामनुमितिर्जायतां वह्न्यनुमितिर्जायतामित्याद्यननुगतानु-मित्सासत्त्वे तादृशानुमितिनिर्वाहाय तादृशेच्छाव्यक्तीनां सिद्ध्या-वुत्तेजकतां विनैव तथाविधानुमितेरुत्पत्तिनिर्वाहाल्लाघवमिति वा-च्यम् । अवच्छेदकावच्छेदेनानुमित्यङ्गीकारे तादृशसिद्धेः प्रति-बन्धकत्वकल्पनेन भिन्नविषयकप्रत्यक्षादिवारणायावच्छेदकावच्छे-देन सिद्ध्यभावबाधनिश्चयाभावघटिताया विलक्षणानुमितिसाम-

न्या अधिकप्रतिबन्धकत्वकल्पनेन तादृशानुमितिं प्रति तादृशपरामर्शस्यातिरिक्तहेतुत्वकल्पनेन तादृशानुमित्साविरहविशिष्टप्रत्यक्षेच्छाविशिष्टप्रत्यक्षसामग्र्यादीनां प्रतिबन्धकत्वकल्पनेन च महागौरवात् ।

यदपि रजस्थल इवान्यत्रापीदं रजतत्वेन जानामीति प्रत्ययादन्यथाख्यातिसिद्धिरिति। तन्न। पूर्वोक्तरीत्या कारणबाधेन व्यवसायस्य इदन्त्वावच्छिन्नविशेष्यकरजतत्वप्रकारकत्वाभाववदनुव्यवसायस्यापि कारणबाधेनेदंविशेष्यकज्ञाने रजतत्वप्रकारकत्वविशिष्टविषयकत्वाभावात् । परन्तु परस्पराग्रहीतभेदेदंविशेष्यकत्वरजतत्वप्रकारकत्वविषयकत्वात् ।

न च लाघवेनाभेदग्रहस्यैव प्रवृत्तिहेतुत्वं युक्तमिति वाच्यम् । उक्तरीत्या भ्रमस्थले विशिष्टज्ञानासम्भवेन लाघवस्याकिञ्चित्करत्वात् । तस्मादख्यातिरेव भ्रम इति निर्व्यूढमित्याहुः ।

यत्तु अरजतादौ रजतार्थप्रवृत्तिजनकं ज्ञानम् अरजतादौ रजतत्वप्रकारकं न वेति विप्रतिपत्तिः । तत्र नैयायिकाः वेदान्तिनश्च अरजतादौ रजतार्थिप्रवृत्तिजनकं ज्ञानं अरजतादौ रजतत्वप्रकारकम् समानविशेष्यकतया अरजतविशेष्यकत्वावच्छिन्नरजतत्वप्रकारकप्रवृत्तिजनकत्वात् । उभयमतसिद्धेच्छावत् । रजतभ्रमायां बाधवारणायारजतादाविति रङ्गत्वप्रकारकज्ञाने बाधवारणाय रजतार्थीति । इच्छायामंशतः सिद्धसाधनवारणाय ज्ञानमिति ।

न च रजतार्थिप्रवृत्तिजनके फलज्ञानेऽशतो बाध इति वाच्यम् । समानविशेष्यकत्वप्रत्यासत्त्यवच्छिन्नजनकताश्रयस्य प्रवृत्तिजनकपदेन विवक्षितत्वात् । हेतोस्ततो व्यावृत्तये समानविशेष्यकतयेति हेतौ निवेशः । पक्षे विशेषणोपादानं च पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिमभिप्रेत्य सामानाधिकरण्येन

साध्यसिद्धेरुद्देश्यत्वे तु तन्नोपादेयम्। अत्र चोक्तकार्यकारणभावभङ्ग एवानुकूलतर्क इति।

तन्न। विमतं ज्ञानमरजतादौ न रजतत्वप्रकारकं तत्प्रकारकजनकसामग्र्यजन्यत्वात्। घटादिविषयकयथार्थज्ञानवत्।

न च ज्ञानलक्षणासन्निकर्षादिघटितसामग्रीजन्यत्वमादाय स्वरूपासिद्धिरिति वाच्यम्। ज्ञानलक्षणासन्निकर्षस्य पूर्वं निरस्तत्वात्।

न चारजतादौ रजतत्वप्रकारकत्वस्य तन्मते इच्छायां प्रसिद्धतया ज्ञाने तदभावसाधने नैयायिकादीनां सिद्धसाधनमिति वाच्यम्। न्यायादिनये ज्ञानेच्छादिभेदेन प्रकारताविशेष्यतयोर्भेदाभावात्। तद्भेदे प्रकारिताविशेष्यतात्वयोः सर्वसाधारणानुगतधर्मयोः सत्त्वेन सामान्याभावस्य साध्यतया सिद्धसाधनासम्भवात्।

न च परस्परविरोधेनैकमप्यनुमानं न साधकं स्यादिति वाच्यम्। इच्छात्वादेरुपाधित्वेन तत्पुरुषीयत्वाद्यनिवेशप्रयुक्तलाघवेन आत्मनिष्ठप्रत्यासत्त्या कार्यकारणभावनिर्वाहे उक्तकार्यकारणभावभंगरूपतर्के इष्टापत्त्या तर्काभावेन च पूर्वानुमानस्य न्यूनबलत्वात्। अत्र चोक्तकार्यकारणभाव एवानुकूलतर्क इति।

एतेन ज्ञानत्वं शुक्तिविशेष्यकत्वावच्छिन्नरजतत्वप्रकारकत्ववद्वृत्ति न वेति विप्रतिपत्तिः। विधिप्रसिद्धिरिच्छादौ इच्छादेर्व्यधिकरणप्रकारकत्वस्य प्राभाकरादिभिरपि स्वीकारात् निषेधस्य च द्रव्यत्वादावेव सुलभत्वात्। अत्र ज्ञानत्वं शुक्तिविशेष्यकत्वावच्छिन्नरजतत्वप्रकारकत्ववद्वृत्ति शुक्तिविशेष्यकत्वावच्छिन्नरजतत्वप्रकारकत्ववत्प्रवृत्तेः समानविशेष्यकतया जनकवृत्तित्वादिच्छात्ववदिति परास्तम्। अप्रयोजकत्वात्। इच्छावृत्तित्वस्योपाधित्वात्। ज्ञानत्वं न तादृशवृत्तिज्ञानमात्रवृत्ति धर्मत्वात्। सर्वांशे रजतप्रमात्ववदित्यनेन सत्प्रतिपक्षितत्वाच्च।

यत्तु रुद्रभट्टाचार्याः । ज्ञानीयमरजतविशेष्यकत्वं रजतत्वप्रकारकत्वावच्छिन्नं न वेति विप्रतिपत्तिस्तत्र ज्ञानीयमरजतविशेष्यकत्वं रजतत्वप्रकारकत्वावच्छिन्नं रजतार्थिप्रवृत्तिजनकज्ञानीयविशेष्यकत्वत्वात् यथार्थज्ञानीयरजतविशेष्यकत्ववत् । इच्छीयारजतविशेष्यकत्वे सिद्धसाधनवारणाय ज्ञानीयमिति । रजतविशेष्यकत्वे तदेव वारणायारजतेति । सामानाधिकरण्येन तत्सिद्धेरुद्देश्यत्वात् शुक्तित्वादिप्रकारकशुक्त्यादिज्ञानविशेष्यकत्वे नांशतो बाधः । निषेधे उद्देश्यतावच्छेदकावच्छेदेन साध्यासिद्धेरुद्देश्यतया तत्रैव नांशतः सिद्धसाधनं तत्रैव व्यभिचारवारणाय रजतार्थीति । तथा च रजतत्वप्रकारकप्रवृत्तिजनकज्ञानीयविशेष्यकत्वत्वादित्यर्थः । तेन रजतार्थिनो रङ्गत्वादिप्रकारकयथार्थप्रवृत्तिजनकज्ञानीयविशेष्यकत्वे साध्यासत्त्वेन हेतोर्व्यभिचारित्वमिति परास्तम् । अरजतविशेष्यकत्वावच्छिन्नरजतत्वप्रकारकत्वं ज्ञानवृत्ति न वेति वा, विमतं ज्ञानवृत्ति रजतत्वप्रकारकप्रवृत्तिजनकज्ञानीयप्रकारकत्वत्वात् यथार्थरजतज्ञानीयरजतत्वप्रकारकत्ववदित्याहुस्तन्न । अप्रयोजकत्वात् । ज्ञानीयमरजतविशेष्यकत्वं न रजतत्वप्रकारकत्वावच्छिन्नं रजतत्वप्रकारकजनकसामग्र्यजन्यवृत्तित्वात् । यथार्थज्ञानीयशुक्त्यादिविशेष्यकत्ववत् । ज्ञानीयमरजतविशेष्यकत्वं यदि रजतत्वप्रकारकत्वावच्छिन्नं स्यात्तर्हि रजतत्वप्रकारकजनकसामग्रीजन्यवृत्ति स्यादिति तर्केण परस्परविरोधादेकमप्यनुमानं न साध्यसाधकं स्यादिति परास्तम् । एवमरजतविशेष्यकत्वावच्छिन्नरजतत्वप्रकारकत्वं न ज्ञानवृत्ति ज्ञानाजनकसामग्रीजन्यमात्रवृत्तित्वादिप्रत्यनेन सत्प्रतिपक्षितत्वात् । ज्ञानभिन्नवृत्तित्वस्योपाधित्वाच्च । न च रजतविशेष्यकं रजतत्वप्रकारकमेकं ज्ञानं नयनसम्प्रयोगजन्यं सम्भवति । अतिविप्रकृष्टरजतत्वविषये सन्निकर्षासम्भवात् । ज्ञानलक्षणायाश्च पूर्वं निरस्तत्वात । कारणबाधेनानु-

मानस्याप्यसम्भवात्। लिङ्गाद्युपलम्भाभावेऽपि ज.यमानत्वा‌त्।

मथुरानाथभट्टाचार्यास्तु। ज्ञानं रजतत्वाभाववद्विशेष्यकत्वावच्छिन्नरजतत्वप्रकारितार्कं न वेति विप्रतिपत्तिर्विधिकोटिर्नैयायिकानाम्। पक्षतावच्छेदकसामानाधिकरण्येन तत्सिद्धेरुद्देश्यत्वाद्रजतत्वभ्रमान्यज्ञानमात्रे नांशतो बाधः। निषेधकोटिस्तु इदं रजतमित्यादिभ्रमस्थले इदंत्वप्रकारकशुक्त्यनुभवरजतस्मरणात्मकज्ञानद्वयाङ्गीकर्तृगुरूणाम्। पक्षतावच्छेदकावच्छेदेन तत्सिद्धेरुद्देश्यतया न रजतत्वभ्रमान्यज्ञानमात्रेंऽशतः सिद्धसाधनम्। न च रजतत्वाभाववद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वस्य तन्मते इच्छायामेव प्रसिद्धतया ज्ञाने तदभावस्य साधने नैयायिकानां सिद्धसाधनमिति वाच्यम्। न्यायनये ज्ञानेच्छादिभेदेन प्रकारताविशेष्यतयोर्भेदाभावात्सिद्धसाधनासम्भवात्। तद्भेदे प्रकारताविशेष्यतात्वयोः सर्वसाधारणानुगतधर्मयोः सत्त्वेन सामान्याभावस्य साध्यतया सिद्धसाधनासम्भवाच्चेत्याहुस्तन्न। हेतोरनुपन्यासेन न्यूनत्वात्। समानविशेष्यकतयेत्यादिहेतोः पूर्वं निरस्तत्वाच्च।

यदपि ज्ञानवृत्तिरजतत्वप्रकारकत्वं ज्ञानवृत्तिरजतत्वाभाववद्विशेष्यकत्वावच्छिन्नं न वा ज्ञानवृत्तिरजतत्वाभाववद्विशेष्यकत्वं ज्ञानवृत्तिरजतत्वप्रकारकत्वावच्छिन्नं न वेति विप्रतिपत्तिः। ज्ञानवृत्तिरजतत्वप्रकारकत्वं रजतप्रमायामेव प्रसिद्धं तदवच्छिन्नत्वं च रजतत्वाभावप्रमावृत्ति रजतत्वाभावप्रकारकत्वे एव प्रसिद्धमिति ज्ञानेच्छादिभेदेन प्रकारताविशेष्यतयोर्भेदेऽपि सर्वसाधारणानुगतप्रकारतात्वविशेष्यतात्वयोरभावेऽपि च न क्षतिरिति सङ्क्षेप इति।

तन्न। अत्रापि हेतोरनुपन्यासेन न्यूनत्वात्।

न च ज्ञानवृत्ति रजतत्वप्रकारकत्वं ज्ञानवृत्तिरजतत्वाभाववद्विशेष्यकत्वावच्छिन्नं रजतत्वाभाववद्विशेष्यकत्वावाच्छिन्नरजतत्वप्रकारकत्ववत्प्रवृत्तेर्जनकज्ञानवृत्तिप्रकारकत्वत्वात् । यत् यद्विशेष्यकयत्प्रकारकप्रवृत्तिजनकज्ञानवृत्तिप्रकारकत्वत्ववद्भवति तत्तद्विशेष्यकत्वावच्छिन्नं भवति यथा रजतत्वप्रमावृत्ति रजतत्वप्रकारकत्वमिति सामान्यव्याप्तिग्रहाद्विशेषसाध्यसिद्धिरिति वाच्यम् । रजतत्वाभाववद्विशेष्यकत्वावच्छिन्नाजनकसामग्रीजन्यज्ञानावृत्तित्वात् घटप्रमावृत्तिघटप्रकारकत्ववदित्यनेन सत्प्रतिपक्षितत्वात् । चरमविप्रतिपत्तौ समानविशेष्यकतयेत्यादिहेतून्यासस्य तत्रैव दूषितत्वात् ।

न च शुक्तिः रजतत्वप्रकारकानुभवविशेष्या रजतत्वप्रकारकप्रवृत्तिविशेष्यत्वादित्यनुमानमन्यथाख्यातौ मानमिति वाच्यम् । इदं रजतं शुक्तिश्च रजतभिन्नेति समूहालम्बनमादायार्थान्तरापत्तेः । रजतत्वप्रकारतानिरूपितविशेष्यतायाः साध्यत्वे इच्छीयविशेष्यतामादाय सिद्धसाधनापत्तेः । ज्ञानीयत्वेन विशेषिते रजतत्वप्रकारतानिरूपितविशेष्यताशालिज्ञानाजनकसामग्रीजन्यज्ञानविशेष्यत्वेन सत्प्रतिपक्षितत्वात् । रजतत्वादेरुपाधित्वाच्च । रजतत्वमरजतवृत्तिज्ञानविशेष्यतावच्छेदकं अरजतविशेष्यकप्रवृत्तिहेतुज्ञानप्रकारत्वात् शुक्तित्ववत्, अवच्छेदकत्वं प्रकारत्वम् । रजतविशेष्यमात्रनिष्ठेदन्त्वतद्रजतत्वादावरजतवृत्तिज्ञानविशेष्यतानवच्छेदके व्यभिचारवारणाय ज्ञानान्तं हेतुविशेषणम् ।

न चाऽऽहार्यभ्रमेणेदं सर्वं तदिति भ्रमेण वा तेषामप्यारोप्यतेति वाच्यम् । सर्वेषां तेषां धर्माणामारोपे मानाभावात् । भावे वा साध्ये ज्ञानपदस्योद्देश्यसिद्ध्यर्थं प्रवृत्तिहेतुज्ञानपरत्वादिति वाच्यम् । रजतावृत्तित्वस्योपाधित्वात् ।

न च प्रमेयत्वादावुपाधेः साध्याव्यापकत्वमिति वाच्यम् । रजतमात्रावृत्तित्वस्य विवक्षितत्वात् । न रजतवृत्तित्वस्य वा(?)

अरजतविशेष्यकज्ञानाजनकसामग्रीजन्यज्ञानप्रकारत्वेन सम्प्रतिपक्षितत्वाच्च ।

ननु रजतत्वप्रकारकज्ञानविषयता अरजतवृत्तिः अरजतनिष्ठात्यन्ताभावप्रतियोगिनी न भवतीति वा । अरजतविषयप्रवृत्तिहेतुज्ञानविषयतात्वात् शुक्तिवृत्तिविषयतावत् । रजतत्वप्रकारकज्ञानविषयतात्वेन पक्षत्वे सत्यस्थलीयरजतत्वप्रकारकज्ञानविषयतायामंशतो बाध इति न वाच्यम् । सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वात् शुक्तिनिष्ठप्रवृत्तिप्रयोजकत्वेन वा ज्ञानविशेषणात् ।

न च तादृशज्ञानविषयतात्वेन रजतस्मरणविषयतायाः पक्षत्वे बाधः । शुक्तिगोचररजतत्वप्रकारकज्ञानविषयतायाः पक्षत्वे चाश्रयासिद्धिरिति वाच्यम् । उभयसम्मतत्वेन शुक्तिनिष्ठप्रवृत्तिप्रयोजकरजतत्वप्रकारकज्ञानविषयतात्वेन सामान्यरूपेण पक्षत्वात् । शुक्तिज्ञानविषयतया उक्तसाध्यसत्त्वेनांशतः सिद्धसाधनवारणाय पक्षे रजतत्वप्रकारकेति । शुक्तीच्छादिविषयतायां सिद्धसाधनवारणाय तत्र ज्ञानेति ।

न च रजतवृत्तिरजतोभयविषयकसमूहालम्बनविषयतायां व्यभिचार इति वाच्यम् । हेत्वन्तरस्यारजतविशेष्यकप्रवृत्तिमात्रहेतुपरत्वादिति चेन्न ।

रजतावृत्तित्वस्यात्राप्युपाधित्वात् । न च प्रमेयत्वद्रव्यत्वप्रकारकप्रमाविशेष्यत्वादाविदं साध्याव्यापकमिति वाच्यम् । साधनावच्छिन्नसाध्यव्यापकत्वे तात्पर्यात् ।

न च प्रमेयमात्रार्थिनामप्रवर्त्तकप्रमेयत्वप्रकारकज्ञानस्य विषयतायां साध्याव्यापकतेति वाच्यम् । प्रमेयार्थिताया अभावात् । न ह्येतादृशः पुरुषोऽस्ति यः प्रमेयमात्रमर्थयते प्रमेयमात्रस्य सिद्धत्वादेव ।

यद्वा अरजतांशे प्रवृत्तिहेतुज्ञानविषयतावच्छिन्नारजतवृत्तित्व-

व्यापकत्वेन रजनावृत्तित्वस्योपाधित्वात् । न ह्यरजतांशे प्रवृत्तिहेतुज्ञानविषयता अरजतवृत्तिः सती रजतवृत्तिर्भवति विशेष्यभेदेन विषयताभेदात् । तेन तत्रोपाधेः साध्याव्यापकत्वं स्यात् ।

अन्ये तु रजतमात्रावृत्तित्वमुपाधिरित्याहुः ।

अपरे तु रजतारजतोभयवृत्तिधर्मान्यप्रकारविषयतात्वावच्छिन्नसाध्यव्यापकत्वमवसेयम् ।

न च तथाऽपि रजतारजते इति समूहालम्बनज्ञानविषयतायां व्यभिचार इति वाच्यम् । तत्र विशेष्यभेदेन विषयताभेदादिति भाव इत्याहुः ।

ननु इदं रजतज्ञानं शुक्तिविषयकं शुक्तौ प्रवर्त्तकज्ञानत्वात् । शुक्तिज्ञानवदित्यत्र शुक्तिविशेष्यकप्रवृत्तिजनकरजतत्वप्रकारकं ज्ञानं पक्षः रजतमात्रविशेष्यकरजतत्वप्रकारकज्ञानेंऽशतो बाधवारणाय जनकान्तम् । प्राचीननये पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वेऽपि अंशतः सिद्धसाधनस्य दोषतया शुक्ताविय शुक्तिरिति ज्ञानेंऽशतः सिद्धसाधनवारणाय रजतत्वप्रकारकेति । शुक्तौ रजतत्वप्रकारकेच्छायामंशतः सिद्धसाधनवारणाय ज्ञानमिति । एकमात्रविशेष्यकमिति साध्यार्थः । शुक्तिविशेष्यकप्रवृत्तिजनकज्ञानत्वादिति हेत्वर्थः । इदं रजतमित्यादिप्रमायां व्यभिचारवारणाय जनकान्तम् । आत्मशरीरादौ व्यभिचारवारणाय ज्ञानपदमिति चेन्न । शुक्तिगोचरप्रवृत्तिजनके फलज्ञाने शुक्तिकारणप्रत्यक्षे च व्यभिचारात् । समानविशेष्यकतया प्रवृत्तिजनकत्वविवक्षणे नायं दोष इति वाच्यम् । आत्मनिष्ठप्रत्यासत्त्यैव कारणत्वस्यैव लाघवेन पूर्वमुक्तत्वात् । केवलं रजतमिति ज्ञानस्याप्रवर्त्तकतया तादृशविशिष्टज्ञानस्योभयमते ऽप्रसिद्धतया ज्ञानद्वये शुक्तिविशेष्यकप्रवृत्तिजनकत्वसत्त्वेऽपि रजतत्वप्रकारकज्ञाने शुक्तिविशेष्यकप्रवृत्तिजनकत्वस्य पक्षतावच्छेदकस्याभावेनाश्रयासिद्धेः । स्व-

रूपासिद्धेश्च ।

न च हेतुतावच्छेदकानवच्छिन्नहेत्वभाववत्पक्षतावच्छेदकविशिष्टपक्ष एव स्वरूपासिद्धिः स च प्रकृते नास्ति पक्षतावच्छेदकविशिष्टपक्षाप्रसिद्धेरिति वाच्यम् । काञ्चनमयः पर्वतो वह्निमान् जलत्वादित्यादौ जलत्वाभाववत्पर्वतस्य स्वरूपासिद्धित्ववदत्रापि शुक्तिविशेष्यकप्रवृत्तिजनकज्ञानत्वाभाववद्रजतत्वप्रकारकज्ञानस्यैव स्वरूपासिद्धित्वसम्भवात् ।

न च प्रवृत्तिप्रयोजकत्वं प्रवर्त्तकत्वमत्रोक्तं तेन नासिद्धिरिति वाच्यम् । प्रयोजकत्वे तात्पर्याभावात् । भावे वा फलज्ञानादौ व्यभिचारानिवृत्तेः । शुक्त्यविषयकज्ञानादपि शुक्तिविषयकप्रवृत्तेर्दर्शनेन तत्र व्यभिचाराच्च । एकमात्रविशेष्यकत्वे सति शुक्तवृत्तिधर्मप्रकारकत्वविशिष्टज्ञानत्वेन सत्प्रतिपक्षितत्वाच्च ।

यदपि शुक्तिः रजतज्ञानविषयताश्रयः रजतार्थिप्रवृत्तिविषयत्वात् रजतवदित्यत्र शुक्तिरजतयोरिमे शुक्तिरजते इति समूहालम्बनविषयतामादायार्थान्तरापत्तिवारणाय रजतत्वप्रकारतानिरूपितज्ञानीयविशेष्यताश्रय इति साध्यम् । रजतत्वप्रकारकप्रवृत्तिविशेष्यरजतवदिति दृष्टान्तार्थः । तेन तादृशप्रवृत्त्यविषयरजतस्य साधनविकलत्वेऽपि न क्षतिरिति ।

तन्न । शुक्तिरजतयोः समूहालम्बनप्रवृत्तिविषयतामादाय रजतभ्रमविषयशुक्तौ व्यभिचारात् । रजतत्वप्रकारकप्रवृत्तिविशेष्यत्वस्य हेतुत्वेन व्यभिचारवारणेऽपि रजतत्वस्योपाधित्वात् । रजतत्वप्रकारतानिरूपितविशेष्यताशालिज्ञानाजनकसामग्रीजन्यज्ञानविशेष्यत्वेन सत्प्रतिपक्षितत्वाच्च ।

यदपि शुक्तिविशेष्यकरजतत्वप्रकारिका प्रवृत्तिः स्वधर्मिधर्मिकरजतत्वप्रकारकज्ञानसाध्या रजत्वप्रकारकप्रवृत्तित्वात् रजतविशेष्यकरजतत्वप्रकारकप्रवृत्तिवदत्र शुक्तिविशेष्यकशुक्तित्वप्र-

कारकप्रवृत्तेरंशतो बाधवारणाय रजतत्वप्रकारकेति । प्राचीनन-ये पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वेऽप्यंशतः सिद्ध-साधनस्य दोषत्वात्सत्यरजतप्रवृत्तावंशतः सिद्धसाधनवारणाय शुक्तिविशेष्यकेति पक्षविशेषणमिति । तदपि न । रजतविषयत्वस्योपाधित्वात् । स्वपदार्थाननुगमेन स्वपदस्य प्रकृतपक्षव्यक्तिपरत्वे साध्यदृष्टान्तयोरप्रसिद्धेः । तादृशज्ञानजनकसामग्र्यप्रसिद्ध्या बाधापत्तेश्च । दृष्टान्तपरत्वे च रजतस्मरणजन्यत्वेन सिद्धसाधनात् । तत्परित्यागे धर्मिधर्मिकरजतत्वप्रकारिणोभयासिद्धरजतस्मरणेनार्थान्तरापत्तेः ।

यत्तु । प्रत्यक्षमणौ गङ्गेश्वराचार्याः रजतार्थिताजन्या शुक्तौ प्रवृत्तिः इष्टप्रवृत्तिविषयविशिष्टज्ञानसाध्या प्रवृत्तित्वात् शुक्तौ शुक्त्यर्थिप्रवृत्तिवत् । न चेष्टविषयप्रवृत्तित्वमुपाधिः । साधनविशेषितत्वादिति ।

तन्न । ज्ञानत्वं व्यधिकरणप्रकारकवृत्ति न वेति विप्रतिपत्तौ उक्तानुमानस्याप्रामाकरत्वेनायुक्तत्वात् ।

न च रजतार्थिताजन्या शुक्तौ प्रवृत्तिरिष्टविषयविशिष्टज्ञानसाध्या न वेति विशेषविप्रतिपत्तावस्याभिधानान्न दोष इति वाच्यम् । रजतत्वप्रकारिका शुक्तौ प्रवृत्तिरित्येव सामञ्जस्ये रजतेच्छाजन्यापरपर्यायस्य रजतार्थिताजन्येत्यस्य गौरवेण वैयर्थ्यात् । इष्टे प्रवृत्तिः इष्टप्रवृत्तिस्तद्विषयविशिष्टज्ञानसाध्येत्यर्थे पक्षीकृतायां विसंवादिप्रवृत्तावेतस्य बाधितत्वात् । अत एवेष्टश्चासौ प्रवृत्तिविषयस्तद्गोचरविशिष्टज्ञानसाध्येत्यपि न । न चेष्टपदेनेष्टप्रकारकं प्रवृत्तिविषयपदेन प्रवृत्तिविशेष्यकं लक्षणीयं तथा च समवायेनेष्टप्रकारकप्रवृत्तिविषयविशेष्यकज्ञानसाध्येत्यर्थे नायं दोष इति वाच्यम् । न वादिवाक्ये लक्षणेत्यभियुक्तोक्तिविरोधापत्तेः । विशिष्टपदवैयर्थ्यापत्तेश्च । ज्ञानपदस्यैव तादृशार्थे तात्पर्यग्राहकत्वात् । पुरोवर्त्तिविशेष्यका-

पेक्षया प्रवृत्तिविषयविशेष्यकस्य गुरुत्वाच्च ।

एतेन स्वप्रकारकस्वविशेष्यविशेष्यकज्ञानसाध्येति साध्यमिति परास्तम् । किञ्च स्वत्वस्य तत्तद्व्यक्तिविश्रान्ततया स्वपदस्य प्रकृतपक्षपरत्वे साध्याप्रसिद्धेः । दृष्टान्तपरत्वे बाधापत्तेः । साधनविशेषितत्वादित्यस्येष्टविषयकप्रवृत्तित्वरूपस्य विशिष्टात्मकस्य साधनेन प्रवृत्तित्वेन विशेषणीभूय विशेषितत्वादित्यर्थो वाच्यः स च न सम्भवति साधनस्य विशेषणत्वाभावात् । साधनेन विशेष्यीभूतेन घटितत्वादित्युक्तेऽपि पर्वतो धूमवान् वह्नेरित्यादावार्द्रेन्धनप्रभववह्न्यादेः साधनविशेषितत्वेऽपि सदुपाधित्ववदस्यापि सदुपाधित्वानपायात् । अन्यथा आर्द्रेन्धनप्रभववह्न्यादेरपि सदुपाधित्वं स्यात् ।

न च विषयविशेषितेच्छानुव्यवसायादौ प्रवृत्तित्वघटितस्य तस्य साध्याव्यापकत्वान्नोपाधित्वमिति वाच्यम् । साध्याव्यापकत्वेनैव तस्यानुपाधित्वे तदप्रयोजकसाधनाविशेषितत्वादित्यस्य वैयर्थ्यापत्तेः । प्रवृत्तित्वरूपसाधनावच्छिन्नसाध्यव्यापकत्वाच्च ।

मथुरानाथभट्टाचार्यास्तु लाघवेन तद्विशेष्यकतत्प्रकारकप्रवृत्तिं प्रति तद्विशेष्यकतत्प्रकारकप्रत्यक्षत्वेन हेतुत्वात् पक्ष एव साध्याव्यापकतया ऽस्य वस्तुगत्योपाधित्वविरहादित्येव दूषणं सारम् ।

एतेन प्रवृत्तित्वाविशेषितं स्वजनकेच्छाप्रकाराश्रयविशेष्यकत्वं स्वप्रकाराश्रयविशेष्यकत्वं च शुद्धसाध्यव्यापकतयोपाधिरित्यपि निरस्तमित्याहुस्तन्न। व्यधिकरणप्रकारकज्ञानकारणबाधेन पक्षे साध्यव्यापकत्वासम्भवात् ।

यदपि रजतेच्छाजन्यशुक्तिनिष्ठप्रवृत्तिजनकरजतत्वप्रकारकं ज्ञानं शुक्तिविशेष्यकं शुक्तिप्रवृत्तिप्रयोजकज्ञानत्वात् शुक्त्यर्थिशुक्तिप्रवृत्तिजनकज्ञानवत् इति तन्न । पक्षे जन्यान्तवैयर्थ्यात् । ज्ञानलक्षणासन्निकर्षविधया न्यायमते शुक्तिनिष्ठप्रवृत्तिप्रयोजके रजत-

स्मरणे फलज्ञाने शुक्तिकारणप्रत्यक्षे च व्यभिचारात् । शुक्तिनिष्ठप्रवृत्तिजनकरजतत्वप्रकारकं ज्ञानं न शुक्तिविशेष्यकं तद्वृत्तिधर्मप्रकारकत्वात् तद्वृत्तिरजतत्वप्रकारकत्वाद्वा रजतप्रमावदित्यनेन सत्प्रतिपक्षितत्वाच्च ।

न च परस्परविरोधेनैकमप्यनुमानं न साधकं स्यादिति वाच्यम् । रजतत्वप्रकारकज्ञानस्य शुक्तिविशेष्यकत्वावच्छिन्नज्ञानजनकसामग्रीशून्यत्वेन शुक्तिविशेष्यकत्वबाधेन पूर्वानुमानस्य न्यूनबलत्वात् ।

यदपि तथाविधमिदं ज्ञानं वा रजतत्वप्रकारकं रजतेच्छाजन्यप्रवृत्तिहेतुज्ञानत्वात् सत्यरजतवदिति । एतच्च व्याख्यातं तद्व्याख्यातृभिः । तथा हि तथाविधं—रजतत्वप्रकारकप्रवृत्तिजनकम् । इदं ज्ञानं–शुक्तिविशेष्यकं ज्ञानम् । अत्र शुक्तौ इयं शुक्तिरिति ज्ञानेंऽशतो बाधवारणाय जनकान्तम् । प्राचीननये पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वेऽप्यंशतः सिद्धसाधनस्य दोषत्वाद्रजतमात्रविशेष्यकरजतत्वप्रकारकज्ञानेंऽशतः सिद्धसाधनवारणाय शुक्तिविशेष्यकेति । शुक्तौ रजतत्वप्रकारकेच्छायामंशतः सिद्धसाधनवारणाय ज्ञानमिति । एकमात्रविशेष्यकत्वेन ज्ञानं विशेषणीयम् तेन शुक्तिरजतोभयसमूहालम्बने नांशतः सिद्धसाधनमिति ।

तन्न । इष्टविषयकत्वस्योपाधित्वात् । तथाविधमिदं ज्ञानं न रजतत्वप्रकारकत्वावच्छिन्नं रजतत्वानाश्रयविशेष्यकज्ञानत्वात्सम्मतवदित्यनेन सत्प्रतिपक्षितत्वाच्च । अत्रानुकूलतर्कस्तु पूर्वोक्त एवानुसन्धेयः । एवं कारणबाधेनान्यान्यप्यन्यथाख्यातौ मानानि निरसनीयानीति ।

यत्तु विवरणतत्त्वदीपनेऽखण्डानन्दमुनयः । विवादाध्यासिता प्रवृत्तिः पुरोवर्त्तिरजतज्ञानपूर्विका रजतेच्छाधीनपुरोवर्त्तिप्रवृ-

त्तित्वात्। सम्यग्रजतप्रवृत्तित्वादित्याहुस्तन्न। रजतविषयप्रवृत्तित्वस्य-जनकेच्छाप्रकाराश्रयविशेष्यकत्वादेरुपाधित्वात्। तस्मात् चतुर्णां ख्यातीनां निरासाल्लिङ्गधर्मोनान्यथाख्यातीति न सम्भवत्यतः शब्दार्थत्वाभावाच्चाह—अथ चेति।

ननु मूले सर्गस्य दुःखहेतुत्वाप्रतिपादनात्तस्यापवर्गसाधनोपयोगिनीं दुःखहेतुतामाहेति आर्यावतरणमनुपपन्नमिति चेन्न। मूले तत्रेति पदेन लोकत्रयाख्यसर्गस्य निमित्तत्वबोधनात्। सर्गस्य दुःखनिमित्तत्वे स्वमतहानिरत आह। तस्मादिति। यतो दुःखरहितोऽपि दुःखमाप्नोति तस्माद् दुःखं स्वभावेन स्वत एव सर्गो दुःखरूपः विवेकिनामिति शेषः। तेनाविवेकिनां सुखरूपत्वेन भानेऽपि न क्षतिः। यथाऽऽह भगवान्पतञ्जलिः। "परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः" इति। सूत्रं तु परिणामश्च तापश्च संस्कारश्च एतान्येव दुःखानि तद्योगाद्गुणानां गुणवृत्तिविरोधाच्च स्वाभाविकदुःखत्वम्। परिणामदुःखं च सुखानुभवस्य रागानुविद्धत्वेन सुखानुभवसमये रागावश्यकत्वे दुःखसाधनेषु द्वेषमोहाववश्यं वाच्यौ तयोश्च रागसमयेऽदर्शनेन विच्छिन्नावस्थालक्षणपरिणामो वाच्यस्तस्य मनःप्रवृत्तिजनकापुण्यरूपकर्मजनकत्वाद् दुःखरूपत्वम्। तापदुःखं च यदा सुखसाधनानि प्रार्थयमानः कायेन वाचा परन्तापयति तस्य तापस्य दुःखहेतुपापजनकत्वाद् दुःखत्वम्। संस्कारदुःखं च सुखानुभवजन्यसुखजनककर्माशयवत् दुःखानुभवजन्यदुःखजनककर्माशयोऽप्यनादिस्तस्य दुःखहेतुत्वाद् दुःखत्वम्।

न च परिणामदुःखेनैवोपपत्तावितरयोर्वैयर्थ्यम्। इतरयोरभावे परिणामस्य वैयर्थ्येन दुःखत्वासम्भवात्। एवमितरत्रापि बोध्यम्। गुणानां त्रिगुणात्मकत्वात्तत्कार्यमपि त्रिगुणात्मकम्। शांतं सुखात्मकं घोरं दुःखात्मकं मूढं विषादात्मकम्। एवं सुखोप-

उक्तस्य सर्गस्य कारणविप्रतिपत्तीर्निराकरोति—

इत्येष प्रकृतिकृतो महदादिविशेषभूतपर्यन्तः ।
प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः ॥ ५६ ॥

"इत्येष" इति । आरभ्यते इति "आरम्भः" सर्गः महदादिभूम्यन्तः प्रकृत्यैव कृतो नेश्वरेण, न ब्रह्मोपादानो, नाप्यकारणः । अकारणत्वे ह्यत्यन्ताभावोऽत्यन्तभावो वा स्यात् । न ब्रह्मोपादानः, चितिशक्तेरपरिणामात् । नेश्वराधिष्ठितप्रकृतिकृतो, निर्व्यापारस्याधिष्ठातृत्वास

---

भोगरूपप्रत्ययोऽपि तादृश एव । न चैवं परस्परविरोधः । रूपातिशयानां वृत्त्यतिशयानामेव विरोधात् । रूपाण्यष्टौ भावा धर्मादयो, वृत्तयः सुखाद्याः । तदिह धर्मेण विपच्यमानेनाधर्मस्तादृशो विरुध्यते । एवं ज्ञानवैराग्यैश्वर्यैः सुखादिभिश्च तादृशान्येव तद्विपरीतानि विरुध्यन्ते । सामान्यानि तु असमुदाचरद्रूपाणि अतिशयैः समुदाचरद्भिः सहाविरोधाद्वर्तन्ते इत्येवं व्याख्येयम् । परिणामपदेन जरादिदुःखं तापपदेन मा न भूवं किं तु भूयासमिति मरणान्मानसदुःखं संस्कारपदेन पुनर्जननादिदुःखमिति व्याख्यानं तु भाष्यविरोधाद्धेयम् ॥ ५५ ॥

प्रकृतेर्महानित्युपसंहारस्य निष्प्रयोजनत्वाशंकां वारयन् उपोद्घातसंगत्याऽऽर्यामवतारयति । उक्तस्येत्यादिना । मूले विशेषभूतं पृथिवी । सर्वं वाक्यं सावधारणमिति न्यायेनाह । प्रकृत्यैवेति । प्रकृत्युपादानक एवेत्यर्थः । यथा न परमाणूपादानकस्तथोक्तं प्राक् । अकारणत्वपक्षे दोषमाह । अत्यन्तभाव इत्यादि । ब्रह्मोपादानत्वपक्षे दोषमाह । चितिशक्तेरित्यादि । निष्कलं निष्क्रियं शांतमित्यादिश्रुतेर्निरवयवस्य परिणामायोगात् । विज्ञानमानन्दं ब्रह्मेति श्रुतेः ब्रह्मणो विज्ञानात्मत्वे विज्ञानानन्दा

म्भवात्। न हि निर्व्यापारस्तक्षा वास्याद्यधितिष्ठति॥

ननु प्रकृतिकृतश्चेत्, तस्या नित्यायाः प्रवृत्तिशीलाया अनुपरमात् सदैव सर्गः स्यादिति न कश्चिन्मुच्येतेत्यत आह—"प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः" इति। यथौदनकाम ओदनाय पाके प्रवृत्तः ओदनसिद्धौ

त्मकं विश्वमपि स्यादिति भावः। नहीश्वराधिष्ठिता प्रकृतिरेव परिणमतां तत्राह। नेश्वरेणेति। तत्र हेतुमाह। न हीति। निर्व्यापारे ऽधिष्ठातृत्वस्यादृष्टचरत्वादिति भावः। व्यापारस्य जन्यत्वे व्यापारसापेक्षत्वे आत्माश्रयाद्यापत्तेः। निरपेक्षत्वे ऽसन्तभावाद्यापत्तेः।

न चेश्वरप्रयत्नरूपव्यापारस्य नित्यत्वांगीकारान्न दोष इति वाच्यम्। सर्वदा सर्गापत्तेः। न चादृष्टं नियामकम्। अदृष्टस्य कार्यत्वेन तत्सहकृतस्य कारणत्वासम्भवात्। तत्सहकृतप्रकृतेरेवोपपत्तौ अजागलस्तनायमाने ईश्वरे मानाभावाच्च। नचादृष्टमेव परिणमताम्। कार्यस्य कारणत्वायोगात्।

ननु प्रकृतेर्नित्यत्वेन प्रवृत्तिशीलत्वेन च सर्वदा सर्गप्रसंगः स्यात्। प्रतिपुरुषमदृष्टानामनेकत्वेन तत्सापेक्षत्वेऽपि सदैव सर्गप्रसंगदोषानिवृत्तेरित्यभिप्रायेणाशंकते। नन्विति। प्रकृतेर्मोक्षार्थप्रवृत्त्या सर्गस्य सर्वसाधारणत्वेऽपि यं पुरुषं मोचितवती तं प्रति सर्गाजनकत्वेन मोक्षसम्भवादित्यभिप्रायेण समाधत्ते। प्रतीति। मूले। भोजयितुमिति विहाय मोक्षार्थमित्युक्तिस्तु एकस्य मोक्षेऽपि सर्गस्य नाशो नास्ति सर्वसाधारणत्वादिति ज्ञापनाय। अत एव प्रतिपुरुषेत्युक्तम्। ननु स्वार्थं सर्वः समीहते इति न्यायेन परार्थप्रवृत्तिरपि स्वदुःखादिनिवृत्तिद्वारा स्वार्थमेव तथा च प्रकृतेर्जडतया प्रवृत्तिर्न सम्भवतीत्याशंका लाघवेन प्रयोजनवत्त्वमात्रस्य प्रवृत्तिमूलत्वेन स्वार्थे प्रवृत्तिवत्परार्थेऽपि प्रवृत्तिसम्भवा-

निवर्तते,-एवं प्रत्येकम्पुरुषान् मोचयितुम्प्रवृत्ता प्रकृतिर्यं पुरुषम्मोचयति तम्प्रति पुनर्न प्रवर्तते-तदिदमाह-'स्वार्थ इव' स्वार्थे यथा तथा परार्थे आरम्भ इत्यर्थः ॥ ५६ ॥

स्यादेतत्-' स्वार्थं परार्थं वा चेतनः प्रवर्तते । न च प्रकृतिरचेतनैवं भवितुमर्हति तस्मादस्ति प्रकृतेरधिष्ठाता चेतनः । न च क्षेत्रज्ञाश्चेतना अपि प्रकृतिमधिष्ठातुमर्हन्ति,तेषां प्रकृतिस्वरूपानभिज्ञत्वात् । तस्मादस्ति सर्वार्थदर्शी प्रकृतेरधिष्ठाता, स चेश्वर-इत्यत आह—

वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥५७॥

"वत्सविवृद्धिनिमित्तम्" इति । दृष्टमचेतनमपि प्रयोजनम्प्रति प्रवर्त्तमानम्, यथा वत्सविवृद्ध्यर्थं क्षीरमचे-

---

त्परिहरन् व्याख्यायां दृष्टान्तमाह । यथेति । दार्ष्टान्तिकमाह । एवमिति ॥ ५६ ॥

उपोद्घातसंगत्याऽऽर्यामवतारयति । स्यादेतदिति । सर्गाद्यकालीना हिताहितप्राप्तिपरिहारानुकूला या चेष्टारूपा प्रवृत्तिः सा हिताहितप्राप्तिपरिहारसाधनज्ञानजन्या तादृशप्रवृत्तित्वादस्मदीयप्रवृत्तिवदित्यभिप्रायेणाह । न चेत्यादि । एवं भवितुम् । परार्थं प्रवर्त्तितुम् । क्षेत्रज्ञज्ञानमादाय सिद्धसाधनमर्थान्तरं च वारयति । न चेत्यादिना । तेषामनधिष्ठातृत्वे हेतुमाह । प्रकृतिस्वरूपानभिज्ञत्वादिति । प्राक् सर्गाज्ज्ञानजनकशरीरेन्द्रियादिसामग्र्यभावादेतस्मिन्काले एतावत्येव परिणमन्ते नैतावन्तीति परिज्ञानाभावाच्चेत्यर्थः । क्षीरे व्यभिचारेण समाधत्ते । दृष्टमिति । तथा च विमतं प्रधानं चेतनानधिष्ठितं प्रवर्त्तते रथाद्यन्यत्वे सति परार्थत्वात् क्षीरवदित्यर्थः । न हि साध्ये तत्समे वा व्यभिचार

तनं प्रवर्तते। एवम्प्रकृतिरचेतना ऽपि पुरुषविमोक्षणाय प्रवर्तिष्यते।

न च क्षीरप्रवृत्तेरपीश्वराधिष्ठाननिबन्धनत्वेन सा- ध्यत्वान्न साध्यव्यभिचार इति, साम्प्रतम्। प्रेक्षावतः प्रवृत्तेः स्वार्थकारुण्याभ्यां व्याप्तत्वात्। ते च जगत्सर्गा- द्व्यावर्तमाने प्रेक्षावत्प्रवृत्तिपूर्वकत्वमपि व्यावर्तयतः। न

इति न्यायेनाऽऽशंकते। न चेति। ज्ञानपूर्वकप्रवृत्तिरूपप्रेक्षावत्प्रवृत्तेः स्वार्थकारुण्यान्यतरव्याप्यतयाऽन्यतरव्यापकनिवृत्तौ ज्ञानपूर्वकप्रवृ- त्तित्वाक्रान्तहिताहितप्राप्तिपरिहारानुकूलचेष्टानिवृत्त्या पूर्वानुमाने प- क्षासिद्धं वदन् आद्यदेवादिसर्गः प्रेक्षावत्प्रवृत्तिपूर्वकः सर्गत्वाद- दानीन्तनसर्गवदित्यनुमानं च न स प्रेक्षावत्पूर्वकः निष्प्रयोज- नत्वे सति कारुण्याजन्यत्वादिति सत्प्रतिपक्षितमित्यभिप्रायेण स- माधत्ते। प्रेक्षावत इत्यादिना। ते। स्वार्थताकारुण्ये। वृक्षत्वनि- वृत्त्या शिंशपात्वमिवेत्यर्थः। सर्गाद्व्यावर्तमाने। विषयतासम्ब- न्धेन जन्यत्वसम्बन्धेन चेति शेषः। प्रवृत्तिव्यापारस्य स्वार्थतामा- शंक्याह। न हीति। तथा चासृजतोऽपि तस्य नेष्टानुपपत्तिरि- त्यर्थः। तदुक्तं जैमिनीयैः—

"प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते।
न च प्रयोजनं तस्य स्यात्प्रजापतिकर्मणाम्॥ १॥
बहुव्यापारतायाश्च क्लेशो बहुतरो भवेत्।
सृजेच्च शुभमेवैकमनुकम्पाप्रयोजितः॥ २॥
अथाशुभाद्विना सृष्टिः स्थितिर्वा नोपपद्यते।
आत्माधीनाभ्युपायं हि भवेत्किं तस्य दुष्करम्॥ ३॥
जगच्चासृजतस्तस्य किं नामेष्टं न सिद्ध्यति"।

बहुक्लेशोक्त्या प्रयोजनव्यावृत्तिः। अशुभं विना सृष्टिर्न सम्भव-

ह्यवाप्तसकलेप्सितस्य भगवतो जगत् सृजतः किमप्यभिलषितम्भवति । नापि कारुण्यादस्य सर्गे प्रवृत्तिः, प्राक् सर्गाज्जीवानामिन्द्रियशरीरविषयानुत्पत्तौ दुःखाभावेन कस्य प्रहाणेच्छा कारुण्यम् ? सर्गोत्तरकालं दुःखिनो ऽवलोक्य कारुण्याभ्युपगमे दुरुत्तरमितरेतराश्रयत्वं दूषणम्,–कारुण्येन सृष्टिः सृष्ट्या च कारुण्यमिति । अपि च करुणया प्रेरित ईश्वरः सुखिन एव जन्तून् सृजेन्न विचित्रान् । कर्मवैचित्र्याद्वैचित्र्यम् इति चेत् ? कृतमस्य प्रेक्षावतः कर्माधिष्ठानेन, तदनधिष्ठानमात्रादेवाचेतनस्यापि कर्मणः प्रवृत्त्युपपत्तेस्तत्कार्यशरीरेन्द्रियविषयानुत्पत्तौ दुःखानुत्पत्तेरपि सुकरत्वात् ॥

प्रकृतेस्त्वचेतनायाः प्रवृत्तेर्न स्वार्थानुग्रहो न वा का-

तीत्युक्त्या च कारुण्यव्याप्तिरुक्तेति ध्येयम् । कारुण्यव्यतिरेकमाह । नापीति । कारुण्यं च निरुपधिपरदुःखप्रहाणेच्छा करुणा तस्या भावः कारुण्यम् । तदधीनप्रवृत्तिर्न सम्भवति । तत्र हेतुमाह । प्रागिति । सर्गोत्तरकालीनदुःखमादाय कारुण्यं स्यात्तत्राह । सर्गोत्तरेति । इतरेतराश्रयत्वं विवृणोति । कारुण्येनेति । 'प्रक्षालनाद्धि पंकस्य दूरादस्पर्शनं वर'मिति न्यायेन दुःखमूलत्वात्सृष्टिरेव न स्यात्स्याच्चेत्सुखैकरूपैव स्यादन्यथा वैषम्यापत्तेरित्याह । अपि चेति । पूर्ववादी शंकते । कर्मवैचित्र्यादिति । कर्मसापेक्षत्वे तेनैव निर्वाहे कारुण्यस्य वैयर्थ्यापत्तिः । अचेतनस्य कर्मणस्तदनाधिष्ठानादेव प्रवृत्त्यनुपपत्तेस्तत्कार्यशरीराद्यभावेन दुःखानुत्पत्तेः कुतः कारुण्यं चेत्यभिप्रायेण सिद्धान्ती परिहरति । कृतमस्येति । प्रकृतिप्रवृत्तौ च प्रेक्षावत्प्रवृत्तित्वाभावेन स्वार्थकारुण्यानपेक्षत्वान्न कोऽपि दोष इत्याह । प्रकृतेस्त्विति । प्रयोजनमनुद्दिश्ये-

रुण्यम्प्रयोजकमिति नोक्तदोषप्रसङ्गावतारः। पारार्थ्य-मात्रन्तु प्रयोजकमुपपद्यते । तस्मात् सुष्टूक्तम्-"वत्स-विवृद्धिनिमित्तम्" इति ॥ ५७ ॥

त्वादिन्यायाविरोधायाह । पारार्थ्यमात्रमिति । उपसंहरति । तस्मादिति ।

यत्तु 'पयोऽम्बुवच्चेत्तत्रापि' [ब्र० सू० २-२-३] इत्यस्मिन्सूत्रे तत्रापि पयोऽम्बुनोश्चेतनाधिष्ठितयोरेव प्रवृत्तिरित्यनुमिमीमहे उभयवादिप्रसिद्धेः रथादावचेतने केवले प्रवृत्त्यदर्शनात् । शास्त्रं च योऽप्सु तिष्ठन्योऽन्तरो यमयति । एतस्य वाऽक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्त इत्येवंजातीयकं समस्तस्य लोकस्य परिस्पन्दितस्येश्वराधिष्ठिततां श्रावयति । तस्मात्साध्यपक्षनिक्षिप्तत्वात्पयोम्बुवदित्यनुपन्यासः चेतनायाश्च धेन्वाः स्नेहेच्छया पयसः प्रवर्त्तकत्वोपपत्तेः । वत्सचोषणेन च पयस आकृष्यमाणत्वात् । न चाम्बुनोऽप्यत्यन्तमनपेक्षा निम्नभूम्याद्यपेक्षत्वात् स्यन्दनस्येति भाष्यकारैरुक्तम् ।

तन्न । प्रवृत्तिप्रयोजकस्वार्थकारुण्याभावेनेश्वरस्याधिष्ठातृत्वाभावस्यानुपदोक्तत्वात् । सृष्टौ स्वतन्त्रा प्रकृतिरेव कर्त्री तदुत्तरं प्रवृत्तिरूपक्रियायामीश्वरस्याधिष्ठातृत्वाङ्गीकारे पूर्वापरग्रन्थविरोधापत्तेः । चेतनस्य धेन्वादेः बुद्धिविशिष्टस्य शरीरेन्द्रियविशिष्टस्य वा प्रवर्त्तकत्वदर्शनेन तद्बुद्ध्यादिप्रवृत्तौ तत्सापेक्षत्वेनात्माश्रयाद्यापत्त्या चेतनायाश्च धेन्वा इत्याद्यनुपपत्तेश्च । निम्नभूम्याद्यपेक्षत्वेऽपि चेतनानपेक्षत्वेनोक्तदोषाभावात् । अत एव पुरुषार्थादयश्च प्रकृतेर्न प्रेरकाः किन्तु प्रवृत्तिस्वरूपाः प्रवृत्तौ निमित्तानीति न स्वातन्त्र्यक्षतिरिति सांख्यभाष्यमपि सङ्गच्छते । तथा च सुषुप्ताद् बुद्धेः छिक्काजृम्भणादेः वृक्षादेश्च पुरुषप्रयत्नं विनोत्थानदर्शनात् घटादेः पुरुषप्रयत्नापेक्षत्वदर्शनाच्च प्रधाने विचारं विना प्र-

"स्वार्थ इव" इति दृष्टान्तितम् । ( कारिका ५६ ) तद्विभजते—

औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः ।
पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदव्यक्तम् ॥ ५८ ॥

यत्नसापेक्षत्वनिरपेक्षत्वसंशयेऽपि उक्तरीत्या ईश्वरादिप्रयत्नासंम्भवदर्शनेन संशयनिवृत्तौ प्रधानातिरिक्तस्थले क्वचित्प्रयत्नसापेक्षत्वेऽपि दोषासम्भवादित्यभिप्रायः । न चोक्तशास्त्रविरोधः । उक्तरीत्या प्रयत्नासंयुक्तत्वरूपनियम्यत्वबोधकत्वात् । 'गुणसाम्यात्ततस्तस्मात् क्षेत्रज्ञाधिष्ठितान्मुने', इत्यादिविष्णुपुराणादौ क्षेत्रज्ञाधिष्ठितत्वं क्षेत्रज्ञसंयुक्तत्वं बोध्यम् । तदैक्षत बहु स्यामित्यादि वाक्यजातमपि नादिसर्गपरम् । तस्याबुद्धिपूर्वकस्मरणात् । यथा कूर्मे ।

'इत्येषः प्राकृतः सर्गः संक्षेपात्कथितो मया । अबुद्धिपूर्वकस्त्वेष ब्राह्मीं सृष्टिं निबोधतेति' ।

अस्य च वाक्यस्यादिपुरुषबुद्धिजन्यत्वेन सङ्कोचे गौरवम् । न केवलं सर्गादावेव पुरुषस्य संयोगमात्रं स्रष्टृत्वं किन्तु अन्येष्वपि बुद्धिपूर्वकेषु, परं त्वन्यबुद्धिमान्निध्यात्तद्भेदाग्रहे बुद्धिपूर्वकत्वव्यपदेश इति । पुरुषस्य सन्निधिमात्रेण गौणाधिष्ठातृत्वे मुख्याधिष्ठातृत्वं कस्येति चेच्छृणु । अन्तःकरणस्य ।

न चान्तःकरणस्य घटादिवज्जडत्वात्कथमधिष्ठातृत्वमिति वाच्यम् । स्वच्छस्यान्तःकरणस्य चैतन्यप्रतिबिम्बेन चेतनायमानतया घटादिविलक्षणत्वात् । संयोगविशेषस्य नियामकत्वपक्षेऽपि न परिणामिता चैतन्यस्य । सामान्यगुणातिरिक्तधर्मोत्पत्तावेव परिणामव्यवहार इत्युक्तत्वात अयं च संयोगविशेषोऽन्तःकरणस्यैव सत्त्वोद्रेकरूपात्परिणामाद्भवतीति फलबलात्कल्प्यते पुरुषस्यापरिणामित्वेन संयोगे तन्निमित्तकविशेषासम्भवाच्च ॥ ५७ ॥

"औत्सुक्य-" इति। औत्सुक्यमिच्छा, सा खल्विष्यमाणप्राप्तौ निवर्तते। इष्यमाणश्च स्वार्थः, इष्टलक्षणत्वात् फलस्य। दार्ष्टान्तिके योजयति—"पुरुषस्य विमोक्षार्थम्प्रवर्तते तद्वदव्यक्तम्" इति ॥ ५८ ॥

ननु भवतु पुरुषार्थः प्रकृतेः प्रवर्तकः, निवृत्तिस्तु कुतस्त्या प्रकृतेः? इत्यत आह—

**रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात्।**
**पुरुषस्य तथाऽऽत्मानं प्रकाश्य विनिवर्तते प्रकृतिः॥५९॥**

"रङ्गस्य" इति, स्थानेन स्थानिनः पारिषदानुपलक्ष-

---

उपजीवकत्वमङ्गत्वाऽऽर्यामवतारयति। स्वार्थं इवेतीति। औत्सुक्यनिवृत्तेः सुखदुःखाभावान्यतरत्वाभावात्कथं स्वार्थता इत्यत आह। सा खल्विति। तथा चेच्छानिवृत्तेः फलनियतत्वात्स्वार्थता सम्भवतीत्यर्थः। अनिवृत्ताया इच्छाया दुःखदत्वात्। सा च विषयसिद्धावेव निवर्त्तते सैव फलमित्यर्थ इत्यपरे।

उत्तरार्द्धमवतारयति। दार्ष्टान्तिके इति। तद्वदव्यक्तमिति।

ननु प्रधानमपि पुरुषार्थो मया कर्त्तव्य इतीच्छायां पुरुषविमोक्षाय प्रवर्त्तते तत्सिद्धिं विना तादृशेच्छाया अनिवृत्तेरनिवृत्तायाश्चानिष्टत्वात्तथा च स्वार्थमुखेनैव परार्थारम्भ इति पर्यवसितं तच्च न सम्भवति। अचेतनाया इच्छासम्भवात्। स्वार्थासम्भवाच्चेति चेन्न। कूलं पिपतिषतीतिवदुपचारेण तदुपपत्तेः।

एतेन प्रधानस्याचेतनत्वेन तद्वदव्यक्तमित्यनुपपन्नमिति परास्तम् ॥ ५८ ॥

प्रसङ्गसङ्गत्याऽऽर्यामवतारयति नन्विति। अनिवृत्तौ चानिर्मोक्षप्रसङ्ग इत्यर्थः। रङ्गं नाम नृत्यस्थानम्। अचेतनस्य तस्य कथं नृत्यदर्शनमित्याशङ्क्याह। स्थानेनेति। पारिषदान् परिषद

यति । 'आत्मानम्' शब्दाद्यात्मना पुरुषाद्भेदेन च प्रकाश्येत्यर्थः ॥ ५९ ॥

सभा तत्र स्थितान् । रङ्गस्य दर्शयित्वेत्यत्रापि आत्मानमिति सम्बध्यते । तथा च यथा नर्त्तकी सुप्रीता हावभावविलासवती विविधालङ्कारशोभिता नृत्यगीतादिभिरात्मानं सभ्यादेर्दर्शयित्वा दृष्टाऽहमनेनेति कृतप्रयोजना धनप्राप्त्या निवर्त्तते एवं प्रकृतिरपि बुद्ध्यादिसुखदुःखान्तर्भावेनाऽऽत्मानं पुरुषस्य प्रकाश्य त्वमन्योऽहमन्य इति विवेकतो निवर्त्ततेऽसंयुक्ता भवतीत्यर्थः ।

न च व्यापकयोः कथं संयोगनिवृत्तिरिति वाच्यम् । अविवेकनिमित्तकसंयोगविशेषस्य निवृत्तिप्रतियोगित्वेन विवक्षितत्वात् । अत एव मुक्तस्य न पुनर्बन्धापत्तिरिति । यथा चैतथोक्तं पुरस्तात् ।

नन्वात्मानं प्रकाश्येत्यनुपपन्नं प्रधानस्य नित्यानुमेयत्वादिति चेत्तत्राह । शब्दाद्यात्मनेति । शब्दादयो हि विषयाः प्रधानपरिणामास्तद्दर्शनमेव प्रधानदर्शनं एवं महत्तत्त्वाहङ्कारयोरपि प्रत्यक्षता परमाणोरस्मदाद्यप्रत्यक्षत्वेऽपि यथा तत्कार्यत्रसरेण्वादेः प्रत्यक्षता तद्वत्प्रधानस्याप्रत्यक्षत्वेऽपि तत्कार्यशब्दादेः प्रत्यक्षतेति न प्रधानस्य स्वत इत्यर्थः । अत एव सत्त्वपुरुषान्यताख्यातेर्मुक्तिरित्यत्रापि ख्यातिपदेन शब्दादिना प्रत्यक्षं विवक्षितमित्युक्तिरपि सङ्गच्छते ।

न च तादृशं ज्ञानं सर्वस्य कुतो न भवतीति शङ्क्यम् । साधनाभावात् । साधनानि च भाष्ये प्रसिद्धानि । तथा हि—कश्चिद्राजपुत्रो गण्डक्षणजन्मा पुरान्निःसारितः शबरेण केनचित्पोषितोऽहं शबर इत्यभिमन्यमान राजात्मजमेनं जीवन्तं ज्ञात्वा कश्चिदमात्यः प्रबोधयति न त्वं शबरो राजपुत्रोऽसीति स यथा झटित्येव चाण्डालाभिमानं त्यक्त्वा तात्त्विकं राजभावमेवावलंबते राजाऽहमस्मीति ।

स्यादेतत्–'प्रवर्ततामप्रकृतिः पुरुषार्थम् । पुरुषादु-पकृतात्प्रकृतिर्लप्स्यते किञ्चिदुपकारम्, आज्ञासम्पादना-राधितादिवाज्ञापयितुर्भुजिष्या । तथा च न परार्थोऽस्या आरम्भः'–इत्यत आह—

नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः ।
गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकञ्चरति ॥६०॥

"नाना–" इति । यथा गुणवानप्युकार्यपि भृत्यो

एवमेवादिपुरुषात्परिपूर्णचिन्मन्त्रेणाभिव्यक्तादुत्पन्नस्त्वं तस्यांश इति कारुणिकोपदेशात्प्रकृत्यभिमानं त्यक्त्वा ब्रह्मपुत्रत्वादहमपि ब्रह्मैव न तु तद्विलक्षणः संसारीत्येवं स स्वरूपमेवावलम्बते इत्यर्थः । स्त्रीशूद्रादिरपि ब्राह्मणस्योपदेशं कृत्वा कृतार्थास्स्युः । यथा अर्जु-नार्थं श्रीकृष्णेन तत्त्वोपदेशे क्रियमाणेऽपि समीपस्थस्यापि पिशा-चस्य विवेकज्ञानं जातमेवमन्येषामपि भवेदित्यर्थः।

यदि च सकृदुपदेशाज्ज्ञानं न जायते तदा उपदेशावृत्तिरपि कर्त्तव्या । छान्दोग्यादौ श्वेतकेत्वादिकं प्रति आरुणिप्रभृतीना-मसकृदुपदेशश्रवणात् । एवं वैराग्यमपि तद्विनाऽपि विक्षेपसम्भवे ज्ञानासम्भवात् ॥ ५९ ॥

उपोद्घातसङ्गत्याऽऽर्यामवतारयति । स्यादेतदिति । यदि-तदाशब्दमध्याहृत्य प्रकृतिर्यदि उपकृतात्पुरुषाद्यदि किञ्चिदुपकारं लप्स्यते तदा प्रवर्त्ततामू भुजिष्यतापन्नस्त्रीवेत्यन्वयः । प्रकृतिर्य-दि पुरुषार्था स्यात्तदा तदुपकृताऽपि स्यादिति तर्कमुक्त्वा तस्य व्य-तिरेके तात्पर्यमाह । तथा चेत्यादिना । गुणवतामयमेव स्वभावो यदनुपकारिण्युपकारकरणमतः परार्थप्रवृत्तिर्न तदुपकृतव्याप्त्या व्यभिचारादित्यभिप्रायेण समाधत्ते । यथेत्यादिना । अनुपका-

निर्गुणे ऽत एवानुपकारिणि स्वामिनि निष्फलाराधनः, एवमियम्प्रकृतिस्तपस्विनी गुणवत्युपकारिण्यनुपकारिणि पुरुषे व्यर्थपरिश्रमेति पुरुषार्थमेव यतते न स्वार्थमिति सिद्धम् ॥ ६० ॥

स्यादेतत्—'नर्तकी नृत्यम्पारिषद्भ्यो दर्शयित्वा निवृत्ता ऽपि पुनस्तद्द्रष्टृकौतूहलात् प्रवर्तते यथा, तथा प्रकृतिरपि पुरुषायाऽऽत्मानं दर्शयित्वा निवृत्ता ऽपि पुनः प्रवर्त्स्यति'—इत्यत आह-

प्रकृतेः सुकुमारतरन्न किञ्चिदस्तीति मे मतिर्भवति ।
या दृष्टा ऽस्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥ ६१ ॥

"प्रकृतेः" इति । सुकुमारतरता ऽतिपेशलता, परपुरुषदर्शनासहिष्णुतेति यावत् । असूर्यम्पश्या हि कुल-

रित्वे हेतुमाह । निर्गुण इति । तत्र च साक्षी चेता केवलो निर्गुणश्चेत्यादिश्रुतिरेव मानम् ।

ननु तथाऽपि ममेदं भोगादिसाधनं सम्पादनीयमिति प्रतिसन्धानाभावात् मूढायाः प्रकृतेः क्वचित्प्रवृत्तिरपि न स्याद्विपरीता च प्रवृत्तिः स्यात् । अहं च भोगादिसाधनम्, सम्पादितं च सम्पादनं किञ्चिदप्यग्रे नास्तीति परिज्ञानाभावान्निवृत्तिश्च न स्यादिति चेन्न । गर्भदासस्य स्वभावरूपसंस्काराद्यथा नियता प्रवृत्तिः तथा प्रधानस्यापि नियतप्रवृत्त्युपपत्तेः । अनाद्यदृष्टाकर्षणाच्च व्यवस्थोपपत्तेः । व्युत्पादितं चैवमेव भाष्ये ॥ ६० ॥

पूर्वोक्तसङ्गतिं सूचयन् निवृत्ताया अपि प्रकृतेः पुनर्दृष्टान्तेन प्रवृत्त्याशङ्कयाऽऽर्यामवतारयति । स्यादेतदित्यादि । पेलवता लज्जा । सुकुमारतरपदस्य सुकुमारसापेक्षत्वेन दृष्टान्तत्वेन दर्शयति । असूर्यमिति । एतेन मूले दृष्टान्ताकथनेन न्यूनतेति परास्तम् ।

वधूरतिमन्दाक्ष(१)मन्थरा प्रमादाद्विगलितसिचयाञ्चला चेदालोक्यते परपुरुषेण तदा ऽसौ तथा प्रयतते, अप्रमत्तां यथैनां परपुरुषान्तराणि न पुनः पश्यन्ति,—एवम्प्रकृतिरपि कुलवधूतो ऽप्यधिका दृष्टा विवेकेन न पुनर्द्रक्ष्यत इत्यर्थः ॥ ६१ ॥

स्यादेतत्—"पुरुषश्चेदगुणो ऽपरिणामी, कथमस्य मोक्षः ? मुचेर्बन्धनविश्लेषार्थत्वात्, सवासनक्लेशकर्माशयानाञ्च बन्धसमाख्यातानां पुरुषे ऽपरिणामिन्यसम्भवात् । अत एवास्य च पुरुषस्य न संसारः प्रेत्यभावापर-

---

असूर्यंपश्या पुरुषान्तराणि न पश्यतीत्यर्थः । अतिमन्देति । मन्दाक्षेण मन्थरा मन्दगामिनी प्रमादादनवधानात् विगलितसिचयाञ्चला—विगतः कटिपर्यन्तं पतितः सिचयाञ्चलः कटिमारभ्य शिरःपर्यन्तावरकं वस्त्रं यस्याः सा कदाचित् रहः सकाशाद्वारसमीपङ्गता द्वारावस्थितेन पुरुषेण दृष्टेत्याह । पुरुषेणेति । सर्वकुलवधूनामेतत्प्रसूतत्वात् तदपेक्षया एतस्या अधिकतरत्वमित्याह । एवमिति ।

न च कुलवधूनां चेतनत्वाद् दृष्टान्तासङ्गतिरिति वाच्यम् । शरीरेन्द्रियाभिमानवतां चैतन्यसन्निधानेन चेतनायमानानां बुद्धीनामेव कुलवधूपदवाच्यत्वात् ।

वस्तुतस्तु अविवेकनिमित्तकसंयोगविशेषाभावादेव पुनः प्रवृत्तेरसम्भवादित्यर्थः । विवेकख्यातेस्तत्प्रतिबन्धकत्वान्न पुनः प्रवृत्त्यापत्तिरित्यन्ये ॥ ६१ ॥

पूर्वोक्तसङ्गतिं सूचयन् कर्तृभोक्तृत्वादिपरिणामरूपबन्धस्यापरिणामिनि पुरुषे ऽसम्भवेन तत्समानाधिकरणस्य मोक्षस्याप्यस-

---

(१)मदाक्षं ह्रीस्त्रपा व्रीडा इत्यमरः ।

नामाऽस्ति, निष्क्रियत्वात् । तस्मात् 'पुरुषविमोक्षार्थम्, इति रिक्तं वचः"–इतीमां शङ्कानुपसंहारव्याजेनाभ्युपगच्छन्नपाकरोति ॥

**तस्मान्न बध्यतेऽद्धा, न मुच्यते नापि संसरति कश्चित् ।**
**संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥ ६२ ॥**

"तस्मात्" इति । अद्धा न कश्चित् पुरुषो बध्यते, न कश्चित् संसरति, न कश्चिन्मुच्यते । प्रकृतिरेव तु नानाश्रया सती बध्यते संसरति मुच्यते चेति । बन्धमोक्षसंसाराः पुरुषेषूपचर्यन्ते । यथा जयपराजयौ भृत्यगतावपि स्वामिनि उपचर्येते, तदाश्रयेण भृत्यानान्तद्भागित्वात् तत्फलस्य च शोकलाभादेः स्वामिनि सम्भवात् ।

म्भवात् पुरुषविमोचार्थमिति रिक्तं वच इत्याशङ्कयाऽऽर्यामवतारयति । स्यादेतदित्यादिना । विमुक्तश्च विमुच्यते इत्यादिश्रुतिमाश्रित्याभ्युपगच्छन् समाधत्ते । तस्मान्न बध्यते इति । अहं कर्त्तेत्याद्यनुभवविरोधं परिहरति । अद्धेति । अद्धा साक्षादित्यर्थः । न संसरति । न धर्मादिना परलोकं गच्छति । नानाश्रया धर्माधर्माद्यष्टकसम्पन्ना । प्रकृतिः बुद्धितत्त्वं प्रकृतेः साक्षात्संसरणाभावात् ।

ननु प्रकृतेरेव संसारित्वे कथमहं कर्त्तेत्यादिव्यवहार इत्यत आह । पुरुषेष्विति । तत्र दृष्टान्तमाह । यथेति । उपचारे सम्बन्धमाह । तदाश्रयेणेति । तदाश्रयेण जयपराजयाश्रयेण । तद्भागित्वात् । धनदानादिना स्वामिसम्बन्धित्वात् । उपचारे हेतुमाह । शोकेति । अन्यथा स्वामिनि शोकादिकं न स्याज्जयादिरूपहेत्वाद्यभावात् । पुरुषे धनदानादिसम्बन्धाभावात् सम्बन्धान्तरं

भोगापवर्गयोः प्रकृतिगतयोरपि विवेकाग्रहात् पुरुषसम्बन्ध उपपादित इति सर्वं पुष्कलम् ॥६२॥

नन्ववगतम् 'प्रकृतिगता बन्धसंसारापवर्गाः पुरुषे उपचर्यन्ते इति । किंसाधना. पुनरेते प्रकृतेरित्यत आह—

**रूपैः सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः ।**
**सैव च पुरुषार्थम्प्रति विमोचयत्येकरूपेण ॥ ६३ ॥**

"रूपैः" इति । तत्त्वज्ञानवर्जं बध्नाति धर्मादिभिस्सप्तभी रूपैर्भावैरिति । "पुरुषार्थम्प्रति" भोगापवर्गम्प्रति "आत्मना ऽऽत्मानम्" एकरूपेण तत्त्वज्ञानेन विवेकख्यात्या विमोचयति, पुनर्भोगापवर्गौ न करोतीत्यर्थः ॥ ६३ ॥

दर्शयति । विवेकाग्रहादिति । विवेकाग्रहनिमित्तकः संयोगविशेषोऽकर्त्ता कर्त्तेवेत्यत्रोपपादित इत्यर्थः ॥ ६२ ॥

अवसरसङ्गतिसूचनाय वृत्तं कीर्त्तयन्नार्यामवतारयति । नन्विति । सर्वान्कुतो न बध्नात्यत आह । तत्त्वज्ञानवर्जमिति । धर्मादीभिरिति । अत्रादिपदेन वैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्याणि गृह्यन्ते । आत्मना आत्मीयेन बुद्ध्या । पुरुषस्य प्रकृतिकृतो बन्धो न साक्षात् किन्तु बुद्धिद्वारक एवेत्युक्तं पुरस्तात् । एकरूपेण । अनेकाकाररहितेन । शास्त्रस्य तदेकसाधकत्वान्मुख्यरूपेणेत्यर्थः । "एके मुख्यान्यकेवलाः" इत्यभिधानात् । सुखादिनिवृत्तावपि पुनरुत्पत्तिसम्भवादाह । पुनरिति ।

ननु विमोचनं नाम वास्तवं निगडादिसंयोगध्वंसस्तस्यात्राभावात्कथमत्र मुञ्चतिप्रयोग इत्यत आह । पुनरितीत्यन्ये ।

चन्द्रकारास्तु ज्ञानेन वैराग्योपरमाद्यभावेऽपि ज्ञानं मोक्षस्य कारणं भवत्येवेति ज्ञापितम् ।

अवगतमीदृशं तत्त्वम्, ततः किमित्यत आह—

एवन्तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् ।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥ ६४ ॥

"एवम्" इति । तत्त्वेन विषयेण तत्त्वज्ञानमुपलक्षयति । उक्तरूपप्रकारतत्त्वविषयज्ञानाभ्यासादादरनैरन्तर्यदीर्घकालसेवितात् सत्त्वपुरुषान्यतासाक्षात्कारिज्ञानमुत्पद्यते । यद्विषयश्चाभ्यासस्तद्विषयकमेव साक्षात्कारमु-

---

उक्तं च तथा वेदान्तेषु—

"पूर्णबोधे तदन्यौ द्वौ प्रतिबद्धौ यदा तदा ॥
मोक्षो विनिश्चितः किं तु दृष्टदुःखं न पश्यतीति" ।

द्वौ वैराग्योपरमौ, दृष्टदुःखं यथोचितव्यवहारक्लेशः । तथा च विषयजिहासारूपवैराग्यस्य विषयदोषदर्शनजन्यस्य पुनर्भोगेष्वदीनतामात्रं फलं न तु मोक्षोऽपि । एवं धीनिरोधरूपोपरमस्यापि यमादिसाध्यस्य द्वैतादर्शनमेव फलं न मोक्षः, श्रुतिषु ज्ञानैकलभ्यत्वकथनादित्यास्तां विस्तर इत्याहुः ॥ ६३ ॥

ननु सकृच्छ्रवणेनोत्तमाधिकारिणामेकरूपज्ञानेन मोक्षसम्भवेऽपि मध्यमाधमानां तथाऽसम्भवादुपजीवकत्वसङ्गतिं सूचयन्निदिध्यासनपरामार्यामवतारयति । अवगतमिति

चन्द्रकारास्तु भवतु ज्ञानादेव कैवल्यं तदेव तु कस्मात्किमाकारं च तत्राह । एवमितीत्याहुः ।

एवं मूलप्रकृतिरित्याद्युक्तप्रकारेण ।

ननु तत्त्वाभ्यासो नाम विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहो निदिध्यासनपर्यायः स कथं उक्ततत्त्वस्य घटत इति चेत् ? तत्त्वविषयज्ञानस्यैवाभ्यासो न विषयस्येत्याह । तत्त्वेनेति । उपपत्तिमाह । यद्विषयश्चेति । विशुद्धम् । प्रमात्म-

पजनयति,-तत्त्वविषयश्चाभ्यास इति तत्त्वसाक्षात्कारं जनयति । अत उक्तम्-"विशुद्धम्" इति ॥

कुतो विशुद्धमित्यत आह—"अविपर्ययात्" इति । संशयविपर्ययौ हि ज्ञानस्याविशुद्धी, तद्रहितं विशुद्ध-

---

कम् । अविपर्ययात् । विपर्ययभिन्नत्वात् । व्यधिकरणप्रकारा-भावादित्यर्थः । एतनक्ति । संशयेति ।

नन्वशुद्धि र्नाम मलादि तस्य संशयादावप्रसक्तिरिति चेन्न । स्वरूपधीप्रतिबन्धकत्वात्संशयानापि मलवन्मलत्वसम्भवात् ।

न च विपर्ययादित्युक्ते कथं संशयनिरासस्तत्राह । नियतेति । संशयस्यानियतग्राहकत्वरूपविपर्ययसाधारणधर्मत्वादित्यर्थः।

चन्द्रकारास्तु—निदिध्यासनसहकृतेन मनसैवाऽऽत्मगोचर-निर्विकल्पकसाक्षात्कारो भवति न श्रुतानुमानाभ्यां तयोस्तत्रासा-मर्थ्यादिति निदिध्यासनविधानाद्बोधितमित्याहुः ।

नन्वन्यविषयात्तत्त्वज्ञानाभ्यासादन्यविषयतत्त्वसाक्षात्कारोत्पत्तौ किं प्रमाणमित्याशङ्कायामनुमानमिति वक्तुं व्याप्तिमाह । यद्विषयश्चेति । दृष्टान्तस्य सम्प्रतिपन्नत्वादुपनयनिगमने दर्शयति । तत्त्वविषयश्चेति ।

नन्वभ्यासस्य तत्त्वविषयत्वाङ्गीकारे उक्तप्रकारतज्ज्ञानाभ्या-सादिति पूर्वोक्तविरोधः । ज्ञानस्य विशुद्धौ व्याप्त्यप्रदर्शनेन "अत उक्तं विशुद्ध"मित्युक्तिविरोधश्चेति चेन्न । यथा मन्त्राभ्यासो मन्त्र-प्रवाहो मन्त्रसमुदायो मन्त्रात्मक एव, षड्जादिस्वरश्रवणाभ्यासः षड्जादिस्वरश्रवणप्रवाहः षड्जादिस्वरसमुदायात्मकः षड्जादिस्व-रात्मक एव तथा तत्त्वज्ञानाभ्यासोऽपि तत्त्वज्ञानप्रवाहस्तत्वज्ञा-नसमुदायात्मकस्तत्त्वज्ञानमेवेत्येवं सत्यायदोषाभावात् । यथा वह्नि-धूमयोर्व्याप्तिग्रहात्पक्षे पर्वतादौ जायमाना वह्न्यनुमितिर्वस्तुतः प-र्वतीयवह्निविषया तथाऽभ्यस्यमानज्ञानाज्जायमानः साक्षात्कारो

न्तदिदमुक्तम्-"अविपर्ययात्"इति । नियतमनियत-
तया गृह्णन् संशयो ऽपि विपर्ययः, तेन 'अविपर्ययात्'
इति संशयविपर्ययाभावो दर्शितः । तत्त्वविषयत्वाच्च
संशयविपर्ययाभावः ॥

स्यादेतत्-'उत्पद्यतामीदृशाभ्यासात् तत्त्वज्ञानम्'
तथा ऽप्यनादिना मिथ्याज्ञानसंस्कारेण मिथ्याज्ञानं ज
नयितव्यम् तथा च तन्निबन्धनस्य संसारस्यानुच्छेदप्र-

---

विशुद्ध एवोत्पद्यते ऽतश्चरमदोषाभावात् । अत एव विमतस्तत्त्ववि-
षयो ज्ञानाभ्यासः स्वविषयसाक्षात्कारजनकस्तद्विषयाभ्यासत्वा-
त्सम्प्रतिपन्नवदित्यपि सङ्गच्छते । अन्यथा तत्त्वविषय इत्यादेरसं-
गत्यापत्तेः ।

नन्ववधारणं ज्ञानं संशयो मिथ्याध्यवसायो विपर्यय इति
भिन्नलक्षणलक्षितत्वात्संशयविपर्यययोः कथं विपर्ययेण संशयो गृह्य-
ते इत्यत्राह । नियतमिति । संशयस्यानियतग्राहकत्वरूपविपर्य-
यसाधारणधर्मत्वादित्यर्थः । आदराद्यभ्यस्तज्ञानोत्पादितस्वविष-
यसाक्षात्कारज्ञानस्वरूपपर्यालोचनयाऽविपर्ययादित्यनेन संशय-
विपर्ययाभावो दर्शित इदानीं ज्ञेयस्वरूपपर्यालोचनयाऽपि स इ-
त्याह । तत्त्वविषयत्वादिति । तथा च ज्ञानस्य विशुद्धौ व्या-
प्त्यप्रदर्शनेऽपि न क्षतिरित्यर्थः ।

नन्वेवमपि न तादृशज्ञानान्मोक्षः सम्भवति तस्य क्षणिकत्वेन
तदुत्तरमनादिमिथ्याज्ञानसंस्कारेण मिथ्याज्ञानस्य सम्भवात् । दृश्य-
ते च तादृशज्ञानवतामपि मिथ्याज्ञानप्रयोज्यो ब्राह्मणोऽहं गौरो
ऽहमित्यादिव्यवहार इत्यभिप्रायेण शङ्कते । स्यादेतदिति । अ-
नादिविपर्ययवासनाया श्रवणादिजन्यतत्त्वज्ञानवासनया समुच्छे-
देन विपर्ययज्ञानासम्भवेऽपि प्रतिबिम्बादिभानवत् प्रारब्धप्रयो-
ज्यलिङ्गशरीरादिसन्निधानेन बाधितज्ञानसम्भवेन संसारासम्भवा-

सङ्ग इत्यत उक्तम्—"केवलम्" इति—विपर्ययेणासम्भिन्नम् । यद्यप्यनादिर्विपर्ययवासना तथा ऽपि तत्त्वज्ञानवासनया तत्त्वविषयसाक्षात्कारमादधत्याऽऽदिमत्याऽपि शक्या समुच्छेत्तुम् । तत्त्वपक्षपातो हि धियां स्वभाव, यदाहुर्बाह्या अपि—

"निरुपद्रवभूतार्थस्वभावस्य विपर्ययैः ।

न बाधो ऽयत्नवत्त्वे ऽपि बुद्धेस्तत्पक्षपाततः" इति ॥

ज्ञानस्वरूपमुक्तम्—"नास्मि, न मे, नाहम्" इति ।

---

दित्यभिप्रायेण समाधत्ते । केवलमितीति ।

ननु विपर्ययेणासंभिन्नत्वं विपर्ययभिन्नत्वं तच्च विशुद्धमित्यनेनैव लब्धमिति चेन्न । विपर्ययपदस्योभयत्रान्वयेन स्वसमानकालीनस्वसमानाधिकरणविपर्ययवासनाऽसंयुक्तलाभात् ।

चन्द्रकारास्तु केवलं पुरुषमात्रगोचरं ज्ञानमित्याहुः ।

आदिमत्या श्रवणमनादिजन्यया इत्यर्थः । ज्ञानानां ज्ञानत्वविशेषेऽपि स्वभावः शरणमित्यत्रातिदार्ढ्याय विरोधिनां बौद्धानां सम्मतिमाह । यथेति । उपद्रवः । प्रवृत्तिज्ञानानि, तैः शून्यो यो भूतार्थः । आलयविज्ञानरूपं स्वभावो यस्य । विपर्ययैः प्रवृत्तिविज्ञानैः, विज्ञानरूपतायाः । न बाधः अयत्नवत्त्वेऽपि तत्त्वज्ञानस्यानावृत्तावपि । 'न बाधः स्यान्नवत्वेऽपीति' पाठे निर्दोषनिरात्मतत्त्वज्ञानस्य सादित्वेऽप्यनादिमिथ्याज्ञानैर्न बाध इत्यर्थः ।

युक्तिमप्याह । बुद्धेरिति । यद्विशेष्यकयत्सम्बन्धावच्छिन्नयत्प्रकारकशाब्दबुद्धिं प्रति यादृशसमभिव्याहारज्ञानं कारणं तद्विशेष्यकतत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभावप्रकारकविशेषणतासंसर्गकशाब्दबुद्धिं प्रति तादृशसमभिव्याहृतनञ्समभिव्याहारज्ञानस्य हेतुत्वमित्यभिप्रायेण नास्तीत्यनेनात्मनि क्रियामात्रं निषि-

'नास्मि' इत्यात्मनि क्रियामात्रन्निषेधति । यथाहुः, कृ-भ्वस्तयः क्रियासामान्यवचनाः, इति ( सिद्धान्तकौमुदी)। तथा चाध्यवसायाभिमानसङ्कल्पालोचनानि चान्तराणि बाह्याश्च सर्वे व्यापारा आत्मनि प्रतिषिद्धानि(१)। बोद्धव्यानि । यतश्चात्मनि व्यापारावेशो नास्त्यतो 'नाहम्' । अहमिति कर्तृपदम्, 'अहञ्जानाम्यहं जुहोम्यहन्ददे' इति सर्वत्र कर्तुः परामर्शात् । निष्क्रियत्वे च सर्वत्र कर्तृत्वाभावः । ततः सुष्ठूक्तम्—"नाहम्" इति । अत एव "न मे"। कर्ता हि स्वामितां लभते, तस्मात्

ध्यते इत्याह । यथाहुरिति । तात्पर्यार्थमाह । तथा चेति ।

पाठक्रमादर्थक्रमो बलीयानिति न्यायमाश्रित्य क्रियोपरमे कर्तृत्वादिकारकोपरम इत्याह । यत इति । विभुत्वेन परिस्पन्दरूपक्रियाभावेऽप्यात्मनि नैयायिकादिभिः कर्तृत्वाङ्गीकाराद् बाध इति न च वाच्यम् । निरवयवत्वेन परिणामाभावात् कृतिमत्त्वरूपकर्तृत्वस्यासम्भवात् ।

न च समवायेन कृतिमत्त्वरूपकर्तृत्वं सम्भवतीति वाच्यम् । समवायस्य पूर्वं निरस्तत्वात् । कर्तृत्वघटककृतेर्जन्यत्वेन कर्तृसापेक्षतयाऽऽत्माश्रयाद्यापत्तेश्च, परिणम्यमानत्वरूपकर्तृत्वपक्षे तु नायं दोषः । सत्कार्यवादाश्रयणात कर्तृत्वाभावेऽपि सङ्गित्वेनान्यकर्तृकदुःखादिसम्भवेनैतादृशज्ञानस्य दुःखादिविरोधित्वं न स्यादतोऽसङ्गित्वमाह । अत एवेति । स्वामिता । सम्बधिता । भावित्री । भवित्री । निष्क्रियो ऽकर्ता निःसङ्गो ऽहमिति तत्त्वज्ञानपदेनोच्यते इति भावः ।

ननु पाकानुकूलक्रियाभावकालेऽपि 'पाचक इत्यादिव्यवहा-

( १ ) प्रतिबद्धानि—इति पुस्तकान्तरे पाठः ।

कुतः स्वाभाविकी स्वामिनेत्यर्थः । अथ वा "नास्मि" इति "पुरुषो ऽस्मि, न प्रसवधर्मा" । अप्रसवधर्मित्वा-

रान्यथानुपपत्त्या पाचकत्वादिशक्तिसम्भव इत्यपरितोषादाह । अथ वेति ।

अस्मीति पदच्छेदेन व्याख्याय प्रथमैकवचननाशब्दपरत्वेन व्याचष्टे । अथ वेतीत्यन्ये ।

पुरि शेते इति व्युत्पत्त्या पुरुषपदेन प्रधानादिभेदासिद्धेराह । **न प्रसवधर्मेति ।**

व्याख्यानान्तरं हि पूर्वापरितोषादधिकार्थलाभाद्वा भवति । तत्र पूर्वापरितोषाभावादधिकार्थलाभायाह । अथ वेतीति केचित् ।

अन्ये तु नास्मीत्यस्य न कर्त्तास्मीत्यर्थः । तेन बुद्धिभिन्नो ऽहमिति प्राप्तं न मे दुःखमिति शेषः । तेन दुःखाद्यारोपाभावो लब्धः । नाहमित्यनेनाहंकारभेदग्रहः । नास्ति परिशेषो यस्मादित्य॰ परिशेषं चरममित्याहुः ।

तन्न । महत्तत्त्वाहंकारभेदसिद्धावपि तदितरप्रधानादिभेदासिद्धेः । चरमज्ञानत्वेन ज्ञानस्य मोक्षहतुत्वे मानाभावाच्च ।

ननु बुद्धिभेदज्ञाने कर्तृत्वादिनिवृत्त्या मोक्षसम्भवे प्रधानादिभेदासिद्धौ न क्षतिः । न च सत्त्वपुरुषान्यताख्यातेर्मोक्षहेतुत्वकथनविरोध इति वाच्यम् । सत्त्वपुरुषाविवेकस्याप्रसिद्ध्या प्रसिद्धौ वा तस्याविवेकादिज्ञानरूपस्य प्रतिबन्धकत्वाभावेन सत्त्वपुरुषान्यताख्यातेर्मोक्षहेतुत्वकथनस्याज्ञानविजृंभितत्वात् । अत एव तादृशख्यातिमतो देहाद्यभिमानसम्भवेऽपि न मोक्षापत्तिरिति चेन्न ।

बुद्धिदेहाद्यविवेकस्य कार्यतयाऽनादिकारणाविवेकस्य मूलत्वेन कल्पनात् ।

न चाननुभवात्कल्पना न सम्भवतीति वाच्यम् । बुद्धिरहं

चाकर्तृत्वमाह—"नाहम्" इति । अकर्तृत्वाच्च न स्वामितेत्याह—"न मे" इति ॥

ननु 'एतावत्सु ज्ञानेष्वपि कश्चित् कदाचिदज्ञातो विषयोऽस्ति, तदज्ञानञ्च्नूनं बन्धयिष्यति' इत्यत आह—"अपरिशेषम्" इति । नास्ति किञ्चिदस्मिन् परिशिष्टं ज्ञातव्यं यदज्ञानं बन्धयिष्यतीत्यर्थः ॥ ६४ ॥

देहोऽहमित्यननुभवेऽपि कर्त्ताऽहं गौरोऽहमित्यन्यथानुपपत्त्या बुद्ध्याद्यविवेकवत्तत्सम्भवात् । अहमज्ञ इत्याद्यखिलाभिमानानां प्रधानविषयित्वं विनाऽनुपपत्तेश्च ।

न च तेषां बुद्ध्यादिविषयत्वेनैवोपपत्तिरिति वाच्यम् । मृत्वा पुनः सृष्टौ स्वर्गी स्यां मा च नारकीत्याद्यभिमानानां बुद्धिविषयित्वानुपपत्तेः । अतीतानां बुद्ध्याद्यखिलकार्याणां पुनः सृष्ट्यभावात् । प्रधानस्य त्विदमेव प्रलयोत्तरं जन्म यद् बुद्ध्यादिरूपैकपरिणामत्यागेनापरबुद्ध्यादिरूपतया परिणमनमिति । तथा चाप्रसवधर्मत्वादिरूपकूटस्थधर्मैः प्रधानात्पुरुषे विविक्ते तुल्यन्यायात्कारणनाशाच्च तत्कार्येषु परिणामादिधर्मकेषु बुद्धिदेहादिषु सुवर्णादिनाशे तज्जन्यकटकादिष्वभिमानोत्पत्तिवदभिमानोत्पत्तिर्न संभवतीति भावः । बन्धकेषु बुद्धिदेहादिष्वविवेकाभावात्सम्भावनया शङ्कते । नन्विति । प्रसवधर्मत्वेन प्रतियोगिनां ज्ञातत्वादज्ञातत्वादृशविषयो नास्तीत्यभिप्रायेण परिहरति । नास्तीति ।

अन्ये तु नैयायिकाभिमतमनसि अविवेकसम्भवाभिप्रायेण शङ्कते । नन्विति । पुरुषभिन्नस्य कस्यापि नित्यत्वाभावादित्यभिप्रायेण परिहरति । अपरिशेषमितीत्याहुः ।

बन्धतन्निवर्त्तकज्ञानयोर्विशेषस्तु "दृष्टे साऽपार्था चे"त्यत्रोक्तोऽनुसन्धेयः ॥ ६४ ॥

किं पुनरीदृशेन तत्त्वसाक्षात्कारेण सिध्यतीत्यत आह—

तेन निवृत्तप्रसवामर्थवशात् सप्तरूपविनिवृत्ताम् ।
प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वच्छः ॥६५॥

"तेन" इति । भोगविवेकसाक्षात्कारौ हि प्रकृतेः प्रसोतव्यौ । तौ च प्रसूताविति नास्याः प्रसोतव्यमवशिष्यत इति निवृत्तप्रसवा प्रकृतिः । विवेकज्ञानरूपो योऽर्थस्तस्य वशः सामर्थ्यम्, तस्मात् । अतत्त्वज्ञानपूर्वकाणि खलु धर्माधर्माज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणि । वैराग्यमपि केवलतौष्टिकानामतत्त्वज्ञानपूर्वकमेव । तत्र तत्त्वज्ञानं विरोधित्वेनातत्त्वज्ञानमुच्छिनत्ति । का-

---

उपजीवकत्वसङ्गत्याऽऽर्यामवतारयति । किं पुनरीदृशेनेति । तत्त्वसाक्षात्कारेणेत्यनेनेति मूलस्थपदं व्याख्याय निवृत्तः प्रसवः प्रजारूपकार्योत्पादनं यस्या इति विग्रहे प्रसवघटकीभूतकार्यं दर्शयति । भोगेति । विवेकसाक्षात्कारपदेन भेदसाक्षात्कारो बोध्यः । यच्छब्दार्थमाह । निवृत्तप्रसवा प्रकृतिरिति ।

न चैवमन्येषां ज्ञानाभावेऽपि मुक्तिप्रसङ्ग इति वाच्यम् । ज्ञानिनं प्रत्येव कार्याजनकत्वात् । अत एव निवृत्तप्रसवां पश्यतीत्युक्तम् । न तु सा जीर्णकामिनीव निवृत्तप्रसवा भवतीत्यर्थः । तत्त्वज्ञानस्यैवाज्ञानविरोधित्वात्सप्त रूपाणामज्ञानपूर्वकत्वमाह । अतत्त्वज्ञानपूर्वकाणीति । वैराग्यस्य विषयदोषदर्शनहेतुतत्त्वज्ञानपूर्वकत्वात्कथमज्ञानपूर्वकत्वमित्यत आह । वैराग्यमपीति । तुष्टिसम्बन्धिनस्तौष्टिकास्तुष्टिभेदस्तु पूर्वमुक्त एव । स्थागतिनिवृत्तावित्यभिप्रायेणाह । निष्क्रिय इति । मूले दृष्टान्तमाह । प्रेक्षकवदिति । तत्त्वज्ञवदित्यर्थः । स्वस्थः । स्वस्मिन् चिदेकरसे आत्मनि तिष्ठतीत्यर्थः । अत एव समानतन्त्रान्तरे "तदा

रणनिवृत्त्या च सप्तरूपाणि निवर्तन्त इति सप्तरूपविनिवृत्ता प्रकृतिः। "अवस्थितः" इति निष्क्रियः, "स्वच्छः" इति रजस्तमोवृत्तिकलुषया बुद्ध्या ऽसम्भिन्नः। सात्त्विक्या तु बुद्ध्या तदा ऽप्यस्य मनाक् सम्भेदो ऽस्त्येव, अन्यथैवम्भूतप्रकृतिदर्शनानुपपत्तेरिति ॥ ६५ ॥

---

द्रष्टुः स्वरूपेऽवस्थानम्" "वृत्तिसारूप्यमितरत्रे"त्युक्तम् । "असावात्मा कस्मिन्प्रतिष्ठितः ? स्वे महिम्नी"ति श्रुतेश्च । स्वच्छ इति पाठाभिप्रायेण व्याख्यायामाह । स्वच्छ इतीति ।

ननु पुरुषस्य स्वच्छत्वे प्रकृतिं पश्यति पुरुष इत्यनुपपन्नं प्रकृतिविषयकदर्शनाश्रयबुद्ध्यसंसर्गाग्रहस्य नाशेन पुरुषस्य ज्ञानाश्रयतया भानासम्भवादित्याशङ्कायां बुद्ध्यसंसर्गाग्रहं विना सत्त्वपुरुषान्यताख्यातेरसम्भवतया प्रकृत्यविवेकनाशेन रजस्तमोवृत्तिकलुषितबुद्ध्यविवेकनाशेऽपि विनश्यदवस्थसात्त्विकबुद्ध्यविवेक आवश्यक इत्यभिप्रायेण स्वच्छशब्दार्थमाह। रज इत्यादि। असम्भिन्नः। सम्यग्भिन्नः—सम्भिन्नः। मनाक् सम्भिन्नः असम्भिन्नः। तत्रार्थापत्तिं प्रमाणयति। अन्यथेति। न च विवेके सति कथमविवेकः सम्भवति इति वाच्यम्। प्रकृतिविवेकेन प्रकृत्यविवेकनाशेऽपि तत्कार्याविवेकस्य कारणाविवेकनाशनाश्यस्य विवेके सत्यपि किञ्चित्कालसम्भवात्।

अत एव "ज्ञानेनाज्ञाने नष्टे तत्कार्यस्य शरीरादेः साक्षात्कारज्ञाने विरोधाभावेऽपि अज्ञाननाशनाश्यतया किञ्चित्कालावस्थाने बाधकं न पश्याम"इति वेदान्तिवाद्युक्तिरपि सङ्गच्छते। तत्र "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्य"इत्यादि श्रुतिः प्रमाणम्। न च विनश्यदवस्थबुद्ध्यविवेकस्य कार्यकारित्वं न सम्भवतीति वाच्यम्। विनश्यदवस्थस्य ज्ञानस्य संस्कारकार्यकारित्ववत्तस्यापि तत्सम्भवात् ॥ ६५ ॥

स्यादेतत्—निवृत्तप्रसवामिति न मृष्यामहे। संयोगकृतो हि सर्ग इत्युक्तम्, योग्यता च संयोगः, भोक्तृत्वयोग्यता च पुरुषस्य चैतन्यम्, भोग्यत्वयोग्यता च प्रकृतेर्जडत्वं विषयत्वञ्च। न चैतयोरस्ति निवृत्तिः। न च करणीयाभावान्निवृत्तिः, तज्जातीयस्यान्यस्य करणीयत्वात् पुनः पुनः शब्दाद्युपभोगवत्,—इत्यत आह—

दृष्टा मयेत्युपेक्षक एको, दृष्टाऽहमिति विरमतेऽन्या।
सति संयोगेऽपि तयोः प्रयोजनन्नास्ति सर्गस्य ॥६६॥

"दृष्टा" इति। करोतु नाम पौनःपुन्येन शब्दाद्युपभोगम्प्रकृतिर्यया विवेकख्यातिर्न कृता, कृतविवेकख्यातिस्तु शब्दाद्युपभोगन्न जनयति। अविवेकख्यातिनिबन्धनो हि तदुपभोगो, निबन्धनाभावे न तद्भवितुमर्हति, अङ्कुर इव बीजाभावे। प्राकृतान् हि सुखदुःखमोहात्मनः

---

प्रकृतनिवृत्तप्रसवप्रतिपादकसहकारिकारणाभावकथनेनोपाद्धातसङ्गतिं सूचयन्नार्यामवतारयति। स्यादेतदिति। असहने हेतुमाह। संयोगकृत इति। उक्तम्। "तस्मात्तत्संयोगा"दित्यत्रेत्यर्थः। संयोगस्यानित्यत्वमाशङ्क्याह। योग्यता च संयोग इति। योग्यताया यावद्द्रव्यभावित्वान्नेदानीन्तन्निवृत्तिरित्यर्थः। सुषुप्त्यादौ भोक्तृत्वाभावमाशङ्क्याह। भोक्तृत्वयोग्यतेति। एतयोः। भोक्तृत्वभोग्यत्वयोग्यत्वयोः। अविवेकख्यातिरूपसहकारिकारणाभावाद्भोगं न जनयतीत्याह। करोतु नामेति। उपभोगं न जनयति। विवेकिनं प्रति इति शेषः। तेनान्यान्प्रति भोगजननेऽपि न क्षतिः। दृष्टान्तमाह। अङ्कुर इवेति। तथा च सूत्रं। "नान्योपसर्पणेऽपि मुक्तोपभोगो निमित्ताभावा-दिति" (सा० द० अ० ६ सू० ४५) उपभोगे निमित्तानां सोपा-

शब्दादींस्तदविवेकात् 'ममैतत्' इत्यभिमन्यमान आत्मा भुञ्जीत । एवं विवेकख्यातिमपि प्राकृतीमविवेकादेवात्मा 'मदर्थेयम्' इति मन्यते । उत्पन्नविवेकख्यातिस्तु तदसंसर्गाच्छब्दादीन्नोपभोक्तुमर्हति नापि विवेकख्यातिम्प्राकृतीमपि कर्तुम् । ततो विविक्त आत्मा न स्वार्थमभिमन्तुमर्हति । पुरुषार्थौ च भोगविवेकौ प्रकृत्यारम्भप्रयोजकावित्यपुरुषार्थौ सन्तौ न प्रकृतिं प्रयोजयतः । तदिदमुक्तम्—"प्रयोजनन्नास्ति सर्गस्य" इति । अथ प्रयुज्यते सर्गे प्रकृतिरनेनेति प्रयोजनम्, तदपुरुषार्थे नास्तीत्यर्थः ॥ ६३ ॥

---

धिसंयोगविशेषतत्कारणाविवेकादीनामित्यर्थः । अविवेकस्य सर्गे सहकारित्वमन्वयव्यतिरेकाभ्यां व्युत्पादयति । प्राकृतानित्यादिना । विवेकख्यातेरात्मार्थत्वेऽविवेकहेतुत्वमाह । एवमिति । एवं शब्दादिभोगो यथा तथा ख्यातिरपि मदर्थेत्यर्थः । नापि विवेकख्यातिकर्तृत्वमित्याह । नापीति । नापि तामाकाङ्क्षतीत्याह । न स्वार्थमिति । अविवेकवत्प्रसवे पुमर्थस्यापि निमित्तत्वात्तदभिप्रायेण मूलं योजयति । पुमर्थाविति । तथा च सूत्रं "विमुक्तबोधान्न सृष्टिः प्रधानस्य लोकवदिति । ( सां० द० अ० ६ सू० ४३ ) सूत्रं तु विमुक्तबोधात् विमुक्तोऽयमिति बोधादिव मुक्तं प्रति न प्रधानस्य सृष्टिः प्रवृत्तिः । लोकवत् । यथा हि लोके हि कश्चित्कस्यचिद्बन्धमोक्षार्थं यतते जाते च मोक्षे उदास्ते तथा प्रधानमित्येवं व्याख्येयम् । सर्गस्य प्रयोजनं नास्तीत्यत्र हेतुमाह । अपुरुषार्थत्वे इति । ममेदमित्यभिमानाभावादित्यर्थः । तथा च सहकारिकारणाभावे योग्यताया अकिञ्चित्करत्वात्सर्गो न सम्भवतीत्यभिप्रायः । मूले तयोः । प्रकृतिपुरुषयोर्मध्ये एको द्रष्टा पुरुषः । स्वभिन्नेयं स्वभिन्नं स्वसंपर्काद्बध्नातीत्येवंगुणा प्रकृ-

स्यादेतत्—"उत्पन्नतत्त्वसाक्षात्कारश्चेत्तदनन्तरमेव मुक्तस्य तस्य देहपातः स्यादिति कथमदेहः प्रकृतिम्प- श्येत् । अथ तत्त्वज्ञाने ऽपि न मुच्यते कर्मणामप्रक्षीण- त्वात् ? तेषां कुतः प्रक्षयः ? 'भोगात्' इति चेत्, हन्त भोस्तत्त्वज्ञानन्न मोक्षसाधनम्—इति 'व्यक्ताव्यक्तज्ञविज्ञा- नजन्मना तत्त्वज्ञानेनापवर्गः' इति रिक्तं वचः । 'भोगेन चापरिसंख्येयः कर्माशयप्रचयो ऽनियतविपाककालः क्षेतव्यः, ततश्चापवर्गप्राप्ति'रित्यपि मनोरथमात्रम्" इत्यत आह—

सम्यग्ज्ञानाधिगमात् धर्मादीनामकारणप्राप्तौ ।
तिष्ठति संस्कारवशात्, चक्रभ्रमिवद् धृतशरीरः॥६७॥

"सम्यक्" इति । तत्त्वसाक्षात्कारोदयादेवानादिर- प्यनियतविपाककालो ऽपि कर्माशयप्रचयो दग्धबीजभा- वतया न जात्यायुर्भोगलक्षणाय फलाय कल्पते । क्लेश- सलिलावसिक्तायां हि बुद्धिभूमौ कर्मबीजान्यङ्कुरं प्र-

---

तिर्मया दृष्टेत्युपेक्षको भवति । उपरमते तत्तद्भोगाद्यावेशरहितो भवति । तथा अन्या प्रकृतिः उपरमते न प्रसूते इत्यन्वयः॥ ६६ ॥

पूर्वोक्तसङ्गत्याऽऽर्यामवतारयति । स्यादेतदिति । शरीरपाते इष्टापत्तौ प्रत्यक्षप्रमाणविरोधमाह । कथमिति । दर्शने शरीर- स्य हेतुत्वादित्यर्थः । कर्मणां मुक्तिप्रतिबन्धकत्वमित्यभिप्रायेण शङ्कते । अथेति । निराकरोति । तेषामिति । रिक्तम् अर्थशू- न्यं वच इत्यर्थः । अनियतविपाककालः । अनियतो विपाकानां जात्यायुर्भोगानां कालो यस्य कर्माशयस्य सः । तत्र सहका- रिकारणाभावरूपहेतुमाह । क्लेशेति । क्लेशा अविद्यास्मितराग- द्वेषाभिनिवेशास्त एव सलिलानि तैरभिसिक्तायां बुद्धिभूमौ क-

सुवते। तत्त्वज्ञाननिदाघनिपीतसकलक्लेशसलिलायामूषरायां कुतः कर्मबीजानामङ्कुरप्रसवः? तदिदमुक्तम्—

"धर्मादीनामकारणप्राप्तौ" इति, अकारणत्वप्राप्तावित्यर्थः। उत्पन्नतत्त्वज्ञानोऽपि च संस्कारवशात् तिष्ठति, यथोपरतेऽपि कुलालव्यापारे चक्रं वेगाख्यसंस्कारवशात् भ्रमत् तिष्ठति। कालपरिपाकवशात्तूपरते संस्कारे निष्क्रियम्भवति। शरीरस्थितौ च प्रारब्धपरिपाकौ धर्माधर्मौ संस्कारौ। तथा चानुश्रूयते—"भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते" इति "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इति च (छान्दोग्य ६। १४। २)। प्रक्षीयमाणाविद्यासंस्कारावशेषश्च संस्कारस्तद्वशात् तत्सामर्थ्यात् धृतशरीरस्ति-

---

र्माणि धर्माधर्मरूपाणि बीजानि भोगादिरूपमंकुरं प्रसुवते जनयन्ति। तान्येवोषरायां न जनयन्ति अंकुरानित्याह। तत्त्वज्ञानेति। मूले सम्यक् ज्ञानाधिगमात्। सम्यक् ज्ञानं मिथ्याज्ञानोच्छेदि ज्ञानं तदधिगमात्तदुत्पत्तेः। धर्मादीनां देहारम्भकानां सञ्चितक्रियमाणानामित्यर्थः। व्याख्यायाम्। तदिदमिति। ततस्मादित्यर्थः। प्राप्तौ भेदापेक्षितत्वादाह। अकारणत्वमिति। तिष्ठतीत्यत्र विशेष्यमध्याहरति। उत्पन्नतत्त्वज्ञानोऽपीति। तत्र दृष्टान्तमाह। यथेति। शरीरस्थितौ संस्कारं दर्शयति। प्रारब्धपरिपाकाविति। शरीरारम्भकावित्यर्थः। संस्कारनाशे प्रमाणमाह। यथा च श्रूयते इति। भोगेनेत्यादि। व्याससूत्रम्। (अ० ४ पा० १ सू० १९)। तस्य तावदेवेत्यादिश्रुतिरिति विभागः। सूत्रं तु इतरे अनारब्धकार्ये पुण्यपापे इत्येवं व्याख्येयम्। अन्यथा "उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः" इति भगवद्वचनविरोधः। ज्ञानोपदेष्टुर-

ष्ठति ॥ ६७ ॥

स्यादेतत्—"यदि संस्कारशेषादपि धृतशरीरस्तथाऽपि कदा ऽस्य मोक्षो भविष्यति ?" इत्यत आह—

प्राप्ते शरीरभेदे चरितार्थत्वात् प्रधानविनिवृत्तौ ।
ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति ॥ ६८ ॥

"प्राप्ते" इति । अनारब्धविपाकानान्तावत् कर्माशयानां तत्त्वज्ञानाग्निना बीजभावो दग्धः । प्रारब्धविपाकानान्तूपभोगेन क्षये सति "प्राप्ते शरीरभेदे" इति—शरीरविनाशे—"चरितार्थत्वात्" इति—कृतप्रयोजनत्वात् । प्रधानस्य तम्पुरुषम्प्रति विनिवृत्तौ—"ऐकान्तिकम्"—

भावादनिर्मोक्षप्रसङ्गश्च । श्रुतिस्तु पूर्वं व्याख्याता ॥ ६७ ॥

प्रसङ्गसङ्गत्याऽऽर्यामवतारयति । स्यादेतदिति ।

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ १ ॥
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन" ।

इत्यभिप्रायेणाह । तत्त्वज्ञानाग्निनेति ।

"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभ"मित्यभिप्रायेणाह ।

उपभोगेनेति । शरीरविनाशे इति ।

ननु सार्वदिकभोगासम्भवेन तच्छिद्रेषु कर्मकरणसम्भवे तेषां क्रियमाणानामेवाऽऽरब्धविपाकत्वेनोपभोगेन क्षयावश्यकत्वे पुनः पुनस्तच्छिद्रेषु कर्मकरणावश्यकत्वान्न मोक्षः सम्भवतीति चेन्न । क्रियमाणानामसंश्लेषात् तत्र च "यथा पुष्करपलाशमापो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते । तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" "तदधिगमे उत्त-

अवश्यम्भावि "आत्यन्तिकम्"—अविनाशि-इत्युभयं "कैवल्यम्" दुःखत्रयविगमम्प्राप्नोति पुरुषः ॥ ६८ ॥

प्रमाणेनोपपादितेऽप्यत्यन्तश्रद्धोत्पादनाय परमर्षिपूर्वकत्वमाह—

पुरुषार्थज्ञानमिदं गुह्यम्परमर्षिणा समाख्यातम् ।
स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानाम् ॥ ६९ ॥

"पुरुष" इति । "गुह्यम्" गुहानिवासि, स्थूलधियां दुर्बोधामिति यावत् । "परमर्षिणा" कपिलेन तामेव श्रद्धामागमिकत्वेन द्रढयति—"स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानाम्" । इति । 'यत्र' ज्ञाने—यदर्थम्,—यथा 'चर्मणि द्वीपिनं हन्ति' इति । "भूतानाम्"—प्राणिनां "स्थित्युत्पत्तिप्रलयाः" आगमैः "चिन्त्यन्ते" ॥६९॥

---

रपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" [ ब्र० सू० ४-१-१३ ] इत्यादि प्रमाणम् । पुनः शरीरान्तरोत्पत्तिः कुतो नेत्यत आह । चरितार्थत्वादिति । बुद्धितत्त्वादिद्वारा कृतभोगापवर्गलक्षणप्रयोजनकत्वादित्यर्थः । मोक्षस्वरूपमाह । ऐकान्तिकमिति । अविनाशि । स्वसमानाधिकरणेत्याद्युक्तरूपम् । पुरुष उत्पन्नात्मतत्त्वसाक्षात्कारवान् प्रारब्धक्षये सत्यवश्यं प्राप्नोतीति समुदायार्थः ॥ ६८ ॥

उपोद्धातसङ्गत्या आर्यामवतारयति । प्रमाणेति । परमर्षिपूर्वकत्वकथनेन विप्रलिप्सादिदोषनिरसनद्वारा श्रद्धोत्पत्तिः सम्भवतीति सूचितम् । श्रद्धाया ज्ञानाङ्गत्वे "श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्येत्" । "श्रद्धावान् लभते ज्ञान" मित्यादिश्रुतिस्मृतयः प्रमाणम् । कपिलस्य महर्षित्वे तु "ऋषिं प्रसूतं कपिलम् यस्तमग्रे ज्ञानैर्बिभर्त्ति" इत्यादि वाक्यम् । यत्रेति । निमित्तसप्त-

स्यादेतत्—"यत् परमर्षिणा साक्षात्कथितम् तच्छ्रद्दधीमहि, यत्पुनरीश्वरकृष्णेन कथितम् तत्र कुतः श्रद्धा ?"—इत्यत आह—

एतत् पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ ।
आसुरिरपि पञ्चशिखाय, तेन बहुधा कृतं तन्त्रम् ॥७०॥

"एतत्" इति । "एतत् पवित्रम्"—पावनम्-दुःखत्रयहेतोः पाप्मनः पुनातीति, "अग्र्यम्" सर्वेभ्यः पवित्रेभ्यो मुख्यम्, "मुनिः" कपिलः "आसुरये ऽनुकम्पया प्रददौ, आसुरिरपि पञ्चशिखाय, तेन बहुधा कृतं तन्त्रम् ॥ ७० ॥

शिष्यपरम्परया ऽऽगतमीश्वरकृष्णेन चैतदार्याभिः ।
संक्षिप्तमार्यमतिना सम्यग्विज्ञाय सिद्धान्तम् ॥ ७१ ॥

"शिष्येति । आरात् याता तत्त्वेभ्य इत्यार्या, आर्या मतिर्यस्य सो ऽयम् "आर्यमतिः" इति॥ ७१ ॥

मीत्यभिप्रायेणाह । यदर्थमिति ॥ ६९ ॥

पूर्वोक्तसङ्गत्या आर्याद्वयमवतारयति । स्यादेतदिति । आरात् दूरे याता दूरं प्राप्ता या मतिरतत्त्वेभ्यः सा अस्यास्तीत्यार्यमतिरित्यर्थः ॥ ७० ॥

मूले आर्याभिः । आर्याख्यं छन्दोविशेषस्तद्विशिष्टं पद्यमार्येत्यर्थः । शेषं स्पष्टार्थम् ॥ ७१ ॥

ननु एतस्य ग्रन्थस्य निरुपाधिकजीवभेदरूपमुख्यशास्त्रैकदेशप्रतिपादकत्वविशिष्टाभिनवविप्रतिपत्तिनिराकरणरूपकार्यान्तरकारित्वरूपप्रकरणत्वादाखिलशास्त्रार्थप्रतिपादकत्वाभावे मोक्षहेतुनिर्णयात्मकतत्त्वज्ञानासंपादकत्वात्प्रेक्षावतां प्रवृत्तिर्न सम्भवतीत्याशङ्कां

एतच्च शास्त्रम्, सकलशास्त्रार्थसूचकत्वात्, न तु प्रकरणमित्याह—

सप्तत्यां किल ये ऽर्थास्ते ऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य ।
आख्यायिकाविरहिताः परवादविवर्जिताश्चापि ॥ ७२ ॥

"सप्तत्याम्" इति । तथा च राजवार्तिकम् ॥
"प्रधानास्तित्वमेकत्वमर्थवत्त्वमथान्यता ।
पारार्थ्यं च तथा ऽनैक्यं वियोगो योग एव च ॥
शेषवृत्तिरकर्तृत्वं मौलिकार्थाः स्मृता दश ।
विपर्ययः पञ्चविधस्तथोक्ता नव तुष्टयः ।
करणानामसामर्थ्यमष्टाविंशतिधा स्मृतम् ।
इति षष्टिः पदार्थानामष्टाभिः सह सिद्धिभिः ।

---

निराकुर्वन्पूर्वोक्तसङ्गत्याऽऽर्यामवतारयति । एतच्चेति ।—

नन्वेवमेतस्य वैयर्थ्यं तेनैव निर्वाहादित्यत आह । सूचकत्वादिति । सूचकत्वं च सङ्क्षिप्ताभिनववाक्यैर्निखिलार्थप्रतिपादकत्वं न तु मुख्यशास्त्रैकदेशप्रतिपादकत्वमित्यर्थः ।

न चाख्यायिकादिरहितत्वेन न्यूनतया प्रकरणत्वमिति वाच्यम् । मंदमत्युपयोग्याख्यायिकानां दिग्विजयाद्याकाङ्क्ष्युपयोगिपरवादनिराकरणस्य मोक्षार्थिनां प्रेक्षावतामत्यन्तानुपयोगात् । तथा च कापिलोक्तषडध्याय्यां चतुर्थेऽध्याये आख्यायिका पञ्चमे परवादस्तच्चोभयमत्र न निरूपितमितरत्सर्वमत्र निरूपितमित्यर्थः । षष्टितन्त्रस्य परवादविवर्जिता एते एवार्था इत्यर्थे तदीश्वरराजवार्त्तिकं प्रमाणयति । तथा च राजवार्त्तिकमिति । अर्थवत्त्वम् । भीत्यादिरूपत्वम् । अन्यता । प्रधानपुरुषयोरन्यत्वम् । नैक्यम् । पुरुषाणां बहुत्वम् । शेषवृत्तिः । सूक्ष्मस्थूलशरीरद्वयस्थितिः । मौलिकार्थाः । प्रधानीभूता अर्थाः । विपर्ययादीनां हे-

सेयं षष्टिपदार्थी कथितेहेति सकलशास्त्रकथनान्नेदं प्रकरणमपि तु शास्त्रमेवेदमिति।

एकत्वमर्थवत्त्वं पारार्थ्यं च प्रधानमधिकृत्योक्तम्। अन्यत्वमकर्तृत्वं बहुत्वं चेति पुरुषमधिकृत्य, अस्तित्वं योगो वियोगश्चेत्युभयमधिकृत्य। स्थितिरिति स्थूलसूक्ष्ममधिकृत्य॥ ७२॥

तुभूता अर्था इति यावत्। चूलिकार्था इति क्वचित्पाठस्तस्याप्युक्त एवार्थः। इति षष्टिरित्यस्य पदार्थानामित्यत्रान्वयः। षष्टिपदार्थानामत्रापि कथनान्न प्रकरणत्वमस्येत्याह। सेयमिति। कथिता इहेति। तथा हि। संघातपरार्थत्वादित्यादिना पुरुषास्तित्वम्। "भेदानां परिमाणात्"। "कारणमस्त्यव्यक्त"मित्यार्याद्वयेन प्रधानास्तित्वम्। "हेतुमदनित्य"मित्यादिना प्रधानस्यैकत्वम्। "प्रीत्यप्रीतिविषादात्मकाः" इत्यनेनार्थवत्त्वम्। "त्रिगुणमविवेकि विषयः" इत्यनेन प्रधानपुरुषयोरन्यत्वम्। "नानाविधैरुपायै"रित्यादिना प्रधानस्य पारार्थ्यम्। "जननमरणकरणानामि"त्यादिना पुरुषस्य बहुत्वम्। "प्राप्ते शरीरभेदे चरितार्थत्वादि"त्यादिना उभयोर्वियोगः। पुरुषस्य दर्शनार्थमि" त्यादिनोभयोर्योगः। "सम्यक् ज्ञानाधिगमादि"त्यादिना शरीरद्वयस्य शेषवृत्तिः। "तस्माच्च विपर्यासादि"त्यादिना पुरुषस्याकर्तृत्वम्। विपर्ययतुष्टयसामर्थ्यसिद्धीनां पञ्चाशद्भेदास्तु "पञ्च विपर्ययभेदा भवन्ती" त्याद्यार्यापञ्चभिरुक्ता इति।

वार्त्तिकं विभागेन योजयति। एकत्वमित्यादिना। नैक्यमित्यस्यार्थमाह। बहुत्वं चेतीति। शेषवृत्तिरित्यस्यार्थमाह। स्थितिरितीति।

मनांसि कुमुदानीव बोधयन्ती सतां मुदा ।
श्रीवाचस्पतिमिश्राणां कृतिस्तात्तत्त्वकौमुदी

इति श्रीवाचस्पतिमिश्रकृता सांख्यतत्त्वकौमुदी
समाप्ता ॥

---

नन्वेतद्ग्रन्थकरणस्य स्वार्थत्वाभावे परार्थतैव वाच्या सा च सम्भवति परेषां पदवाक्यादिमाननिपुणानामेतादृशग्रन्थकरणसर्थानां द्वेषादिसम्भवेन ग्रहणासम्भवात् । मन्दानां विद्वन्मन्यानां सुतरामिति चेन्न । पदवाक्यमाननिपुणानां पक्षपातशून्यानां सतां सम्भवादित्यभिप्रायेणाह । मनांसीति । स्तात् स्यादित्यर्थः ॥ ७४ ॥

इति श्रीपण्डितवंशीधरकृता सांख्यतत्त्ववि-
भाकरसमाख्या सांख्यतत्त्वकौमुदीव्या-
ख्या समाप्ता ॥